अकरमिति। स चन्द्रमआहरेति प्रालपत्। तच्चन्द्रम-
सश्चन्द्रमस्त्वं। यएवं वेद॥ ३॥

चन्द्रवानेव भवति। तं देवा अब्रुवन्। सुवीर्य्यामर्य्या
यथा गोपायतइति। तत्सूर्य्यस्य सूर्य्यत्वं। यएवं वेद।
नैनं दभ्नोति। कश्चनास्मिन् वाइदमिन्द्रियं प्रत्यस्थादि-
ति। तदिन्द्रस्येन्द्रत्वं। यएवं वेद। इन्द्रियाव्येव भवति
॥ ४॥

अयं वाइदं परमोऽभूदिति। तत्परमेष्ठिनः परमे-
ष्ठित्वं। यएवं वेद। परमामेव काष्ठां गच्छति। तं देवाः
समन्तं पर्य्यविशन्। वसवः पुरस्तात्। रुद्रादक्षिणतः।
आदित्याः पश्चात्। विश्वे देवाउत्तरतः। अङ्गिरसः प्र-
त्यञ्चं॥ ५॥

साध्याः पराञ्चं। यएवं वेद। उपैनꣳ समानाः संवि-
शन्ति। स प्रजापतिरेव भूत्वा प्रजाआवयत्। ताअस्मै
नातिष्ठन्तान्नाद्याय। तामुखं पुरस्तात् पश्यन्तीः। द-
क्षिणतः पर्य्यायन्। स दक्षिणतः पर्य्यवर्त्तयत। तामुखं
पुरस्तात् पश्यन्तीः। मुखं दक्षिणतः॥ ६॥

पश्चात् पर्य्यायन्। स पश्चात् पर्य्यवर्त्तयत। तामुखं
पुरस्तात् पश्यन्तीः। मुखं दक्षिणतः। मुखं पश्चात्।

उत्तरतः पर्य्यायन्। सउत्तरतः पर्य्यवर्त्तयत। तामुखं पुरस्तात् पश्यन्तोः। मुखं दक्षिणतः। मुखं पश्चात्॥ मुखमुत्तरतः। ऊर्द्ध्वाउदायन्। सउपरिष्टान्न्यवर्त्तयत। ताः सर्व्वतोमुखो भूत्वावयत्। ततोवै तस्मै प्रजाअतिष्ठन्तान्नाद्याय। यएवं विद्वान् परि न्यवर्त्तयतेति च। प्रजापतिरेव भूत्वा प्रजाअत्ति। तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय। अन्नादएव भवति॥ ७॥

आसोद्वेद चन्द्रमस्त्वं यएवं वेदेन्द्रियाव्येव भवति प्रत्यञ्चं मुखं दक्षिणतोमुखं पश्चान्नव च॥ अनु० १०॥

एकादशोऽनुवाकः।

प्रजापतिरकामयत बह्वोर्भूयान्त्स्यामिति। सएतं दशहोतारमपश्यत्। तं प्रायुङ्क्त। तस्य प्रयुक्तिबह्वोर्भूयानभवत्। यः कामयेत बह्वोर्भूयान्त्स्यामिति। स दशहोतारं प्रयुञ्जीत। बह्वोरेव भूयान् भवति। सोऽकामयत वीरोमआजायेतेति। स दशहोतुश्चतुर्होतारं निरमिमीत। तं प्रायुङ्क्त॥ १॥

तस्य प्रयुक्तीन्द्रोऽजायत। यः कामयेत वीरोमआजायेतेति। स चतुर्होतारं प्रयुञ्जीत। आस्य वीरोजा-

यते। सोऽकामयत पशुमान्त्स्यामिति। स चतुर्होतुः पञ्चहोतारं निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्तिपशुमानभवत्। यः कामयेत पशुमान्त्स्यामिति। स पञ्चहोतारं प्रयुञ्जीत ॥ २ ॥

पशुमानेव भवति। सोऽकामयतर्तवो मे कल्पेरन्निति। स पञ्चहोतुः षड्ढोतारं निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त। यः कामयेतर्तवो मे कल्पेरन्निति। स षड्ढोतारं प्रयुञ्जीत। कल्पन्तेऽस्मा ऋतवः। सोऽकामयत सोमपः सोमयाजी स्यां। आ मे सोमपः सोमयाजी जायेतेति ॥ ३ ॥

स षड्ढोतुः सप्तहोतारं निरमिमीत। तं प्रायुङ्क्त तस्य प्रयुक्तिसोमपः सोमयाज्यभवत्। आस्य सोमपः सोमयाज्यजायत। यः कामयेत सोमपः सोमयाजी स्यां। आ मे सोमपः सोमयाजी जायेतेति। स सप्तहोतारं प्रयुञ्जीत। सोमपएव सोमयाजी भवति। आस्य सोमपः सोमयाजी जायते। स वाएष पशुः पञ्चधा प्रतितिष्ठति ॥ ४ ॥

पद्भिर्मुखेन। ते देवाः पशून् वित्वा। सुवर्गं लोकमायन्। तेऽमुष्मिँल्लोके व्यक्षुध्यन्। तेऽब्रुवन्। अमुतः प्र-

दानं वाउपजिजीविमेति। ते सप्तहोतारं यज्ञं विधायायास्यं। आङ्गीरसं प्राहिण्वन्। एतेनामुच कल्पयेति। तस्य वाइयं क्लृप्तिः ॥ ५ ॥

यदिदं किञ्च। यएवं वेद। कल्पतेऽस्मै। स वाअयं मनुष्येषु यज्ञः सप्तहोता। अमुच सद्भ्योदेवेभ्योहव्यं वहति। यएवं वेद। उपैनं यज्ञो नमति। योवै चतुर्होतृणां निदानं वेद। निदानवान् भवति। अग्निहोत्रं व दर्शहोतुर्निदानं॥ दर्शपूर्णमासौ चतुर्होतुः। चातुर्मास्यानि पञ्चहोतुः। पशुबन्धः षड्ढोतुः। सौम्योऽध्वरः सप्तहोतुः। एतद्वै चतुर्होतृणां निदानं। यएवं वेद। निदानवान् भवति ॥ ६ ॥

अमिमीत तं प्रायुङ्क्त पञ्चहोतारं प्रयुञ्जीत जायेतेति तिष्ठति क्लृप्तिर्दशहोतुर्निदानꣳ सप्त च॥ अनु० ११ ॥

प्रजापतिरकामयत प्रजाः सृजेयेति प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति प्रजापतिरकामयत प्रजायेयेति स तपः सचित्तत्तं प्रजापतिस्तेन दशधात्मानं देवावै वरुणमन्तोवै प्रजापतिस्ताः सृष्टाः समश्लिष्यन् देवा व चतुर्होतृभिरिदं वाअग्रे प्रजापतिरिन्द्रं प्रजापतिरकामयत बहोर्भूयानेकादश ॥ ११ ॥

प्रजापतिस्तद्ग्रहस्य ग्रहत्वं प्रजापतिरकामयतान-यैवैनत्तस्य वाङ्मयं तस्मात्तपनाद्यदस्मिन्नादित्ये स षड्-ढोतुः सप्तहोतारं त्रिसप्ततिः ॥ ७३ ॥ हरिः ॐ ॥

इति द्वितीयाध्यायः ॥

हरिः ॐ ॥

द्वितीयाष्टके तृतीयाध्याये

प्रथमोऽनुवाकः ।

ब्रह्मवादिनोवदन्ति । किं चतुर्होतॄणां चतुर्होतृत्व-मिति । यदेवेषु चतुर्धा होतारः । तेन चतुर्होतारः । तस्माच्चतुर्होतार उच्यन्ते । तच्चतुर्होतॄणां चतुर्होतृत्वं । सोमोवै चतुर्होता । अग्निः पञ्चहोता । धाता षड्ढोता । इन्द्रः सप्तहोता ॥ १ ॥

प्रजापतिर्दशहोता । यएवं चतुर्होतॄणामृद्धिं वेद । ऋध्नोत्येव । यएषामेवं बन्धुतां वेद । बन्धुमान् भवति । यएषामेवं क्लृप्तिं वेद । कल्पतेऽस्मै । यएषामेवमायतनं वेद । आयतनवान् भवति । यएषामेवं प्रतिष्ठां वेद ॥ २ ॥

प्रत्येव तिष्ठति। ब्रह्मवादिनोवदन्ति। दशहोता चतुर्होता। पञ्चहोता षड्ढोता सप्तहोता। अथ कस्माच्चतुर्होतारउच्यन्तइति। इन्द्रोवै चतुर्होता। इन्द्रः खलु वै श्रेष्ठोदेवतानामुपदेशनात्। यएवमिन्द्रꣳ श्रेष्ठं देवतानामुपदेशनाद्वेद। वसिष्ठः समानानां भवति। तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानुबुध्यन्ते॥ अयमागन्। अयमवासादिति। कीर्त्तिरस्य पूर्व्वागच्छति जनतामायतः। अथो एनं प्रथमेनैवानुबुध्यन्ते। अयमागन्। अयमवासादिति॥ ३॥

सप्तहोता प्रतिष्ठां वेद बुध्यन्ते षट् च॥ अनु० १॥

द्वितीयोऽनुवाकः।

दक्षिणां प्रतिग्रहीष्यन्त्सप्तदशकृत्वोऽपान्यात्। आत्मानमेव समिन्धे। तेजसे वीर्य्याय। अथो प्रजापतिरेवैनां भूत्वा प्रतिगृह्णाति। आत्मनोनार्त्यै। यद्येनमार्त्विज्याद्वृतꣳ सन्तं निर्हरेरन्। आग्नीध्रे जुहुयाद्दशहोतारं। चतुर्गृहीतेनाज्येन। पुरस्तात् प्रत्यङ्तिष्ठन्। प्रतिलोमं विग्राहं॥ १॥

प्राणानेवास्योपदासयति। यद्येनं पुनरुपशिक्षेयुः।

आग्नीध्र एव जुहुयाद्दशहोतारं। चतुर्गृहीतेनाज्येन। पश्चात्प्राङासीनः। अनुलोममविग्राहं। प्राणानेवास्मै कल्पयति। प्रायश्चित्ती वाग्घोतेत्यृतुमुखऋतुमुखे जुहोति। ऋतूनेवास्मै कल्पयति। कल्पन्तेऽस्माऋतवः॥ २॥

क्लृप्ता अस्माऋतव आयन्ति। षड्ढोता वै भूत्वा प्रजापतिरिदꣳ सर्व्वमसृजत। स मनोऽसृजत। मनसोऽधिगायत्रीमसृजत। तद्गायत्रीं यश आर्च्छत्। तामालभत। गायत्रिया अधिछन्दाꣳस्यसृजत। छन्दोभ्योऽधि साम। तत्साम यश आर्च्छत्। तदालभत॥ ३॥

साम्नोऽधियजूꣳष्यसृजत। यजुर्भ्योऽधिविष्णुं। तद्विष्णुं यश आर्च्छत्। तमालभत। विष्णोरध्योषधीरसृजत। ओषधीभ्योऽधिसोमं। तत्सोमं यश आर्च्छत्। तमालभत। सोमादधिपशूनसृजत। पशुभ्योऽधीन्द्रं॥ ४॥

तदिन्द्रं यश आर्च्छत्। तदेनं नातिप्राच्यवत। इन्द्र इव यशस्वी भवति। य एवं वेद। नैनं यशोऽतिप्रच्यवते। यद्वा इदं किञ्च। तत्सर्व्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात्। तदेनं प्रतिगृहीतं नाहिनत्। यत् किञ्च प्रतिगृह्णीयात्। तत्सर्व्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्विति त्येव प्रतिगृह्णीयात्॥ इयं वा उत्तान आङ्गीरसः। अन-

यैवैनत्प्रतिगृह्णाति। नैनꣳ हिनस्ति। बर्हिषा प्रतीयादाम्नां वाश्वं वा। एतद्वै पशूनां प्रियं धाम। प्रियेणैवैनं धाम्ना प्रत्येति ॥ ५ ॥

विग्राह्यमृतवस्तदालभतेन्द्रं गृह्णीयात् षट् च ॥ अनु० २ ॥

तृतीयोऽनुवाकः।

योवाअविद्वान्निवर्त्तयते। विशीर्षा स पाप्मामुष्मिँल्लोके भवति। अथ योविद्वान्निवर्त्तयते। सशीर्षा विपाप्मामुष्मिँल्लोके भवति। देवतावै सप्तपुष्टिकमान्यवर्त्तयन्त। अग्निश्च पृथिवी च। वायुश्चान्तरिक्षञ्च। आदित्यश्च द्यौश्च चन्द्रमाः। अग्निर्न्यवर्त्तयत। स साहस्रमपुष्यत् ॥ १ ॥

पृथिवी न्यवर्त्तयत। सौषधीभिर्वनस्पतिभिरपुष्यत्। वायुर्न्यवर्त्तयत। स मरीचिभिरपुष्यत्। अन्तरिक्षं न्यवर्त्तयत। तद्वयोभिरपुष्यत्। आदित्योन्यवर्त्तयत। स रश्मिभिरपुष्यत्। द्यौर्न्यवर्त्तयत। सा नक्षत्रैरपुष्यत् ॥ चन्द्रमान्यवर्त्तयत। सोऽहोरात्रैरर्धमासैर्मासैर्ऋतुभिः संवत्सरेणापुष्यत्। तान् पोषान् पुष्यति। याꣳस्तेऽपुष्यन्। यएवं विद्वान्नि च वर्त्तयते परि च ॥ २ ॥

अपुष्यन्नक्षत्रैरपुष्यत् पञ्च च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः ।

तस्य वा अग्नेर्हिरण्यं प्रतिजगृहुषः । अर्धमिन्द्रियस्यापाक्रामत् । तदेतेनैव प्रत्यगृह्णात् । तेन वै सोऽर्धमिन्द्रियस्यात्मन्नुपाधत्त । अर्धमिन्द्रियस्यात्मन्नुपाधत्ते । यएवं विद्वान् हिरण्यं प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । अर्धमस्येन्द्रियस्यापक्रामति । तस्य वै सोमस्य वासः प्रतिजगृहुषः । तृतीयमिन्द्रियस्यापाक्रामत् ॥ १ ॥

तदेतेनैव प्रत्यगृह्णात् । तेन वै स तृतीयमिन्द्रियस्यात्मन्नुपाधत्त । तृतीयमिन्द्रियस्यात्मन्नुपाधत्ते । यएवं विद्वान् वासः प्रतिगृह्णाति । अथ योऽविद्वान् प्रतिगृह्णाति । तृतीयमस्येन्द्रियस्यापक्रामति । तस्य वै रुद्रस्य गां प्रतिजगृहुषः । चतुर्थमिन्द्रियस्यापाक्रामत् । तामेतेनैव प्रत्यगृह्णात् । तेन वै स चतुर्थमिन्द्रियस्यात्मन्नुपाधत्त ॥ २ ॥

चतुर्थमिन्द्रियस्यात्मन्नुपाधत्ते । यएवं विद्वान् गां प्रतिगृह्णाति । अथ यो विद्वान् प्रतिगृह्णाति । चतुर्थमस्येन्द्रियस्यापक्रामति । तस्य वै वरुणस्याश्वं प्रतिजगृहुषः । पञ्चममिन्द्रियस्यापाक्रामत् । तमेतेनैव प्रत्यगृह्णात् ।

तेन वै स पञ्चममिन्द्रियस्यात्मन्नुपाधत्त। पञ्चममिन्द्रियस्यात्मन्नुपाधत्ते। यएवं विद्वानश्वं प्रतिगृह्णाति ॥ ३ ॥

अथ योविद्वान् प्रतिगृह्णाति। पञ्चममस्येन्द्रियस्यापक्रामति। तस्य वै प्रजापतेः पुरुषं प्रतिजगृहुषः। षष्ठमिन्द्रियस्यापाक्रामत्। तमेतनैव प्रत्यगृह्णात्। तेन वै स षष्ठमिन्द्रियस्यात्मन्नुपाधत्त। षष्ठमिन्द्रियस्यात्मन्नुपाधत्ते। यएवं विद्वान् पुरुषं प्रतिगृह्णाति। अथ योविद्वान् प्रतिगृह्णाति। षष्ठमस्येन्द्रियस्यापक्रामति ॥ ४ ॥

तस्य वै मनोस्तल्पं प्रतिजगृहुषः। सप्तममिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स सप्तममिन्द्रियस्यात्मन्नुपाधत्त। सप्तममिन्द्रियस्यात्मन्नुपाधत्ते। यएवं विद्वांस्तल्पं प्रतिगृह्णाति। अथ योविद्वान् प्रतिगृह्णाति। सप्तममस्येन्द्रियस्यापक्रामति। तस्य वाउत्तानस्याङ्गीरसस्याप्राणत् प्रतिजगृहुषः। अष्टममिन्द्रियस्यापाक्रामत् ॥ ५ ॥

तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽष्टममिन्द्रियस्यात्मन्नुपाधत्त। अष्टममिन्द्रियस्यात्मन्नुपाधत्ते। यएवं विद्वानप्राणत् प्रतिगृह्णाति। अप योविद्वान् प्रतिगृह्णाति। अष्टममस्येन्द्रियस्यापक्रामति। यद्वाइदं किञ्च।

तत्सव्वँमुत्तानएवाङ्गीरसः प्रत्यग्रह्णात्। तदेनं प्रतिगृ-ह्णीतन्नाहिनत्। यत्किञ्च प्रतिगृह्णीयात्॥ तत्सव्वँमु-त्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्। इयं वाउत्तानआङ्गीरसः। अनयैवैनत् प्रतिगृह्णाति। नैनꣳ हिनस्ति॥ ६॥

तृतीयमिन्द्रियस्यापाक्रामच्चतुर्थमिन्द्रियस्यात्मन्नुपा-धत्ताश्वं प्रतिगृह्णाति षष्ठमस्येन्द्रियस्यापक्रामत्यष्टम-मिन्द्रियस्यापाक्रामत् प्रतिगृह्णीयाच्चत्वारि च॥अनु०४॥

तस्य वाअग्नेर्हिरण्यꣳ सोमस्य वासस्तदेतेन रुद्रस्य गां तामेतेन वरुणस्याश्वं प्रजापतेः पुरुषं मनोस्तल्पं तमेतेनोत्तानस्य तदेतेनाप्राणद्यद्दै। अश्वं तृतीयम-ष्टमं तच्चतुर्थं ताः ग्रेषन्तं वै तें सचक्षे।

पञ्चमोऽनुवाकः।

ब्रह्मवादिनोवदन्ति। यद्दशहोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केन प्रजाअसृजन्तेति। प्रजापतिना वै ते गृहपतिनार्ध्नुवन्। तेन प्रजाअसृ-जत। यच्चतुर्होतारः सत्रमासत। केन ते गृहपतिना-र्ध्नुवन्। केनौषधीरसृजन्तेति। सोमेन वै ते गृहपति-नार्ध्नुवन्॥ १॥

तेनौषधीरसृजन्त। यत् पञ्चहोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केनैभ्योलोकेभ्योऽसुरान् प्राणुदन्त। केनैषां पशूनवृञ्जतेति। अग्निना वै ते गृहपतिनार्ध्नुवन्। तेनैभ्योलोकेभ्योऽसुरान् प्राणुदन्त। तेनैषां पशूनवृञ्जत। यत् षड्ढोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन् ॥ २ ॥

केनर्त्तूनकल्पयन्तेति। धात्रा वै ते गृहपतिनार्ध्नुवन्। तेनर्त्तूनकल्पयन्त। यत् सप्तहोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केन सुवरायन्। केनेमाँल्लोकान्त्समतन्वन्निति। अर्य्यम्णा वै ते गृहपतिनार्ध्नुवन्। तेन सुवरायन्। तेनेमाँल्लोकान्त्समतन्वन्निति ॥ ३ ॥

एते वै देवागृहपतयः। तान् यएवं विद्वान्। अप्यन्यस्य गार्हपते दीक्षते। अवान्तरमेव सत्रिणामृध्नोति। योवाअर्य्यमणं वेद। दानकामाअस्मै प्रजाभवन्ति। यज्ञोवाअर्य्यमा। आर्य्या वसतिरिति वै तमाहुर्यं प्रशꣳसन्ति। आर्य्या वसतिर्भवति। यएवं वेद ॥ ४ ॥

यद्वाइदं किञ्च। तत् सर्व्वं चतुर्होतारः। चतुर्होतृभ्योऽधियज्ञोनिर्मितः। स यएवं विद्वान् विवदेत। अहमेव भूयोवेद। यश्चतुर्होतॄन् वेदेति। स ह्येव भूयोवेद। य-

श्चतुर्होतॄन् वेद। योवै चतुर्होतॄणाꣳ होतॄन् वेद। सर्व्वासु प्रजास्वन्नमत्ति ॥ ५ ॥

सर्व्वादिशोऽभिजयति। प्रजापतिर्वै दर्शहोतॄणाꣳ होता। सोमश्चतुर्होतॄणाꣳ होता। अग्निः पञ्चहोतॄणाꣳ होता। धाता षड्ढोतॄणाꣳ होता। अर्य्यमा सप्तहोतॄणाꣳ होता। एते वै चतुर्होतॄणाꣳ होतारः। तान् य एवं वेद। सर्व्वासु प्रजास्वन्नमत्ति। सर्व्वादिशोऽभिजयति ॥ ६ ॥

आर्ध्नुवन्नार्ध्नुवन्नित्येवं वेदात्ति सर्व्वादिशोऽभिजयति॥ अनु० ५ ॥

षष्ठोऽनुवाकः।

प्रजापतिः प्रजाः सृष्ट्वा व्यस्रꣳसत। स हृदयं भूतोऽशयत्। आत्मन् हा ३ इत्यह्वयत्। आपः प्रत्यशृण्वन्। ताअग्निहोत्रेणैव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। ताः कुसिन्धमुपौहन्। तस्मादग्निहोत्रस्य यज्ञक्रतोः। एकऋत्विक्। चतुष्कृत्वोऽह्वयत्। अग्निर्वायुरादित्यश्चन्द्रमाः ॥ १ ॥

ते प्रत्यशृण्वन्। ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। तउपौहꣳश्चत्वार्य्यङ्गानि। तस्माद्दर्श-

पूर्णमासयोर्यज्ञक्रतोः। चत्वार ऋत्विजः। पञ्चहोत्वो-ऽह्वयत्। पशवः प्रत्यशृण्वन्। ते चातुर्मास्यैरेव यज्ञक्रतु-नोपपर्य्यावर्त्तन्त। तउपौहँल्लोमच्छवीं माꣳसमस्थिम-ज्जानं। तस्माच्चातुर्मास्यानां यज्ञक्रतोः ॥ २ ॥

पञ्चर्त्विजः। षट्होत्वोऽह्वयत्। ऋतवः प्रत्यशृण्वन्। ते पशुबन्धेनैव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। तउपौहँ-स्तनावाण्डौ शिश्नमवाञ्चं प्राणं। तस्मात् पशुबन्धस्य यज्ञक्रतोः। षड्ऋत्विजः। सप्तहोत्वोऽह्वयत्। होत्राः प्रत्य-शृण्वन्। ताः सौम्येनैवाध्वरेण यज्ञक्रतुनोपपर्य्यावर्त्तन्त ॥ ३ ॥

ताउपौहन्त्सप्तशीर्षण्यान् प्राणान्। तस्मात् सौम्य-स्याध्वरस्य यज्ञक्रतोः। सप्तहोत्राः प्राचीर्वषट्कुर्व्वन्ति। दशहोत्वोऽह्वयत्। तपः प्रत्यशृणोत्। तत् कर्म्मणैव संव-त्सरेण सर्व्वैर्यज्ञक्रतुभिरुपपर्य्यावर्त्तत। तत् सर्व्वमात्मा-नमपरिवर्गमुपौहत्। तस्मात् संवत्सरे सर्व्वे यज्ञक्रत-वोऽवरुध्यन्ते। तस्माद्दशहोता चतुर्होता। पञ्चहोता षड्ढोता सप्तहोता॥ एकहोत्रे बलिꣳ हरन्ति। हर-न्त्यस्मै प्रजाबलिं। ऐनमप्रतिख्यातं गच्छति। यएवं वेद ॥ ४ ॥

चन्द्रमाश्चातुर्मास्यानां यज्ञक्रतोरध्वरेण यज्ञक्रतुनोपपर्य्यावर्त्तन्त सप्तहोता चत्वारि च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

प्रजापतिः पुरुषमसृजत । सोऽग्निरब्रवीत् । ममायमन्नमस्त्विति । सोऽबिभेत् । सर्व्वं वै मायं प्रधक्ष्यतीति । सएताꣳश्चतुर्होतॄनात्मस्परणानपश्यत् । तानजुहोत् । तैर्वै सआत्मानमस्पृणोत् । यदग्निहोत्रं जुहोति । एकहोतारमेव तद्यज्ञक्रतुमाप्नोत्यग्निहोत्रं ॥ १ ॥

कुसिन्धञ्चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । चतुर्होतारमेव तद्यज्ञक्रतुमाप्नोति दर्शपूर्णमासौ । चत्वारि चात्मनोऽङ्गानि स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । समित्पञ्चमी । पञ्चहोतारमेव तद्यज्ञक्रतुमाप्नोति चातुर्मास्यानि । लोमच्छवीं माꣳसमस्थिमज्ज्ञानं ॥ २ ॥

तानि चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति । षड्ढोतारमेव तद्यज्ञक्रतुमाप्नोति पशुबन्धं । स्तनावाण्डौ शिश्नमवाञ्चं प्राणं । तानि चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति ॥ ३ ॥

समित्सप्तमी । सप्तहोतारमेव तद्यज्ञक्रतुमाप्नोति सौम्यमध्वरं । सप्त चात्मनः शीर्षण्यान् प्राणान् स्पृणोति । आदित्यस्य च सायुज्यं गच्छति । चतुरुन्नयति । द्विर्जुहोति । द्विर्निमार्ष्टि । द्विः प्राश्नाति । दशहोतारमेव तद्यज्ञक्रतुमाप्नोति संवत्सरं । सर्वं चात्मानमपरिवर्गꣳ स्पृणोति ॥ आदित्यस्य च सायुज्यं गच्छति ॥ ४ ॥

अग्निहोत्रं मज्जानं द्विर्जुहोत्यपरिवर्गꣳ स्पृणोत्येकं च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

प्रजापतिरकामयत प्रजायेयेति । स तपोऽतप्यत । सोऽन्तर्वानभवत् । स हरितः श्यावोऽभवत् । तस्मात्स्त्र्यन्तर्वत्नी । हरिणी सती श्यावा भवति । स विजायमानो गर्भेणाताम्यत् । स तान्तः कृष्णश्यावोऽभवत् । तस्मात्तान्तः कृष्णः श्यावो भवति । तस्यासुरेवाजीवत् ॥ १ ॥

तेनासुना सुरानसृजत । तदसुराणामसुरत्वं । य एवमसुराणामसुरत्वं वेद । असुमानेव भवति । नैनमसुर्जहाति । सोऽसुरान् सृष्ट्वापि तेऽवामन्यत । तदनु पितॄ-

नसृजत। तत्पितृणां पितृत्वं। यएवं पितृणां पितृत्वं वेद। पितेवैव स्वानां भवति ॥ २ ॥

यन्त्यस्य पितरोहवं। स पितृन्त्सृष्ट्वा मनस्यैत्। तदनु मनुष्यानसृजत। तन्मनुष्याणां मनुष्यत्वं। यएवं मनुष्याणां मनुष्यत्वं वेद। मनस्व्येव भवति। नैनं मनुर्जहाति। तस्मै मनुष्यान्त्स सृजानाय। दिवा देवत्राभवत्। तदनु देवानसृजत॥ तद्देवानां देवत्वं। यएवं देवानां देवत्वं वेद। दिवा हैवास्य देवत्रा भवति। तानि वाएतानि चत्वार्यम्भाꣳसि। देवा मनुष्याः पितरोऽसुराः। तेषु सर्व्वेष्वम्भोनभइव भवति। यएवं वेद ॥ ३ ॥

आजीवत्स्वानां भवति देवानसृजत सप्त च ॥ अनु० ८ ॥

नवमोऽनुवाकः।

ब्रह्मवादिनोवदन्ति। योवाइमं विद्यात्। यतोऽयं पवते। यदभिपवते। यदभिसंपवते। सर्व्वमायुरियात्। न पुरायुषः प्रमीयेत। पशुमानत्स्यात्। विन्देत प्रजां। योवाइमं वेद ॥ १ ॥

यतोऽयं पवते। यदभिपवते। यदभिसंपवते। सर्व्वमायुरेति। न पुरायुषः प्रमीयते। पशुमान् भवति।

विन्दते प्रजां। अद्भ्यः पवते। अपोऽभिपवते। अपोऽभि-
सम्पवते ॥ २ ॥

अस्याः पवते। इमामभिपवते। इमामभिसम्पवते।
अग्नेः पवते। अग्निमभिपवते। अग्निमभिसम्पवते।
अन्तरिक्षात् पवते। अन्तरिक्षमभिपवते। अन्तरिक्ष-
मभिसम्पवते। आदित्यात् पवते ॥ ३ ॥

आदित्यमभिपवते। आदित्यमभिसम्पवते। द्योः
पवते। दिवमभिपवते। दिवमभिसम्पवते। दिग्भ्यः
पवते। दिशोऽभिपवते। दिशोऽभिसम्पवते। स
यत्पुरस्ताद्वाति। प्राणएव भूत्वा पुरस्ताद्वाति ॥
॥ ४ ॥

तस्मात् पुरस्ताद्वान्तं। सर्व्वाः प्रजाः प्रतिनन्दन्ति।
प्राणोहि प्रियः प्रजानां। प्राणइव प्रियः प्रजानां भव-
ति। यएवं वेद। स वाएष प्राणएव। अथ यद्दक्षिणतो
वाति। मातरिश्वैव भूत्वा दक्षिणतोवाति। तस्माद्दक्षि-
णतोवान्तं विद्यात्। सर्व्वादिशआवाति ॥ ५ ॥

सर्व्वादिशोऽनुविवाति। सर्व्वादिशोऽनुसंवातीति।
स वाएष मातरिश्वैव। अथ यत् पश्चाद्वाति। पवमा-
नएव भूत्वा पश्चाद्वाति। पूतमस्माआहरन्ति। पूत-

मुपहरन्ति। पूतमश्नन्ति। यएवं वेद। स वाएष पवमानएव॥ ६॥

अथ यदुत्तरतोवाति। सवितैव भूत्वोत्तरतोवाति। सवितेव स्वानां भवति। यएवं वेद। स वाएष सवितैव। ते यएनं पुरस्तादायन्तमुपवदन्ति। यएवास्य पुरस्तात् पाप्मानः। ताꣳस्तेऽपघ्नन्ति। पुरस्तादितरान् पाप्मनः सचन्ते। अथ यएनं दक्षिणतआयन्तमुपवदन्ति॥ ७॥

यएवास्य दक्षिणतः पाप्मानः। ताꣳस्तेऽपघ्नन्ति। दक्षिणतइतरान् पाप्मनः सचन्ते। अथ यएनं पश्चादायन्तमुपवदन्ति। यएवास्य पश्चात् पाप्मानः। ताꣳस्तेऽपघ्नन्ति। पश्चादितरान् पाप्मनः सचन्ते। अथ यएनमुत्तरतआयन्तमुपवदन्ति। यएवास्योत्तरतः पाप्मानः। ताꣳस्तेऽपघ्नन्ति॥ ८॥

उत्तरतइतरान् पाप्मनः सचन्ते। तस्मादेवं विद्वान्। वीव न्टत्येत्। प्रेव चलेत्। व्यस्येवाक्ष्यौ भाषेत। मण्टयेदिव। क्राथयेदिव। शृङ्गायेतेव। उत्तमेऽपवदेयुः। उत्तमे पाप्मानमपहन्युरिति॥ स यान्दिशꣳ सनिमेष्यन्त्स्यात्। यदा तान्दिशं वातोवायात्। अथ प्रवेयात्। प्रवा धावयेत्। सा तमेव रदितं व्यूढं गन्धम-

भिप्रच्यवते । आस्य तं जनपदं पूर्वा कीर्त्तिर्गच्छति । दानकामाश्चास्मै प्रजाभवन्ति । यएवं वेद ॥ ९ ॥

वेद सम्यवतआदित्यात् पवते वात्यावात्येष पवमानएव दक्षिणतआयन्तमुपवदन्त्युत्तरतः पाप्मानस्ताᳪंस्तेऽपघ्नन्तीत्यष्टौ च ॥ अनु० ९ ॥

दशमोऽनुवाकः ।

प्रजापतिः सोमᳪं राजानमसृजत । तं त्रयोवेदाअन्वसृज्यन्त । तान् हस्तेऽकुरुत । अथ ह सीता सावित्री । सोमं राजानं चकमे । श्रद्धामु स चकमे । सा ह पितरं प्रजापतिमुपससार । तᳪं होवाच । नमस्ते अस्तु भगवः । उप त्वायानि ॥ १ ॥

प्र त्वापद्ये । सोमं वै राजानं कामये । श्रद्धामु स कामयतइति । तस्याउ ह स्थागरमलङ्कारं कल्पयित्वा । दशहोतारं पुरस्ताद्व्याख्याय । चतुर्होतारं दक्षिणतः । पञ्चहोतारं पश्चात् । षड्ढोतारमुत्तरतः । सप्तहोतारमुपरिष्टात् । सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य ॥ २ ॥

आस्यार्द्धं वव्राज । ताᳪं होदीक्ष्योवाच । उपमा वर्त्तस्वेति । तᳪं होवाच । भो गन्तुं मञ्चाचक्ष्व । एतन्मआ-

चक्ष्व। यन्ते पाणाविति। तस्याउ ह त्रीन् वेदान् प्रददौ। तस्माद् ह स्त्रियोभोगमेव हारयन्ते। स यः कामयेत प्रियः स्यामिति ॥ ३ ॥

यं वा कामयेत प्रियः स्यादिति। तस्माएतꣳ स्थागरमलङ्कारं कल्पयित्वा। दशहोतारं पुरस्ताद्व्याख्याय। चतुर्होतारं दक्षिणतः। पञ्चहोतारं पश्चात्। षड्ढोतारमुत्तरतः। सप्तहोतारमुपरिष्टात्। सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य। आस्यार्द्धं व्रजेत्। प्रियोहैव भवति ॥ ४ ॥

आयान्त्यलङ्कृत्य स्यामिति भवति ॥ अनु० १० ॥

एकादशोऽनुवाकः।

ब्रह्मात्मन्वदसृजत। तदकामयत। समात्मना पद्येयेति। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै दशमꣳ हूतः प्रत्यशृणोत्। स दशहूतोऽभवत्। दशहूतो ह वै नामैषः। तवाएतं दशहूतꣳ सन्तं। दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः ॥ १ ॥

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तमꣳ हूतः प्रत्यशृणोत्। स सप्तहूतोऽभवत्। सप्तहूतो ह वै नामैषः। तं वाएतꣳ सप्तहूतꣳ सन्तं। सप्तहोतेत्याचक्षते परो-

क्षेण। परोक्षप्रियाइव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठꣳ हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत् ॥ २ ॥

षड्ढूतोह वै नामैषः। तं वा एतꣳ षड्ढूतꣳ सन्तं। षड्ढोतेत्याचक्षते परोक्षेण। परोक्षप्रियाइव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै पञ्चमꣳ हूतः प्रत्यशृणोत्। स पञ्चहूतोऽभवत्। पञ्चहूतोह वै नामैषः। तं वा एतं पञ्चहूतꣳ सन्तं। पञ्चहोतेत्याचक्षते परोक्षेण ॥ ३ ॥

परोक्षप्रियाइव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतोह वै नामैषः। तं वा एतं चतुर्हूतꣳ सन्तं। चतुर्होतेत्याचक्षते परोक्षेण। परोक्षप्रियाइव हि देवाः। तमब्रवीत्। त्वं वै मे नेदिष्ठꣳ हूतः प्रत्यश्रौषीः। त्वं वै नानाख्यातारइति। तस्मान्नु हैनाꣳश्चतुर्होतारइत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। यएवं वेद ॥ ४ ॥

देवाः षड्ढूतोऽभवत् पञ्चहोतेत्याचक्षते परोक्षेणाश्रौषीः षट् च ॥ अनु० ११ ॥

ब्रह्मवादिनः किं दक्षिणां योवाअविद्वान्तस्य वै ब्र-ह्मवादिनो यद्दशहोतारः प्रजापतिर्व्यसं प्रजापतिः पुरु-षं प्रजापतिरकामयत स तपः सोऽन्तवान् ब्रह्मवादिनो योवाइमं विद्यात् प्रजापतिः सोमꣳ राजानं ब्रह्मात्म-न्वदेकादश ॥ ११ ॥

ब्रह्मवादिनस्तस्य वाअग्नेर्यद्वाइदं किञ्च प्रजापति-रकामयत सोऽन्तवान् यएवास्य दक्षिणतः पञ्चाशत् ॥ ५० ॥ हरिः ॐ ॥

इति तृतीयोऽध्यायः ।

हरिः ॐ ॥

द्वितीयाष्टके चतुर्थाध्याये

प्रथमोऽनुवाकः ।

जुष्टोदमूनाअतिथिर्दुरोणे । इमन्नो यज्ञमुपयाहि विद्वान् । विश्वाअग्नेऽभियुजोविहत्य । शत्रूयतामाभरा भोजनानि । अग्ने शर्ध महते सौभगाय । तव द्युम्नान्युत्त-मानि सन्तु । सञ्जास्पत्यꣳ सुयममाकृणुष्व । शत्रूयता

मभितिष्ठा महांꣳसि। अग्ने योनोऽभितोजनः। वृको-
वारोजिघांꣳसति ॥ १ ॥

तांꣳस्त्वं वृत्रहन्जहि। वस्वस्मभ्यमाभर। अग्ने यो-
नोऽभिदासति। समानोयश्च निष्ट्यः। इध्मस्येव प्रक्षा-
यतः। मा तस्योच्छेषि किञ्चन। त्वमिन्द्राभिभूरसि।
देवोविज्ञातवीर्य्यः। वृत्रहा पुरुचेतनः। अप प्राचइन्द्र-
विश्वाँ अमित्रान् ॥ २ ॥

अपावाचोअभिभूते नुदस्व। अपोदीचोअपशूराध-
राचउरौ। यथा तव शर्म्मन्मदेम। तमिन्द्रं वाजयामसि।
महे वृत्राय हन्तवे। स वृषा वृषभोऽभुवत्। युजेरथं ग-
वेषणꣳ हरिभ्यां। उपब्रह्माणि जुजुषाणमस्थुः। विबा-
धिष्टास्य रोदसी महित्वा। इन्द्रोवृत्राण्यप्रतीजघन्वान्
॥ ३ ॥

हव्यवाहमभिमातिषाहं। रक्षोहणं पृतनासु जिष्णुं।
ज्योतिष्मन्तं दीद्यतं पुरन्धिं। अग्निꣳ स्विष्टकृतमाहुवे-
म। स्विष्टमग्ने अभितत् पृणाहि। विश्वा देव पृतना-
अभिष्य। उरुन्नः पन्थां प्रदिशन्विभाहि। ज्योतिष्मद्धे-
ह्यजरं न आयुः। त्वामग्ने हविष्मन्तः। देवं मर्त्तास
ईडते ॥ ४ ॥

मन्ये त्वा जातवेदसं। स हव्यावक्ष्यानुषक्। विश्वानि नो दुर्गहा जातवेदः। सिन्धुं न नावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा गृणानः। अस्माकं बोध्यविनातनूनां। पूषा गा अन्वेतु नः। पूषा रक्षत्वर्वतः। पूषा वाजꣳ सनोतु नः। पूषेमा आशा अनुवेद सर्व्वाः॥ ५॥

सो अस्माँ अभयतमेन नेषत्। स्वस्तिदा अघृणिः सर्व्ववीरः। अप्रयुच्छन् पुरएतु प्रजानन्। त्वमग्ने सप्रथा असि। जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते। अग्नीरक्षाꣳसि सेधति। शुक्रशोचिरमर्त्त्यः। शुचिः पावक ईड्यः। अग्ने रक्षाणो अꣳहसः॥ ६॥

प्रतिष्मदेव रीषतः। तपिष्ठैरजरो दह। अग्ने हꣳसि न्यत्रिणं। दीद्यन्मर्त्त्येष्वा। स्वे क्षये शुचिव्रत। आ वात वाहि भेषजं। वि वात वाहि यद्रपः। त्वꣳ हि विश्वभेषजः। देवानां दूत ईयसे। द्वाविमौ वातौ वातः॥ ७॥

आसिन्धोरापरावतः। दक्षं मे अन्य आवातु। परान्यो वातु यद्रपः। यददो वात ते गृहे। अमृतस्य निधिर्हितः। ततो नो देहि जीवसे। ततो नो धेहि भेषजं। ततो नो मह आवह। वात आवातु भेषजं। शम्भूर्मयोभूर्नो हृदे॥ ८॥

प्राणआयूंषि तारिषत्। त्वमग्न अयासि। अयासन मनसाहितः। अयासन् हव्यमूहिषे। अयानोधेहि-भेषजं। इष्टोअग्निराहुतः। स्वाहाकृतः पिपर्त्तु नः। स्वगादेवेभ्यइदन्नमः। कामोभूतस्य भव्यस्य। सम्राडेको विराजति ॥ ९ ॥

सइदं प्रतिपप्रथे। ऋतूनुत्सृजते वशी। कामस्तदग्र समवर्त्तताधि। मनसोरेतः प्रथमं यदासीत्। सतोबन्धु-मसति निरविन्दन। हृदि प्रतीष्या कवयोमनीषा। त्वया मन्यो सरथमारुजन्तः। हर्षमाणासोधृषतामरुत्वः। तिग्मेषवआयुधासंशिशानाः। उपप्रयन्ति नरोअग्नि-रूपाः ॥ १० ॥

मन्युर्भगोमन्युरेवास देवः। मन्युर्होता वरुणोवि-श्ववेदाः। मन्युं विशईडते देवयन्तीः। पाहि नोमन्यो तपसा श्रमेण। त्वमग्ने व्रतभृच्छुचिः। देवाँ आसाद-याइह। अग्ने हव्याय वोढवे। व्रतानुबिभ्रद्व्रतपा अदा-भ्यः। यजानोदेवाँ अजरः सुवीरः। दधद्रत्नानि सुवि-दानोअग्ने ॥ गोपायनोजीवसेजातवेदः ॥ ११ ॥

जिघांसत्यमित्रां जघन्वानीडते सर्व्वांअंहसो वा-तोहृदे राजत्यग्निरूपाः सुविदानोअग्नएकं च॥अनु०१॥

द्वितीयोऽनुवाकः ।

चक्षुषोहेते मनसोहेते । वाचोहेते ब्रह्मणोहेते । यो माघायुरभिदासति । तमग्ने मेन्यामेनिं कृणु । यो मा चक्षुषा योमनसा । योवाचा ब्रह्मणाघायुरभिदासति । तयाग्ने त्वं मेन्या । अमुममेनिं कृणु । यत्किञ्चासौ मनसा यच्च वाचा । यज्ञैर्जुहोति यजुषा हविर्भिः ॥ १ ॥

तन्मृत्युर्निर्ऋत्या संविदानः । पुरा दिष्टादाहुतीरस्य हन्तु । यातुधाना निर्ऋतिरादुरक्षः । तेऽस्य घ्नन्त्वनृतेन सत्यं । इन्द्रेषिता आज्यमस्यमघ्नन्तु । मा तत्समृद्धिं यदसौ करोति । हन्मि तेऽहं कृतꣳ हविः । योमे घोरमचीकृतः । अपाञ्चौ तउभौ बाहू । अपनह्याम्यास्यं ॥ २ ॥

अपनह्यामि ते बाहू । अपनह्याम्यास्यं । अग्नेर्देवस्य ब्रह्मणा । सर्व्वं तेऽवधिषं कृतं । पुरामुष्य वषट्कारात् । यज्ञं देवेषु नस्कृधि । स्विष्टमस्माकं भूयात् । मास्मान् प्रापन्नरातयः । अन्ति दूरे सतोअग्ने । भ्रातृव्यस्याभिदासतः ॥ ३ ॥

वषट्कारेण वज्रेण । कृत्याꣳ हन्मि कृतामहं । योमा नक्तं दिवा सायं । प्रातश्चाह्नो निपीयति । अद्या तमि-

न्द्र वज्रेण। भ्रातृव्यं पादयामसि। इन्द्रस्य गृहोऽसितं त्वा प्रपद्ये। सगुः साश्वः। सह यन्मे अस्ति तेन। ईडे अग्निं विपश्चितं ॥ ४ ॥

गिरा यज्ञस्य साधनं। श्रुष्टीवानं धितावानं। अग्ने शकेम ते वयं। यमं देवस्य वाजिनः। अतिद्वेषाꣳसि तरेम। अवतम्मा समनसौ समोकसौ। सचेतसौ सरेतसौ। उभौ मामवतं जातवेदसौ। शिवौ भवतमद्य नः। स्वयं कृण्वानः सुगमप्रयावं ॥ ५ ॥

तिग्मशृङ्गो वृषभः शोशुचानः। प्रत्नꣳ सधस्थमनुपश्यमानः। आतन्तुमग्निर्दिव्यं ततान। त्वन्नस्तन्तुरुत सेतुरग्ने। त्वं पन्था भवसि देवयानः। त्वयाग्ने पृष्ठं वयमारुहेम। अथा देवैः सधमादम्मदेम। तदुत्तमं मुमुग्धि नः। विपाशं मध्यमं चृत। अवाधमानि जीवसे ॥ ६ ॥

वयꣳ सोमव्रते तव। मनस्तनूषु बिभ्रतः। प्रजावन्तोऽअशीमहि। इन्द्राणी देवी सुभगा सुपत्नी। उदꣳशेन पतिविद्ये जिगाय। त्रिꣳशदस्याजघनं योजनानि। उपस्थइन्द्रꣳ स्थविरं बिभर्त्ति। सेना ह नाम पृथिवी धनञ्जया। विश्वव्यचा अदितिः सूर्य्यत्वक्। इन्द्राणी देवी प्रासहा ददाना ॥ ७ ॥

सा नो देवी सुहवा शर्म्म यच्छतु। आ त्वाहार्षमन्तर्‌भूः। ध्रुवस्तिष्ठा विचाचलिः। विशस्त्वा सर्व्वावाञ्छन्तु। मा त्वद्राष्ट्रमधिभ्रशत्। ध्रुवा द्यौर्ध्रुवा पृथिवी। ध्रुवं विश्वमिदं जगत्। ध्रुवाह पर्व्वताइमे। ध्रुवोराजा विशामयं। इहैवैधि माव्यथिष्ठाः॥ ८॥

पर्व्वतइव विचाचलिः। इन्द्रइवेह ध्रुवस्तिष्ठ। इह राष्ट्रमु धारय। अभितिष्ठ पृतन्यतः। अधरे सन्तु शत्रवः। इन्द्रइव वृत्रहा तिष्ठ। अपः क्षेत्राणि सञ्जयन्। इन्द्रएणमदीधरत्। ध्रुवं ध्रुवेण हविषा। तस्मै देवाअधिब्रवन्॥ अयञ्च ब्रह्मणस्पतिः॥ ९॥

हविर्भिरास्यमभिदासतोविपश्चितमप्रयावं जीवसे ददाना व्यथिष्ठाब्रवन्नेकञ्च॥ अनु० २॥

तृतीयाऽनुवाकः।

जुष्टीनरो ब्रह्मणा वः पितॄणां। अक्षमव्ययन्न किलारिषाथ। यच्छक्करीषु बृहता रवेण। इन्द्रे शुष्ममदधाथा वसिष्ठाः। पावका नः सरस्वती। वाजेभिर्वाजिनीवती। यज्ञं वष्टु धिया वसुः। सरस्वत्यभि नोनेषि वस्यः। मा पस्फरीः पयसा मा नआधक्। जुषस्व नः सख्या वेश्या च॥ १॥

मा त्वत्क्षेत्राण्यरणानि गन्म । वृञ्जे हविर्नमसा ब-
र्हिरग्नौ । अयामि स्रुग्घृतवती सुवृक्तिः । अम्यक्षि सद्म-
सदने पृथिव्याः । अश्रायि यज्ञः सूर्ये न चक्षुः । इहा-
र्वाञ्चमतिह्वये । इन्द्रं जैत्रा यजतवे । अस्माकमस्तु के-
वलः । अर्वाञ्चमिन्द्रममुतो हवामहे । यो गोजिद्धनजि-
दश्वजिद्यः ॥ २ ॥

इमं नो यज्ञं विहवे जुषस्व । अस्य कुर्मो हरिवो मे-
दिनं त्वा । असंमृष्टो जायसे मातृवोः शुचिः । मन्द्रः
कविरुदतिष्ठो विवस्वतः । घृतेन त्वा वर्द्धयन्नग्न आहु-
त । धूमस्ते केतुरभवद्दिवि श्रितः । अग्निरग्रे प्रथमो
देवतानां । संयातानामुत्तमो विष्णुरासीत् । यजमा-
नाय परिगृह्य देवान् । दीक्षयेदꣳ हविरागच्छतन्नः
॥ ३ ॥

अग्निश्च विष्णो तप उत्तमं महः । दीक्षापालेभ्योऽव-
नतꣳ हि शक्रा । विश्वैर्देवैर्यज्ञियैः संविदानौ । दीक्षा-
मस्मै यजमानाय धत्तं । प्र तद्विष्णुस्तवते वीर्याय । मृ-
गो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रम-
णेषु । अधिक्षियन्ति भुवनानि विश्वा । नू मर्त्तो दयते
सनिष्यन् यः । विष्णव उरुगाया यदाशत् ॥ ४ ॥

प्र यः स वाचा मनसा यजाते। एतावन्तं नर्यमाविवासात्। विचक्रमे पृथिवीमेष एतां। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षितिꣳ सुजनिमाचकार। त्रिर्देवः पृथिवीमेष एतां। विचक्रमे शतर्चसं महित्वा। प्र विष्णुरस्तु तवसस्तवीयान्। त्वेषꣳ ह्यस्य स्थविरस्य नाम ॥ ५ ॥

होतारं चित्ररथमध्वरस्य। यज्ञस्य यज्ञस्य केतुꣳ रुशन्तं। प्रत्यर्द्धिं देवस्य देवस्य मह्ना। श्रिया त्वग्निमतिथिं जनानां। आ नो विश्वाभिरूतिभिः सजोषा। ब्रह्म जुषाणो हर्यश्व याहि। वरीवृजत् स्थविरेभिः सुशिप्र। अस्मे दधद्वृषणꣳ शुष्ममिन्द्र। इन्द्रः सुवर्षा जनयन्नहानि। जिगायोशिग्भिः पृतना अभिश्रीः ॥ ६ ॥

प्रारोचयन्मनवे केतुमह्ना। अविन्दज्ज्योतिर्बृहते रणाय। अश्विनाववसे नि ह्वये वां। आ नूनं यातꣳ सुकृताय विप्रा। प्रातर्युक्तेन सुवृता रथेन। उपागच्छतमवसा गतन्नः। अविष्टन्धीष्वश्विना न आसु। प्रजावद्रेतो अह्रयन्नो अस्तु। आवान्तो कत्नये तूतुजानाः। सुरत्नासो देववीतिं गमेम ॥ ७ ॥

त्वꣳ सोम क्रतुभिः सक्रतुर्भूः। त्वं दक्षैः सुदक्षो वि-

श्रवदाः। त्वं वृषा वृषत्वेभिर्महित्वा। द्युम्नेभिर्द्युम्न्यभ-
वोनृचक्षाः। अषाढं युत्सु पृतनासु पप्रिं। सुवर्षामप्स्वां
वृजनस्य गोपां। भरेषुजाᳲं सुक्षितिᳲं सुश्रवसं। जय-
न्तं त्वामनुमदेम सोम। भवामित्रो न शेव्योघृतासुतिः।
विभूतद्युम्नएव याउ सप्रथाः ॥ ८ ॥

अधाते विष्णो विदुषाचिदृध्यः। स्तोमोयज्ञस्य रा-
ध्योहविष्मतः। यः पूर्व्याय वेधसे नवीयसे। सुमज्जा-
नये विष्णवे ददाशति। योजातमस्य महतोमहिब्रवात्।
सेदुश्रवोभिर्युज्यं चिदभ्यसत्। तमुः स्तोतारः पूर्व्यं य-
थाविदृतस्य। गर्भᳲं हविषा पिपर्त्तन। आस्य जानन्तो
नामचिद्विवक्तन। बृहत्ते विष्णो सुमतिम्भजामहे ॥ ९ ॥

इमाधानाघृतस्नुवः। हरी इहोपवक्षतः। इन्द्रᳲं
सुखतमे रथे। एष ब्रह्मा पृतेमहे। विदथेशᳲंसिषᳲं
हरी। यऋत्वियः प्रते वन्वे। वनुषोहर्य्यतं मदं। इन्द्रो
नाम घृतन्नयः। हरिभिश्चारुसेचते। श्रुतोगणआत्वा-
विशन्तु ॥ १० ॥

हरिवर्पसङ्गिरः। आचर्षणि प्राहृषभोजनानां। रा-
जा कृष्टीनां पुरुहूतइन्द्रः। स्तुतश्रवस्यन्नवसोपमद्रिक्।
युक्ता हरीवृषणायाह्यर्वाङ्। प्रयत्सिन्धवः प्रसवं यदा-

यन्। आपः समुद्रꣳ रथ्येव जग्मुः। अतश्चिदिन्द्रः स-
दसोवरीयान्। यदीꣳसोमः पृणति दुग्धोअꣳशुः। ह्व-
यामसि त्वेन्द्र याह्यर्वाङ्॥ ११॥

अरन्ते सोमः स्तनुवे भवाति। शतक्रतो मादयस्वास
तेषु। प्रास्मा अवपृतनासु प्रयुत्सु। इन्द्राय सोमाः प्र
दिवो विदानाः। ऋभुर्येभिर्वृषपर्व्वा विहायाः। प्रय-
म्यमानान् प्रतिपूगृभाय। इन्द्र पिब वृषधूतस्य वृष्णः।
अहेडमानउपाहि यज्ञं। तुभ्यं पवन्तइन्दवः सुतासः।
गावोन वज्रिन्त्स्वमोकोअच्छ॥ १२॥

इन्द्रागहि प्रथमोयज्ञियानां। या ते काकुत्सुकृता या
वरिष्ठा। यया शाश्वत्पिबसि मध्वऊर्म्मिं। तया याहि प्र
ते अध्वर्य्युरस्थात्। सन्ते वज्रोवर्त्ततामिन्द्र गव्युः। प्रात-
र्युजा विबोधय। अश्विना वेद गच्छतं। अस्य सोमस्य
पीतये। प्रातर्यावाणा प्रथमा यजध्वं। पुरा गृध्रादररुषः
पिबाथः॥ प्रातर्हि यज्ञमश्विना दधाते। प्रशꣳसन्ति क-
वयः पूर्व्वभाजः। प्रातर्यजध्वमश्विना हिनोत। न साय-
मस्ति देवयाअजुष्टं। उतान्योअस्मद्यजते विचायः।
पूर्व्वः पूर्व्वोयजमानोवनीयान्॥ १३॥

चाश्वजिद्यो गच्छतं नोदाशन्नामाभिश्रीर्गमेम स-

प्रथा भजामहे विशन्तु याच्चंवीरुच्छ पिबाथः षट् च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः।

नक्तं जातास्योषधे। रामे कृष्णे असिक्नि च। इदं रजनिरजय। किलासं पलितञ्च यत्। किलासञ्च पलितञ्च। निरितोनाशयापृषत्। आनस्वोअस्नुतां वर्णः। परा श्वेतानि पातय। असितं ते निलयनं। आस्थानमसितं तव ॥ १ ॥

असिक्नि यस्योषधे। निरितो नाशयापृषत्। अस्थिजस्य किलासस्य। तनूजस्य च यत्त्वचि। कृत्यया कृतस्य ब्रह्मणा। लक्ष्मश्वेतमनीनशं। सरूपा नाम ते माता। सरूपोनाम ते पिता। सरूपास्योषधे सा। सरूपमिदं कृधि ॥ २ ॥

शुनं हुवेम मघवानमिन्द्रं। अस्मिन् भरेऽन्ततमं वाजसातौ। शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं वृत्राणि सञ्जितं धनानां। धूनुथ द्यां पर्व्वतान्दाशुषे वसु। निवो वनाजिहते या मनोभिया। कोपपयपृथिवीं पृश्निमातरः। युधे यद्गुगाः पृषतीरयुग्ध्वं। प्रवेपयन्ति पर्व्वतान्। विविञ्चन्ति वनस्पतीन् ॥ ३ ॥

प्रो वारत मरुतोदुर्म्मदाइव। देवासः सर्व्वया विशा। पुरुत्राहि सदृङ्ङसि। विशो विश्वाअनुप्रभु। समत्सु त्वा हवामहे। समत्स्वग्निमवसे। वाजयन्तोहवामहे। वाजेषु चित्रराधसं। सङ्गच्छध्वꣳ संवदध्वं। सं वो मनाꣳसि जानतां ॥ ४ ॥

देवाभागं यथा पूर्व्वे। सञ्जानानाउपासत। समानोमन्त्रः समितिः समानी। समानं मनः सह चित्तमेषां। समानं केतोअभिसꣳरभध्वं। सञ्ज्ञानेन वो हविषा यजामः। समानीव आकूतिः। समाना हृदयानि वः। समानमस्तु वोमनः। यथा वस्सुसहासति ॥ ५ ॥

सञ्ज्ञानं नस्वैः। सञ्ज्ञानमरणैः। सञ्ज्ञानमश्विना युवं। इहास्मासु नियच्छतं। सञ्ज्ञानं मे बृहस्पतिः। सञ्ज्ञानꣳ सविताकरत्। सञ्ज्ञानमश्विना युवं। इह मह्यं नियच्छतं। उपच्छायामिव घृणेः। अगन्म शर्म ते वयं ॥ ६ ॥

अग्ने हिरण्यसन्दृशः। अदब्धेभिः सवितः पायुभिष्ट्वं। शिवेभिरद्य परिपाहि नोगयं। हिरण्यजिह्वः सुवितायनव्यसे। रक्षामाकिर्नो अघशꣳसईशत। मदेम

देहिनोददुः। यूथागवामृजुक्रतुः। सङ्गृभाय पुरुशता। उभया हस्त्यावसु। शिशीहि रायआभर ॥ ७ ॥

शिप्रिन् वाजानां पते। शचीवस्तव दंसना। आतूनइन्द्र भाजय। गोष्वश्वेषु शुभ्रिषु। सहस्रेषु तुवीमघ। यद्देवादेवहेडनं। देवासश्चकृमावयं। आदित्यास्तस्मान्मा यूयं। ऋतस्यर्तेन मुञ्चत। ऋतस्यर्तेनादित्याः ॥ ८ ॥

यजत्रा मुञ्चतेह मा। यज्ञैर्वा यज्ञवाहसः। आशिक्षन्तो न शेकिम। मेदस्वता यजमानाः। स्रुचान्येन जुह्वत। अकामावो विश्वेदेवाः। शिक्षन्तो नोपशेकिम। यदि दिवा यदि नक्तं। एनएनस्योऽकरत्। भूतं मा तस्माद्भव्यञ्च ॥ द्रुपदादिव मुञ्चतु। द्रुपदादिवेन्मुमुचानः। स्विन्नस्स्नात्वी मलादिव। पूतं पवित्रेणेवाज्यं। विश्वे मुञ्चन्तु मैनसः। उद्वयं तमसस्परि। पश्यन्तोज्योतिरुत्तरं। देवं देवत्रा सूर्य्यं। अगन्म ज्योतिरुत्तरं ॥ ९ ॥

तव श्रुधि वनस्पतीञ्ज्ञानतामसति वयं भरादित्याश्च नव च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

वृषासोऽअँशुः पवमेह विश्वान्त्सोमः । इन्द्रस्य भागऋतयुः शतायुः । समावृषाणं वृषभं कृणोतु । प्रियं विश्वाँ सर्व्ववीरँ सुवीरं । कस्य वृषासुते सचा । नियुत्वान् वृषभोरणत् । वृत्रहा सोमपीतये । यस्ते शृङ्गवृषोनपात् । प्रणपात् कुण्डपाय्यः । न्यस्मिन्दध्र आमनः ॥ १ ॥

तँ सध्रीचीरूतयो वृष्ण्यानि । पौँस्यानि नियुतः सश्चुरिन्द्रं । समुद्रं न सिन्धवउक्थशुष्माः । उरुव्यचं सगिर आविशन्ति । इन्द्राय गिरोअनिशितसर्गाः । अपः प्रैरयन्त्सगरस्य बुध्नात् । योअक्षेणेव चक्रिया शचीभिः । विष्वक्तःस्तम्भपृथिवीमुत द्यां । अक्षोदयच्छवसाक्षामबुध्नं । वार्णवातस्तविषीभिरिन्द्रः ॥ २ ॥

दृढान्यौघ्नादुशमानओजः । अवाभिनत्ककुभः पर्व्वतानां । आनोअग्ने सुकेतुना । रयिं विश्वायुपोषसं । मार्डीकं धेहि जीवसे । त्वँ सोम महे भगं । त्वं यूनऋतायते । दक्षं दधासि जीवसे । रथं युञ्जते मरुतः शुभे सुगं । सूरो न मित्रावरुणागविष्टिषु ॥ ३ ॥

रजाँसि चित्रा विचरन्ति तन्यवः । दिवः सम्म्रा-

जा पयसा नउक्षतं। वाचᳪसु मित्रावरुणाविरावतीं। पर्जन्यश्चित्रां वदति त्विषीमतीं। अभ्रावसत मरुतः सुमायया। द्यां वर्षयतमरुणामरेपसं। अयुक्तसप्तशुन्ध्युवः। सूरोरथस्य नप्त्रियः। ताभिर्यासि स्वयुक्तिभिः। वहिष्ठेभिर्विहरन् पाहि तन्तुं ॥ ४ ॥

अवव्ययन्नसितं देव वस्वः। दविध्वतो रश्मयः सूर्य्यस्य। चर्म्मेवाबाधुस्तमोअप्स्वन्तः। पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नोयवसमिच्छतु। अच्छावद तवसङ्गीर्भिराभिः। स्तुहि पर्जन्यं नमसा विवास। कनिक्रदद्वृषभोजीरदानुः। रेतोदधात्वोषधीषु गर्भं ॥ ५ ॥

योगर्भमोषधीनां। गवां कृणोत्यर्व्वतां। पर्जन्यः पुरुषीणां। तस्माइदास्ये हविः। जुहोता मधुमत्तमं। इडां नः संयतं करत्। तिस्रो यदग्ने शरदस्त्वामित्। शुचिं घृतेन शुचयः सपर्य्यन्। नामानि चहधिरे यज्ञियानि। आसूदयन्त तनुवः सुजाताः ॥ ६ ॥

इन्द्रश्च नः शुनासीरौ। इमं यज्ञं मिमिक्षतं। गर्भं धत्तᳪस्वस्तये। ययोरिदं विश्वं भुवनमाविवेश। ययोरानन्दो निहितोमहश्च। शुनासीरावृतुभिः संविदानौ। इन्द्रवन्तौ हविरिदं जुषेथां। आधाये अग्निमि-

न्धते। स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा॥ अग्न इन्द्रश्च मेदिना। हथो वृत्राण्यप्रति। युवꣳ हि वृ-त्रहन्तमा। याभ्याꣳ सुवरजयन्नग्र एव। यावातस्थतुर्भु-वनस्य मध्ये। प्रचर्षणी वृषणा वज्रबाहू। अग्नी इन्द्रा-वृत्रहणा हुवे वां॥ ७॥

मन इन्द्रो गविष्टिषु तन्तुं गर्भꣳ सुजाताः सखा सप्त च॥ अनु० ५॥

षष्ठोऽनुवाकः।

उत नः प्रियाप्रियासु। सप्तस्वसा सुजुष्टा। सरस्व-तीस्तोम्याभूत्। इमाजुह्वानायुष्मदानमोभिः। प्रति-स्तोमꣳ सरस्वति जुषस्व। तव शर्मन् प्रियतमे दधा-नाः। उपस्थेयामशरणं न वृक्षं। त्रीणि यदा विचक्रमे। विष्णुर्गोपा अदाभ्यः। ततो धर्माणि धारयन्॥ १॥

तदस्य प्रियमभि पाथो अश्यां। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था। विष्णोः पदे प-रमे मध्व उत्सः। क्रत्वा दा अस्तु श्रेष्ठः। अद्य त्वा वन्वन्त्सु-रेक्णाः। मर्त्त आनाश सुवृक्तिं। इमा ब्रह्म ब्रह्मवाह। प्रियात आ बर्हिस्सीद। वीहि सूर पुरोडाशं॥ २॥

उप नस्सूनवो गिरः। शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः। अद्या नो देवसवितः। प्रजावत्सावीः सौभगं। परा दुष्वप्नियꣳ सुव। विश्वानि देव सवितः। दुरितानि परासुव। यद्भद्रं तन्म आसुव। शुचिमर्कैर्बृहस्पतिं॥ ३॥

अध्वरेषु नमस्यत। अनाम्योज आचके। या धारयन्त देवा सुदक्षा दक्षपितारा। असुर्याय प्रमंहसा। सद्मत्क्षेति सुधितश्रोकसि स्वे। तस्माइडा पिन्वते विश्वदानीं। तस्मै विशः स्वयमेवानमन्ति। यस्मिन् ब्रह्मा राजति पूर्व एति। सकूतिमिन्द्र सच्युतिं। सच्युतिं जघनच्युतिं॥ ४॥

कनात्काभान्न आभर। प्रयप्स्यन्निव सक्थ्यौ। वि न इन्द्र मृधो जहि। कनीखुन दिवसापयन्। अभि नः सुष्टुतिं नय। प्रजापतिस्त्रियां यशः। मुष्कयोरदधात्सपं। कामस्य तृप्तिमानन्दं। तस्याग्ने भाजयेह मा। मोदः प्रमोद आनन्दः॥ ५॥

मुष्कयोर्निहितः सपः। सृत्वेव कामस्य तृप्याणि। दक्षिणानां प्रतिगृहे। मनसश्चित्तमाकूतिं। वाचः सत्यमशीमहि। पशूनाꣳ रूपमन्नस्य। यशः श्रीः श्रयतां

मयि। यथाहमस्या अतृपꣳस्त्रियै पुमान्। यथा स्त्री तृप्यति पुꣳसि प्रिये प्रिया। एवं भगस्य तृप्याणि ॥ ६ ॥

यज्ञस्य काम्यः प्रियः। ददामीत्यग्निर्वदति। तथेति वायुराह तत्। हन्तेति सत्यं चन्द्रमाः। आदित्यः सत्यमोमिति। आपस्तत् सत्यमाभरन्। यशो यज्ञस्य दक्षिणां। असौ मे कामः समृध्यतां। नहि स्पशमविदन्नन्यमस्मात्। वैश्वानरात् पुर एतारमग्नेः ॥ ७ ॥

अथेमेऽमन्यन्नमृतमसुराः। वैश्वानरं क्षेत्रजित्याय देवाः। येषामिमे पूर्व्वे अर्म्मास आसन्। अयूपाः सद्मविभृता पुरूणि। वैश्वानर त्वया ते नुत्ताः। पृथिवीमन्यामभितस्थुर्जनासः। पृथिवीं मातरं महीं। अन्तरिक्षमुपब्रुवे। बृहतीमूतये दिवं। विश्वं बिभर्त्ति पृथिवीं ॥ ८ ॥

अन्तरिक्षं विपप्रथेऽपः। दुहे द्यौर्बृहतीपः। नतानशन्ति नदभातितस्करः। नैनाअमित्रो व्यथिरादधर्षति। देवाꣳश्च याभिर्यजते ददाति च। ज्योगित्ताभिः स च ते गोपतिः सह। नताअर्वारेणुककाटो अश्नुते। न सꣳस्कृतत्रमुपयन्ति ता अभि। उरुगायमभयं तस्य ता अनु। गावो मर्त्त्यस्य विचरन्ति यज्वनः ॥ ९ ॥

रात्री व्यख्यदायती । पुरुत्रा देव्यक्षभिः । विश्वाअधिश्रियोऽधित । उप ते गाइवाकरं । वृणीष्व दुहितर्दिवः । रात्री स्तोमन्न जिग्युषी । दैवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवोवदन्ति । सा नो मन्द्रेषमूर्जं दुहाना । धेनुर्वागस्मानुपसुष्टुतैतु ॥ १० ॥

यद्वाग्वदन्त्यविचेतनानि । राष्ट्री देवानां निषसाद मन्द्रा । चतस्रऊर्जं दुदुहे पयांसि । क्व स्विदस्याः परमं जगाम । गौरीर्मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन् । तस्याः समुद्राअधिविक्षरन्ति । तेन जीवन्ति प्रदिशश्चतस्रः ॥ ११ ॥

ततः क्षरत्यक्षरं । तद्विश्वमुपजीवति । इन्द्रासूरा जनयन् विश्वकर्म्मा । मरुत्वाँ अस्तुगणवान्त्स जातवान् । अस्य स्नुषा श्वशुरस्य प्रशिष्टिं । सपत्ना वाचं मनसाउपासतां । इन्द्रः सूरोअतरद्रजांसि । स्नुषा सपत्ना श्वशुरोऽयमस्तु । अयं शत्रूञ्जयतु जर्हृषाणः । अयं वाजं जयतु वाजसातौ ॥ अग्निः क्षत्रभृदनिभृष्टमोजः । सहस्रियो दीप्यतामप्रयुच्छन् । विभ्राजमानः समिधानउग्रः । आन्तरिक्षमरुहदगं द्यां ॥ १२ ॥

धारयन् पुरोडाशं बृहस्पतिं अघर्मच्युतिमामन्दो भगस्य नृप्याण्यम्ने: पृथिवी यज्ञनरएतु प्रदिशश्चतस्रो वाजसातौ चत्वारि च ॥ ६ ॥

सप्तमोऽनुवाकः ।

वृषास्यꣳशुर्वृषभाय गृह्यसे । वृषायमुग्रोनृचक्षसे । दिव्यः कर्म्मण्योहितो बृहन्नाम । वृषभस्य या ककुत् । विषूवान् विष्णो भवतु । अयं यो मामको वृषा । अथो इन्द्रइव देवेभ्यः । वि ब्रवीतु जनेभ्यः । आयुष्मन्तं वर्चस्वन्तं । अथो अधिपतिं विशां ॥ १ ॥

अस्याः पृथिव्या अध्यक्षं । इममिन्द्र वृषभं कृणु । यः सुशृङ्गः सुवृषभः । कल्याणो द्रोणआहितः । कार्षीवलप्रगाणेन । वृषभेण यजामहे । वृषभेण यजमानाः । अक्रूरेणेव सर्पिषा । मृधश्च सर्व्वाइन्द्रेण । पृतनाश्च जयामसि ॥ २ ॥

यस्यायमृषभो हविः । इन्द्राय परिणीयते । जयाति शत्रुमायन्तं । अथो हन्ति पृतन्यतः । नृणामहं प्रणीरसत् । अग्रउद्भिन्दतामसत् । इन्द्रशुष्मन्ननुवामेरयस्व । नीचा विश्वा अभितिष्ठाभिमातीः । निश्शृणी ह्याबाधं

योमोअस्ति। उरुं नो लोकं कृणुहि जीरदानो॥ ३॥

प्रेह्यभिप्रेहि प्रभरा सहस्व। मा विवेनो विश्रुणुष्वा-
जनेषु। उदीडितो वृषभ तिष्ठ शुष्मैः। इन्द्र शत्रून् पुरो-
अस्माकं युध्य। अग्ने जेता त्वं जय। शत्रून्त्सहसओजसा।
विशत्रून् विमृधानुद। एतं ते स्तोमन्तु विजातविप्रः।
रथन्न धीरः स्वपाअतक्षं। यदीदग्ने प्रति त्वं देवहर्य्याः
॥ ४॥

सुवर्वतीरपएनाजयेम। योघृतेनाभिमानितः। इन्द्र
जैत्राय जज्ञिषे। स नः सङ्कासु पारय। पृतना सा-
ह्येषु च। इन्द्रोजिगाय पृथिवीं। अन्तरिक्षꣳ सुवर्महत्।
वृत्रहा पुरुचेतनः। इन्द्रोजिगाय सहसा सहाꣳसि।
इन्द्रोजिगाय पृतनानि विश्वा॥ ५॥

इन्द्रोजातोविपुरोरुरोज। स नः परस्यावरिवः
कृणोतु। अयं कृतुरगृभीतः। विश्वजिदुद्भिदित्सोमः।
ऋषिर्विप्रः काव्येन। वायुरग्रेगा यज्ञप्रीः। साकङ्गन्मन-
सा यज्ञं। शिवोनियुद्भिः शिवाभिः। वायो शुक्रोअ-
यामि ते। मध्वोअग्रं दिविष्टिषु॥ ६॥

आयाहि सोमपीतये। स्पार्होदेव नियुत्वता। इ-
ममिन्द्र वर्द्धय क्षत्रियाणां। अयं विशां विश्पतिरस्तु रा-

जा। अस्मा इन्द्रमहि वर्चाꣳसि धेहि। अवर्चसं कृणुहि शत्रुमस्य। इममाभज ग्रामे अश्वेषु गोषु। निरमुं भज यो मित्रो अस्य। वर्ष्मन् क्षत्रस्य ककुभिः श्रयस्व। ततो न उग्रो विभजा वसूनि ॥ ७ ॥

अस्मे द्यावापृथिवी भूरि वामं। सन्दुहाथां घर्म्मदुघेव धेनुः। अयꣳ राजा प्रिय इन्द्रस्य भूयात्। प्रियो गवामोषधीनामुतापां। युनज्मि त उत्तरावन्तमिन्द्रं। येन जयासि न पराजयासै। स त्वाकरेकवृषभꣳ स्वानां। अथो राजन्नुत्तमं मानवानां। उत्तरस्त्वमधरे ते सपत्नाः। एकवृषा इन्द्रसखा जिगीवान् ॥ ८ ॥

विश्वा आशाः पृतनाः सञ्जयं जयन्। अभितिष्ठ शत्रूयतः सहस्व। तुभ्यं भरन्ति क्षितयो यविष्ठ। बलिमग्ने अन्तित ओत दूरात्। आभन्दिष्ठस्य सुमतिं चिकिद्धि। बृहत्ते अग्ने महि शर्म्म भद्रं। यो देह्यो अनमयद्वधस्नैः। यो अर्य्यपत्नीरुषसश्चकार। स निरुध्या नहुषो यह्वो अग्निः। विशश्चक्रे बलिहृतः सहोभिः ॥ ९ ॥

प्र सद्यो अग्ने अत्येष्यन्यान्। आविर्यस्मै चारुतरो बभूथ। ईडेन्यो वपुष्यो विभावा। प्रियो विशामतिथिर्मानुषीणां। ब्रह्म ज्येष्ठा वीर्य्या सम्भृतानि। ब्रह्माग्रे ज्येष्ठं

दिवमाततान। ऋतस्य ब्रह्म प्रथमोत जज्ञे। तेनार्हति ब्रह्मणा स्पर्द्धितुं कः। ब्रह्मस्रुचो घृतवतीः। ब्रह्मणा स्वरवोमिताः ॥ १० ॥

ब्रह्मयज्ञस्य तन्तवः। ऋत्विजो ये हविष्कृतः। शृङ्गाणीवेच्छृङ्गिणाꣳ सन्दहृश्रिरे। चषालवन्तः स्वरवः पृथिव्यां। ते देवासः स्वरवस्तस्थिवाꣳसः। नमः सखिभ्यः सन्नान्मावगात। अभिभूरग्निरतरद्रजाꣳसि। स्पृधोविहत्य पृतनाअभिश्रीः। जुषाणोमआहुतिं मा महिष्ट। हत्वा सपत्नान् वरिवस्करन्नः॥ ईशानं त्वा भुवनानामभिश्रियं। स्तौम्यग्नउरु क्षतꣳ सुवीरं। हविर्जुषाणः सपत्नाँ अभिभूरसि। जहि शत्रूँ अपमृधो नुदस्व ॥ ११ ॥

विशां जयामसि जीरदानोहर्य्याविश्वा दिविष्टिषु वसूनि जिगीवान्तसहोभिर्मितानश्चत्वारि च॥ अनु० ७॥

अष्टमोऽनुवाकः।

स प्रत्नवन्नवीयसा। अग्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना। नवन्नु स्तोममग्नये। दिवः श्येनायजीजनं। वसोः कुविद्वनाति नः। स्वारुहायस्य श्रियोदृशे। रयि-

वीरवतोयथा। अग्ने यज्ञस्य चेततः। अदाभ्यः पुरएता ॥ १ ॥

अग्निर्विशां मानुषीणां। तूर्णी३ रथः सदानवः। नवꣳ सोमाय वाजिने। आज्यं पयसोऽजनि। जुष्टꣳ शुचितमं वसु। नवꣳ सोम जुषस्व नः। पीयूषस्येह तृष्णुहि। यस्ते भागकृता वयं। नवस्य सोम ते वयं। आ सुमतिं वृणीमहे ॥ २ ॥

स नौरास्व सहस्रिणः। नवꣳ हविर्जुषस्व नः। कृतुभिः सोमभूतमं। तदङ्ग प्रतिहर्य्य नः। राजन्त्सोम स्वस्तये। नवꣳ स्तोमं नवꣳ हविः। इन्द्राग्निभ्यां निवेदय। तज्जुषेताꣳ सचेतसा। शुचिन्नु स्तोमं नव जातमद्य। इन्द्राग्नी वृत्रहणा जुषेथां ॥ ३ ॥

उभा हि वाꣳ सु हवा जोहवीमि। ता वाजꣳ सद्य उशतधेष्ठा। अग्निरिन्द्रो नवस्य नः। अस्य हव्यस्य तृप्यतां। इह देवौ सहस्रिणौ। यज्ञं नआहि गच्छतां। वसुमन्तꣳ सुवर्विदं। अस्य हव्यस्य तृप्यतां। अग्निरिन्द्रो नवस्य नः। विश्वान्देवाꣳस्तर्पयत ॥ ४ ॥

हविषोऽस्य नवस्यनः। सुवर्विदोहि अग्निरे। एदं बर्हिः सुष्टरीं मानवेन। अयं यज्ञोयजमानस्य भागः।

अयं बभूव भुवनस्य गर्भः। तिस्रो देवाइदमधागमिष्ठाः। इमेऽनु द्यावापृथिवी समीची। तस्माने यज्ञं पुरु पेशसं धिया। आस्मै पृणीतां भुवनानि विश्वा। प्रजां पुष्टिममृतं नवेन॥ ५॥

इमे धेनू अमृतं ये दुहात्। पयस्वत्युत्तरामेतु पुष्टिः। इमं यज्ञं जुषमाणे नवेन। समीची द्यावापृथिवी घृताची। यविष्ठोहव्यवाहनः। चित्रभानुर्घृतासुतिः। नवं जातो विरोचसे। अग्ने तत्ते महित्वनं। त्वमग्ने देवताभ्यः। भागे देव न मीयसे॥ ६॥

स एना विद्वान् यक्ष्यसि। नव॑ स्तोमं जुषस्व नः। अग्निः प्रथमः प्राश्नातु। स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः। कृणोतु विश्वचर्षणिः। भद्रान्नश्रेयः समनैष्ट देवाः। त्वयावसेन समशीमहि त्वा। सनोमयोभूः पितोअविशस्व। शन्तोकायमनुवे स्योनः॥ एतमुत्यं मधुना संयुतं यवं। सरस्वत्या अधिमनावचर्कृषुः। इन्द्र आसीत्सीरपतिः शतक्रतुः। कीनाशा आसन्मरुतः सुदानवः॥ ७॥

पुर एता हणीमहे जुषेथां तर्पयतामृतं नवेन मीयसे स्योनश्चत्वारि च॥ अनु॰ ८॥

जुष्टस्वस्रुषेजुष्टीनरो नक्तं आतादेषासउत नो हृषास्यꣳसुः सप्रतवदष्टौ ॥ ८ ॥

जुष्टीमन्युर्भगो जुष्टीनरो हरिवर्यसञ्चिरः शिप्रिन्वां जानामुत नो यद्वाग्वदन्तो विश्वाआशाअशीतिः ॥ ८० ॥ हरिः ॐ ॥

इति चतुर्थोऽध्यायः ॥

---

हरिः ॐ ॥

द्वितीयाष्टके पञ्चमाध्याये

प्रथमोऽनुवाकः ।

प्राणोरक्षति विश्वमेजत् । इर्य्यो भूत्वा बहुधा बहूनि । सइत्सर्व्वं व्यानशे । योदेवो देवेषु विभूरन्तः । आवृदात् क्षेत्रियध्वगद्दृषा । तमित्प्राणं मनसोपशिक्षत । अग्रे देवानामिदमत्तु नो हविः । मनसश्चित्तेदं । भूतं भव्यञ्च गुप्यते । तद्धि देवेष्वग्रियं ॥ १ ॥

आनएतु पुरश्चरं । सह देवैरिमꣳ हवं । मनः श्रेयसि श्रेयसि । कर्म्मन् यज्ञपतिदधत् । जुषतां मे वागिदꣳ

हविः विराड्देवी पुरोहिता। हव्यवाडनपायिनी। यया रूपाणि बहुधा वदन्ति। यशाꣳसि देवाः परमे जनित्रे। सा नो विराडनपस्फुरन्ती ॥ २ ॥

वाग्देवी जुषतामिदꣳ हविः। चक्षुर्देवानां ज्योतिरमृते न्यक्तं। अस्य विज्ञानाय बहुधा निधीयते। तस्य सुम्नमशीमहि। मा नो हासीद्विचक्षणं। आयुरिन्नः प्रतीर्य्यतां। अनन्धाश्चक्षुषा वयं। जीवाज्योतिरशीमहि। सुवर्ज्योतिरुतामृतं। श्रोत्रेण भद्रमुत शृण्वन्ति सत्यं॥ श्रोत्रेण वाचं बहुधोद्यमानां। श्रोत्रेण मोदश्च महश्च श्रूयते। श्रोत्रेण सर्व्वादिशआशृणोमि। येन प्राच्याउत दक्षिणा। प्रतीच्यै दिशः शृण्वन्त्युत्तरात्। तदिच्छ्रोत्रं बहुधोद्यमानं। अरान्न नेमिः परि सर्व्वं बभूव ॥ ३ ॥

अग्नियमनपस्फुरन्ती सत्यꣳ सप्त च॥ अनु० १ ॥

द्वितीयोऽनुवाकः।

उदेहि वाजिन्योअस्यप्स्वन्तः। इदꣳ राष्ट्रमाविश सूनृतावत्। योरोहितो विश्वमिदं जजान। स नो राष्ट्रेषु सुधितां दधातु। रोहꣳ रोहꣳ रोहितआरुरोह।

प्रजाभिर्दृष्टिं जनुषामुपस्थं। ताभिः सꣳरब्धोअविदत् षडुर्व्वीः। गातुं प्रपश्यन्निह राष्ट्रमाहाः। आहार्षीद्राष्ट्रमिह रोहितः। मृधोव्यास्थदभयं नोअस्तु ॥ १ ॥

अस्मभ्यं द्यावापृथिवी शक्करीभिः। राष्ट्रं दुहाथामिह रेवतीभिः। विममर्श रोहितो विश्वरूपः। समाचक्राणः प्ररुहोरुहश्च। दिवं गत्वाय महता महिम्ना। वि नोराष्ट्रमुनत्तु पयसा स्वेन। यास्ते विशस्तपसा सम्बभूवुः। गायत्रं वत्समनुतास्तआगुः। तास्त्वाविशन्तु महसा स्वेन। सम्माता पुत्रो अभ्येतु रोहितः॥ २ ॥

यूयमुग्रामरुतः पृश्निमातरः। इन्द्रेण सयुजा प्रमृणीथ शत्रून्। आ वोरोहितोअशृणोदभिद्यवः। त्रिसप्तासो मरुतः स्वादुसम्मुदः। रोहितो द्यावापृथिवी जजान। तस्मिꣳस्तन्तुं परमेष्ठी ततान। तस्मिञ्छिश्रिये अजएकपात्। अदृꣳहद्द्यावापृथिवी बलेन। रोहितोद्यावापृथिवी अदृꣳहत्। तेन सुवस्तभितं तेन नाकः ॥ ३ ॥

सो अन्तरिक्षे रजसोविमानः। तेन देवाः सुवरन्वविन्दन्। सुशेवन्त्वा भानवोदीदिवाꣳसं। समग्रासो जुह्वो जातवेदः। उक्षन्ति त्वा वाजिनमाघृते नः। सꣳसमग्ने युवसे भोजनानि। अग्ने शर्द्ध महते सौभगाय।

तव द्युम्नान्युत्तमानि सन्तु। सञ्जास्पत्यꣳसुयममाकृणुष्व। शत्रूयतामभितिष्ठा महाꣳसि ॥ ४ ॥

अस्त्वेतु रोहितोनाकोमहाꣳसि ॥ अनु० २ ॥

तृतीयोऽनुवाकः ।

पुनर्नइन्द्रो मघवा ददातु। धनानि शक्रोधन्यः सुराधाः। अर्वाचीनं कृणुतां याचितोमनः। श्रुष्टीनो अस्य हविषो जुषाणः। यानि नोऽजिनं धनानि। जहर्थ शूर मन्युना। इन्द्रानुविन्द नस्तानि। अनेन हविषा पुनः। इन्द्रआशाभ्यः परि। सर्वाभ्योभयं करत् ॥ १ ॥

जेता शत्रून् विचर्षणिः। आकूत्यै त्वा कामाय त्वा समृधे त्वा। पुरोदधेअमृतत्वाय जीवसे। आकूतिमस्यावसे। काममस्य समृध्यै। इन्द्रस्य युञ्जते धियः। आकूतिं देवीं मनसः पुरोदधे। यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामः। विदेयमेनहृदये निविष्टं ॥ २ ॥

सेदग्निरग्नीꣳ रत्येत्यन्यान्।' यत्र वाजी तनयो वीडुपाणिः। सहस्रपाथा अक्षरा समेति। आशानां त्वाशापालेभ्यः। चतुर्भ्योअमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यः

विधम हविषा वयं। विश्वाआशामधुना सꣳसृजामि। अनमी वाआपओषधयोभवन्तु। अयं यजमानोमृधो-व्यस्यतां॥ अगृभीताः पशवः सन्तु सर्व्वे। अग्निः सोमोवरुणोमित्रइन्द्रः। बृहस्पतिः सविता यः सहस्री। पूषा नो गोभिरेव सारस्वती। त्वष्टा रूपाणि समनक्तु यज्ञैः। त्वष्टा रूपाणि दधती सरस्वती। पूषा भगꣳ सविता नोददातु। बृहस्पतिर्ददिन्द्रः सहस्रं। मित्रोदाता वरुणः सोमो अग्निः॥ ३॥

करन्निविष्टमस्यतान्नव च॥ अनु० ३॥

चतुर्थोऽनुवाकः।

आ नोभर भगमिन्द्र द्युमन्तं। नि ते देष्णस्य धीमहि प्ररेके। उर्व्वइव पप्रथे कामोअस्मे। तमापृणा वसुपते वसूनां। इमं कामं मन्दया गोभिरश्वैः। चन्द्रवताराधसा पप्रथस्व। सुवर्य्यो मतिभिः स्तुभ्यं विप्राः। इन्द्राय वाहः कुशिकासो अक्रन्। इन्द्रस्य नु वीर्य्याणि प्रवोचं। यानि चकार प्रथमानि वज्री॥ १॥

अहन्नहिमन्वपस्ततर्द। प्रवक्षणाअभिनत् पर्व्वतानां। अहन्नहिं पर्व्वते शिश्रियाणं। त्वष्टास्मै वज्रꣳ

स्वर्य्यं ततक्ष। वाश्राइव धेनवः स्यन्दमानाः। अञ्जः समुद्रमवजग्मुरापः। वृषायमाणो वृणीत सोमं। त्रिकद्रुकेष्वपिबत्सुतस्य। आसायकं मघवादत्त वज्रं। अहन्नेनं प्रथमजामहीनां॥ २॥

यदिन्द्राहन् प्रथमजामहीनां। आन्मायिनाममिनाः प्रोतमायाः। आत्सूर्य्यं जनयं द्यामुषासं। तादीत्ना शत्रून्नकिला विवित्से। अहं वृत्रं वृत्रतरं व्यंसं। इन्द्रो वज्रेण महता वधेन। स्कन्धांसीव कुलिशेनाविवृक्णा। अहिः शयतउपपृक्पृथिव्यां। अयोध्येव दुर्मदआ हि जुह्वे। महावीरन्तु विबाधमृजीषं॥ ३॥

नातारीरस्य समृतिं बधानां। संरुजानाः पिपिषइन्द्रशत्रुः। विश्वो विहायाअरतिः। वसुर्दधे हस्ते दक्षिणे। तरणिर्नशिश्रथत्। श्रवस्य यानशिश्रथत्। विश्वस्माइदुषुध्यसे। देवत्रा हव्यमूहिषे। विश्वस्माइत्सुकृते वारमृण्वति। अग्निर्द्वारा व्युर्ण्वति॥ ४॥

उदग्निर्ह्वानोअभिकाममीरयन्। प्रपृच्छन् विश्वा भुवनानि पूर्व्वथा। आकेतुना सुषमिद्धो यजिष्ठः। कामन्नो अग्ने अभिहर्य्य दिग्भ्यः। जुषाणो हव्यममृतेषु दूव्यः। आ नोरयिं बहुलां गोमतीमिषं। निधेहि यक्ष-

दुग्धतेषु भूषन् । अश्विना यज्ञमागतं । दाशुषः पुरुदंॅ-ससा । पूषा रक्षतु नोरयिं ॥ ५ ॥

इमं यज्ञमश्विना वर्द्धयन्ता । इमौ रयिं यजमानाय धत्तं । इमौ पशून् रक्षतां विश्वतो नः । पूषा नः पातु सदमप्रयुच्छन् । प्रतेमहे सरस्वति । सुभगे वाजिनीवति । सत्यवाचे भरे मतिं । इदन्ते हव्यं घृतवत्सरस्वति । सत्यवाचे प्रभरेमा हवीॅंषि । इमानि ते दुरिता सौभगानि ॥ तेभिर्वयॅं सुभगासः स्याम ॥ ६ ॥

वज्र्यहोनामृजीषं व्युच्छति रक्षतु नोरयिॅं सौभगान्येकञ्च ॥ अनु० ४ ॥

पञ्चमोऽनुवाकः ।

यज्ञोरायो यज्ञईशे वसूनां । यज्ञः सस्यानामुत सुक्षितानां । यज्ञइष्टः पूर्व्वचित्तिं दधातु । यज्ञो ब्रह्मण्वाँ अप्येतु देवान् । अयं यज्ञो वर्द्धतां गोभिरश्वैः । इयं वेदिः स्वपत्या सुवीरा । इदं बर्हिरतिबर्हीॅंष्यन्या । इमं यज्ञं विश्वेअवन्तु देवाः । भगएव भगवाँ अस्तु देवाः । तेन वयं भगवन्तः स्याम ॥ १ ॥

तन्त्वाभग सर्व्वइज्जो हवीमि । स नोभगपुरएता भवेह । भग प्रणेतर्भग सत्य राधः । भगेमां धियमुदवद-

दन्नः। भग प्र णोजनय गोभिरश्वैः। भग प्र नृभिर्नृवन्तः स्याम। शश्वतीः समाउपयन्ति लोकाः। शश्वतीः समाउपयन्त्यापः। इष्टं पूर्त्तं शश्वतीनां समानां शाश्वतेन। हविषेष्ट्वानन्तं लोकं परमारुरोह ॥ २ ॥

इयमेव सा या प्रथमोव्यौच्छत्। सा रूपाणि कुरुते पञ्चदेवी। द्वे स्वसारौ वयतस्तन्त्रमेतत्। सनातनं वितत षण्मयूखं। अवान्यांस्तन्तून् किरतोधत्तो अन्यान्। नापपृज्याते न गमाते अन्तं। आ वोयं तृदवाहासोअद्य। दृष्टिं ये विश्वे मरुतो जुनन्ति। अयं योअग्निर्मरुतः समिद्धः। एतं जुषध्वं कवयोयुवानः ॥ ३ ॥

धारावरा मरुतो धृष्णुवोजसः। मृगान भीमास्तविषेभिरूर्मिभिः। अग्नयोन शुशुचानाऋजीषिणः। भुमिन्धमन्तउपगाअ इत्वत। विचक्रमे चिदेवः। आवेधसं नीलपृष्ठं बृहन्तं। बृहस्पतिं सदते सादयध्वं। सादद्योनिं दमआदीदिवांसं। हिरण्यवर्णमरुषं सपेम। स हि शुचिः शतपत्रः स शुन्ध्यूः ॥ ४ ॥

हिरण्यवाशीरिषिरः सुवर्षाः। बृहस्पतिः सख्या वेशञ्चषाः। पूरुसखिभ्यआ सुतिं करिष्ठः। पूषंस्तव व्रते वयं। न रिष्येम कदाचन। स्तोतारस्तइहस्मसि। या-

स्तें पूषन्नावोंऽअन्तः समुद्रे। हिरण्मयीरन्तरिक्षे चरन्ति। याभिर्यासि दूत्याᳪ सूर्य्यस्य। कामेन कृतः श्रव इच्छमानः ॥ ५ ॥

अरण्यान्यरण्यान्यसौ। या प्रेव नश्यसि। कथाग्रामं न पृच्छसि। नत्वाभीरिव विन्दती। वृषारवाय वदते। यदुपावति चिच्चिकः। आघाटीभिरिव धावयन्। अरण्यानिर्महीयते। उत गावइवादन्। उतो वेश्मेव दृश्यते ॥ ६ ॥

उतोऽअरण्यानिस्सायं। शकटीरिव सर्जति। गामङ्गैषआह्वयति। दार्वङ्गैषउपावधीत्। वसन्नरण्यान्याᳪ सायं। अक्रुक्षदिति मन्यते। न वाऽअरण्यानिर्हन्ति। अन्यश्चेन्नाभिगच्छति। स्वादोः फलस्य जग्ध्वा। यत्र कामं निपद्यते॥ आञ्जनगन्धीᳪ सुरभीं। बह्वन्नाम कृषीवलां। प्राहं मृगाणां मातरं। अरण्यानीमशᳪसिषं ॥ ७ ॥

स्याम रुरोह युवानः शुन्ध्यूरिच्छमानोदृश्यते निपद्यते चत्वारि च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः।

वाचᳪ हत्याय शवसे। पृतना साह्याय च। इन्द्रत्वा-

वृत्र्यामसि । तुविद्युम्नं वीरवन्तं बृहन्तं । उरुं गभीरं पृथुबुध्नमिन्द्र । श्रुतर्षिमुग्रमभिमातिषाहं । अस्मभ्यं चित्रं वृषणꣳ रयिं दाः । क्षेत्रियै त्वा निर्ऋत्यै त्वा । द्रुहो मुञ्चामि वरुणस्य पाशात् । अनागसं ब्रह्मणे त्वा करोमि ॥ १ ॥

शिवे ते द्यावापृथिवी उभे इमे । शन्ते अग्निः सहाद्भिरस्तु । शन्द्यावापृथिवी सहौषधीभिः । शमन्तरिक्षꣳ सह वातेन ते । शन्ते चतस्रः प्रदिशो भवन्तु । या दैवीश्चतस्रः प्रदिशः । वातपत्नीरभिसूर्यो विचष्टे । तासां त्वा जरस आदधामि । प्रयक्ष्म एतु निर्ऋतिं पराचैः । अमोचि यक्ष्माद्दुरितादवर्त्य ॥ २ ॥

द्रुहः पाशान्निर्ऋत्यै चोदमोचि । अहा अवर्तिमविदत्स्योनं । अप्यभूद्भद्रे सुकृतस्य लोके । सूर्यमृतं तमसो ग्राह्या यत् । देवा अमुञ्चन्नसृजन् व्येनसः । एवमहमिमं क्षेत्रियाज्जामिशꣳसात् । द्रुहो मुञ्चामि वरुणस्य पाशात् । बृहस्पते युवमिन्द्रश्च वस्वः । दिव्यस्येशाथे उत पार्थिवस्य । धत्तꣳ रयिꣳ स्तुवते कीरये चित् ॥ ३ ॥

युवं पात स्वस्तिभिः सदा नः । [illegible]-

सुजाना । विश्वाहर्धमभि ये रक्षमाणाः । येन हता-दीर्घमध्वानमायन् । अनन्तमर्थमनिवर्त्स्यमानाः । यत्ते सुजाते हिमवत्सु भेषजं । मयोभूः शन्तमायद्धृदो-ऽसि । ततो नोदेहि सीवले । अदो गिरिभ्योअधियत् पृथावसि । सꣳशोभमाना कन्येव शुभ्रे ॥ ४ ॥

तां त्वा सुजाता हविषा वर्द्धयन्ति । सा नः सीवले रयिमाभाजयेह । पूर्व्वं देवाअपरेणानुपश्यञ्जन्मभिः । जन्मान्यवरैः पराणि । वेदानि देवाअयमस्मीति मां । अहꣳ हित्वा शरीरं जरसः परस्तात् । प्राणापानौ चक्षुः श्रोत्रं । वाचं मनसि सम्भृतां । हित्वा शरीरं जर-सः परस्तात् । आ भूतिं भूतिं वयमश्नवामहै ॥ इमाएव ताऽउषसो या प्रथमा व्यौच्छन् । ता देव्यः कुर्व्वते पञ्च-रूपा । शश्वतीर्नावपृञ्ज्यन्ति । न गमन्त्यन्तं ॥ ५ ॥

परोऽव्यवरैर्न्नु चिच्छुभ्रे अश्नवामहै चत्वारि च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

वसूनां त्वाधीतेन । रुद्राणामूर्म्या । आदित्यानां ते-जसा । विश्वेषां देवानां क्रतुना । मरुतामेम्ना जुहोमि स्वाहा । अभिभूतिरहमागमं । इन्द्रसखा स्वायुधः । आ-

स्वाम्नातु सुप्रहः। इदं वर्चोऽअग्निना दत्तमागात्। यशो भर्गः सह ओजोबलञ्च॥ १॥

दीर्घायुत्वाय शतशारदाय। प्रतिगृह्णामि महते वीर्य्याय। आयुरसि विश्वायुरसि। सर्व्वायुरसि सर्व्वमायुरसि। सर्व्वं मआयुर्भूयात्। सर्व्वमायुर्गेषं। भूर्भुवः सुवः। अग्निर्धर्म्मणामन्नादः। मृत्युर्धर्म्मणामधिपतिः। ब्रह्म क्षत्रं स्वाहा॥ २॥

प्रजापतिः प्रणेता। बृहस्पतिः पुरएता। यमः पन्थाः। चन्द्रमाः पुनरसुः स्वाहा। अग्निरन्नादोऽन्नपतिः। अन्नाद्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। सोमो राजा राजपतिः। राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। वरुणः सम्राट्सम्राट्पतिः। साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा॥ ३॥

मित्रः क्षत्रं क्षत्रपतिः। क्षत्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। इन्द्रोबलं बलपतिः। बलमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। बृहस्पतिर्ब्रह्म ब्रह्मपतिः। ब्रह्मास्मिन् यज्ञे यजमानाय ददातु स्वाहा। सविता राष्ट्रं राष्ट्रपतिः। राष्ट्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा। पूषा विशां विट्पतिः। विशमस्मिन् यज्ञे यज-

मानाय ददातु स्वाहा ॥ सरस्वती पुष्टिः पुष्टिपत्नी॥ पुष्टिमस्मिन् यज्ञे यजमानाय ददातु स्वाहा । त्वष्टा पशूनां मिथुनानाꣳ रूपकृद्रूपपतिः । रूपेणास्मिन् यज्ञे यजमानाय पशून्ददातु स्वाहा ॥ ४ ॥

च स्वाहा साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा विश्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा चत्वारि च ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

सहꣳ पाहि यज्ञजीषो तरुत्रः । यः शिप्रवान् वृषभो योमतीनां । योगोत्रभिद्वज्रभृद्योहरिष्ठाः । स इन्द्रचित्राँ अभितृन्धि वाजान् । आ ते शुष्मो वृषभ रातु पश्चात् । ओत्तरादधरागा पुरस्तात् । आ विश्वतो अभिसमेत्वर्वाङ् । इन्द्रद्युम्नꣳ सुवर्वद्धे ह्यस्मे । प्रोष्वस्मै पुरोरथं । इन्द्राय शूषमर्चत ॥ १ ॥

अभीकेचिदु लोककृत् । सङ्गेसु मरुत्सु वृत्रहा । अस्माकं बोधिचोदिता । नभं तामन्यकेषां । ज्याकाअधिधन्वसु । इन्द्रं वयꣳ शुनासीरं । अस्मिन् यज्ञे हवामहे । आ वाजेषु प्रो गमत् । इन्द्रस्य शुनासीराय स्रुचा जुहुत नो हविः ॥ २ ॥

जुषतां प्रति मे गिरः। प्र हव्यानि घृतवन्त्यस्मै। ह-र्यश्वाय भरता सजोषाः। इन्द्रर्तुभिर्ब्रह्मणा वावृधानः। शुनासीरी हविरिदं जुषस्व। वयः सुपर्णा उपसेदुरिन्द्रं। प्रियमेधा ऋषयो नाधमानाः। अपध्वान्तमूर्णुहि पूर्धि चक्षुः। मुमुग्ध्यस्मान्निधयेव बद्धान्। बृहदिन्द्राय गा-यत ॥ ३ ॥

मरुतो वृत्रहन्तमं। येन ज्योतिरजनयन्नृतावृधः। देवं देवाय जागृवि। कामिषैका: कद्रूमे पतङ्गाः। मां याताः कुलिपरिमापतन्ति। अनाहतैनान् प्रथमन्तु देवाः। सौपर्णं चक्षुस्तनुवा विदेय। ऐवावन्दस्व वरुणं बृहन्तं। नमस्याधीरममृतस्य गोपां। स नः शर्म त्रिव-रूथं वियंसत् ॥ ४ ॥

यूयं पात स्वस्तिभिः सदा नः। मार्के सुपर्णमुपपत्य-न्तं। हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरु-णस्य दूतं। यमस्य योनौ शकुनं भुरण्युं। शन्नो देवीर-भिष्टये। आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः। ईशाना वार्याणां। क्षयन्तीश्चर्षणीनां ॥ ५ ॥

अपो याचामि भेषजं। अप्सु मे सोमो अब्रवीत्। अन्तर्विश्वानि भेषजा। अग्निञ्च विश्वशम्भुवं। आपश्च

विभेषजीः। यद्वसु ते सरस्वति। गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति। मुखमङ्ग्धि सरस्वति। या सरस्वती वैश्रभल्या ॥ ६ ॥

तस्यां मे रास्व। तस्यास्ते भक्षीय। तस्यास्ते भूयिष्ठभाजो भूयास्म। अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। ममैव सन्वह हव्यान्यग्ने। पुत्रः पित्रे लोककज्जातवेदः। इहैव सन्तत्र सन्तं त्वाग्ने। प्राणेन वाचा मनसा बिभर्मि। तिरोमा सन्तमायुर्मा प्रहासीत् ॥ ७ ॥

ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे। अयं ते योनिर्ऋत्वियः। यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथानो वर्द्धया रयिं। या ते अग्ने यज्ञिया तनूस्तपे ह्यारोहात्यात्मानं। अच्छावसूनि कृण्वन्नस्मिन्नर्य्या पुरूणि। यज्ञोभूत्वा यज्ञमासीदस्वां योनिं। जातवेदो भुव आजायमानः स क्षय एहि। उपावरोह जातवेदः पुनस्त्वं ॥ ८ ॥

देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजां रयिमस्मासु धेहि। अजस्रो दीदिहि नो दुरोणे। तमिन्द्रंश्चोपयामि मघवानमुग्रं। सत्राद्धानमप्रतिष्कुतंश्शवांसि

सि। प्र॑स्वितो गीर्भिरा च य॒ज्ञियोऽववर्त्तत्। रा॒ये नो विश्वा सु॒पथा कृणोतु व॒ज्री। त्रिकद्रुकेषु महिषो यवाशिरन्तु वि॒शुष्मस्तृपत्। सोममपिबद्विष्णुना सु॒तं यथावशत्। स॒ईं ममाद॒महि॒कर्मकर्त्तवे म॒हामु॒रुं ॥ ९ ॥

सैनं॑सश्चद्दे॒वं दे॒वः स॒त्यमिन्दुं॑ स॒त्यइन्द्रः। वि॒द्यती स॒रमा॑रुग्णमद्रेः। महि॒पाथः पू॒र्व्यं॑ स॒ध्रियक्कः। अग्रं नयत्सुपद्यक्षराणां। अच्छारवं प्रथमा जा॒नती॒गात्। वि॒दद्गव्यं॑ स॒रमा॑ दृ॒ळ्हमू॒र्वं। येना॒नुकं मानुषी भोज॑ते विट्। आ ये विश्वा स्वप॒त्यानि च॒क्रुः। कृ॒ण्वानासो अमृत॒त्वाय गातुं। त्वं नृभिर्नृपते देवहूतौ ॥ १० ॥

भूरीणि वृ॒त्राहर्य्यश्व ह॑ंसि। त्वं निद॒स्युञ्चुमु॑रिं। धुनि॒ं चास्वापयोद॒भीतयेसु॒ हन्तु। ए॒वायांचि पु॒नत्वा मन्दतु त्वा। श्रुधि ब्रह्म वावृधस्वोत गीर्भिः। आ॒विः सू॒र्य्यं कृणुहि पीपिहीषः। जहि शत्रूं॑ र॒भिगाइन्द्र तृन्धि। अ॒ग्ने बाधस्व॒ विमृधो नुदस्व। अपामी वाअप॒ रक्षां॑सि सेध। अ॒स्मात् समु॒द्राद्बृहतो दि॒वोनः ॥ ११ ॥

अ॒पां भूमानमुप नः सृजेह। यत्र प्रतितिष्ठ सुमती सु॒मना आ त्वा। वसूनि पु॒रुधा विशन्तु। दीर्घमायुर्यज॑-

मानाय कृण्वन्। अयाहतैनं जरितारमह्नि। इन्द्रः शुनावद्वितनोति सीरं। संवत्सरस्य प्रतिमाणमेतत्। अर्कस्य ज्योतिस्तदिदास्रज्येष्ठं। संवत्सरꣳ शुनवत्सीरमेतत्। इन्द्रस्य राधः प्रयतं पुरुत्मना॥ तदर्करूपं विमिमानमेति। द्वादशारे प्रतितिष्ठतीद्वृषा। अश्वायन्तो गव्यन्तो वाजयन्तः। हवामहे त्वोपगन्तवा उ। आभूषन्तस्त्वा सुमतौ नवायां। वयमिन्द्र त्वा शुनꣳ हुवेम ॥ १२ ॥

अर्चत हविर्गायत यꣳसत्रर्षणीनां वैश्वभल्याहासीत्वं सुवं देवक्रतौ नरुत्मना षट् च ॥ अनु० ८ ॥

प्राणउदेहि पुनरानो भर यशो रायो वार्चहत्याय वसूनाꣳ रुद्रं वाम्नाष्टौ। प्राणो रक्षत्वयंभीता धारावरा मरुतो दीर्घायुत्वाय ज्योतिष्मा त्वा पञ्चचत्वारिꣳशत्॥ हरिः ॐ ॥

इति पञ्चमोऽध्यायः॥

हरिः ओँ ॥

द्वितीयाष्टके षष्ठाध्याये

प्रथमोऽनुवाकः ।

स्वाद्वीं त्वा स्वादुना । तीव्रां तीव्रेण । अमृताममृतेन । मधुमतीं मधुमता । सृजामि सꣳ सोमेन । सोमोऽस्यश्विभ्यां पच्यस्व । सरस्वत्यै पच्यस्व । इन्द्राय सुत्राम्णे पच्यस्व । परीतो षिञ्चता सुतं । सोमो यउत्तमꣳ हविः ॥ १ ॥

दधन्वायो नर्यो अप्स्वन्तरा । सुषाव सोममद्रिभिः । पुनातु ते परिस्रुतं । सोमꣳ सूर्यस्य दुहिता । वारेण शश्वता तना । वायुः पूतः पवित्रेण । प्राङ्क्सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा । वायुः पूतः पवित्रेण । प्रत्यङ्क्सोमो अतिद्रुतः ॥ २ ॥

इन्द्रस्य युज्यः सखा । ब्रह्म क्षत्रं पवते तेज इन्द्रियं । सुरया सोमः सुत आसुतो मदाय । शुक्रेण देव देवताः पिपृग्धि । रसेनान्नं यजमानाय धेहि । कुविदङ्ग यवमन्तो यवं चित् । यथा दान्त्यनुपूर्वं वि यूयं । इहेहैषां कृणुत भोजनानि । ये बर्हिषो नमोवृक्तिं न जग्मुः । उपयाम गृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि ॥ ३ ॥

सरस्वत्या इन्द्राय सुत्रामणे। एष ते योनिस्तेजसे त्वा। वीर्य्याय त्वा बलाय त्वा। तेजोऽसि तेजोमयि धेहि। वीर्य्यमसि वीर्य्यं मयि धेहि। बलमसि बलं मयि धेहि। नानाहि वां देवहितꣳ सदः कृतं। मा सꣳसृक्षाथां परमे व्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हिꣳसीः स्वां योनिमाविशन्॥ ४॥

उपयाम गृहीतोऽस्याश्विनं तेजः। सारस्वतं वीर्य्यं। ऐन्द्रं बलं। एष ते योनिर्मोदाय त्वा। आनन्दाय त्वा महसे त्वा। ओजोऽस्योजो मयि धेहि। मन्युरसि मन्युं मयि धेहि। महोऽसि महोमयि धेहि। सहोऽसि सहोमयि धेहि। या व्याघ्रं विषूचिका॥ उभौ वृकञ्च रक्षति। श्येनं पतत्रिणꣳ सिꣳहं। सेमं पात्वꣳहसः। सम्पृचस्थ सम्मा भद्रेण पृङ्क्त। विपृचस्थ वि मा पाप्मना पृङ्क्त॥ ५॥

हविः प्रत्यङ्ङ्सोमो अतिद्रुतोगृह्णाम्याविशन् विषूचिका पञ्च च॥ अनु० १॥

द्वितीयोऽनुवाकः।

सोमो राजामृतꣳ सुतः। ऋजीषेणाजहान्मृत्युं। ऋतेन सत्यमिन्द्रियं। वियानꣳ शुक्रमन्धसः। इन्द्रस्ये-

न्द्रियं। इदं पयोऽमृतं मधु। सोममद्भ्योव्यपिबत्। छन्दसा हꣳसः शुचिषत्। ऋतेन सत्यमिन्द्रियं। अद्भ्यः क्षीरं व्यपिबत्॥ १॥

कुङ्ङाङ्गिरसोधिया। ऋतेन सत्यमिन्द्रियं। अन्नात् परिस्रुतो रसं। ब्रह्मणा व्यपिबत् क्षत्रं। ऋतेन सत्यमिन्द्रियं। रेतोमूत्रं विजहाति। योनिं प्रविशदिन्द्रियं। गर्भोजरायुणावृतः। उल्बं जहाति जन्मना। ऋतेन सत्यमिन्द्रियं॥ २॥

वेदेन रूपे व्याकरोत्। सतासती प्रजापतिः। ऋतेन सत्यमिन्द्रियं। सोमेन सोमौ व्यपिबत्। सुतासुती प्रजापतिः। ऋतेन सत्यमिन्द्रियं। दृष्ट्वा रूपे व्याकरोत्। सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधात्। श्रद्धाꣳ सत्ये प्रजापतिः॥ ऋतेन सत्यमिन्द्रियं। दृष्ट्वा परिस्रुतो रसं। शुक्रेण शुक्रं व्यपिबत्। पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं। विपानꣳ शुक्रमन्धसः। इन्द्रस्येन्द्रियं। इदं पयोऽमृतं मधु॥ ३॥

अद्भ्यः क्षीरं व्यपिबत्कुङ्ङृतेन सत्यमिन्द्रियꣳ सत्ये प्रजापतिरष्टौ च॥ अनु० २॥

सोमोराजा विपानꣳ सोममद्भ्योऽद्रेतोमूत्रं वे-

देन सतासती सोमेन सुतासुती दृष्ट्वा रूपे दृष्ट्वा परि-
स्रुतो रसं विपानं दृश ॥

तृतीयोऽनुवाकः ।

सुरावन्तं बर्हिषदꣳ सुवीरं । यज्ञꣳ हिन्वन्ति महिषा
नमोभिः । दधानाः सोमं दिवि देवतासु । मदेमेन्द्रं
यजमानाः स्वर्काः । यस्ते रसः सम्भृत ओषधीषु । सो-
मस्य शुष्मः सुरया सुतस्य । तेन जिन्व यजमानं मदेन ।
सरस्वतीमश्विनाविन्द्रमग्निं । यमश्विनानमुचेरासुरा-
धि । सरस्वत्यसनोदिन्द्रियाय ॥ १ ॥

इमं तꣳ शुक्रं मधुमन्तमिन्दुं । सोमꣳ राजानमिह
भक्षयामि । यदत्र रिप्तꣳ रसिनः सुतस्य । यदिन्द्रो अ-
पिबच्छचीभिः । अहं तदस्य मनसा शिवेन । सोमꣳ
राजानमिह भक्षयामि । पितृभ्यः स्वधाविभ्यः स्वधा-
नमः । पितामहेभ्यः स्वधाविभ्यः स्वधानमः । प्रपिता-
महेभ्यः स्वधाविभ्यः स्वधानमः । अक्षन् पितरः ॥ २ ॥

अमीमदन्त पितरः । अतीतृपन्त पितरः । अमीमृ-
जन्त पितरः । पितरः शुन्धध्वं । पुनन्तु मा पितरः सो-
म्यासः । पुनन्तु मा पितामहाः । पुनन्तु प्रपितामहाः ।

पवित्रेण शतायुषा। पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः ॥ ३ ॥

पवित्रेण शतायुषा। विश्वमायुर्व्यश्नवै। अग्न आयूंषि पवसेऽग्ने पवस्व। पवमानः सुवर्जनः पुनन्तु मा देवजनाः। जातवेदः पवित्रवद्यत्ते पवित्रमर्चिषि। उभाभ्यां देव सवितर्वस्वदेवी पुनती। ये समानाः समनसः। पितरो यमराज्ये। तेषां लोकः स्वधानमः। यज्ञो देवेषु कल्पतां ॥ ४ ॥

ये सजाताः समनसः। जीवाजीवेषु मामकाः। तेषां श्रीर्मयि कल्पतां। अस्मिंल्लोके शतं समाः। द्वे सृती अशृणवं पितॄणां। अहं देवानामुत मर्त्यानां। याभ्यामिदं विश्वमेजत्समेति। यदन्तरा पितरं मातरञ्च। इदं हविः प्रजननं मे अस्तु। दशवीरं सर्वगणं स्वस्तये ॥ आत्मसनि प्रजासनि। पशुसन्यभयसनि लोकसनि। अग्निः प्रजां बहुलां मे करोतु। अन्नं पयो रेतो अस्मासु धत्त। रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहा ॥ ५ ॥

इन्द्रियायं पितरः शतायुषा पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः कल्पतां स्वस्तये पञ्च च ॥ अनु० ३॥

चतुर्थोऽनुवाकः।

सीसेन तन्त्रं मनसा मनीषिणः। ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञꣳ सविता सरस्वती। इन्द्रस्य रूपं वरुणो भिषज्यन्। तदस्य रूपममृतꣳ शचीभिः। तिस्रो दधुर्देवताः सꣳरराणाः। लोमानि शष्पैर्बहुधा न तोक्मभिः। त्वगस्य माꣳसमभवन्न लाजाः। तदश्विना भिषजा रुद्रवर्त्तनी। सरस्वती वयति पेशो अन्तरः ॥ १ ॥

अस्थि मज्जानं मासरैः। कारोतरेण दधतो गवां त्वचि। सरस्वती मनसा पेशलं वसु। नासत्याभ्यां वयति दर्शतं वपुः। रसं परिस्रुता न रोहितं। नग्नहुधीरस्तसरं न वेम। पयसा शुक्रममृतं जनित्रं। सुरया मूत्रा नयन्ति रेतः। अपामतिं दुर्मतिं बाधमानाः। ऊवध्यं वातꣳ सब्वं तदारात् ॥ २ ॥

इन्द्रः सुषामा हृदयेन सत्यं। परोडाशेन सविता जजान। यकृत्क्लोमानं वरुणो भिषज्यन्। मतस्ने वायव्यैर्न मिनाति पित्तं। आन्त्राणि स्थाली मधु पिन्वमाना। गुदा पात्राणि सुदुघा न धेनुः। श्येनस्य पत्रं न प्लीहा शचीभिः। आसन्दी नाभिरुदरं न माता। कुम्भो व-

निष्टुर्जनिता शचीभिः। यस्मिन्नग्ने योन्यां गर्भो अन्तः ॥ ३ ॥

साशीव्यक्तः शतधारउत्सः। दुहेन कुम्भीः स्वधां पितृभ्यः। मुखः सदस्य शिरइत्सदेन। जिह्वा पवित्रमश्विना सः सरस्वती। चप्यन्नपायुभिषगस्य बालः। वस्तिर्नशेपोह रसा तरस्वी। अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां। छागेन तेजो हविषा शृतेन। पक्ष्माणि गोधूमः कलैरुतानि। पेशोन शुक्लमसितं वसाते ॥ ४ ॥

अविर्न मेषोन सिवीर्याय। प्राणस्य पन्था अमृतो ग्रहाभ्यां। सरस्वत्युपवाकैर्व्यानं। नस्यानि बर्हिर्बदरैर्जजान। इन्द्रस्य रूपमृषभो बलाय। कर्णाभ्याः श्रोत्रममृतं ग्रहाभ्यां। यवान बर्हिर्भुवि केसराणि। कर्कन्धुयज्ञे मधु सारघं मुखात्। आत्मन्नुपस्थेन वृकस्य लोम। मुखे श्मश्रूणि न व्याघ्रलोम ॥ ५ ॥

केशा न शीर्षन् यशसे श्रियै शिखा। सिःहस्य लोम त्विषिरिन्द्रियाणि। अङ्गान्यात्मन् भिषजा तदश्विना। आत्मानमङ्गैः समधात्सरस्वती। इन्द्रस्य रूपः शतमानमायुः। चन्द्रेण ज्योतिरमृतं दधाना। सरस्वती योन्यां गर्भमन्तः। अश्विभ्यां पत्नी सुकृतं बिभर्ति। अ-

पा॑ रसे॑न वरु॑णो न साम्ना॑। इन्द्र॑ श्रि॒यै ज॒नय॑न्न॒प्सु रा॒जा॥ तेज॑ः पशू॒नां ह॒विरि॑न्द्रि॒याव॑त्। प॒रि॒स्रुता॒ पय॑सा सार॒घं मधु॑। अ॒श्विभ्यां॑ दु॒ग्धं भि॒षजा॒ सर॑स्वत्या सु॒तासु॒ताभ्या॑म्। अ॒मृत॒ः सोम॒ इन्दु॑ः॥ ६॥

अ॒न्तर॒आरा॒द॒न्तर्व॑साते व्या॒घ्रलो॒मं राजा॒ च॒त्वारि॑ च॥ अनु॰ ४॥

पञ्चमोऽनुवाकः।

मि॒त्रोऽसि॒ वरु॑णोऽसि। सम॒हं विश्वै॑र्दे॒वैः। क्ष॒त्रस्य॒ नाभि॑रसि। क्ष॒त्रस्य॒ योनि॑रसि। स्यो॒ना मा सी॑द। सु॒षदा॒ मा सी॑द। मा त्वा॑ हिंसीत्। मा मा॑ हिंसीत्। निष॑साद धृ॒तव्र॑तो॒ वरु॑णः। प॒स्त्या॑स्वा॥ १॥

साम्रा॑ज्याय सु॒क्रतु॑ः। दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे। अ॒श्विनो॑र्बा॒हुभ्या॑म्। पू॒ष्णो हस्ता॑भ्याम्। अ॒श्विनो॒र्भैष॑ज्येन। तेज॑से ब्रह्मवर्च॒साया॒भिषि॑ञ्चामि। दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे। अ॒श्विनो॑र्बा॒हुभ्या॑म्। पू॒ष्णो हस्ता॑भ्याम्। सर॑स्वत्यै भैष॑ज्येन॥ २॥

वी॒र्या॑याऽन्ना॒द्याया॒भिषि॑ञ्चामि। दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे। अ॒श्विनो॑र्बा॒हुभ्या॑म्। पू॒ष्णो हस्ता॑भ्याम्। इन्द्र॑स्ये-

श्रियेव। श्रियै यशसे ब्रह्मावाभिषिञ्चामि। कोऽसि-कतमोऽसि। कस्मै त्वा काय त्वा। सुश्लोकाँ ४ सुमङ्गलाँ ४ सत्य राजाइन्। शिरो मे श्रीः॥ ३॥

यशोमुखं। त्विषिः केशाश्च श्मश्रूणि। राजा मे प्राणो-ऽमृतं। सम्राट् चक्षुः। विराट् श्रोत्रं। जिह्वा मे भद्रं। वाङ्महः। मनोमन्युः। स्वराड्भामः। मोदाः प्रमोदा-अङ्गुलीरङ्गानि॥ ४॥

चित्तं मे सहः। बाहू मे बलमिन्द्रियं। हस्तौ मे कर्म्म वीर्य्यं। आत्मा क्षत्रमुरो मम। पृष्ठीर्मे राष्ट्रमुदरमु॑-सौ। ग्रीवाश्च श्रोण्यौ। ऊरू अरत्नी जानुनी। विशो मे-ऽङ्गानि सर्व्वतः। ताभिर्मे चित्तं विश्वानं। पायुर्मेऽप-चितिर्भसत्॥ ५॥

आनन्दनन्दावाण्डौ मे। भगः सौभाग्यं पसः। ज-ङ्घाभ्यां पद्भ्यां धर्मोऽस्मि। विशिराजा प्रतिष्ठितः। प्रति-क्षत्रे प्रतितिष्ठामि राष्ट्रे। प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्। प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे। प्रतिद्यावापृथिव्योः। प्रतितिष्ठामि यज्ञे॥ ६॥

त्रयो देवास्त्रकादश। त्रयस्त्रिंशाः सुराधसः। बृह-स्पतिपुरोहिताः। देवस्य सवितुः सवे। देवादेवैरवन्तु

मा । प्रथमाद्द्वितीयैः । द्वितीयास्तृतीयैः । तृतीयाः सत्येन । सत्यं यज्ञेन । यज्ञो यजुर्भिः ॥ ७ ॥

यजूꣳषि सामभिः । सामान्यृग्भिः । ऋचो याज्याभिः । याज्या वषट्कारैः । वषट्कारा आहुतिभिः । आहुतयो मे कामान्त्समर्द्धयन्तु । भूः स्वाहा । लोमानि प्रयतिर्मम । त्वङ्म आनतिरागतिः । माꣳसमुपनतिः ॥ वस्वस्थि । मज्जा म आनतिः ॥ ८ ॥

पत्न्यास्त्वा सरस्वत्यै भैषज्येन श्रीरङ्गानि भसद्यज्ञो यजुर्भिरुपनतिर्द्वे च ॥ अनु० ५ ॥

षष्ठोऽनुवाकः ।

यद्देवा देवहेडनं । देवासश्चकृमा वयं । अग्निर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । यदि दिवा यदि नक्तं । एनाꣳसि चकृमा वयं । वायुर्मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । यदि जाग्रद्यदि स्वप्ने । एनाꣳसि चकृमा वयं ॥ १ ॥

सूर्यो मा तस्मादेनसः । विश्वान्मुञ्चत्वꣳहसः । यद्ग्रामे यदरण्ये । यत्सभायां यदिन्द्रिये । यच्छूद्रे यदर्य्ये । एनश्चकृमा वयं । यदेकस्याधिधर्म्मणि । तस्यावयजनम-

सि। यदापो अघ्न्या वरुणेति शपामहे। ततो वरुण नो मुञ्च ॥ २ ॥

अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण। अव देवैर्देवकृतमेनो यासिषम्। अव मर्त्यैर्मर्त्यकृतं। उरोरा नो देव रिषस्पाहि। सुमित्रा न आप ओषधयः सन्तु। दुर्मित्रास्तस्मै भूयासुः। योऽस्मान्द्वेष्टि। यं च वयं द्विष्मः। द्रुपदादिवेन्मुमुचानः। स्विन्नः स्नात्वी मलादिव ॥ ३ ॥

पूतं पवित्रेणेवाज्यं। आपः शुन्धन्तु मैनसः। उद्वयं तमसस्परि। पश्यन्तो ज्योतिरुत्तरं। देवं देवत्रा सूर्यं। अगन्म ज्योतिरुत्तमं। प्रतियुतो वरुणस्य पाशः। प्रत्यस्तो वरुणस्य पाशः। एधोऽस्येधिषीमहि। समिदसि ॥ ४ ॥

तेजोऽसि तेजो मयि धेहि। अपो अन्वचारिषं। रसेन समसृक्ष्महि। पयस्वाꣳ अग्न आगमं। तं मा सꣳसृज वर्चसा। प्रजया च धनेन च। समाववर्त्ति पृथिवी। समुषाः। समु सूर्यः। समु विश्वमिदं जगत् ॥ वैश्वानरज्योतिर्भूयासं। विभुं कामं व्यश्नवै। भूः स्वाहा ॥ ५ ॥

स्वप्नेनाꣳसि चकृमाव यं मुञ्च मलादिव समिदसि जगत्यौणि च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः ।

होता यक्षत्समिधेन्द्रमिडस्पदे । नाभा पृथिव्या अधि। दिवो वर्ष्मन्त्समिध्यते। ओजिष्ठश्चर्षणी सहान्। वेत्वाज्यस्य होतर्यज। होतायक्षत्तनूनपातं। ऊतिभिर्जेतारमपराजितं। इन्द्रं देवꣳ सुवर्विदं। पथिभिर्मधुमत्तमैः। नराशꣳसेन तेजसा ॥ १ ॥

वेत्वाज्यस्य होतर्यज। होतायक्षदिडाभिरिन्द्रमीडितं। आजुह्वानममर्त्यं। देवोदेवैः सवीर्य्यः। वज्रहस्तः पुरन्दरः। वेत्वाज्यस्य होतर्यज। होतायक्षद्बर्हिषीन्द्रं निषद्वरं। वृषभं नर्य्यापसं। वसुभीरुद्रैरादित्यैः सयुग्भिर्बर्हिरासदत् ॥ २ ॥

वेत्वाज्यस्य होतर्यज। होतायक्षदोजो न वीर्य्यं। सहोद्वार इन्द्रमवर्द्धयन्। सुप्रायणा विश्रयन्तामृतावृधः। द्वार इन्द्राय मीढुषे। वियन्त्वाज्यस्य होतर्यज। होतायक्षदुषे इन्द्रस्य धेनू। सुदुघे मातरौ मही। सवातरौ न तेजसी। वत्समिन्द्रमवर्द्धतां ॥ ३ ॥

वीतामाज्यस्य होतर्यज। होतायक्षद्दैव्याहोतारा भिषजा सखाया। हविषेन्द्रं भिषज्यतः। कवी देवौ प्रचेतसौ। इन्द्राय धत्त इन्द्रियं। वीतामाज्यस्य होत

यजं। होतायक्षत्तिस्रो देवीः। अयस्त्रिधातवोपसः। इ-
डा सरस्वती भारती ॥ ४ ॥

महीन्द्रपत्नीर्हविष्मतीः। वियन्त्वाज्यस्य होतर्यज।
होतायक्षत्त्वष्टारमिन्द्रन्देवं। भिषजꣳ सुयजं घृतश्रियं।
पुरुरूपꣳ सुरेतसं मघोनिं। इन्द्राय त्वष्टादधदिन्द्रिया-
णि। वेत्वाज्यस्य होतर्यज। होतायक्षद्वनस्पतिं। श-
मितारꣳ शतक्रतुं। धियोजोष्टारमिन्द्रियं ॥ ५ ॥

मध्वासमञ्जन् पथिभिः सुगेभिः। स्वदाति हव्यं म-
धुना घृतेन। वेत्वाज्यस्य होतर्यज। होतायक्षदिन्द्रꣳ
स्वाहाज्यस्य। स्वाहा मेदसः। स्वाहा स्तोकानां। स्वाहा
स्वाहाकृतीनां। स्वाहा हव्यसूक्तीनां। स्वाहा देवाँ
आज्यपान्। स्वाहेन्द्रꣳ होत्राज्जुषाणाः ॥ इन्द्र आज्य
वियन्तु। होतर्यज ॥ ६ ॥

तेजसा सददवर्द्धतां भारतीन्द्रियं जुषाणाहे च ॥
अनु० ७ ॥

समिधेन्द्रं तनूनपातमिडाभिर्बर्हिष्योजउषे दैव्या
तिस्रस्त्वष्टारं वनस्पतिमिन्द्रं ॥ २ ॥

समिधेन्द्रं चतुर्वेत्वेको वियन्तु द्विर्वीतामेको विय-
न्तु द्विर्वेत्वेको वियन्तु होतर्यज ॥

अष्टमोऽनुवाकः ।

समिद्ध इन्द्र उषसामनीके । पुरोरुचा पूर्वकृद्वावृधानः । त्रिभिर्देवैस्त्रिंशता वज्रबाहुः । जघान वृत्रं वि दुरो ववार । नराशंसः प्रतिशूरो मिमानः । तनूनपात्प्रति यज्ञस्य धाम । गोभिर्वपावान्मधुना समञ्जन् । हिरण्यैश्चन्द्री यजति प्रचेताः । ईडितो देवैर्हरिवाँ अभिष्टिः । आजुह्वानो हविषा शर्धमानः ॥ १ ॥

पुरन्दरो मघवान् वज्रबाहुः । आयातु यज्ञमुप नो जुषाणः । जुषाणो बर्हिर्हरिवान्न इन्द्रः । प्राचीनं सीदत् प्रदिशा पृथिव्याः । उरुव्यचाः प्रथमानं स्योनं । आदित्यै रक्तं वसुभिः सजोषाः । इन्द्रं दुरः कवष्यो धावमानाः । वृषाणं यन्तु जनयः सुपत्नीः । द्वारो देवीरभितो विश्रयन्तां । सुवीरा वीरं प्रथमाना महोभिः ॥२॥

उषासा नक्ता बृहती बृहन्तं । पयस्वती सुदुघे शूरमिन्द्रं । पेशस्वती तन्तुना संव्ययन्ती । देवानां देवं यजतः सुरुक्मे । दैव्या मिमाना मनसा पुरुत्रा । होताराविन्द्रं प्रथमा सुवाचा । मूर्द्धन् यज्ञस्य मधुना दधाना । प्राचीनं ज्योतिर्हविषा वृधातः । तिस्रो देवीर्हविषा वर्द्धमानाः । इन्द्रं जुषाणा वृषणं न पत्नीः ॥ ३ ॥

अच्छिन्नं तन्तुं पयसा सरस्वती। इडा देवी भारती विश्वतूर्त्तिः। त्वष्टा दधदिन्द्राय शुष्मं। अपाकोचिष्टुर्यशसे पुरूणि। वृषा यजन् वृषणं भूरिरेताः। मूर्द्धन् यज्ञस्य समनक्तु देवान्। वनस्पतिरवसृष्टो न पाशैः। आत्मन्यासमजंच्छमिता न देवः। इन्द्रस्य हव्यैर्जठरं पृणानः। स्वदाति हव्यं मधुना घृतेन॥ स्तोकानामिन्दुं प्रतिशूरइन्द्रः। वृषायमाणो वृषभस्तुराषाट्। घृतप्रुषा मधुना हव्यमुन्दन्। मूर्द्धन् यज्ञस्य जुषतां स्वाहा ॥ ४ ॥

शर्द्धमानो महोभिः पत्नीर्घृतेन चत्वारि च॥ अनु०८॥

नवमोऽनुवाकः।

आचर्षणि प्राविवेषयन्मा। तं सध्रीचीः। सत्यमित्तन्न त्वावाँ अन्योअस्ति। इन्द्रदेवो न मर्त्यो ज्यायान्। अहन्नहिं परिशयानमर्णः। अवासृजो योअच्छा समुद्रं। प्रससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्मइह रातिरस्तु। इन्द्राभर दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनां॥ सशेवृधमधिधा द्युम्नमस्मे। महिक्षत्रं जनाषाडिन्द्रतव्यं। रक्षा च नो मघोनः पाहि सूरीन्। राये च नः स्वपत्या इषेधाः॥ १ ॥

रेवतीनां चत्वारि च ॥ अनु० ९ ॥

दशमोऽनुवाकः ।

देवं बर्हिरिन्द्रꣳ सुदेवं देवैः । वीरवत्स्तीर्णं वेद्याम-वर्द्धयत् । वस्तोर्वृतं प्राक्तोर्भृतं । राया बर्हिष्मतोऽत्यगात् । वसुवने वसुधेयस्य वेतु यज । देवीर्द्वार इन्द्रꣳ सङ्घाते । विड्वीर्यामन्नवर्द्धयन् । आ वत्सेन तरुणेन कुमारेण च-मीवता अपार्वाणं । रेणुककाटं नुदन्तां । वसुवने व-सुधेयस्य वियन्तु यज ॥ १ ॥

देवीउषा सा नक्ता । इन्द्रं यज्ञे प्रयत्यह्वेतां । दैवी-र्विशः प्रायासिष्टां । सुप्रीते सुधिते अभूतां । वसुवने व-सुधेयस्य वीतां यज । देवी जोष्ट्री वसुधिती । देवमिन्द्र-मवर्द्धतां । अयाव्यन्याघा द्वेषाꣳसि । आन्यावाक्षीद्व-सुवार्य्याणि । यजमानाय शिक्षिते ॥ २ ॥

वसुवने वसुधेयस्य वीतां यज । देवीऊर्जाहुती दुघे सुदुघे । पयसेन्द्रमवर्द्धतां । इषमूर्जमन्यावाक्षीत् । स-ग्धिꣳ सपीतिमन्या । नवेन पूर्वं दयमाने । पुराणेन नवं । अधातामूर्जमूर्जाहुती वसुवीर्य्याणि । यजमा-नाय शिक्षिते । वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥

देवा दैव्या होतारा। देवमिन्द्रमवर्द्धतां। हताघशꣳसा वाभार्ष्टां वसुवार्य्याणि। यजमानाय शिक्षिता। वसुवने वसुधेयस्य वीतां यज। देवीस्तिस्रः स्तिस्रोदेवीः। पतिमिन्द्रमवर्द्धयन्। अस्पृक्षन्भारती दिवं। रुद्रैर्यज्ञꣳ सरस्वती। इडा वसुमती गृहान्॥ ४॥

वसुवने वसुधेयस्य वियन्तु यज। देवइन्द्रो नराशꣳसः। त्रिवरूथस्त्रिबन्धुरः। देवमिन्द्रमवर्द्धयत्। शतेन शितिपृष्ठानामाहितः। सहस्रेण प्रवर्त्तते। मित्रावरुणे दस्यहोत्रमर्हतः। बृहस्पतिः स्तोत्रं। अश्विनाध्वर्य्यवं। वसुवने वसुधेयस्य वेतु यज॥ ५॥

देवइन्द्रो वनस्पतिः। हिरण्यपर्णो मधुशाखः सुपिप्पलः। देवमिन्द्रमवर्द्धयत्। दिवमग्रेणाप्रात्। अन्तरिक्षं पृथिवीमदृꣳहीत्। वसुवने वसुधेयस्य वेतु यज। देवं बर्हिर्वारितीनां। देवमिन्द्रमवर्द्धयत्। स्वासस्थमिन्द्रेणासन्नं। अन्यावहिꣳष्यभ्यभूत्॥ वसुवने वसुधेयस्य वेतु यज। देवोअग्निः स्विष्टकृत्। देवमिन्द्रमवर्द्धयत्। स्विष्टं कुर्व्वन्त्स्विष्टकृत्। स्विष्टमद्य करोतु नः। वसुवने वसुधेयस्य वेतु यज॥ ६॥

वियन्तु यज शिशिते शिशिते वसुवने वसुधेयस्य वीतां यज गृहान वेतु यजाभूत् षट् च ॥ अनु० १० ॥

देवं बर्हिर्द्वीर्हारो देवी उषा सा नक्ता देवी जोष्ट्री देवी ऊर्जाहुती देवादैव्या होतारा शिशिती देवीस्तिस्रः तिस्रोदेवीः पतिं देवइन्द्रो नराशꣳसो देवइन्द्रो वनस्पतिर्देवं बर्हिर्वारितीनां देवोअग्निः स्विष्टकृद्देवं॥

वेतु वियन्तु चतुर्वीतामेको वियन्तु चतुर्वेतु। अवर्द्धयदवर्द्धयन्निरवर्द्धतामेकोऽवर्द्धयञ्चतुरवर्द्धयत्। वस्तोरा वस्तेन दैवीरयावीषꣳ ह्वतास्तृक्षच्छतेन दिवमिन्द्रꣳ स्वासस्यꣳ स्विष्टं॥

एकादशोऽनुवाकः।

होतायक्षत्समिधाग्निमिडस्पदे। अश्विनेन्द्रꣳ सरस्वतीं। अजो धूम्रोन गोधूमैः कुवलैर्भेषजं। मधुशष्पैर्न तेज इन्द्रियं। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होतायक्षत्तनूनपात्सरस्वती। अविर्मषो न भेषजं। पथा मधुमताभरन्। आश्विनेन्द्राय वीर्य्यं॥ १ ॥

बदरैरुपवाकाभिर्भेषजं तोक्मभिः। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होता

यक्षन्नराशꣳसन्नग्नहुं। पतिꣳ सुरायै भेषजं। मेषः सरस्वती भिषक्। रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्यं। बदरैरुपवाकाभिर्भेषजं तोक्मभिः। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज ॥ २ ॥

होतायक्षदिडेडितः। आजुह्वानः सरस्वतीं। इन्द्रं बलेन वर्द्धयन्। ऋषभेण गवेन्द्रियं। अश्विनेन्द्रा वीर्यं। यवैः कर्कन्धुभिः। मधुलाजैर्नमासरं। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होतायक्षद्बर्हिः सुष्टरीमोर्णम्रदाः। भिषङ्नासत्या ॥ ३ ॥

भिषजाश्विनाश्वा शिशुमती। भिषग्धेनुः सरस्वती। भिषग्दुह इन्द्राय भेषजं। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होतायक्षद्दुरोदिशः। कवष्यो न व्यचस्वतीः। अश्विभ्यां न दुरोदिशः। इन्द्रो न रोदसी दुघे। दुहे कामान्त्सरस्वती ॥ ४ ॥

अश्विनेन्द्राय भेषजं। शुक्रन्न ज्योतिरिन्द्रियं। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होतायक्षत्सुपेशसाषे नक्तं दिवा। अश्विना सञ्जानाने। समञ्जाते सरस्वत्या। त्विषिमिन्द्रे न भेषजं। श्येनो न रजसा हृदा। पयः सोमः परिस्रुता घृतं मधु ॥ ५ ॥

वियन्त्वाज्यस्य होतर्यज । होतायक्षद्दृव्या होतारा भिषजाश्विना । इन्द्रं न जागृवी दिवा नक्तं न भेषजैः । शूषꣳ सरस्वती भिषक् । सीसेन दुह इन्द्रियं । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होतायक्षत्तिस्रोदेवीर्न भेषजं । त्रयस्त्रिधातवोपसः । रूपमिन्द्रे हिरण्ययं ॥ ६ ॥

अश्विनेडा न भारती । वाचा सरस्वती । मह इन्द्राय दधुरिन्द्रियं । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होतायक्षत्त्वष्टारमिन्द्रमश्विना । भिषजं न सरस्वतीं । ओजोन जूतिरिन्द्रियं । वृकोन रभसो भिषक् । यशः सुरया भेषजं ॥ ७ ॥

श्रिया न मासरं । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज । होतायक्षद्वनस्पतिं । शमितारꣳ शतक्रतुं । भीमं न मन्युꣳ राजानं व्याघ्रं नमसाश्विनाभामं । सरस्वती भिषक् । इन्द्राय दुह इन्द्रियं । पयः सोमः परिस्रुता घृतं मधु । वियन्त्वाज्यस्य होतर्यज ॥ ८ ॥

होतायक्षदग्निꣳ स्वाहाज्यस्य स्तोकानां । स्वाहा मेदसां पृथक् । स्वाहा छागमश्विभ्यां । स्वाहा मेषꣳ सर-

स्वत्यै। स्वाहर्षभमिन्द्राय सिंहाय सहसेन्द्रियं। स्वाहाग्निं न भेषजं। स्वाहा सोममिन्द्रियं। स्वाहेन्द्रं सुत्रामाणं सवितारं वरुणं भिषजाम्पतिं। स्वाहा वनस्पतिं प्रियं पाथोन भेषजं। स्वाहा देवा आज्यपान् ॥ ९ ॥

स्वाहाग्निं होत्राज्जुषाणो अग्निर्भेषजं। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज। होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं। इमे सोमाः सुत्रामाणः। छागैर्न मेषैर्ऋषभैः सुताः। शष्पैर्न तोक्मभिः। लाजैर्महस्वन्तः। मदा मासरेण परिष्कृताः। शुक्राः पयस्वन्तोऽमृताः॥ प्रस्थिता वो मधुश्चुतः। तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा। जुषन्तां सौम्यं मधु। पिबन्तु मदन्तु वियन्तु सोमं। होतर्यज ॥ १० ॥

वीर्यं वियन्त्वाज्यस्य होतर्यज नासत्या सरस्वती मधु हिरण्ययं भेषजं वियन्त्वाज्यस्य होतर्यजाज्यपानमृताः पञ्च च ॥ अनु० ११ ॥

समिधाग्निं षट्। तनूनपात्सप्त। नराशंसमृषिः। इडेडितो यवैरष्टौ। बर्हिः सप्त। दुरोऽश्विना नव। सुपेशसोषे नक्तमृषिः। दैव्या होतारा रसः। तिस्रस्त्व-

ष्टारमष्टावंष्टौ। वनस्पतिमृषिः। अग्निं चयोदश। अश्विना द्वादंश चयोदश। समिधाग्निं बदरैर्बदरैर्यवैरश्विना त्विषिमश्विना न भेषजꣳ रूपमश्विना भीमं भामं॥

द्वादशोऽनुवाकः।

समिद्धोअग्निरश्विना। तप्तो घर्मो विराट् सुतः। दुहे धेनुः सरस्वती। सोमꣳ शुक्रमिहेन्द्रियं। तनूया भिषजा सुते। अश्विनोभा सरस्वती। मध्वा रजाꣳसीन्द्रियं। इन्द्राय पथिभिर्वहान्। इन्द्रायेन्दुꣳ सरस्वती। नराशꣳसेन नग्नहुः॥ १॥

अधातामश्विना मधु। भेषजं भिषजा सुते। आशुक्षाना सरस्वती। इन्द्रायेन्द्रियाणि वीर्यं। इडाभिरश्विना विषं। समूर्जꣳ सꣳरयिं दधुः। अश्विना नमुचेः सुतं। सोमꣳ शुक्रं परिस्रुता। सरस्वती तमाभरत्। बर्हिषेन्द्राय पातवे॥ २॥

कवष्यो न व्यचस्वतीः। अश्विभ्यां न दुरोदिशः। इन्द्रो न रोदसी दुघे। दुहे कामान्त्सरस्वती। उषासा नक्तमश्विना। दिवेन्द्रꣳ सायमिन्द्रियैः। सञ्जानाने सु पेशसा। समञ्जाते सरस्वत्या। पातन्नो अश्विना दिवा। पाहि नक्तꣳ सरस्वति॥ ३॥

दैव्या होतारा भिषजा । पातमिन्द्रꣳ सचा सुते । तिस्रस्त्रेधा सरस्वती । अश्विना भारतीडा । तीव्रं परिस्रुता सोमं । इन्द्राय सुषुवुर्मदं । अश्विना भेषजं मधु । भेषजन्नः सरस्वती । इन्द्रे त्वष्टा यशः श्रियं । रूपꣳ रूपमधुः सुते ॥ ऋतुथेन्द्रो वनस्पतिः । शशमानः परिस्रुता । कीलालमश्विभ्यां मधु । दुहे धेनुः सरस्वती । गोभिर्न सोममश्विना । मासरेण परिष्कृता । समधाताꣳ सरस्वत्या । स्वाहेन्द्रे सुतं मधु ॥ ४ ॥

नग्नहुः पातवे सरस्वत्यधुः सुतेऽष्टौ च ॥ अनु० १२ ॥

त्रयोदशोऽनुवाकः ।

अश्विना हविरिन्द्रियं । नमुचेर्धिया सरस्वती । आशुक्रमासुराद्वसु । मघमिन्द्राय जभ्रिरे । यमश्विना सरस्वती । हविषेन्द्रमवर्द्धयन् । स बिभेद वलं मघं । नमुचावासुरे सचा । तमिन्द्रं पशवः सचा । अश्विनोभा सरस्वती ॥ १ ॥

दधाना अभ्यनूषत । हविषा यज्ञमिन्द्रियं । य इन्द्र इन्द्रियं दधुः । सविता वरुणो भगः । स सुत्रामा हवि-

ष्पतिः। यजमानाय सश्वत। सविता वरुणो दधत्। यजमनाय दाशुषे। आदत्त नमुचेर्वसु। सुत्रामा बलमिन्द्रियं॥ २॥

वरुणः क्षत्रमिन्द्रियं। भगेन सविता श्रियं। सुत्रामा यशसा बलं। दधाना यज्ञमासत। अश्विना गोभिरिन्द्रियं। अश्वेभिर्वीर्य्यं बलं। हविषेन्द्रꣳ सरस्वती। यजमानमवर्द्धयन्। तानासत्या सुपेशसा। हिरण्यवर्त्तनी नरा॥ सरस्वती हविष्मती। इन्द्रः कर्म्मसु नोवतु। ताभिषजा सुकर्म्मणा। सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुः। इन्द्राय दधुरिन्द्रियं॥ ३॥

उभा सरस्वती बलमिन्द्रियं नरा षट् च॥ अनु० १३॥

चतुर्दशोऽनुवाकः।

देवं बर्हिः सरस्वती। सुदेवमिन्द्रे अश्विना। तेजो न चक्षुरक्ष्योः। बर्हिषा दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज। देवीर्द्वारो अश्विना। भिषजेन्द्रे सरस्वती। प्राणं न वीर्य्यं नसि। द्वारो दधुरिन्द्रियं वसुवने वसुधयस्य वियन्तु यज॥ १॥

देवी उषासावश्विना। भिषजेन्द्रे सरस्वती। बलं न वाचमास्ये। उषाभ्यां दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज। देवी जोष्ट्री अश्विना। सुत्रामेन्द्रे सरस्वती। श्रोत्रं न कर्णयोर्यशः। जोष्ट्रीभ्यां दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज ॥ २ ॥

देवी उर्जाहुती दुघे सुदुघे। पयसेन्द्रꣳ सरस्वत्यश्विना भिषजावत। शुक्रं न ज्योतिस्तनयोराहुती धत्तइन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज। देवा देवानां भिषजा। होताराविन्द्रमश्विना। वषट्कारैः सरस्वती। त्विषिं न हृदये मतिं। होतृभ्यां दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज ॥ ३ ॥

देवीस्तिस्रस्तिस्रो देवीः। सरस्वत्यश्विना भारतीडा। शूषं न मध्ये नाभ्यां। इन्द्राय दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज। देवइन्द्रो नराशꣳसः। त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः। रेतो न रूपममृतं जनित्रं। इन्द्राय त्वष्टादधदिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज ॥ ४ ॥

देवइन्द्रो वनस्पतिः। हिरण्यपर्णो अश्विभ्यां। सरस्वत्याः सुपिप्पलः। इन्द्राय पच्यते मधु। ओजो न

जूतिर्मृषभो न भामं। वनस्पतिर्ना दधदिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज। देवं बर्हिर्वारितीनां। अध्वरे स्तीर्णमश्विभ्यां। ऊर्णम्रदाः सरस्वत्याः॥ ५॥

स्योनमिन्द्र ते सदः। ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियं। वसुवने वसुधेयस्य वियन्तु यज। देवो अग्निः स्विष्टकृत्। देवान् यक्षद्यथायथं। होताराविन्द्रमश्विना। वाचा वाचꣳ सरस्वतीं। अग्निꣳ सोमꣳ स्विष्टकृत्। स्विष्टइन्द्रः सुत्रामा सविता वरुणो भिषक्। इष्टो देवो वनस्पतिः॥ स्विष्टा देवाआज्यपाः। इष्टो अग्निरग्निना। होता होत्रे स्विष्टकृत्। यशो न दधदिन्द्रियं। ऊर्जमपचितिꣳ स्वधां। वसुवने वसुधेयस्य वियन्तु यज॥ ६॥

द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यज जोष्ट्रीभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यज होतृभ्यां दधुरिन्द्रियं वसुवने वसुधेयस्य वियन्तु यजेन्द्रियाणि वसुवने वसुधेयस्य वियन्तु यज सरस्वत्या वनस्पतिः षट् च॥ अनु० १४॥

देवं बर्हिर्देवीर्द्वारो देवी उषासावश्विना देवो जोष्ट्री देवी ऊर्जाहुती देवा देवानां भिषजा देवी-

स्तिस्रस्तिस्रोदेवीः सरस्वती देवइन्द्रो नराशंसो देवइन्द्रो वनस्पतिर्देवं बर्हिर्वारितीनां देवो अग्निः स्विष्टकृद्देवान् ॥

समिधाग्निं सौत्रामण्याः सुतासुती। अश्वं व्ययं यजमानः। देवं बर्हिः सरस्वती सर्व्वं वियन्तु। द्वारस्तिस्रः सर्व्वं वियन्तु। अजइन्द्रमोजोऽग्निं परः सरस्वतीं। अन्यच सरस्वती। भिषक्पूर्व्वं दुहइन्द्रियं। अन्यच दधुरिन्द्रियं।

पञ्चदशोऽनुवाकः।

सीसेन अग्निमद्य होतारमवृणीत। अयः सुतासुती यजमानः। पचन् पंक्तीः। पचन् पुरोडाशान्। गृह्णन् ग्रहान्। बध्नन्नश्विभ्यां छागः सरस्वत्या इन्द्राय। बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्यां। बध्नन्निन्द्रायर्षभमश्विभ्याः सरस्वत्यै। सूपस्था अद्यदेवो वनस्पतिरभवत्। अश्विभ्यां छागेन सरस्वत्या इन्द्राय ॥ १ ॥

सरस्वत्यै मेषेणेन्द्रायाश्विभ्यां। इन्द्रायर्षभेणाश्विभ्याः सरस्वत्यै। अक्षःस्तान्मेदस्तः प्रतिपचताग्रभी-

षुः। अवीवृधन्त ग्रहैः। अपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा। सोमान्त्सुराम्णः। उपांउक्था मदाश्री द्विमदाअदन्। अवीवृधन्तां गूर्षैः। त्वा मद्यर्ष आर्षेयर्षीणां नपादवृणीत। अयꣳ सुतासुती यजमानः॥ बहुभ्य आसङ्गतेभ्यः। एष मे देवेषु वसुवार्य्या यक्ष्यत इति। ता या देवा देवदान्यदुः। तान्यस्मा आचशास्व। आचगुरस्व। इषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः। सूक्तवाकाय सूक्ता ब्रूहि॥ ॥२॥

इन्द्राय यजमानः सप्त च॥ अनु० १५॥

षोडशोऽनुवाकः।

उशन्तस्त्वा हवामह आनोअग्ने सुकेतुना। त्वꣳ सोममहे भगं त्वꣳ सोम प्रचिकितो मनीषा। त्वया हितः पितरः सोम पूर्वे त्वꣳ सोम पितृभिः संविदानः। बर्हिषदः पितर आहं पितॄन्। उपहूताः पितरोऽग्निष्वात्ताः पितरः। अग्निष्वात्तान्तृतुमतो हवामहे। नराशꣳसे सोमपीथं यआशुः। ते नोअर्वन्तः सुहवा भवन्त। शन्नो भवन्तु द्विपदे शं चतुष्पदे। ये अग्निष्वात्ता ये नाग्निष्वात्ताः॥ १॥

अꣳहोमुचः पितरः सोम्यासः। परेऽवरे मृतासो भवन्तः। अधिब्रुवन्तु ते अवन्त्वस्मान्। यान्यायै दग्धे जुषमाणाः करम्भं। उदीराणा अवरे परे च। अग्निष्वात्ता ऋतुभिः संविदानाः। इन्द्रवन्तो हविरिदं जुषन्तां। यदग्ने कव्यवाहन त्वमग्न ईडितो जातवेदः। मातलीकव्यैः। ये ता तृपुर्देवत्रा जेहमानाः॥ होत्रा हृधस्तोमतष्टासो अर्कैः। आग्नेया हि सुविदत्रेभिरर्वाङ्। सत्यैः कव्यैः पितृभिर्घर्म्मसद्भिः। हव्यवाहमजरं पुरुप्रियं। अग्निं घृतेन हविषा सपर्य्यन। उपासदं कव्यवाहं पितृणां। स नः प्रजां वीरवतीꣳ समृणवतु॥ २॥

अनग्निष्वात्ता जेहमानाः सप्त च॥ अनु० १६॥

सप्तदशोऽनुवाकः।

होतायक्षदिडस्पदे। समिधानं महद्यशः। सुषमिद्धं वरेण्यं। अग्निमिन्द्रं वयोधसं। गायत्रीं छन्दइन्द्रियं। त्र्यविं गां वयोदधत्। वेत्वाज्यस्य होतर्यज। होतायक्षच्छुचिव्रतं। तनूनपातमुद्भिदं। यं गर्भमदितिर्दधे॥ १॥

शुचिमिन्द्रं वयोधसं। उष्णिहं छन्दइन्द्रियं। दि-

त्यवाहं गां वयोदधत्। वेत्वाज्यस्य होतर्यज। होता-यक्षदीडेन्यं। ईडितं वृत्रहन्तमं। इडाभिरीड्यꣳ सहः। सोममिन्द्रियं वयोधसं। अनुष्टुभं छन्द इन्द्रियं। त्रि-वत्सं गां वयोदधत् ॥ २ ॥

वेत्वाज्यस्य होतर्यज। होतायक्षत्सुबर्हिषदं। पूष-ण्वन्तममर्त्यं। सीदन्तं बर्हिषि प्रिये। अमृतेन्द्रं वयो-धसं। बृहतीं छन्द इन्द्रियं। पञ्चाविं गां वयोदधत्। वेत्वाज्यस्य होतर्यज। होतायक्षद्व्यचस्वतीः। सुप्राय-णा ऋतावृधः ॥ ३ ॥

द्वारो देवीर्हिरण्मयीः। ब्रह्माण इन्द्रं वयोधसं। पङ्क्तिं छन्द इहेन्द्रियं। तुर्य्यवाहं गां वयोदधत्। वेत्वा-ज्यस्य होतर्यज। होतायक्षत् सुपेशसे। सुशिल्पे बृह-ती उभे। नक्तोषासा न दर्शते। विश्वमिन्द्रं वयोधसं। त्रिष्टुभं छन्द इन्द्रियं ॥ ४ ॥

पष्ठवाहं गां वयोदधत्। वेत्वाज्यस्य होतर्यज। हो-तायक्षत् प्रचेतसा। देवानामुत्तमं यशः। होतारा दैव्या कवी। सयुजेन्द्रं वयोधसं। जगतीं छन्द इहेन्द्रि-यं। अनड्वाहं गां वयोदधत्। वेत्वाज्यस्य होतर्यज। होतायक्षत् पेशस्वतीः ॥ ५ ॥

तिस्रो देवीर्हिरण्ययीः । भारतीर्बृहतीर्महीः । पतिमिन्द्रं वयोधसं । विराजं छन्दइहेन्द्रियं । धेनुं गां न वयोदधत् । वेत्वाज्यस्य होतर्यज । होतायक्षत्स्वरेतसं । त्वष्टारं पुष्टिवर्द्धनं । रूपाणि बिभ्रतं पृथक् । पुष्टिमिन्द्रं वयोधसं ॥ ६ ॥

द्विपदं छन्दइहेन्द्रियं । उक्षाणं गां न वयोदधत् । वेत्वाज्यस्य होतर्यज । होतायक्षच्छतक्रतुं । हिरण्यपर्णमुक्थिनं । रशनां बिभ्रतं वशिं । भगमिन्द्रं वयोधसं । ककुभं छन्दइहेन्द्रियं । वशां वेहतं गां न वयोदधत् । वेत्वाज्यस्य होतर्यज ॥ होतायक्षत् स्वाहाकृतीः । अग्निं गृहपतिं पृथक् । वरुणं भेषजं कविं । क्षत्रमिन्द्रं वयोधसं । अतिच्छन्दसं छन्दइन्द्रियं । बृहदृषभं गां वयोदधत् । वेत्वाज्यस्य होतर्यज ॥ ७ ॥

दधेदधद्दधत्तावेध इन्द्रियं पेशस्वतीर्वयोधसं वेत्वाज्यस्य होतर्यज सप्त च ॥ अनु० १७ ॥

इडस्पदेऽग्निं गायत्रीं त्र्यविं शुचिव्रतः शुचिमुष्णिहं दित्यवाहं । ईडेऽन्यः सोममनुष्टुभं त्रिवत्सं । सुबर्हिषदमच्युतेन्द्रं बृहतीं पञ्चाविं । व्यचस्वतीः सुप्रायणा द्वारो बृह्माणः पङ्क्तिमिह तुर्य्यवाहं । सुपेशसे वि-

श्वमिन्द्रं त्रिष्टुभं पष्ठवाहं। प्रचेतसा सयुजेन्द्रं जगती- मिन्द्रानड्वाहं। पेशस्वतीस्तिसो भारतोः पतिं विराज- मिह धेनुं न। सुरेतसं त्वष्टारं पुष्टिं द्विपदमिन्द्रोक्षाणं न। शतक्रतुं भगमिन्द्रं ककुभमिह वशां वेहतं गां न। स्वाहाकृतीः छन्दसमतिच्छन्दसं बृहदृषभं गां। इन्द्रिय- मृषिवसुनवदशेहेन्द्रियमष्टनवदशगां न वयोदधत् सव्यवेतु॥

अष्टादशोऽनुवाकः।

इडस्पदे सव्यवेतु। समिद्धोअग्निः समिधा सुष- मिद्धो वरेण्यः। गायत्री छन्दइन्द्रियं। त्र्यविर्गौर्वयो- दधुः। तनूनपाच्छुचिव्रतः। तनूपाच्च सरस्वती। उ- ष्णिक् छन्दइन्द्रियं। दित्यवाड्गौर्वयोदधुः। इडाभि- रग्निरीड्यः। सोमो देवोअमर्त्यः॥ १॥

अनुष्टुप् छन्दइन्द्रियं। त्रिवत्सो गौर्वयोदधुः। सु- बर्हिरग्निः पूषण्वान्। स्तीर्णबर्हिरमर्त्यः। बृहतीछ- न्दइन्द्रियं। पञ्चाविर्गौर्वयोदधुः। दुरोदेवीर्दिशोम- हीः। ब्रह्मा देवो बृहस्पतिः। पङ्क्तिश्छन्दइहेन्द्रियं। तुर्यवाड्गौर्वयोदधुः॥ २॥

उषेयष्टी सुपेशसा। विश्वे देवाअमर्त्यः। त्रिष्टुप्

छन्द इन्द्रियं। पष्ठवाड् गौर्वयो दधुः। दैव्या होतारा भिषजा। इन्द्रेण सयुजा युजा। जगतीछन्द इहेन्द्रियं। अनड्वान् गौर्वयो दधुः। तिस्र इडा सरस्वती। भारती मरुतो विशः॥ ३॥

विराट्छन्द इहेन्द्रियं। धेनुर्गौर्न वयो दधुः। त्वष्टा तुरीयो अद्भुतः। इन्द्राग्नी पुष्टिवर्द्धना। द्विपाच्छन्द इहेन्द्रियं। उक्षा गौर्न वयो दधुः। शमिता नो वनस्पतिः। सविता प्रसुवन् भगं। ककुप्छन्द इहेन्द्रियं। वशा वेहद्गौर्न वयो दधुः॥ स्वाहा यज्ञं वरुणः। सुक्षत्रो भेषजं करत्। अतिच्छन्दा*श्छन्द इन्द्रियं। बृहदृषभो गौर्वयो दधुः॥ ४॥

अमर्त्यस्तुर्यवाड्गौर्वयो दधुर्विशो वशा वेहद्गौर्न वयो दधुश्चत्वारि च॥ अनु० १८॥

ऊनविंशोऽनुवाकः।

वसन्तेनर्तुना देवाः। वसवस्त्रिवृता स्तुतं। रथन्तरेण तेजसा। हविरिन्द्रे वयो दधुः। ग्रीष्मेण देवा ऋतुना। रुद्राः पञ्चदशे स्तुतं। बृहता यशसा बलं। हविरिन्द्रे वयो दधुः। वर्षाभिर्ऋतुनादित्याः। स्तोमे सप्तदशे स्तुतं॥ १॥

---

* अतिच्छन्दाऽँ छन्द इन्द्रियं B. C. D. E.

वैरूपेण विशौजसा। हविरिन्द्रे वयोदधुः। शारदे-नर्तुना देवाः। एकविंशत्रभवःस्तुतं। वैराजेन श्रिया श्रियं। हविरिन्द्रे वयोदधुः। हेमन्तेनर्तुना देवाः। मरुतस्त्रिणवे स्तुतं। बलेन शक्करीः सहः। हविरिन्द्रे वयोदधुः॥ शैशिरेणर्तुना देवाः। त्रयस्त्रिंशमृतं स्तुतं। सत्येन रेवतीः क्षत्रं। हविरिन्द्रे वयोदधुः॥२॥

स्तोमे सप्तदशे स्तुतं सहो हविरिन्द्रे वयोदधुश्च-त्वारि च॥ अनु० १९॥

वसन्तेन ग्रीष्मेण वर्षाभिः शारदेन हेमन्तेन शैशि-रेण षट्॥६॥

विंशोऽनुवाकः।

देवं बर्हिरिन्द्रं वयोधसं। देवं देवमवर्द्धयत्। गाय त्रिया छन्दसेन्द्रियं। तेजइन्द्रे वयोदधत्। वसुवने व-सुधेयस्य वेतु यज। देवीर्द्वारो देवमिन्द्रं वयोधसं। दे-वीर्देवमवर्द्धयन्। उष्णिहा छन्दसेन्द्रियं। प्राणमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वियन्तु यज॥१॥

देवी देवं वयोधसं। उषेइन्द्रमवर्द्धतां। अनुष्टुभा छन्दसेन्द्रियं। वाचमिन्द्रे वयोदधत्। वसुवने वसुधे-यस्य वीतां यज। देवी जोष्ट्री देवमिन्द्रं वयोधसं। देवी

देवमवर्द्धतां। बृहत्या छन्दसेन्द्रियं। श्रोत्रमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वीतां यज ॥ २ ॥

देवी ऊर्जाहुती देवमिन्द्रं वयोधसं। देवी देवमवर्द्धतां। पङ्क्त्या छन्दसेन्द्रियं। शुक्रमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वीतां यज। देवा दैव्या होतारा देवमिन्द्रं वयोधसं। देवा देवमवर्द्धतां। त्रिष्टुभा छन्दसेन्द्रियं। त्विषिमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥

देवीस्तिस्रस्तिस्रो देवीर्वयोधसं। पतिमिन्द्रमवर्द्धयन्। जगत्या छन्दसेन्द्रियं। बलमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वियन्तु यज। देवो नराशंसो देवमिन्द्रं वयोधसं। देवो देवमवर्द्धयत्। विराजा छन्दसेन्द्रियं। रेतइन्द्रे वयोदधत्। वसुवने वसुधेयस्य वेतु यज ॥ ४ ॥

देवो वनस्पतिर्देवमिन्द्रं वयोधसं। देवो देवमवर्द्धयत्। द्विपदा छन्दसेन्द्रियं। भगमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वेतु यज। देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं। देवं देवमवर्द्धयत्। ककुभा छन्दसेन्द्रियं। यशइन्द्रे वयोदधत्। वसुवने वसुधेयस्य वेतु यज॥

देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसं। देवो देवमवर्द्धयत्। अतिच्छन्दसा छन्दसेन्द्रियं। क्षत्रमिन्द्रे वयोदधत्। वसुवने वसुधेयस्य वेतु यज ॥ ५ ॥

वियन्तु यज वीतां यज वीतां यज वेतु यज वेतु यज पञ्च च ॥ अनु० २० ॥

देवं बर्हिर्गायत्रिया तेजः। देवीर्द्वार उष्णिहा प्राणं। देवी देवमुषे अनुष्टुभा वाचं। देवी जोष्ट्री बृहत्या श्रोत्रं। देवी ऊर्जाहुती पङ्क्त्या शुक्रं। देवा दैव्या होतारा त्रिष्टुभा त्विषिं। देवीस्तिस्रस्तिस्रो देवीः पतिं जगत्या बलं। देवो नराशꣳसो विराजा रेतः। देवो वनस्पतिर्द्विपदा भगं। देवं बर्हिर्वारितीनां ककुभा यशः। देवो अग्निः स्विष्टकृदतिच्छन्दसा क्षत्रं। वेतु वियन्तु चतुर्वीतामेको वियन्तु चतुर्वेतु। अवर्द्धयदवर्द्धयञ्चतुरवर्द्धतामेकोऽवर्द्धयञ्चतुरवर्द्धयत्* ॥

स्वाद्वीं त्वा सोमः सुरावन्तꣳ सोसेन मित्रोऽसि यक्षेवा होतायक्षत्समिधेन्द्रꣳ समिद्ध इन्द्र आचर्षणि प्रा देवं †बर्हिरिन्द्रꣳ सुदेवꣳ होतायक्षत्समिधाग्निꣳ समिद्धो अग्निरश्विनाश्विना हविरिन्द्रियं देवं बर्हिः सरस्व-

* देवमित्याद्यवर्द्धयदित्यन्तः प्रयोगः B पुस्तके नास्ति। † बर्हिरिन्द्रꣳ सुवेदꣳ होता इति वा पाठः B. C. D. E.

त्वग्निमद्यो *शन्तो होतायक्षदिडस्पदे समिद्धोग्निः समिधा वसन्तेन देवं बर्हिरिन्द्रं वयोधसं विंशतिः॥

†स्वाद्वीं त्वेमं मित्रोऽस्यवभृथत् पुरन्दरो होतायक्षदिडस्पदे समिद्धोऽग्निरश्विना देवी ऊर्जाहुती वेत्वाज्यस्य वैरूपेण विश्वौजसा षण्णवतिः॥

स्वाद्वीं त्वामीमदन्त पितरः साम्राज्याय ‡पूतं पवित्रेणापवित्रेवाज्यमुपासानक्ता वदरैरधातामश्विना हविरिन्द्रियं देवइन्द्रो वनस्पतिं पष्ठवाहं गां देवीदेवं §वयोधसं चतुर्नवतिः।

च्छिन्नं तन्तुं होतायक्षत् सुपेशसो वरुणः क्षत्रमिन्द्रियः होतायक्षदिडस्पदे वैरूपेण विश्वौजसा षडशीतिः॥ ॐ तत्सत्॥

इति षष्ठोऽध्यायः॥

---

हरिः ॐ॥

द्वितीयकाण्डे सप्तमप्रपाठके

प्रथमोऽनुवाकः।

त्रिवृत्स्तोमो भवति। ब्रह्मवर्चसं वै त्रिवृत्। ब्रह्म-

---

* शन्तास्त्वा होता C. D. E. † स्वाद्वीमित्यादि षण्णवतिरित्यन्तः पाठो B. C. D. E. सञ्ज्ञकपुस्तकेषु नास्ति। ‡ सुक्रतुः पूतमिति पाठः C. पुस्तके वर्त्तते। § वयोधसमिति पाठः D. पुस्तके नास्ति।

वर्चसमेवावरुन्धे। अग्निष्टोमः सोमो भवति। ब्रह्मव-र्चसं वाअग्निष्टोमः। ब्रह्मवर्चसमेवावरुन्धे। रथन्तरꣳ साम भवति। ब्रह्मवर्चसं वै रथन्तरं। ब्रह्मवर्चसमेवा-वरुन्धे। परिस्रजी होता भवति ॥ १ ॥

अरुणो मिर्म्मिरस्त्रिशुक्रः। एतद्वै ब्रह्मवर्चसस्य रूपं। रूपेणैव ब्रह्मवर्चसमवरुन्धे। बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति। सएतं बृहस्पतिसवम-पश्यत्। तमाहरत्। तेनायजत। ततो वै स देवानां पुरोधामगच्छत्। यः पुरोधाकामः स्यात्। स बृहस्प-तिसवेन यजेत ॥ २ ॥

पुरोधामेव गच्छति। तस्य प्रातःसवने सन्नेषु ना-राशꣳसेषु। एकादशदक्षिणानीयन्ते। एकादश माध्य-न्दिने सवने सन्नेषु नाराशꣳसेषु। एकादश तृतीय-सवने सन्नेषु नाराशꣳसेषु। त्रयस्त्रिꣳशत्सम्पद्यन्ते। त्रयस्त्रिꣳशद्वै देवताः। देवताएवावरुन्धे। अश्वश्चतु-स्त्रिꣳशः। प्राजापत्यो वाअश्वः ॥ ३ ॥

प्रजापतिश्चतुस्त्रिꣳशो देवतानां। यावतीरेव देव-ताः। ताएवावरुन्धे। कृष्णाजिनेऽभिषिञ्चति। ब्रह्मणो वाएतद्रूपं। यत् कृष्णाजिनं। ब्रह्मवर्चसेनैवैनꣳ सम-

ङ्ग्यति। आज्येनाभिषिञ्चति। तेजो वा आज्यं। तेज एवास्मिन् दधाति॥ ४॥

होता भवति यजेत वा अस्मै दधाति॥ अनु० १॥

द्वितीयोऽनुवाकः।

यदाग्नेयो भवति। अग्निमुखा ह्यृद्धिः। अथ यत्पौष्णः। पुष्टिर्वै पूषा। पुष्टिर्वैश्यस्य। पुष्टिमेवावरुन्धे। प्रसवाय सावित्रः। अथ यत्त्वाष्ट्रः। त्वष्टा हि रूपाणि विकरोति। निर्वरुणत्वाय वारुणः॥ १॥

अथो य एव कश्च सन्त्सूयते। स हि वारुणः। अथ यद्वैश्वदेवः। वैश्वदेवो हि वैश्यः। अथ यन्मारुतः। मारुतो हि वैश्यः। सप्तैतानि हवीꣳषि भवन्ति। सप्त गणा वै मरुतः। पृश्निः पष्ठौही मारुत्यालभ्यते। विड्वै मरुतः॥ विश एवैतन्मध्यतोऽभिषिच्यते। तस्माद्वा एष विशः प्रियः। विशो हि मध्यतोऽभिषिच्यते। ऋषभचर्मेऽध्यभिषिञ्चति। स हि प्रजनयिता। दध्नाभिषिञ्चति। ऊर्ग्वा अन्नाद्यं दधि। ऊर्जेनमन्नाद्येन* समर्द्धयति॥ २॥

वारुणो विड्वै मरुतोऽष्टौ च॥ अनु० २॥

तृतीयोऽनुवाकः।

यदाग्नेयो भवति। आग्नेयो वै ब्राह्मणः। अथ यत्

* ऊर्जैवैनमन्नाद्येन B. C. D. E.

सौम्यः। सौम्यो हि ब्राह्मणः। प्रसवायैव सावित्रः। अथ यद्बार्हस्पत्यः। एतद्वै ब्राह्मणस्य वाक्पतीयं। अथ यदग्नीषोमीयः। आग्नेयो वै ब्राह्मणः। तौ यदा सङ्गच्छेते ॥ १ ॥

अथ वीर्य्यावत्तरो भवति। अथ यत्सारस्वतः। एतद्धि प्रत्यक्षं ब्राह्मणस्य वाक्पतीयं। निर्वरुणत्वायैव वारुणः। अथो य एव कश्च सन्त्सूयते। स हि वारुणः। अथ यद्द्यावापृथिव्यः। इन्द्रो वृत्राय वज्रमुदयच्छत्। तं द्यावापृथिवी नान्वमन्येतां। तमेतेनैव भागधेयेनान्वमन्येतां॥ २ ॥

वज्रस्य वारण्योऽनुमानाय। अनुमतवज्रः सूयाता इति। अष्टावेतानि हवीꣳषि भवन्ति। अष्टाक्षरा गायत्री। गायत्री ब्रह्मवर्चसं। गायत्रियैव ब्रह्मवर्चसमवरुन्धे। हिरण्येन घृतमुत्पुनाति। तेजस एव रुचे। कृष्णाजिनेऽभिषिञ्चति। ब्रह्मणो वा एतदृक्सामयो रूपं॥ यत् कृष्णाजिनं। ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिञ्चति। घृतेनाभिषिञ्चति। तथा वीर्य्यावत्तरो भवति॥ ३ ॥

सङ्गच्छेते भागधेयेनान्वमन्येताꣳ रूपं चत्वारि च॥

अनु० ३॥

चतुर्थोऽनुवाकः।

न वै सोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अ-
भिषुतो ह्येषः। न हि हतः सूयते। सौमी᳚ᳪ सूतवशा-
मालभते। सोमो वै रेतोधाः। रेतएव तद्दधाति। सौ-
म्यर्चाभिषिञ्चति। रेतोधा ह्येषा। रेतः सोमः॥ रेत-
एवास्मिन्दधाति। यत्किञ्च राजसूयमृते सोमं। तत्सर्व्वं
भवति। आषाढं* युत्सु पृतनासु पप्रिं। सुवर्षामप्वां वृ-
जनस्य गोपां। भरेषुजाᳪ सुक्षितिᳪ सुश्रवसं। जयन्तं
त्वामनुमदेम सोम॥ १॥

रेतः सोमः सप्त च॥ अनु० ४॥

पञ्चमोऽनुवाकः।

यो वै सोमेन सूयते। स देवसवः। यः पशुना सूय-
ते। स देवसवः। यइष्ट्या सूयते। स मनुष्यसवः। एतं
वै पृथये देवाः प्रायच्छन्। ततो वै सोऽप्यारण्यानां प-
शूनामसूयत। यावतीः कियतीश्च प्रजा वाचं वदन्ति।
तासाᳪ सर्व्वासाᳪ सूयते॥ १॥

यएतेन यजते। यउचैनमेवं वेद। नाराशᳪस्यर्चा-
भिषिञ्चति। मनुष्या वै नराशᳪसः। निह्नुत्य वाएतत्।

* B. C. D. E. अषाढ।

अथाभिषिञ्चति। यत्किञ्च राजसूयमनुत्तरवेदीकं। तत्सर्व्वं भवति। ये मे पञ्चाशतं ददुः। अश्वानाꣳ सधस्तुतिः॥ द्युमदग्ने महिश्रवः। बृहत्कृधि मघोनां। नृवदमृतनृणां॥ २॥

सूयते सधस्तुतिस्त्रीणि च॥ अनु० ५॥

षष्ठोऽनुवाकः।

एष गोसवः। षट्त्रिꣳशउक्थ्यो बृहत्सामा। पवमाने कएव रथन्तरं भवति। यो वै वाजपेयः। स सम्राट्त्सवः। यो राजसूयः। स वरुणसवः। प्रजापतिः स्वाराज्यं परमेष्ठी। स्वाराज्यं गौरेव। गौरिव भवति॥ १॥

यएतेन यजते। यउचैनमेवं वेद। उभे बृहद्रथन्तरे भवतः। तद्धि स्वाराज्यं। अयुतं दक्षिणाः। तद्धि स्वाराज्यं। प्रतिधुषाभिषिञ्चति। तद्धि स्वाराज्यं। अनुद्रुते वेद्यै दक्षिणत आहवनीयस्य बृहतस्तोत्रं प्रत्यभिषिञ्चति। इयं वाव रथन्तरं॥ २॥

असौ बृहत्। अनयोरेवैनमनन्तर्हितं तमभिषिञ्चति। पशुस्तोमो वाएषः। तेन गोसवः। षट्त्रिꣳशः सर्व्वः। रेवज्जातः सहसा वृद्धः। क्षत्राणां क्षत्रभृत्तमो वयोधाः। महान्महित्वेतस्तभानः। क्षत्रे राष्ट्रे च जा-

गृह्णि। प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चा-
मीत्याह॥ स्वाराज्यमेवैनं गमयति॥ ३॥

इव भवति रथन्तरमाहैकञ्च॥ अनु० ६॥

सप्तमोऽनुवाकः।

सिꣳहे व्याघ्र उतयापृदाकौ। त्विषिरग्नौ ब्राह्मणे सूर्य्यया। इन्द्रं या देवी सुभगा जजान। सा नआगन्वर्चसा संविदाना। या राजन्ये दुन्दुभा वायतायां। अश्वस्य क्रन्द्ये पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजान। सा नआगन्वर्चसा संविदाना। या हस्तिनि द्वीपिनि या हिरण्ये। त्विषिरश्वेषु पुरुषेषु गोषु॥ १॥

इन्द्रं या देवी सुभगा जजान। सा नआगन्वर्चसा संविदाना। रथे अक्षेषु वृषभस्य वाजे। वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान। सा नआगन्वर्चसा संविदाना। राडसि विराडसि। सम्राडसि स्वराडसि। इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि। इन्द्राय त्वौजस्वत ओजस्वन्तꣳ श्रीणामि॥ २॥

इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि। इन्द्राय त्वायुष्मतआयुष्मन्तꣳ श्रीणामि। तेजोऽसि। तत्ते प्रय-

च्छामि। तेजस्वदस्तु मे मुखं। तेजस्वच्छिरो॑ऽस्तु मे। तेजस्वान् विश्वतः प्रत्यङ्। तेजसा सम्पिपृग्धि मा। ओजो॑ऽसि। तत्ते प्रयच्छामि॥ ३॥

ओजस्वदस्तु मे मुखं। ओजस्वच्छिरो॑ऽस्तु मे। ओजस्वान् विश्वतः प्रत्यङ्। ओजसा सम्पिपृग्धि मा। पयो॑ऽसि। तत्ते प्रयच्छामि। पयस्वदस्तु मे मुखं। पयस्वच्छिरो॑ऽस्तु मे। पयस्वान् विश्वतः प्रत्यङ्। पयसा सम्पिपृग्धि मा॥ ४॥

आयुरसि। तत्ते प्रयच्छामि। आयुष्मदस्तु मे मुखं। आयुष्मच्छिरो॑ऽस्तु मे। आयुष्मान् विश्वतः प्रत्यङ्। आयुषा सम्पिपृग्धि मा। इममग्न आयुषे वर्चसे कृधि। प्रियꣳ रेतो वरुण सोम राजन्। मा ते वासा अदिते शर्म्म यच्छ। विश्वे देवा जरदष्टिर्यथा सत्॥ ५॥

आयुरसि विश्वायुरसि। सर्व्वायुरसि सर्व्वमायुरसि। यतो वातो मनोजवाः। यतः क्षरन्ति सिन्धवः। तासां त्वा सर्व्वासाꣳ रुचा। अभिषिञ्चामि वर्चसा। समुद्र इव वासि गंभ्मना। सोम इवास्यदाभ्यः। अग्निरिव विश्वतः प्रत्यङ्। सूर्य्य इव ज्योतिषा विभूः॥ ६॥

अपां यो द्रवणे रसः। तमहमस्मा आमुष्यायणाय।

तेजसे ब्रह्मवर्चसाय गृह्णामि। अपां यऊर्म्मौ रसः। त-
महमस्मा आमुष्यायणाय। ओजसे वीर्य्याय गृह्णामि।
अपां यो मध्यतो रसः। तमहमस्मा आमुष्यायणाय।
पुष्ट्यै प्रजननाय गृह्णामि। अपां यो यज्ञियो रसः॥ त-
महमस्मा आमुष्यायणाय। आयुषे दीर्घायुत्वाय गृह्णा-
मि॥ ७॥

गोष्ठोजस्त्वन्तꣳ श्रीणास्योजोऽसि तत्ते प्रयच्छामि
पयसा सम्पिपृग्धि मा सद्भिर्भूर्यज्ञियो रसो द्वे च॥
अनु० ७॥

अष्टमोऽनुवाकः।

अभिप्रेहि वीरयस्व। उग्रश्चेत्ता सपत्नहा। आतिष्ठ
मित्रवर्द्धनः। तुभ्यं देवा अधिब्रवन्। अङ्कौ न्यङ्काव-
भित आतिष्ठ वृत्रहन्रथं। आतिष्ठन्तं परि विश्वे अभूषन्।
श्रियं वसानश्चरति स्वरोचाः। महत्तदस्यासुरस्य
नाम। आ विश्वरूपो अमृतानि तस्थौ। अनु त्वेन्द्रो मद-
त्वनु बृहस्पतिः॥ १॥

अनु सोमो अन्वग्निरावीत्। अनु त्वा विश्वे देवा
अवन्तु। अनु सप्त राजानो यउताभिषिक्ताः*। अनु त्वा

* C. उताभिषक्ताः।

मित्रावरुणाविहावतं। अनु द्यावापृथिवी विश्वशंम्भू। सूर्य्योऽहोभिरनु त्वावतु। चन्द्रमा नक्षत्रैरनु त्वावतु। द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पिपर्त्तु। अनु स्वधा चिकिताꣳ सोमोऽग्निः॥ आयं पृणक्तु रजसी उपस्थे॥ २॥

बृहस्पतिः सोमो अग्निरेकञ्च॥ अनु० ८॥

नवमोऽनुवाकः।

प्रजापतिः प्रजाअसृजत। ताअस्मात् सृष्टाः पराचीरायन्। सएतं प्रजापतिरोदनमपश्यत्। सोऽन्नं भूतोऽतिष्ठत्। ताअन्यत्रान्नाद्यमवित्त्वा। प्रजापतिं प्रजा उपावर्त्तन्त। अन्नमेवैनं भूतं पश्यन्तीः प्रजाउपावर्त्तन्ते। यएतेन यजते। यउचैनमेवं वेद। सर्व्वाण्यन्नानि भवन्ति॥ १॥

सर्व्वे पुरुषाः। सर्व्वाण्येवान्नान्यवरुन्धे। सर्व्वान् पुरुषान्। राडसि विराडसीत्याह। स्वाराज्यमेवैनं गमयति। यद्धिरण्यं ददाति। तेजस्तेनावरुन्धे। यत्तिसृधन्वं। वीर्य्यं तेन। यदष्ट्रां॥ २॥

पुष्टिं तेन। यत्कमण्डलुं। आयुस्तेन। यद्धिरण्यमाबध्नाति। ज्योतिर्वै हिरण्यं। ज्योतिरेवास्मिन्दधाति।

अथो तेजो वै हिरण्यं। तेज एवात्मन्धत्ते। यदोदनं प्राश्नाति। एतदेव सर्व्वमवरुन्धे ॥ ३ ॥

तदस्मिन्नेकधाधात्। रोहिण्यां कार्य्यः। यद्ब्राह्मण एव रोहिणी। तस्मादेव। अथो वर्ष्मैवैनꣳ समानानां करोति। उद्यता सूर्य्येण कार्य्यः। उद्यन्तं वा एतꣳ सर्व्वाः प्रजाः प्रतिनन्दन्ति। दिदृक्षेण्यो दर्शनीयो भवति। य एवं वेद। ब्रह्मवादिनो वदन्ति ॥ ४ ॥

अवेत्यावभृथा ३ ना ३ इति। यद्दर्भपुञ्जीलैः पवयति। तत्स्विदेवावैति। तन्नावैति। त्रिभिः पवयति। त्रयइमे लोकाः। एभिरेवैनं लोकैः पवयति। अथो अपां वा एतत्तेजो वर्चः। यद्दर्भाः। यद्दर्भपुञ्जीलैः पवयति ॥ अपामेवैनं तेजसा वर्चसाभिषिञ्चति ॥ ५ ॥

भवन्त्यग्नामवरुन्धे वदन्ति दर्भा यद्दर्भपुञ्जीलैः पवयत्येकञ्च ॥ अनु० ९ ॥

दशमोऽनुवाकः।

प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति। स एतं पञ्चशारदीयमपश्यत्। तमाहरत्। तेनायजत। ततो वै स बहोर्भूयानभवत्। यः कामयेत बहोर्भूयान्त्स्यामिति। स पञ्चशारदीयेन यजेत। बहोरेव भूयान् भ-

वति। मरुत्स्तोमो वा एषः। मरुतो हि देवानां भूयिष्ठाः।
॥ १ ॥

बहुर्भवति। य एतेन यजते। य उ चैनमेवं वेद। पञ्च-शारदीयो भवति। पञ्च वा ऋतवः संवत्सरः। ऋतुष्वेव संवत्सरे प्रतितिष्ठति। अथो पञ्चाक्षरा पङ्क्तिः। पाङ्क्तो यज्ञः। यज्ञमेवावरुन्धे। सप्तदशꣳ स्तोमानातियन्ति॥ सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै॥ २ ॥

भूयिष्ठायन्ति द्वे च॥ अनु० १०॥

एकादशोऽनुवाकः।

अगस्त्यो मरुद्भ्य उक्ष्णः प्रौक्षत्। तानिन्द्र आदत्त। त एनं वज्रमुद्यत्याभ्यायन्त। तानगस्त्यश्चैवेन्द्रश्च कयाशुभीयेनाशमयताम्। ताञ्छान्तानुपाह्वयत। यत् कयाशुभीयं भवति शान्त्यै। तस्मादेत ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ति। त्रयः प्रथमेऽहन्नालभ्यन्ते। एवं द्वितीये। एवं तृतीये॥ १ ॥

एवं चतुर्थे। पञ्चोत्तमेऽहन्नालभ्यन्ते। वर्षिष्ठमिव ह्येतदहः। वर्षिष्ठः समानानां भवति। य एतेन यजते। य उ चैनमेवं वेद। स्वाराज्यं वा एष यज्ञः। एतेन वा

एकया वा कादमः स्वाराज्यमगच्छत् । स्वाराज्यं गच्छति । यएतेन यजते ॥ २ ॥

यउचैनमेवं वेद । मारुतो वाएष स्तोमः । एतेन वै मरुतो देवानां भूयिष्ठमभवन् । भूयिष्ठः समानानां भवति । यएतेन यजते । यउचैनमेवं वेद । पञ्च शारदीयो वाएष यज्ञः । आ पञ्चमात् पुरुषादन्नमत्ति । यएतेन यजते । यउचैनमेवं वेद ॥ सप्तदशꣳ स्तोमा नातियन्ति । सप्तदशः प्रजापतिः । प्रजापतेरेव नैति ॥ ३ ॥

तृतीयं गच्छति यएतेन यजतेति यएतेन यजते यउचैनमेवं वेद चोणि च ॥ अनु० ११ ॥

अगस्त्यः स्वाराज्यं मारुतः पञ्चशारदीयो वाएष यज्ञः सप्तदशः प्रजापतेरेव नैति ॥

द्वादशोऽनुवाकः ।

अस्याजरासो दमामरित्राः । अर्चद्धूमासो अग्नयः पावकाः । श्विचीचयः श्वात्रासो भुरण्यवः । वनर्षदो वायवो न सोमाः । यजानो मित्रावरुणा । यजा देवाꣳ ऋतं बृहत् । अग्ने यक्षि स्वन्दमं । अश्विना पिबतꣳ सुतं । दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥ १ ॥

द्वे विरूपे चरतः स्वर्थे। अन्यान्या वत्समुपधापयेते। हरिरन्यस्यां भवति स्वधावान्। शुक्रो अन्यस्यां ददृशे सुवर्चाः। पूर्वापरं चरतो माययैतौ। शिशू क्रीडन्तौ परियातो अध्वरं। विश्वान्यन्यो भुवनाभिचष्टे। ऋतूनन्यो विदधज्जायते पुनः। त्रीणि शता त्रीसहस्राण्यग्निं। त्रिंशच्च देवानवचा सपर्यन् ॥ २ ॥

औक्षन् घृतैरास्तृणन् बर्हिरस्मै*। आदिद्धोतारं न्यषादयन्त। अग्निनाग्निः समिध्यते। कविर्गृहपतिर्युवा। हव्यवाड्जुह्वास्यः। अग्निर्देवानां जठरं। पूतदक्षः कविक्रतुः। देवो देवेभिरागमत्। अग्निश्रियो मरुतो विश्वकृष्टयः। आ त्वेषमुग्रमव ईमहे वयं ॥ ३ ॥

ते स्वानिनो रुद्रिया वर्षनिर्णिजः। सिंहा न हेषक्रतवः सुदानवः। यदुत्तमे मरुतो मध्यमे वा। यद्वावमे सुभगासो दिविष्ठ। ततो नो रुद्रा उत वानुवस्य†। अग्ने वित्ताद्धविषो यद्यजामः। ईडे अग्निं स्ववसन्नमोभिः। इह प्रसत्तो विचयत्कृतं नः। रथैरिव प्रभरे वाजयद्भिः। प्रदक्षिणिन्मरुतां स्तोममृध्यां ॥ ४ ॥

अधिश्रुत्कर्णवह्निभिः। देवैरग्ने सयावभिः। आ-

* हव्यवाट् C. D. † -वस्य C. D.

सीदन्तु बर्हिषि। मित्रो वरुणो अर्य्यमा। प्रातर्य्यावाणो अध्वरं। विश्वेषामदितिर्यज्ञियानां। विश्वेषामतिथिर्मानुषाणां। अग्निर्देवानामवआवृणानः। सुमृडीको भवतु विश्ववेदाः। त्वेअग्ने सुमतिं भिक्षमाणाः॥ ५ ॥

दिविश्रवो दधिरे यज्ञियासः। नक्ताच चक्रुरुषसा विरूपे। कृष्णञ्च वर्णमरुणञ्च सन्धुः*। त्वामग्नआदित्यासआस्यं। त्वां जिह्वाꣳ शुचयश्चक्रिरे कवे। त्वाꣳ रातिषाचो अध्वरेषुसश्चिरे। त्वे देवा हविरदन्त्याहुतं। नित्वा यज्ञस्य साधनं। अग्ने होतारमृत्विजं। वनुष्वद्देव धीमहि प्रचेतसं॥ जीरं दूतममर्त्त्यं॥ ६ ॥

यज्ञवाहसा सपर्य्यन वयमृध्यां भिक्षमाणा प्रचेतसमेकञ्च॥ अनु० १२ ॥

त्रयोदशोऽनुवाकः।

‡तिष्ठा हरी रथआयुज्यमानायाहि। वायुर्न नियुतोनोअच्छ। पिबास्यन्धो अभिसृष्टोअस्मे। इन्द्र स्वाहा ररिमाते मदाय। कस्य वृषासुते सचा। नियुत्वान् वृषभोरणत्। वृत्रहा सोमपीतये। इन्द्रं वयं महाधने। इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणं॥ १ ॥

* D मिथुः। † B. C. D. E. यज्ञस्य। ‡ तिष्ठा C.

द्विताये वृत्रहन्तमः। विद्इन्द्रः शतक्रतुः। उप- नोहरिभिः सुतं। स सूरआजनयन् ज्योतिरिन्द्रं। अ- याधिया तरणिरद्रिबर्हाः। ऋतेन शुष्मीनवमानो- अर्कैः। व्युस्रिधा असो अद्रिर्बिभेद। उतत्यदाश्वश्वियं। यदिन्द्रनाहुषीषा। अग्रे विक्षु *प्रतीदयत्॥ २॥

भरेष्विद्रः सुहवः हवामहे। अःहोमुचः सुकृतं दैव्यं जनं। अग्निं मित्रं वरुणः सातये भगं। द्यावापृ- थिवी मरुतः स्वस्तये। महिक्षेत्रं पुरुश्चन्द्रं विविद्वान्। आदित्सखिभ्यश्च रथः समैरत्। इन्द्रोनृभिरजनद्दी- द्यानः साकं। सूर्य्यमुषसं गातुमग्निं। उरुणो लोकम- नुनेषि विद्वान्। सुवर्वं ज्योतिरभयः† स्वस्ति॥ ३॥

ऋष्वातइन्द्र स्थविरस्य बाहू। उपस्थेयाम शरणा बृहन्ता। आनो विश्वाभिरूतिभिः सजोषाः। ब्रह्म- जुषाणो हर्य्यश्व याहि। वरीवृजत्स्थविरेभिः सुशिप्र। अस्मेदधद्वृषणः शुष्ममिन्द्र। इन्द्राय गावआशिरं। दु- दुह्रे वज्रिणे मधु। यत्सीमुपह्वरे विदत्। तास्ते वज्रि- न्धेनवो जोजयुर्नः॥ गभस्तयो नियुतो विश्ववाराः। अहरहर्भूयइज्जोगुवानाः। पूर्णा इन्द्रक्षुमतो भोज-

* D प्रतीदयत्। † D अभयं।

नस्य। इमां ते धियं प्रभरे महो महीम्। अस्य स्तोत्रे धिषणा यत आनजे। तमुत्सवे च प्रसवे च सासहिम्। इन्द्रं देवासः शवसा मदन्ननु ॥ ४ ॥

वज्रिणमयत्स्वस्तिभिरोजयुर्नः सप्त च ॥ अनु० १३ ॥

चतुर्दशोऽनुवाकः।

प्रजापतिः पशूनसृजत। तेऽस्मात् सृष्टाः पराञ्च आयन्। तानग्निष्टोमेन नाप्नोत्। तानुक्थ्येन नाप्नोत्। तान्षोडशिना नाप्नोत्। तान्रात्रिया नाप्नोत्। तान्त्सन्धिना नाप्नोत्। सोऽग्निमब्रवीत्। इमान्म ईप्सेति। तानग्निस्त्रिवृता स्तोमेन नाप्नोत् ॥ १ ॥

स इन्द्रमब्रवीत्। इमान्म ईप्सेति। तानिन्द्रः पञ्चदशेन स्तोमेन नाप्नोत्। स विश्वान् देवानब्रवीत्। इमान्म ईप्सतेति। तान् विश्वे देवाः सप्तदशेन स्तोमेन नाप्नुवन्। स विष्णुमब्रवीत्। इमान्म ईप्सेति। तान् विष्णुरेकविंशेन स्तोमेनाप्नोत्। वारवन्तीयेनावारयत ॥ इदं विष्णुर्विचक्रमइति व्यक्रमत। यस्मात् पशवः प्र प्रेवभ्रंशेरन्। सएतेन यजेत। यदाप्नोत्। तदप्तोर्यामस्याप्तोर्यामत्वम्। एतेन वै देवाजत्वानि जित्वा। यं

काममकामयन्त तमाप्नुवन्। यं कामं कामयते। त-मेतेनाप्नोति॥ २॥

स्तोमेन नाप्नोदवारयत नव च॥ अनु० १४॥

पञ्चदशोऽनुवाकः।

व्याघ्रोऽयमग्नौ चरति प्रविष्टः। ऋषीणां पुत्रोऽभि-शस्तिपा अयं। नमस्कारेण नमसा ते जुहोमि। मा दे-वानां मिथुया कर्म्मभागं। सावीर्हि देव प्रसवाय पित्रे। वर्ष्माणमस्मै वरिमाणमस्मै। अथास्मभ्यꣳ सवितः सर्व-ताता। दिवे दिव आसुवा भूरि पश्वः। भूतो भूतेषु च-रति प्रविष्टः। स भूतानामधिपतिर्बभूव॥ १॥

तस्य मृत्यौ चरति राजसूयं। स राजा राज्यमनुम-न्यतामिदं। येभिः शिल्पैः पप्रथानामदꣳहत्। येभि-र्द्यामभ्यपिꣳशत् प्रजापतिः। येभिर्वाचं विश्वरूपाꣳ स-मव्ययत्। तेनेममग्न इह वर्चसा समङ्ग्धि। येभिरादित्य-स्तपति प्रकेतुभिः। येभिः सूर्य्यो ददृशे चित्रभानुः। येभिर्वाचं पुष्कलेभिरव्ययत्। तेनेममग्न इह वर्चसा समङ्ग्धि॥ २॥

आयं भातु शवसा पञ्च कृष्णीः*। इन्द्र इव ज्येष्ठो भ-

---

* B. C. D. कृष्टीः।

वतु प्रजावान्। अस्मास्वस्तु पुष्कलं चित्रभानु। आयं पृणक्तु रजसीउपस्थं। यत्ते शिल्पं कश्यप रोचनावत्। इन्द्रियावत् पुष्कलं चित्रभानु। यस्मिन्त्सूर्य्या अर्पिताः सप्त साकं। तस्मिन् राजानमधिविश्रयेमं। द्यौरसि पृथिव्यसि। व्याघ्रो वैय्याघ्रेधि ॥ ३ ॥

विश्रय स्वदिशो महीः। विशस्त्वा सर्व्वा वाञ्छन्तु। मा त्वद्राष्ट्रमधिभ्रशत्। यादिव्या आपः पयसा सम्बभूवुः। याअन्तरिक्षउतपार्थिवीर्य्याः। तासां त्वा सर्व्वासाꣳ रुचा। अभिषिञ्चामि वर्चसा। अभित्वा वर्चसा सिचं दिव्येन। पयसा सह। यथा सा राष्ट्रवर्द्धनः ॥ ४ ॥

तथा त्वा सविताकरत्। इन्द्रं विश्वाअवीवृधन्। समुद्र व्यचसङ्गिरः। रथीतमꣳ रथीनां। वाजानाꣳ सत्पतिं पतिं। वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा। रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा। आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा। विश्वे त्वा देवाउत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा। बृहस्पतिस्त्वोपरिष्टादभिषिञ्चन्तु पाङ्क्तेन छन्दसा ॥ ५ ॥

अरुणं त्वा वृकमुग्रं खजं करं। रोचमानं मरुतामग्रे

अर्षिषः। सूर्य्यवन्तं मघवानं विषासहिं। इन्द्रमुक्थ्येषु नाम हूतमं हुवेमा*। प्रबाहवा सिसृतं जीवसे नः। आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रवयतं युवाना। श्रुतं मे मित्रावरुणा हवेमा। इन्द्रस्य ते वीर्य्यकृतः। बाहू उपावहरामि ॥ ६ ॥

बभूवाव्ययत्तेनेममग्नइह वर्चसा समङ्ग्धि वैय्याघ्रेधि राष्ट्रवर्द्धनः पाङ्क्तेन छन्दसोपावहरामि ॥ अनु० १५ ॥

षोडशोऽनुवाकः।

अभिप्रेहि वीरयस्व। उग्रश्चेत्ता सपत्नहा। आतिष्ठ वृत्रहन्तमः। तुभ्यं देवा अधिब्रवन्। अंकौ न्यङ्कावभितो रथंयौ। ध्वान्तं वाताग्रमनुसञ्चरन्तौ। दूरे हेतिरिन्द्रिया वान्पतत्री। ते नोऽग्नयः पप्रयः पारयन्तु। नमस्त ऋषेगद। अव्यथायै त्वा स्वधायै त्वा ॥ १ ॥

मा न इन्द्राभितस्त्वदृष्वारिष्टासः। एवाब्रह्मन्तवेदस्तु। तिष्ठा रथेअधि यद्वज्रहस्तः। आरश्मीन्देव युवसे स्वश्वः। आतिष्ठ वृत्रहन्नातिष्ठन्तं परि। अनु त्वेन्द्रो मदत्वनु त्वा मित्रावरुणौ। द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पिपर्त्तु। अनु स्वधा चिकिताꣳ सोमो अग्निः। अनु त्वावतु सविता सवेन ॥ २ ॥

* C. ह्वयेम।

इन्द्रं विश्वा अवीवृधन्। समुद्रव्यचसङ्गिरः। रथीतमꣳ रथीनां। वाजानाꣳ सत्पतिं पतिं। परि मा सेन्या घोषाः। ज्यानां वृञ्जन्तु गृध्नवः। मेथिष्ठाः पिन्वमाना इह। मां गोपतिमभिसंविशन्तु। तन्मेऽनु मतिरनुमन्यतां। तन्माता पृथिवी तत्पिता द्यौः॥ ३॥

तद्ग्रावाणः सोमसुतो मयोभुवः। तदश्विना शृणुतꣳ सौभगा युवं। अव ते हेड उदुत्तमं। एना व्याघ्रं परिषस्वजानाः। सिꣳहꣳ हिन्वन्ति महते सौभगाय। समुद्रं न सुहवं तस्थिवाꣳसं।*मर्मृज्यन्ते द्वीपिनमप्स्वन्तः। उदसौ वेतु सूर्य्यः। उदिदं मामकं वचः। उदिहि देव सूर्य्य॥ सहवमुना मम। अहं वाचो विवाचनं। मयि वागस्तु धर्णसिः। यन्तु नद्यो वर्षन्तु पर्जन्याः। सुपिप्पला ओषधयो भवन्तु। अन्नवतामोदनवतामामिक्षवतां। एषाꣳ राजा भूयासं॥ ४॥

स्वधायै त्वा सवेन द्यौः सूर्य्य सप्त च॥ अनु० १६॥

सप्तदशोऽनुवाकः।

ये केशिनः प्रथमाः सत्रमासत। येभिराभृतं यदिदं विरोचते। तेभ्यो जुहोमि बहुधा घृतेन। रायस्पोषे-

---

* C. मर्मृज्यन्त।

णेमं वर्चसा सꣳसृजाथ। नक्तं ब्रह्मणस्तपसो विमोकः। द्विनाम्नीं दीक्षावशिनी ह्युग्रा। प्रकेशाः सुवते काण्डिनो भवन्ति। तेषां ब्रह्मे दीशे वपनस्य नान्यः। आरोह प्रोष्ठं विषहस्व शत्रून्। अवास्राग्दीक्षा वशिनी ह्युग्रा॥१॥

देहि दक्षिणां प्रतिरस्वायुः। अथामुच्यस्व वरुणस्य पाशात्। येनावपत्सविता क्षुरेण। सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपते दमस्योर्जेमं। रय्या वर्चसा सꣳसृजाथ। मा ते केशाननुगाद्वचएतत्। तथा धाता करोतु ते। तुभ्यमिन्द्रो बृहस्पतिः। सविता वर्चआदधात्॥ २॥

तेभ्यो निधानं बहुधा व्यैच्छन्। अन्तरा द्यावापृथिवी अपः सुवः। दर्भस्तम्बे वीर्यकृते निधाय। पौꣳस्येनेमं वर्चसा सꣳसृजाथ। बलं ते बाहुवोः सविता* दधातु। सोमस्त्वानक्तु पयसा घृतेन। स्त्रीषु रूपमश्विनैतन्निधत्तं। पौꣳस्येनेमं वर्चसा सꣳसृजाथ। यत्सीमन्तं कङ्कतस्ते लिलेख। यद्वा क्षुरः परिववर्ज वपꣳस्ते॥ स्त्रीषु रूपमश्विनैतन्निधत्तं। पौꣳस्येनेमꣳ सꣳसृजाथो वीर्येण॥ ३॥

---

* सविता C.

अवांसाग्दीक्षा वशिनी ह्युग्रा दधाह्यपंस्ते द्वे च ॥
अनु० १७ ॥

*ये केशिनो नक्ष मा ते बलं यत्सोमन्नं पञ्च ॥

अष्टादशोऽनुवाकः।

इन्द्रं वै स्वाविशो मरुतो नापाचायन्। सोऽनपचाय्यमानएतं विघनमपश्यत्। तमाहरत्। तेनायजत। तेनैवासां तंसंस्तम्भं व्यहन्। यद्व्यहन्। तद्विघनस्य विघनत्वं। विपाप्मानं भ्रातृव्यं हते। यएतेन यजते। यउचैनमेवं वेद ॥ १ ॥

यं राजानं विशोनापचायेयुः। यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतः स्यात्। सएतेन यजेत। विघनेनैवैनान्विहत्य। विशामाधिपत्यं गच्छति। तस्य द्वे द्वादशस्तोत्रे भवतः। द्वे चतुर्विंशे। औद्भिद्यमेव तत्। एतद्वै क्षत्रस्यौद्भिद्यं। यदस्मै स्वाविशो बलिं हरन्ति ॥ २ ॥

हरन्त्यस्मै विशो बलिं। ऐनमप्रतिख्यातं गच्छति। यएवं वेद। पुवाहुग्वाअग्रे क्षत्राण्यातेपुः। तेषामिन्द्रः क्षत्राण्यादत्त। न वाइमानि क्षत्राण्यभूवन्निति। तन्न-

* ये केशिन इत्यादि पञ्चपदंक्तं C. पुस्तके नास्ति।

क्षत्राणां नक्षत्रत्वं। आग्नेयसो भ्रातृव्यस्य तेजइन्द्रियं धत्ते*। यएतेन यजते। यउचैनमेवं वेद ॥ ३ ॥

तद्यथा ह वै संचक्रिणौ कल्यकावुपावहितौ स्यातां। एवमेतौ युग्मं तौ स्तोमौ। अयुक्षु स्तोमेषु क्रियेते। पाप्मनोऽपहत्यै। अपपाप्मानं भ्रातृव्यꣳ हते। यएतेन यजते। यउचैनमेवं वेद। तद्यथाह वै सूतग्रामण्यः। एवं छन्दाꣳसि। तेष्वसावादित्यो बृहतीरभ्यूढः ॥ ४ ॥

सतो बृहतीषु स्तुवते सतो बृहन्। प्रजया पशुभिरसानीत्येव। व्यतिषक्ताभिः स्तुवते। व्यतिषक्तं वै क्षत्रं विशा। विशैवैनं क्षत्रेण व्यतिषजति।व्यतिषक्ताभिः स्तुवते। व्यतिषक्तो वै ग्रामणीः स जातैः। स जातैरेवैनं व्यतिषजति।व्यतिषक्ताभिः स्तुवते। व्यतिषक्तो वै पुरुषः पाप्मभिः॥ व्यतिषक्ताभिरेवास्य पाप्मनो नुदते ॥ ५ ॥

वेद हरन्त्येनमेवं वेदाभ्यूढः पाप्मभिरेकञ्च ॥ अनु० १८ ॥

त्रिवृद्यदाग्नेयोऽग्निमुखा ह्यृद्धिर्यदाग्नेय आग्नेयो न वै सोमेन यो वै सोमेनैव गोसवः सिꣳहेऽभिप्रेहि मित्रवर्द्धनः प्रजापतिस्त्वा ओदनं प्रजापतिरकामयत बहो-

---

* B C. D. E. हन्ते।

भूयानरत्न्योस्याअरासस्तिष्ठा हरी प्रजापतिः पशून् व्याघ्रोऽभिप्रेहि वृत्रहन्तमो ये केशिनइन्द्रं वाश्चाष्टा-दश ॥ १८ ॥

त्रिवृद्धो वै सोमेनायुरसि विश्वायुर्बहुर्भवति तिष्ठा हरीरथ आयं भातु तेभ्यो निधानꣳ षट्पष्टिः ॥ ६६ ॥

हरिः ओम् ॥

इति सप्तमोऽध्यायः ॥

हरिः ॐ ॥

द्वितीयकाण्डे अष्टमप्रपाठके

प्रथमोऽनुवाकः ।

पीवोऽन्नाꣳ रयिवृधः सुमेधाः । श्वेतः सिषक्ति नियु-तामभिश्रीः । ते वायवे समनसो वितस्थुः । विश्वेऽन्नरः स्वपत्यानि चक्रुः । रायेनु यं जज्ञत् रोदसीउभे । राये देवी धिषणाधातिदेवं । अधा वायुं नियुतः सश्चतस्वाः । उतश्वेतं वसुधितिं निरेके । आवायो प्रयाभिः । प्रवा-युमच्छा बृहती मनीषा ॥ १ ॥

बृहद्रयिं विश्ववाराꣳ रथप्रां । द्युतद्यामा नियुतः पत्यमानः । कविः कविमिं यक्षसि प्रयज्यो । आनो नि-युद्भिः शतिनीभिरध्वरं । सहस्रिणीभिरुपयाहि यज्ञं ।

वायो अस्मिन् हविषि मादयस्व। यूयं पात स्वस्तिभिः सदा नः। प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु॥ २॥

वयꣳ स्याम पतयो रयीणां। रयीणां पतिं यजतं बृहन्तं। अस्मिन् भरे नृतमं वाजसातौ। प्रजापतिं प्रथमजामृतस्य। यजाम देवमधि नो ब्रवीतु। प्रजापते त्वं निधिपाः पुराणः। देवानां पिता जनिता प्रजानां। पतिर्विश्वस्य जगतः परस्पाः। हविर्नो देवविहवे जुषस्व। तवेमे लोकाः प्रदिशो दिशश्च॥ ३॥

परावतो निवत उद्वतश्च। प्रजापते विश्वसृज्जीवधन्य इदं नो देव। प्रतिहर्य हव्यं। प्रजापतिं प्रथमं यज्ञियानां। देवानामग्रे यजतं यजध्वं। स नो ददातु द्रविणꣳ सुवीर्यं। रायस्पोषं विष्यतु नाभिमस्मे। यो राय ईशे शतदाय उक्थ्यः। यः पशूनाꣳ रक्षिता विष्ठितानां। प्रजापतिः प्रथमजा ऋतस्य॥ ४॥

सहस्रधामाजुषताꣳ हविर्नः। सोमापूषणेमौ देवौ। सोमापूषणा रजसो विमानं। सप्तचक्रꣳ रथमविश्वमिन्वं। विषूवृतं मनसा युज्यमानं। तं जिन्वथो वृषणा पञ्चरश्मिं। दिव्यन्यः सदनं चक्र उच्चा। पृथिव्यामन्यो

अध्यन्तरिक्षे। तावस्मभ्यं पुरुवारं पुरुक्षुं। रायस्पोषं विष्यतां नाभिमस्मे ॥ ५ ॥

धियं पूषा जिन्वतु विश्वमिन्वः। रयिꣳ सोमो रयिपतिर्दधातु। अवतु देव्यदितिरनर्वा। बृहद्वदेम विदथे सुवीराः। विश्वान्यन्यो भुवना जजान। विश्वमन्यो अभिचक्षाण एति। सोमा पूषणाववतं धियं मे। युवभ्यां विश्वाः पृतना जयेम। उदुत्तमं वरुणास्तम्भाद्यां। यत्किञ्चेदं कितवासः॥ अवते हेडस्तत्त्वायामि। आदित्यानामवसानदक्षिणा। धारयन्त आदित्यासस्त्रिस्रो भूमीर्धारयन्। यज्ञो देवानाꣳ शुचिरपः ॥ ६ ॥

मनीषास्तु चर्त्तस्यास्मे कितवासश्चत्वारि च॥अनु०१॥

द्वितीयोऽनुवाकः।

ते शुक्रासः शुचयो रश्मिवन्तः। सीदन्नादित्या अधि बर्हिषि प्रिये। कामेन देवाः सरथं दिवो नः। आयान्तु यज्ञमुपनो जुषाणाः। ते सूनवो अदितेः पीव सामिषं। घृतं पिन्वत् प्रतिहर्य्यं न्नतेजाः। प्रयज्ञिया यजमानाय ये मुरे। आदित्याः कामं पितुमन्तमस्मे। आनः पुत्रा अदितेर्यान्तु यज्ञं। आदित्यासः पथिभिर्देवयानैः ॥ १ ॥

---

* C. D. वषघनभार्यां।

अस्म कामं दाशुषे सन्नमन्तः। पुरोडाशं घृतवन्तं जुषन्तां। स्कभायत निर्ऋतिꣳ सेधता मतिं। प्ररश्मिभिर्यतमाना अमृध्राः। आदित्याः काम प्रयतां वषट्कृतिं। जुषध्वं नो हव्यदातिं यजत्राः। आदित्यान् काममवसे हुवेम। ये भूतानि जनयन्तो विचिख्युः। सीदन्तु पुत्रा अदितेरुपस्थं। स्तीर्णं बर्हिर्हविरद्याय देवाः॥२॥

स्तीर्णं बर्हिः सीदता यज्ञे अस्मिन्। धाजाः सेधन्तो अमतिन्दुरेवां। अस्मभ्यं पुत्रा अदितेः प्रयꣳसत। आदित्याः कामं हविषो जुषाणाः। अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनः। भूयिष्ठां ते नमउक्तिं विधेम। प्रवः शुक्राय भानवे भरध्वं। हव्यं मतिञ्चाग्नये सुपूतं॥ ३॥

यो दैव्यानि मानुषा जनूꣳषि। अन्तर्विश्वानि विद्मनाजिगाति। अच्छागिरो मतयो देवयन्तीः। अग्निं यन्ति द्रविणं भिक्षमाणाः। सुसन्दृशꣳ सुप्रतीकꣳ स्वञ्चं। हव्यवाहमरतिं मानुषाणां। अग्ने त्वमस्मद्युयोध्यमीवाः। अनग्निचा अभ्यमन्त कृष्टीः। पुनरस्मभ्यꣳ *सविताय देव। क्ष्मां विश्वेभिरजरेभिर्यजच॥ ४॥

* C. D. सुविताय।

अग्ने त्वं पारया नव्यो अस्मान् । स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी । भवा तोकाय तनयाय शंयोः । प्रकारवो मननावच्यमानाः । देवद्रीचीन्नयथ देवयन्तः । दक्षिणावाड्वाजिनी प्राच्येति । हविर्भरन्त्यग्नये घृताची । इन्द्रं नरो युजे रथं । जगृभ्णाते दक्षिणमिन्द्र हस्तं ॥ ५ ॥

वसूयवो वसुपते वसूनां । विद्माहि त्वा गोपतिꣳ शूरगोनां । अस्मभ्यं चित्रं वृषणꣳ रयिं दाः । तवेदं विश्वमभितः पशव्यं । यत् पश्यसि चक्षसा सूर्यस्य । गवामसि गोपतिरेक इन्द्र । भक्षीमहि ते प्रयतस्य वस्वः । समिन्द्रणो मनसा नेषि गोभिः । सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति ॥ ६ ॥

सं देवानाꣳ सुमत्या यज्ञियानां । आराच्छत्रुमपबाधस्व दूरं । उग्रो यः शम्बः पुरुहूत तेन । अस्मे धेहि यवमद्गोमदिन्द्र । कृधी धियं जरित्रे वाजरत्नां । आ वेधसꣳ सहि शुचिः । बृहस्पतिः प्रथमं जायमानः । महो ज्योतिषः परमे व्योमन् । सप्तास्यस्तु विजातो रवेण । विसप्तरश्मिरधमत्तमाꣳसि ॥ ७ ॥

बृहस्पतिः समजयद्वसूनि । महो व्रजान् गोमतो

देवरुषः। अपः सिषासन्त्सुवर प्रतीत्तः। बृहस्पतिर्ह-
न्त्यमित्रमर्कैः। बृहस्पते पर्य्येवा पित्रे। आनो दिवः पा-
वीरवी। इमा जुह्वाना यस्ते स्तनः। सरस्वत्यभिनोने-
षि। इयꣳ शुष्मेभिर्विसखा इवारुजत्। सानु गिरीणां
तविषेभिरूर्म्मिभिः॥ पारावद्घ्नीमवसे सुवृक्तिभिः।
सरस्वतीमाविवासे मधीतिभिः॥ ८॥

देवयानैर्देवाः सुपूतं यजत्र हस्तमस्ति तमाꣳस्यू-
र्म्मिभिर्द्वे च॥ अनु० २॥

तृतीयोऽनुवाकः।

सोमो धेनुꣳ सोमो अर्वन्तमाशुं। सोमो वीरं क-
र्म्मण्यं ददातु। सादन्यं विदथ्यꣳ सभेयं। पितुः श्रवणं
यो ददाशदस्मै। अषाढं युत्सु त्वꣳ सोमक्रतुभिः। याते
धामानि हविषा यजन्ति। त्वमिमा ओषधीः सोमवि-
श्वाः। त्वमपो अजनयस्त्वङ्गाः। त्वमाततन्थोर्वन्तरिक्षं।
त्वं ज्योतिषा वितमोववर्थ॥ १॥

याते धामानि दिवि या पृथिव्यां। या पर्व्वतेष्वोष-
धीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेडन्। राजन्त्सोम
प्रतिहव्या गृभाय। विष्णोर्नुकं तदस्य प्रियं। प्रतद्विष्णुः।

परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्मरजसी पृथिव्या विष्णो देव त्वं । परमस्य वित्से ॥ २ ॥

विचक्रमे त्रिर्देवः । आ ते महो यो जातएव । अभिगोत्राणि । अभिस्पृधो मिथतीररिषण्यन् । अमित्रस्य व्यथया मन्युमिन्द्र । आभिर्विश्वा अभियुजो विषूचीः । आर्य्याय विशोवतारीर्दासीः । अयꣳ शृण्वेअधजयन्नुतघ्नन् । अयमुत प्रकृणुते युधागाः । यदा सत्यं कृणुते मन्युमिन्द्रः ॥ ३ ॥

विश्वं दृढं भयत एजदस्मात् । अनु स्वधामक्षरं नापोअस्य । अवर्द्धत मध्यआना व्यानां । सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन । हन्मनाहं नभियून । मरुत्वन्तं वृषभं वावृधानं । अकवारिं दिव्यꣳ शासमिन्द्रं । विश्वासाहमवसे नूतनाय । उग्रꣳ सहोदामिहतꣳ हुवेम । जनिष्ठा उग्रः सहसे तुराय ॥ ४ ॥

मन्द्रओजिष्ठो बहुलाभिमानः । अवर्द्धन्निन्द्रं मरुतश्चिदत्र । माता यद्वीरं दधनद्धनिष्ठा । क स्यावो मरुतः स्वधासीत् । यन्मामेकꣳ समधत्ता हि हत्ये । अहꣳ ह्युग्रस्तविपस्तु विष्मान । विश्वस्य शत्रोरनमं वधस्नैः ।

वृत्रस्य त्वाश्वसथा दीषमाणाः। विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्तु ॥ ५ ॥

अथेमा विश्वाः पृतना जयासि। वधीं वृत्रं मरुत इन्द्रियेण। स्वेन भामेन तविषो बभूवान्। अहमेता मनवे विश्वश्चन्द्राः। सुगा अपश्चकर वज्रबाहुः। स यो वृषा वृष्णियेभिः समोकाः। महो दिवः पृथिव्याश्च सम्राट्। सतीनसत्वा हव्यो भरेषु। मरुत्वान्नो भवत्विन्द्र ऊती। इन्द्रो वृत्रमतरद्वृत्रतूर्ये ॥ ६ ॥

अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनं विशो अमदन्त पूर्वीः। अयꣳ राजा जगतश्चर्षणीनां। स एव वीरः स उ वीर्यावान्। स एकराजो जगतः परस्याः। यदा वृत्रमतरच्छूर इन्द्रः। अथाभवद्दमिताभिक्रतूनां। इन्द्रो यज्ञं वर्द्धयन् विश्ववेदाः। पुरोडाशस्य जुषताꣳ हविर्नः। वृत्रं तीर्त्वा दानवं वज्रबाहुः ॥ ७ ॥

दिशो दृꣳहदृꣳहिता दृꣳहणेन। इमं यज्ञं वर्द्धयन् विश्ववेदाः। पुरोडाशं प्रतिगृभ्णात्विन्द्रः। यदा वृत्रमतरच्छूर इन्द्रः। अथैकराजो अभवज्जनानां। इन्द्रो देवाꣳच्छम्बरहत्य आवत्। इन्द्रो देवानामभवत् पुरोगाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतूर्णो अभ-

यं शर्म्म यं सत् । यः सप्त सिन्धूं रदधात् पृथिव्यां ॥ यः सप्त लोकानकृणोद्दिशश्च । इन्द्रो हविष्मान्त्सगणो मरुद्भिः । वृत्रतूर्यो यज्ञमिहोपयासत् ॥ ८ ॥

ववर्थ वित्सदिन्द्रस्तु रायास्तु वृत्रतूर्ये वज्रबाहुः पृथिव्यां त्रीणि च ॥ अनु० ३ ॥

चतुर्थोऽनुवाकः ।

इन्द्रस्तरस्वानभिमातिहोग्रः । हिरण्यवाशीरिपिरः सुवर्षाः । तस्य वयं सुमतौ यज्ञियस्य । अपि भद्रेऽसौ मनसे स्याम । हिरण्यवर्णो अभयं कृणोतु । अभिमातिहेन्द्रः पृतनासु जिष्णुः । स नः शर्म्म त्रिवरूथं वियं सत् । यूयं पातस्वस्तिभिः सदानः । इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं । पुरोडाशस्य जुषतां हविर्नः ॥ ॥ १ ॥

हत्वाभिमातीः पृतनाः सहस्वान् । अथाभयं कृणुहि विश्वतो नः । स्तुहि शूरं वज्रिणमप्रतीत्तं । अभिमातिहनं पुरुहूतमिन्द्रं । यएकइच्छतपतिर्जनेषु । तस्मा इन्द्राय हविराजुहोत । इन्द्रो देवानामधिपाः पुरोहितः । दिशां पतिरभवद्वाजिनीवान् । अभिमातिहा-

तविषः स्तुविष्मान्। अस्मभ्यं चित्रं वृषणंः रयिं दात् ॥ २ ॥

यद्इमे द्यावापृथिवी महित्वा। बलेनाहृंः हृदभिमातिहेन्द्रः। स नो हविः प्रतिगृभ्णातु रातये। देवानां देवो निधिपा नो अव्यात्। अनवस्ते रथं वृष्णे यत्ते। इन्द्रस्य नु वीर्य्याण्यहन्नहिं। इन्द्रो यातोवसि तस्य राजा। शमस्य च शृङ्गिणो वज्रबाहुः। सेद्राजाक्षेति चर्षणीनां। अरान्न नेमिः परिता बभूव ॥ ३ ॥

अभिसिध्मो अजिगादस्य शत्रून्। वितिग्मेन वृषभेणापुरोभेत्। सं वज्रेणासृजद्वृत्रमिन्द्रः। प्र स्वां पति*-मतिरच्छाशदानः। विष्णुं देवं वरुणमूतये भगं। मेदसा देवा वपया यजध्वं। तानो यज्ञमागतं विश्वधेना। प्रजावदस्मे द्रविणे ह धत्तं। मेदसा देवा वपया यजध्वं। विष्णुश्च देवं वरुणश्च रातिं ॥ ४ ॥

तानो अमीवा अपबाधमानौ। इमं यज्ञं जुषमाणावुपेतं। विष्णू वरुणायुवमध्वराय नः। विशे जनाय महि शर्म्म यच्छतं। दीर्घप्रयज्यू हविषा वृधाना। ज्योतिषा रातीर्दहतं तमांःसि। ययोरोजसा स्कभिता र-

* मतिमिति B. C. D. E. पुस्तकेषु पाठः।

जाꣳसि। वीर्य्येभिर्वीरतमा शचिष्ठा। यापत्येते अप्रतीत्ता सहोभिः। विष्णू अगन्वरुणा पूर्व्वहूतौ॥ ५॥

विष्णू वरुणावभिशस्तिपावा। देवा यजन्त हविषा घृतेन। आपामीवाꣳ सेधतꣳ रक्षसश्च। अथाधत्तं यजमानाय शंयोः। अꣳहोमुचा वृषभा सुप्रतूर्त्ती। देवानां देवतमा शचिष्ठा। विष्णू वरुणा प्रतिहर्य्यतन्नः। इदं नरा प्रयतमूतये हविः। मही नु द्यावापृथिवी इह ज्येष्ठे। रुचा भवताꣳ शुचयद्भिरर्कैः॥ ६॥

यत्सीं वरिष्ठे बृहती विमिन्वन्। नृवद्भ्योक्षा पप्रथानेभिरेवैः। प्रपूर्व्वजे पितरा नव्यसीभिः। गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन। जनेन यातं महि वां वरूथं। स इत्स्वपा भुवनेष्वास। य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके। अवꣳशे धीरः शच्या समैरत्॥ ७॥

भूरिं द्वे अचरन्ती चरन्तं। पद्वन्तं गर्भमपदी दधाते। नित्यन्न सूनुं पित्रोरुपस्थे। तं पिपृतꣳ रोदसी सत्यवाचं। इदं द्यावापृथिवी सत्यमस्तु। पितर्मातर्यदिहोपब्रुवे वां। भूतं देवानामवमे अवोभिः। विद्यामेषं वृजनं जीरदानुं। ऊर्वी पृथ्वी बहुले दूरे अन्ते। उप-

ब्रुवे नमसा यज्ञेऽअस्मिन्॥ दधाते ये सुभगे सु प्रतूर्तौ। द्यावा रक्षतं पृथिवी नो अभ्वात्। याजाता ओषधयो-ऽतिविश्वाः परिष्ठाः। या ओषधयः सोमराज्ञीरश्वाव-तीः सोमवतीं। ओषधीरिति मातरोऽन्यावोअन्या-मवतु॥ ८॥

हविर्नोदाद्वभूव रातिं पूर्व्वह्लतावकरैरदस्मिन् पञ्च च॥ अनु० ४॥

पञ्चमोऽनुवाकः।

शुचिन्नु स्तोमं अथंवृचं। उभा वामिन्द्राग्नी प्रचर्ष-णिभ्यः। आवृत्चहणा गीर्भिर्विप्रः। ब्रह्मणस्पते त्वम-स्य यन्ता। सूक्तस्य बोधितनयञ्च जिन्व। विश्वं तद्भद्रं यदवन्ति देवाः। बृहद्वदेम विदथे सुवीराः। सईं सत्येभिः सखिभिः शुचद्भिः। गोधाय संविधनसैरत-र्दत्। ब्रह्मणस्पतिर्वृषभिर्वराहैः॥ १॥

घर्म्मस्वेदेभिर्द्रविणं व्यानट्। ब्रह्मणस्पतेरभवद्यथा वशं। सत्यो मन्युर्महि कर्म्मा करिष्यतः। योग उदाजत् सदिवेविचाभजत्। महीवरीतिः शवसासरत् पृथक्। इन्धानोअग्निं वनवद्वनुष्यतः। कृतब्रह्माशू शुवद्रात-

हव्यदूत्। जातेन जातमतिसृत्प्रसृ॑सते। यं यं युजं कृणुते ब्रह्मणस्पतिः। ब्रह्मणस्पते सुयमस्य विश्वहा ॥ ॥ २ ॥

रायः स्याम रथ्यो विवस्वतः। वीरेषु वीराँ उपपृङ्ग्धि नस्त्वं। यदीशानो ब्रह्मणा वेषि मे हवं। सइज्जनेन सविशा सजन्मना। सपुत्रैर्वाजंभरते धना नृभिः। देवानां यः पितरमाविवासति। श्रद्धामना हविषा ब्रह्मणस्पतिं। यास्ते पूषन्नावो अन्तः। शुक्रं ते अन्यसूपे माञ्जाशाः। प्रपथे पथामजनिष्ट पूषा ॥ ३ ॥

प्रपथे दिवः प्रपथे पृथिव्याः। उभे अभिप्रियतमे सधस्थे। आच पराच चरति प्रजानन्। पूषा सुबन्धुर्दिव आ पृथिव्याः। इडस्पतिर्मघवादस्म वर्चाः। तं देवासो अददुः सूर्य्यायै। कामेन कृतं तव सँस्वञ्चं। अजाश्वः पशुपावाजवस्त्यः। धियं जिन्वो विश्वे भुवने अर्पितः। अष्ट्रां पूषा शिथिरामुद्वरीवृजत् ॥ ४ ॥

सम्बक्षाणो भुवना देवईयते। शुचीवो हव्या मरुतः शुचीनां। शुचिँ हिनोम्यध्वरँ शुचिभ्यः। ऋतेन सत्यमृतसाप आयन्। शुचिजन्मानः शुचयः पावकाः। प्रचित्रमर्कं गृणते तुराय। मारुताय स्वतवसे भरध्वं।

ये सहांसि सहसा सहन्ते। रेजते अग्ने पृथिवी मखेभ्यः। अंसेषा मरुतः खादयो वः ॥ ५ ॥

वक्षःसु रुक्मा उपशिश्रियाणाः। वि विद्युतो न वृष्टिभी रुचानाः। अनु स्वधामायुधैर्यच्छमानाः। या वः शर्म्म शंसमानाय सन्ति। त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त। रयिं नो धत्त वृषणः सुवीरं। इमे तुरं मरुतो रामयन्ति। इमे सहः सहस आनमन्ति। इमे शंसं वनुष्यतो नियान्ति ॥ ६ ॥

गुरुद्वेषो अररुषे दधन्ति। अरा इवेदचरमा अहेव। प्र प्रजायन्ते अकवा महोभिः। पृश्नेः पुत्रा उपमासो रभिष्ठाः। स्वया मत्या मरुतः संमिमिक्षुः। अनु ते दायि मह इन्द्रियाय। सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्र। इन्द्र देवेभिरनु ते नृषह्ये। य इन्द्र शुष्मो मघवन्ते अस्ति ॥ ७ ॥

शिक्षा सखिभ्यः पुरुहूत नृभ्यः। त्वं हि दृढा मघवन् विचेताः। अपावृधि परिवृत्तिन्नराधः। इन्द्रो राजा जगतश्चर्षणीनां। अधिक्षमि विषुरूपं यदस्ति। ततो ददातु दाशुषे वसूनि। चोदद्राध उपस्तुतश्चिदर्वाक्। तमु ष्टुहि यो अभिभूत्योजाः। वन्वन्नवातः पुरु-

हूतइन्द्रः। आषाढमुग्रꣳ सहमानमाभिः॥ गीर्भिर्वर्द्ध वृषभं चर्षणीनां। द्युम्नस्य रायो बृहतो यईशे। तमु-ष्टवाम विदथेष्विन्द्रं। यो वायुना जयति गोमतीषु। प्रधृष्णुया नयति वस्योअच्छ। आते शुष्मो वृषभएतु पश्चात्। ओत्तरा दधरागा पुरस्तात्। आ विश्वतो अभिसमेत्ववाङ्। इन्द्र द्युम्नꣳ सुवर्वद्धेह्यस्मे॥ ८॥

वराहैर्विश्वहाजनिष्ट पूषोदरीरुजत् खादयोवः पा-न्त्यस्याभिर्नव च॥ अनु० ५॥

षष्ठोऽनुवाकः।

आ देवो यातु सविता सुरत्नः। अन्तरिक्षप्रावहमा-नोअश्वैः। हस्ते दधानो नर्या पुरूणि। निवेशयञ्च प्रसुवञ्च भूम। अभीवृतं कृशनैर्विश्वरूपं। हिरण्यशम्यं यजतो बृहन्तं। आस्थाद्रथꣳ सविता चित्रभानुः। कृ-ष्णारजाꣳसि तविषीं दधानः। सद्यानो देवः सविता सवाय। आसा विषद्वसुपतिर्वसूनि॥ १॥

विश्रयमाणोअमतिमुरूचीं। मर्त्तभोजनमधरास तेन। विजनाञ्छ्यावाः शितिपादो अख्यन्। रथꣳ हि रण्य प्रउगं वहन्तः। शश्वद्विशः सवितुर्दव्यस्य। उपस्थे

विश्वा भुवनानि तस्थुः। विसुपर्णो अन्तरिक्षाण्यख्यत्। गभीरवेपा असुरः सुनीथः। क्वेदानीꣳ सूर्य्यः कश्चिकेत। कतमां द्याꣳ रश्मिरस्या ततान॥ २॥

भगं धियं वाजयन्तः पुरन्धिं। नराशꣳसोऽग्नास्पतिर्नोअव्यात्। आयेवामस्य सङ्गथे रयीणां। प्रिया देवस्य सवितुः स्याम। आनो विश्वेअस्क्रागमन्तु देवाः। मित्रोअर्य्यमा वरुणः सजोषाः। भुवन् यथा नो विश्वे वृधासः। करन्त्सुषाहा विथुरन्नशवः। शन्नोदेवा विश्वदेवा भवन्तु। शꣳ सरस्वती सह धीभिरस्तु॥ ३॥

शमभिषाचः शमुरातिषाचः। शन्नो दिव्याः पार्थिवाः शन्नोअप्याः। ये सवितुः सत्यसवस्य विश्वे। मित्रस्य व्रते वरुणस्य देवाः। तेऽसौ भगं वीरवङ्गोमदघ्नः। दधातन द्रविणं चित्रमस्मे। अग्ने पाहि दृत्यं वारिषेण्यः। देवाꣳ अच्छा ब्रह्म कृतागणेन। सरस्वतीं मरुतोअश्विनापः। यक्षि देयान् रत्नधेयाय विश्वान्॥ ॥ ४॥

द्यौः पितः पृथिवि मातरध्रुक्। अग्ने भ्रातर्वसवो मृडतानः। विश्वआदित्या अदिते सजोषाः। अस्मभ्यꣳ शर्म्म बहुलं वियन्त। विश्वे देवाः शृणुतेमꣳ हवं मे।

येऽअन्तरिक्षे यउपद्यविष्ठ। येऽग्निजिह्वा उतवा यज-
त्राः। आसद्यास्मिन् बर्हिषि मादयध्वं। आवां मित्रा
वरुणा हव्यजुष्टिं। नमसा देवा ववसावहृत्यां ॥ ५ ॥

अस्माकं ब्रह्म पृतनासु सह्या। अस्माकं वृष्टिर्दिव्यासु
पारा। युवं वस्त्राणि पीवसा वसाथे। युवोरच्छिद्राम
न्तवो ह सर्गाः। अवातिरतमनृतानि विश्वा। ऋतेन
मित्रावरुणा सचेथे। तत्सुवां मित्रावरुणा महित्वं।
ईर्मातस्थुषीरहभिर्दुदुह्रे। विश्वाः पिन्वथ स्वसरस्य
धेनाः। अनुवामेकः पविरावर्वर्त्ति ॥ ६ ॥

यद्वंहिष्ठं नातिविदे सुदानू। अच्छिद्रं शर्म भुव
नस्य गोपा। तेनो नो मित्रावरुणावविष्टं। सिषास-
न्तो जीगिवांसः स्याम। आनो मित्रावरुणा हव्य-
दातिं। घृतैर्गव्यूतिमुक्षतमिडाभिः। प्रतिवामत्र वर
माजनाय। पृणीतमुद्नो दिव्यस्य चारोः। प्रवाहवा सि-
सृतं जीवसे नः। आनो गव्यूतिमुक्षतं घृतेन ॥ ७ ॥

आनोजने श्रवयतं युवाना। श्रुतं मे मित्रावरुणा
हवेमा। इमा रुद्राय स्थिरधन्वने गिरः। क्षिप्रेषवे दे-
वाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। ति-
ग्मायुधाय भरता शृणोतन। त्वा दत्तेभीरुद्र शन्तमे-

भिः। शतꣳ हि माऽश्शीय भेषजेभिः। व्यस्मद्वेषो वितरं व्यꣳहः। व्यमीवाꣳश्चातयस्वा विषूचीः ॥ ८ ॥

अर्हन् बिभर्षि मा नस्तोके। आ ते पितर्मरुताꣳ सुम्नमेतु। मा नः सूर्यस्य सन्दृशो युयोथाः। अभि नो वीरो अर्वति क्षमेत। प्रजायेमहि रुद्र प्रजाभिः। एवा बभ्रो वृषभ चेकितान। यथा देव न हृणीषे न हꣳसि। हावनश्रूर्नो रुद्रेह बोधि। बृहद्वदेम विदथे सुवीराः। परि णो रुद्रस्य हेतिर्वृणक्तु स्तुहि श्रुतं॥ मीढुष्टमार्हन् बिभर्षि। त्वमग्ने रुद्र आवो राजानं ॥ ९ ॥

वसूनि ततानास्तु विश्वान्वृत्यां ववर्त्ति घृतेन विषूचीः श्रुतं द्वे च ॥ अनु० ६ ॥

सप्तमोऽनुवाकः।

सूर्यो देवीमुषसꣳ रोचमानामर्य्यः। न योषामभ्येति पश्चात्। यत्रा नरो देवयन्तो युगानि। वितन्वते प्रतिभद्राय भद्रं। भद्रा अश्वा हरितः सूर्यस्य। चित्रा एदग्वा अनुमाद्यासः। नमस्यन्तो दिव आपृष्ठमस्थुः। परि द्यावापृथिवी यन्ति* सद्यः। तत्सूर्यस्य देवत्वं तन्महित्वं। मध्याकर्त्तोर्विततꣳ सञ्जभार ॥ १ ॥

---

* सन्तीति (?) पुस्तकपाठः।

यदेदयुक्त हरितः सधस्थात्। आद्रात्री वासस्तनुते सिमस्मै। तन्मित्रस्य वरुणस्याभिचक्षे। सूर्य्यो रूपं कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य* पाजः। कृष्णमन्यद्धरितः सम्भरन्ति। अद्या देवाउदिता सूर्य्यस्य। निरꣳहसः पिपृतान्निरवद्यात्। तन्नो मित्रो वरुणो मामहन्तां। अदितिः सिन्धुः पृथिवी उत द्यौः ॥ २ ॥

दिवोरुक्मउरुचक्षा उदेति। दूरेअर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्य्येण प्रसूताः। आयन्नर्थानि कृणवन्नपाꣳसि। शन्नो भव चक्षसा शन्नो अह्ना। शं भानुना शꣳहिमा शं घृणेन। यथा शमस्मै शमसद्दुरोणे। तत्सूर्य्य द्रविणं धेहि चित्रं। चित्रं देवानामुदगादनीकं। चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ ३ ॥

आप्रा द्यावापृथिवी अन्तरिक्षं। सूर्य्यआत्मा जगतस्तस्थुषश्च। त्वष्टा दधत्तन्नस्तुरीयं। त्वष्टा वीरं पिशङ्गरूपः। दशेमं त्वष्टुर्जनयन्त गर्भं। अतन्द्रासो युवतयो विभर्त्रं। तिग्मानीकꣳ स्वयशसं जनेषु। विरोचमानं परिषीन्नयन्ति। आ विष्ट्यो वर्द्धते चारुरासु। जिह्मानामूर्द्ध्वः स्वयशाउपस्थे ॥ ४ ॥

उभे त्वष्टुर्बिभ्यतुर्जायमानात्। प्रतीची सिꣳहं प्रति जोषयेते। मित्रो जनान् प्रसमित्र। अयं मित्रो नमस्यः सुशेवः। राजा सुक्षत्रो अजनिष्ट वेधाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रेऽसौ मनसे स्याम। अनमीवास इडया मदन्तः। मितज्ञवो वरिवन्ना* पृथिव्याः। आदित्यस्य व्रतमुपक्ष्यन्तः॥ ५॥

वयं मित्रस्य सुमतौ स्याम। मित्रं नईꣳशिम्या गोषु गव्यवत्। स्वाधियो विदथेअप्स्वजीजनन्। अरे जयताꣳ रोदसी पाजसा गिरा। प्रतिप्रियं यजतं जनुषामवः। महाꣳ आदित्यो नमसोपसद्यः। यातयज्जनो गृणते सुशेवः। तस्माएतत्पन्यतमा यजुष्टं। अग्नौ मित्राय हविराजुहोत। आवाꣳ रथो रोदसीवद्दधानः†॥

॥ ६॥

हिरण्ययो वृषभिर्यात्वश्वैः। घृतवर्त्तनिः पविभीरुचानः। इषां वोढा नृपतिर्वाजिनीवान्। सपप्रथानो अभिपञ्च भूम। त्रिबन्धुरो मनसा यातु युक्तः। विशो येन गच्छथो देवयन्तीः। कुत्राचिद्यामममश्विना दधाना। स्वश्वा यशसा यातमर्वाक्। दस्रानिधिं मधु-

---

* वरिमन्नेति B. C. पुस्तकपाठः। † बद्धधान इति B.C. D. पुस्तकपाठः।

मन्तं पिबाथः । दिवाꣳ रथोबध्वायादमानः ॥ ७ ॥

अन्तान्दिवो बाधते वर्त्तनिभ्यां । युवोः श्रियं परियो-
षा वृणीत । सूरा दुहिता परितक्मियायां । यद्देवयन्त-
मवथः शचीभिः । परिघ्रꣳ सवां मनावां वयोगां । यो
ह्यस्यवाꣳ रथिरावस्तउस्राः । रथो युजानः परिया-
ति वर्त्तिः । तेन नः शंयोरुषसोव्युष्टौ । न्यश्विना वहतं
यज्ञे अस्मिन । युवं भुज्युमवविद्धꣳ समुद्रे ॥ ८ ॥

उदूहथुरर्णसो अस्रिधानैः । पतत्रिभिरश्रमैरव्य-
थिभिः । दꣳसनाभिरश्विना पारयन्तां । अग्नीषोमा
योअद्यवां । इदं वचः सपर्य्यति । तस्मै धत्तꣳ सुवीर्य्यं ।
गवां पोषꣳ स्वश्वियं । योअग्नीषोमा हविषा सपर्य्यात् ।
देवद्रीचा मनसा यो घृतेन । तस्य व्रतꣳ रक्षतं पात-
मꣳहसः ॥ ९ ॥

विशे जनाय महि शर्म्म यच्छतं । अग्नीषोमाय आहु-
तिं । योवां दशाद्धविष्कृतिं । सप्रजया सुवीर्य्यं । विश्व-
मायुर्व्यश्नवत् । अग्नीषोमा चेति तद्वीर्य्यं वां । यदमुष्णी-
तमवसं पणिं गोः । अवातिरतं प्रथयस्य शेषः । अवि-
न्दतं ज्योतिरेकं बहुभ्यः । अग्नीषोमाविमꣳसुमेऽग्नी-
षोमा हविषः प्रस्थितस्य ॥ १० ॥

जभार द्यौरग्नेरुपस्थ उपक्ष्यन्तो बद्धधानो यादमानः समुद्रेꣳह्रसः प्रस्थितस्य ॥ अनु० ७ ॥

अष्टमोऽनुवाकः ।

अहमस्मि प्रथमजा ऋतस्य । पूर्वं देवेभ्यो अमृतस्य नाभिः । यो मा ददाति स इदेवमावाः । अहमन्नमन्नमदन्तमद्मि । पूर्वमग्नेरपि दहत्यन्नं । यत्तौ हासाते अहमुत्तरेषु । व्यात्तमस्य पशवः सुजम्भं । पश्यन्ति धीराः प्रचरन्ति पाकाः । जहाम्यन्यं न जहाम्यन्यं । अहमन्नं वशमिच्चरामि ॥ १ ॥

समानमर्थं पर्य्येमि भुञ्जत् । को मामन्नं मनुष्यो दयेत । पराके अन्नं निहितं लोक एतत् । विश्वैर्देवैः पितृभिर्गुप्तमन्नं । यदद्यते लुप्यते यत्परोप्यते । शततमी सा तनूर्मे बभूव । महान्तौ चरू सकृद्दुग्धेन पप्रौ । दिवञ्च पृश्नि पृथिवीञ्च साकं । तत् संपिबन्तो न मिनन्ति वेधसः । नैतद्भूयो भवति नो कनीयः ॥ २ ॥

अन्नं प्राणमन्नमपानमाहुः । अन्नं मृत्युं तमु जीवातुमाहुः । अन्नं ब्रह्माणो जरसं वदन्ति । अन्नमाहुः प्रजननं प्रजानां । मोघमन्नं विन्दते अप्रचेताः । सत्यं

ब्रवीमि वधइत्सतस्य। नार्यमणं पुष्यति नो सखायं। केवलाघो भवति केवलादी। अहं मेघस्तनयन् वर्षन्नस्मि। मामदन्त्यहमद्म्यन्यान॥ ३॥

अहꣳ सदमृतो भवामि। मदादित्या अधि सर्व्वे तपन्ति। देवीं वाचमजनयन्त यद्वाग्वदन्ती। अनन्तामन्तादधिनिर्म्मितां महीं। यस्यां देवा अदधुर्भोजनानि। एकाक्षरा द्विपदाꣳ षट्पदाश्च। वाचं देवा उपजीवन्ति विश्वे। वाचं देवा उपजीवन्ति विश्वे। वाचं गन्धर्वाः पशवो मनुष्याः। वाचीमा विश्वा भुवनान्यर्पिता॥ ४॥

सा नो हवं जुषतामिन्द्रपत्नी। वागक्षरं प्रथमजा ऋतस्य। वेदानां मातामृतस्य नाभिः। सा नो जुषाणोपयज्ञमागात्। अवन्ती देवी सुहवा मे अस्तु। यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छन्देवास्तपसा श्रमेण। तां देवीं वाचꣳ हविषा यजामहे। सा नो दधातु सुकृतस्य लोके। चत्वारि वाक्परिमिता पदानि॥ ५॥

तानि विदुर्ब्राह्मणा य मनीषिणः। गुहा त्रीणि निहिता नेऽङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति। श्रद्धयाग्निः समिध्यते। श्रद्धया विन्दते हविः। श्रद्धां भगस्य

मूर्द्धनि। वचसा वेदयामसि। प्रियꣳ श्रद्धे ददतः। प्रियꣳ श्रद्धे दिदासतः। प्रियं भोजेषु यज्वसु॥ ६॥

इदं मउदितं कृधि। यथा देवाअसुरेषु। श्रद्धामुग्रेषु चक्रिरे। एवं भोजेषु यज्वसु। अस्माकमुदितं कृधि। श्रद्धां देवा यजमानाः। वायुगोपा उपासते। श्रद्धाꣳ हृदय्ययाकूत्या। श्रद्धया हूयते हविः। श्रद्धां प्रातर्हवामहे॥ ७॥

श्रद्धां मध्यन्दिनं परि। श्रद्धाꣳ सूर्यस्य निम्रुचि। श्रद्धे श्रद्धापयेह मा। श्रद्धा देवानधिवस्ते। श्रद्धा विश्वमिदं जगत्। श्रद्धां कामस्य मातरं। हविषा वर्द्धयामसि। ब्रह्मजज्ञानं प्रथमं पुरस्तात्। विसीमतः सुरुचो वेनआवः। सबुध्निया उपमा अस्यविष्ठाः॥ ८॥

सतश्च योनिमसतश्च विवः। पिता विराजामृषभो रयीणां। अन्तरिक्षं विश्वरूपआविवेश। तमर्कैरभ्यर्चन्ति वत्सं। ब्रह्मसन्तं ब्रह्मणा वर्द्धयन्तः। ब्रह्मदेवानजनयत्। ब्रह्म विश्वमिदं जगत्। ब्रह्मणः क्षत्रं निर्म्मितं। ब्रह्म ब्राह्मणआत्मना। अन्तरस्मिन्निमे लोकाः॥ ॥ ९॥

अन्तर्विश्वमिदं जगत्। ब्रह्मैव भूतानां ज्येष्ठं। तेन

कोऽर्हति स्यर्द्धितुं । ब्रह्मन्देवास्त्रयस्त्रिꣳशत् । ब्रह्मन्निद्र-प्रजापती । ब्रह्मन् ह विश्वा भूतानि । नावीवान्तः समाहिता । चतस्र आशाः प्रचरन्त्वग्नयः । इमं नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरꣳ सुवीरं ॥ १० ॥

ब्रह्म समिद्भवत्याहुतीनां । आ गावो अग्मन्नुत भद्रमक्रन् । सीदन्तु गोष्ठे रणयन्त्वस्मे । प्रजावतीः पुरुरूपा इह स्युः । इन्द्राय पूर्वीरुषसो दुहानाः । इन्द्रो यज्वने पृणते च शिक्षति । उपेद्ददाति न स्वं मुषायति । भूयो भूयो रयिमिदस्य वर्द्धयन् । अभिन्ने खिल्ले निदधाति देवयुं । न तानशन्ति न ताअर्वा ॥ ११ ॥

गावो भगो गाव इन्द्रो मे अच्छात् । गावः सोमस्य प्रथमस्य भक्षः । इमा या गावः स जनास इन्द्रः । इच्छामीद्धृदा मनसा चिदिन्द्रं । यूयं गावो मेदयथा कृशं चित् । अश्लीलं चित् कृणुथा सुप्रतीकं । भद्रं गृहं कृणुथ भद्रवाचः । बृहद्वो वय उच्यते सभासु । प्रजावतीः सूयवसꣳ रुशन्तीः । शुद्धा अपः सुप्रपाणे पिबन्तीः ॥ मा वस्तेन ईशत माघशꣳसः । परि वो हेती रुद्रस्य वृज्यात् । उपेदमुपपर्चनं । आसु गोषूपपृच्यतां । उपर्षभस्य रेतसि । उपेन्द्र तव वीर्ये ॥ १२ ॥

चरामि कनीयोन्यानपिता पदानि यज्वसु हवामहे विषालोकाः सुवीरमवी पिबन्तीः षट् च॥ अनु०८॥

नवमोऽनुवाकः।

ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्। तेजो वसुमद्राजतो दिवि। सामात्मा नाचरतः सामचारिणा। ययोर्व्रतं न ममे जातु देवयोः। उभावन्तौ परियातअर्म्या। दिवो न रश्मीं स्तनुतो व्यर्णवे। उभा भुवन्ती भुवना कविक्रतू। सूर्यानचन्द्राचरतो हतामती। पतीद्युमद्विश्वविदा उभा दिवः। सूर्या उभा चन्द्रमसा विचक्षणा॥ १॥

विश्ववारा वरिवो भा वरेण्या। तानोऽवतं मतिमन्ता महिव्रता। विश्ववपरी प्रतरणातरन्ता। सुवर्विदा दृशये भूरिरश्मी। सूर्या हि चन्द्रा वसुत्वेष दर्शता। मनस्विना भानुचरतो नु सं दिवं। अस्य श्रवो नद्यः सप्तबिभ्रति। द्यावा क्षामा पृथिवी दर्शतं वपुः। अस्मे सूर्या चन्द्रमसाभिचक्षे। श्रद्धे कमिन्द्रचरतो विचर्तुरं॥ २॥

पूर्व्वापरं चरतो माययैतौ। शिशू क्रीडन्तौ परियातोअध्वरं। विश्वान्यन्यो भुवनाभिचष्टे। ऋतूनन्यो

विदधज्जायते पुनः। हिरण्यवर्णाः शुचयः पावका यासाᳪं राजा। यासां देवाः शिवेन मा चक्षुषा पश्यत। आपो भद्राआदित्पश्यामि। नासदासीन्नो सदासीत् तदानीं। नासीद्रजो नोव्योमा परोयत्। किमावरीवः कुहकस्य शर्म्मन् ॥ ३ ॥

अम्भः किमासीद्गहनं गभीरं। न मृत्युरमृतं तर्हि न। रात्रिया अह्नआसीत् प्रकेतः। आनीदवातᳪं स्वधया तदेकं। तस्माद्धान्यं न परः किञ्च नास। तमआसीत् तमसा गूढमग्रे प्रकेतं। सलिलᳪं सर्व्वमा इदं। तुच्छेनाभ्वपिहितं यदासीत्। तमसस्तन्महिनाजायतैकं। कामस्तदग्रे समवर्त्तताधि ॥ ४ ॥

मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविदन्। हृदि प्रतीष्या कवयो मनीषा। तिरश्चीनो विततो रश्मिरेषां। अधस्विदासी३दुपरि स्वदासी३त्। रेतोधा आसन्महिमान आसन्। स्वधा अवस्तात् प्रयतिः परस्तात्। कोअद्धा वेद कइह प्रवोचत्। कुतआजाता कुतइयं विसृष्टिः। अर्वाग्देवाअस्य विसर्जनाय ॥ ५ ॥

अथाको वेदयत आ बभूव। इयं विसृष्टिर्यत आ

बभूव। यदि वा दधे यदि वा न। योऽस्याध्यक्षः परमे व्योमन्। सो अङ्ग वेद यदि वा न वेद। किꣳस्विद्वनं क उ स वृक्षआसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तत्। यदध्यतिष्ठद्भुवनानि धारयन्। ब्रह्मवनं ब्रह्म सवृक्षआसीत्॥ ६॥

यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्। प्रातरग्निं प्रातरिन्द्रꣳ हवामहे। प्रातर्मित्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिं। प्रातः सोममुत रुद्रꣳ हुवेम। प्रातर्जितं भगमुग्रꣳ हुवेम। वयं पुत्रमदितेर्यो विधर्त्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित्॥ ॥ ७॥

राजा चिद्यं भगं भक्षीत्याह। भग प्रणेतर्भग सत्यराधः। भगे माधियमुदवददन्नः। भगप्राणो जनय गोभिरश्वैः। भग प्रन्टभिर्न्टवन्तः स्याम। उतेदानीं भगवन्तः स्याम। उतप्रपित्व उत मध्ये अह्नां। उतोदितामघवन्त्सूर्यस्य। वयं देवानाꣳ सुमतौ स्याम। भगएव भगवाꣳअस्तु देवाः॥ ८॥

तेन वयं भगवन्तः स्याम। तं त्वा भग सर्व्वइज्जो

ह्वयामि । स नो भग पुरएता भवेह । समध्वरायोषसो नमन्त । दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नः । रथमिवाश्वा वाजिनआवहन्तु । अश्वावतीर्गोमतीर्न उषासः । वीरवतीः सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनाः ॥ यूयं पातस्वस्तिभिः सदानः ॥ ६ ॥

विचक्षणा विचर्त्तरꣳ शर्मन्नधिविसर्जनाय ब्रह्मवनं ब्रह्म सवृक्षआसीत्तुरश्चिद्देवाः प्रपीना एकञ्च ॥ अनु० ६ ॥

पीवोन्नन्ते शुक्रासः सोमो धेनुमिन्द्रस्तरस्वाञ्छुचिमा देवो यातु सूर्या देवीमहमस्मि ता सूर्याचन्द्रमसा नव ॥ ६ ॥

पीवोन्नामग्ने त्वं पारयानाधृष्यः शुचिन्नु स्तोमं विश्रयमाणो दिवोरुक्मोन्नं प्राणं ता सूर्याचन्द्रमसा नवसप्ततिः ॥ ७६ ॥ हरिः ॐ ॥

इति द्वितीयकाण्डः ॥

# माधवीये वेदार्थप्रकाशे
## तैत्तिरीय-ब्राह्मणभाष्यम्।



द्वितीयकाण्डे प्रथमप्रपाठके

प्रथमोऽनुवाकः।

श्रीगणेशाय नमः।

हरिः ॐ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥
आधानं वाजपेयश्च राजसूयस्तथापरे।
कर्म्मशेषाः केचिदत्र काण्डे प्रथम ईरिताः॥ २॥
अग्निहोत्रं च होतार उपहोमाख्यमन्त्रकाः*।
सौत्रामणी: सवाः सूक्तं वक्ष्यन्तेऽस्मिन् द्वितीयके॥ ३॥
काण्डे प्रपाठका अष्टाविहाद्ये तु प्रपाठके।
अग्निहोत्र उपोद्घातोऽनुवाके प्रथमे भवेत्॥ ४॥

प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य तदर्थमर्थान्तरवर्णनमुपोद्घातः। इह चाग्निहोत्रं प्रतिपाद्यम्। तद्बुद्धौ सङ्गृह्य तत्प्रशंसा प्रथमं क्रियते। महाभागैः पितृभिरप्यस्मिन्नग्निहोत्रे भागधेयं प्रार्थितम्। किमु वक्तव्यमग्निहोत्रस्य माहात्म्यमित्येवं प्रशंसा। तदर्थमिमामाख्यायिकामाह। "अङ्गिरसो वै सत्रमासत। तेषां पृश्निर्घर्मधु-

* उपहोमाः समन्त्रकाः। इति वा पाठः।

गासीत्। सर्जीषेणाजीवत्। तेऽब्रुवन्। कस्मै नु सत्रमास्महे। येऽस्या ओषधीर्न जनयाम इति। ते दिवो वृष्टिमसृजन्त। यावन्तः स्तोका अवापद्यन्त। तावतीरोषधयोऽजायन्त"इति। अङ्गिराश्चतुर्थवेदप्रवर्त्तकाचार्य्यः। तस्य कुले समुत्पन्नाः सर्व्वेऽप्यङ्गिरसः। ते यदा सत्रमन्विच्छन् तदा तेषां पृश्निः काचित् श्वेता गौर्घर्मधुगासीत्। प्रवर्ग्यं हविर्घर्म्म तद्दोग्धीति घर्मधुक्। सा चारण्ये तृणमलब्ध्वा निष्पीडितरसस्य सोमस्य यदृजीषं तद्भक्षणेनाजीवत्। तदा कृपालवोऽङ्गिरसः परस्परमिदमब्रुवन्। ये वयमस्या गोर्भक्षणाय तृणविशेषानपि नोत्पादयामः, तादृशा असमर्था वयं कस्मै खलु प्रयोजनाय सत्रमनुतिष्ठामः। ऋद्धिकामैर्हि सत्रमनुष्ठेयम्। गोग्रासमपि सम्पादयितुमशक्तानामस्माकं का नामान्या समृद्धिर्भविष्यतीति ततः कारीर्य्यानुष्ठानेन तैर्वृष्टौ सम्पादितायां यावन्तो जलबिन्दवस्तावत्य ओषधय उत्पन्नाः।

अथाग्निहोत्रप्रशंसाप्रसङ्गेन पितृभ्यो लेपमार्जनं विधत्ते। "ता जाताः पितरो विषेणालिम्पन्[१] तासां जग्ध्वा रुप्यन्त्यैत्। तेऽब्रुवन्। क इदमित्थमकरिति। वयं भागधेयमिच्छमाना इति पितरोऽब्रुवन्। किं वो भागधेयमिति। अग्निहोत्र एव नोऽप्यस्त्वित्यब्रुवन्। तेभ्य एतद्भागधेयं प्रायच्छन्। यद्धुत्वा निमार्ष्टि। ततो वै त ओषधीरस्वदयन्" इति। या उत्पन्नाः ओषधयस्ता एता पितृभिर्विषेण लेपिताः। तासां मध्ये कियदपि तृणं भक्षयित्वा विषदोषेण पीडां प्राप्नुवन्ती सत्रमागात्। तां दृष्ट्वा तेऽङ्गिरसः को नामेत्थं कृतवानिति विचारितवन्तः। तदानीं

भागार्थिनो वयमिति पितृभिरुक्ते सति तदिच्छानुसारेणा-ग्निहोत्र एव तेषां भागं दत्तवन्तः। तेन लेपमार्जनेन भागेन तुष्टाः पितरः विषमपनीय ता ओषधीः स्वादूकृतवन्तः। यदे-तद्धोमानन्तरं भावि लेपमार्जनं तत्सूत्रकारेण स्पष्टमुक्तम्। "प्रा-चीनावीती स्वधा पितृभ्यः पितॄन् जिन्वेति दक्षिणेन वेदिभूम्यां लेपं निमृज्य" इति।

तदेतद्विषापनयनं लेपनं प्रशंसति। "य एवं वेद [२] स्वद-न्तेऽस्मा ओषधयः" इति।

अथैतद्धेनुप्रसङ्गाद् बुद्धिस्थं वत्सविषयं कञ्चिद्धर्मं सूचयति। "ते वत्समुपावासृजन्। इदं नोहव्यं प्रदापयेति। सोऽब्रवीद्वरं वृणै। दश मा रात्रीर्जातं न दोहन्। आसङ्गवं मात्रा सह चराणीति। तस्माद्वत्सं जातं दश रात्रीर्न दुहन्ति। आसङ्गवं मात्रा सह चरति। वारे वृतꣳ ह्यस्य। तस्माद्वत्सꣳ सꣳसृष्ट-धयꣳ रुद्रो घातुकः। अति हि सन्धाꣳ सयति" इति [३] हे वत्स नोऽस्मदर्थं स्तनपानपूर्व्वकं गां दोहयित्वा प्रवर्ग्यार्थमिदं हव्यं प्रदापयेत्येवं वदन्तस्तेऽङ्गिरसो वत्सं पाशात् प्रमुच्य गोसमीपे प्रेरितवन्तः। स च वत्सो वरं वृतवान्, जातं मां दृष्ट्वा दश-रात्रीर्भवन्तो गां न दुहन्तु, प्रतिदिनं दोहादूर्द्ध्वं सङ्गवकाल-पर्य्यन्तं मात्रा सह सञ्चराणीति। यस्मादिदं वत्सेन वरं वृतं तस्मात् श्रुतिस्मृत्यभिज्ञाः शिष्टा दशसु रात्रीषु गां न दुहन्ति। वत्सं सङ्गवपर्य्यन्तं मात्रा सह मोचयन्ति। यस्मात् सङ्गवपर्य्य-न्तमेव वत्सेन वरो वृतः, तस्मात् सङ्गवादूर्द्ध्वं अग्निहोत्र्या धेन्वा

सह संसृष्टः स्तनं पिबति यो वत्सस्तं वत्सं रुद्रः क्रूरोऽग्निर्हन्ति। अयं हि वत्सः सन्ध्यां सङ्गवपर्य्यन्तमित्येतादृशीं स्वकीयभाषां अतिलङ्घ्य स्तनं पिबति, तस्माद्रुद्रेण तस्य हननं युक्तम्। न ह्युत्तरकाले स्तने पीते सति रात्रावग्निहोत्रार्थं हविर्न सम्भवति। अत्रैतद्धर्म्मत्रयमवगम्यते दशसु रात्रिषु चीरं न ग्राह्यं, प्रतिदिनमासङ्गवं मात्रा सह वत्सो मोचनीयः। पश्चान्मातुः सकाशादपकर्त्तव्य इति॥

इति श्रीमाधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥ १॥

द्वितीयोऽनुवाकः।

प्रथमेऽनुवाकेऽग्निहोत्रस्योपोद्घात उक्तः, द्वितीयेऽग्निहोत्रं निरूप्यते। तत्रादौ तावत् स्वाहाकारमन्त्रस्योत्पत्तिं वक्तुं आख्यायिकामाह। "प्रजापतिरग्निमसृजत। तं प्रजा अन्वसृज्यन्त। तमभाग उपास्त। सोऽस्य प्रजाभिरपाक्रामत्। तमवरुरुत्समानोऽन्वैत्। तमवरुन्धन्नाशक्नोत्। स तपोऽतप्यत। सोऽग्निरुपारमत। तापिवैस्यप्रजापतिरिति *। स रराटादुदमृष्ट [२] तद्घृतमभवत्। तस्माद्यस्य दक्षिणतः केशा उन्मृष्टाः। तां ज्येष्ठलक्ष्मी प्राजापत्येत्याहुः। यद्रराटादुदमृष्ट। तस्माद्रराटे केशा न सन्ति। तदग्नौ प्रागृह्णात्। तद्व्यचिकित्सत्। जुहवानी३ मा हौषा३मिति। तद्विचिकित्साया जन्म" इति। यदा प्रजापतिना सृष्टमग्निमनु प्रजा अन्या असृज्यन्त, तदानीं सोऽग्निर्भागरहित एव तं प्रजा-

* तापी वै स प्रजापतिरिति। इति भाष्यसम्मतः पाठः।

पतिं कञ्चित्कालमुपास्य खिन्नः सन् प्रजाभिः सह तस्मात् प्रजापतेरपाक्रामत् । तमग्निमवरोद्धुमिच्छन् प्रजापतिः पृष्ठतो गत्वा पलायमानं तमवरोद्धुं नाशक्नोत् । अशक्तः स प्रजापतिः श्रमेण सन्तापं प्राप्तः । ततोऽग्निस्तं दृष्ट्वा स प्रजापतिस्तप्त इत्येवं वदन् पलायनादुपरतः । स च प्रजापतिः श्रमजन्यं स्वेदजलं स्वकीयललाटादुन्मृष्टवान । तच्च जलं घृतरूपेण प्रादुरभूत् । यस्मात् प्रजापतिः स्वकीयललाटस्य दक्षिणभागे स्थितं स्वेदजलमसकृत्नं मन्यमान उन्ममार्ज, तत्तस्मात्सोकेऽपि यस्य पुरुषस्य दक्षिणभागे केशा उन्मृष्टा इवोर्द्धाः पृष्ठतोऽवनता उत्पद्यन्ते, तस्य पुरुषस्य तां केशोत्पत्तिं प्रजापतिसम्बन्धिनो ज्येष्ठलक्ष्मीत्वेवमभिज्ञा आहुः । लक्ष्म्याः पूर्वमुत्पन्ना ज्येष्ठलक्ष्मीः, यां दारिद्र्यस्वामिनीं देवतामुद्दिश्य ज्येष्ठाव्रतमाचरन्ति तद्रूपत्वादेव तथाविधं केशलक्षणं दृष्ट्वा मातापितॄणां तत्फलं व्यवहरन्ति । यस्मादयं प्रजापतिर्ललाटादुन्मार्जनं चकार, तस्मात् कस्यापि ललाटे केशा न विद्यन्ते । तेन तदुत्पन्नं घृतं होतुं हस्ते गृहीत्वा स्वेदजलस्य पवित्रत्वसन्देहेन होमं कुर्य्यां न वेत्येवं "व्यचिकित्सत्" सन्देहं कृतवान् । विविधकेतनस्य ज्ञानस्येच्छा विचिकित्सा, कोटिद्वयात्मकः संशय इत्यर्थः । तस्याश्च विचिकित्सायास्तदा जन्म सम्पन्नम् ॥

एतद्वेदनं प्रशंसति ।"य एवं विद्वान् विचिकित्सति [२] वसीय एव चेतयते" इति । यः पुमानेवं प्रजापतेर्विचिकित्सोत्पत्तिं विद्वान् स्वयं शास्त्रार्थं विचारयति स पुमान् वसीय एव चेतयते वस्तुतत्त्वमेव निश्चिनोति ॥

इदानीं स्वाहाकारोत्पत्तिं दर्शयति। "तं वागभ्यवदज्जुहु-धीति। सोऽब्रवीत्। कस्त्वमसीति। स्वैव ते वागित्यब्रवीत्। सोऽजुहोत्स्वाहेति। तत्स्वाहाकारस्य जन्म" इति। तं होमविषये सन्दिहानं प्रजापतिं काचिददृश्या वाक् जुहुधीत्यब्रवीत्। ततः प्रजापतिना कस्त्वमिति पृष्टे सति, तव स्वकीया या वागस्ति सैवाहमस्मीत्यब्रवीत्। ततः प्रजापतिः स्वाहेत्युच्चारयन् अजुहोत्। स्वकीया वाक् जुहुधीत्याहेति अस्य मन्त्रस्यार्थः। तस्मात् पदद्वयं मिलित्वा स्वाहाकारं मन्त्रस्य स्वरूपं सम्पन्नम्॥

एतद्वेदनं प्रशंसन्ति। "य एवꣳ स्वाहाकारस्य जन्म वेद। करोति स्वाहाकारेण वीर्य्यम्" इति।

तमेतं मन्त्रं होमे विनियुङ्क्ते। "यस्यैवं विदुषः स्वाहाकारेण जुह्वति [३] भोगायैवास्य हुतं भवति" इति।

अथाग्निहोत्रशब्दार्थं निरूपयति। "तस्या आहुत्यै पुरुषमसृजत। द्वितीयमजुहोत्। सोऽश्वमसृजत। तृतीयमजुहोत्। स गामसृजत। चतुर्थमजुहोत्। सोऽविमसृजत। पञ्चममजुहोत्। सोऽजामसृजत [४] सोऽग्निरबिभेत्। आहुतीभिर्वै तमाप्नोतीति। स प्रजापतिं पुनः प्राविशत्। तं प्रजापतिरब्रवीत्। जायस्वेति। सोऽब्रवीत्। किं भागधेयमभिजनिष्य इति। तुभ्यमेवेदꣳ हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम् [५] तस्मादग्निहोत्रमुच्यते" इति। पुरा प्रजापतेस्तापं दृष्ट्वा पलायनादुपरतोऽग्निः प्रजास्वपक्रम्य गता एव, ततः प्रजापतिस्तस्मिन्नग्नौ पूर्व्वोक्तं घृतं स्वाहाकारेण यामाहुतिं प्रथम-

मजुहोत्। तदाहुतिसामर्थ्येन पुरुषमसृजत। तथा द्वितीया-द्याहुतिभिः अश्वादीनसृजत। ततः प्रजानां पुनरुत्पत्तेः स्वस्य प्रजापतित्वं सुस्थितम्। तदानीमग्निर्भीतोऽभूत्। तस्यायमभि-प्रायः। प्रजापतिः पुनः पुनराहुतीभिरेव मां प्राप्नोति न तु भागं प्रयच्छति। तास्वाहुतीर्देवा एव गृह्णन्ति। तस्मा-द्भागरहितः सेवितुं न शक्नोमीति विचार्य्य पूर्व्ववत् पलायन-मकृत्वा तस्मिन् प्रजापतावेव प्रविष्टः। स च प्रजायस्वेति पुनः पुन-रग्निमब्रवीत्। स चाग्निस्तदुदर एव स्थित्वा भागरहितोऽहं क्षु-धितः सेवितुं न शक्नोमि भागो मेऽपचितः। किं भागमभिलक्ष्या-हमुत्पत्स्य इत्युक्तम्। अग्निना उक्तः प्रजापतिरिदमग्निहोत्रगतं हविस्तुभ्यमेव हूयाता इति भागं दत्तवान्। ततोऽग्निहोत्रहविः-स्वरूपं भागधेयमभिलक्ष्याग्निरुत्पन्नः। तस्मादग्नये होत्रं होमो-ऽस्मिन् कर्म्मणीति बहुव्रीहिव्युत्पत्त्या अग्निहोत्रमिति कर्म्मनाम। अग्नये होत्रमिति तत्पुरुषव्युत्पत्त्या हविर्नाम॥

अथास्य हविषः कालभेदेन व्यवस्थां विधत्ते। "तद्धूयमा-नमादित्योऽब्रवीत्। मा होषीः। उभयोर्वै नावेतदिति। सो-ऽग्निरब्रवीत्। कथं नौ होष्यन्तीति। सायमेव तुभ्यं जुहवन्। प्रातर्मह्यमित्यब्रवीत्। तस्मादग्नये सायꣳ हूयते। सूर्याय प्रातः" इति [६] तद्धविरग्न्यर्थं प्रजापतिना हूयमानं दृष्ट्वा मा होषी-रित्येवमादित्यो निवारयामास। हेतुञ्चैवमवोचत्। योऽय-मग्निर्यश्चाहं तयोरुभयोरावयोरेतद्धविः, न केवलस्याग्नेः" इति। तदानीमुभयोर्भागव्यवस्था जाता। अग्निना पृष्टा या कालभेदेन

व्यवस्था तामुवाच। तस्मादग्नये सायं जुहुयात्, सूर्याय प्रातर्जुहुयात्। प्रातर्होमे द्वौ पक्षौ, उदितहोमोऽनुदितहोमश्चेति॥

तयोरुदितहोमपक्षमत्र विधत्ते। "आग्नेयी वै रात्रिः। ऐन्द्रमहः। यदनुदिते सूर्ये प्रातर्जुहुयात्। उभयमेवाग्नेयꣳ स्यात्। उदिते सूर्ये प्रातर्जुहोति। तथाग्नये सायꣳ हूयते। सूर्याय प्रातः" इति। रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी। इन्द्रशब्देन परमैश्वर्ययोगात् सूर्योऽत्र विवक्षितः। तद्योगादहः सौर्यम्। एवं सत्युदयात् प्राचीनः सर्वोऽपि कालो रात्र्यन्तःपातीति कृत्वा तत्र सूर्याय हुतमपि हविराग्नेयमेव स्यात्। ततः कालद्वयवर्त्तिनो हविष आग्नेयत्वात् सूर्यो हविर्हीनो भवेत्, तन्माभूदित्युदयादूर्द्ध्वं प्रातर्होमः कार्यः। तथा सति कालद्वये द्वयोर्देवतयोर्होमौ व्यवस्थितौ भवतः॥

कालद्वयहोमं प्रशंसति। "रात्रिं वा अनुप्रजाः प्रजायन्ते। अह्ना प्रतितिष्ठन्ति। यत्सायं जुहोति [७] प्रैव तेन जायते। उदिते सूर्ये प्रातर्जुहोति। प्रत्येव तेन तिष्ठति" इति। रात्रौ गर्भधारणात् रात्रिमनु प्रजाः उत्पद्यन्ते। अह्नि जीवनहेतूनां कृषिवाणिज्यादीनां प्रवृत्तेरह्ना प्रतिष्ठिता भवन्ति। तस्मात् कालद्वयहोमेन प्रजोत्पादनं प्रतिष्ठाञ्च प्राप्नोति॥

अथ प्रातःकाले मन्त्ररहितां द्वितीयामाहुतिं विधत्ते। "प्रजापतिरकामयत प्रजायेयेति। स एतदग्निहोत्रं मिथुनमपश्यत्। तदुदिते सूर्येऽजुहोत्। यजुषान्यत्। तूष्णीमन्यत्। ततो वै स प्राजायत। यस्यैवं विदुष उदिते सूर्येऽग्निहोत्रं जुह्वति [८]

प्रैव जायते। अथो यथा दिवा प्रजानन्नेति। तादृगेव तत्" इति।
प्रजोत्पत्तिसाधनसाकृतिद्वयोपेतत्वेन मिथुनरूपमग्निहोत्रमि-
त्येवं प्रजापतिर्निश्चित्य सूर्योदयादूर्द्धं मन्त्रेणैकं निर्मन्त्रमेकम-
परमित्याहुतिद्वयं हुत्वा प्रजा उत्पादयामास। तस्मादेवं वि-
दुषः समन्त्रका अमन्त्रकाश्चेत्याहुतिद्वयहोमेन प्रजोत्पत्तिर्भव-
ति। अपि चोदयादूर्द्धं होमे सति यथा लोके दिवा गच्छन्
पुरुषो मार्गविशेषं चक्षुषा जानन्नेव गच्छति तादृगेव तदुद-
यादूर्द्धमनुष्ठानम्। अत्र हि द्वौ पक्षौ। अग्निसूर्ययोरसंसृष्टहो-
म एकः पक्षः सोऽयं पूर्व्वमुक्तः॥

अथ संसृष्टहोमं विधत्ते। "अथो खल्वाहुः। यस्य वै द्वौ
पुण्यौ गृहे वसतः। यस्तयोरन्यꣳ राधयत्यन्यं न। उभौ वा
वसतावृच्छतीति। अग्निं वावादित्यः सायं प्रविशति। तस्मा-
दग्निर्दूरान्नक्तं ददृशे। उभे हि तेजसी सम्पद्येते। [९] उद्यन्तं
वावादित्यमग्निरनुसमारोहति। तस्माद्धूम एवाग्नेर्दिवा ददृशे।
यदग्नये सायं जुहुयात्। आ सूर्य्याय वृश्च्येत। यत् सूर्य्याय
प्रातर्जुहुयात्। आग्नये वृश्च्येत। देवताभ्यः समदं दध्यात्। अ-
ग्निर्ज्योतिः सूर्य्यः स्वाहेत्येव सायꣳ होतव्यम्। सूर्य्यो ज्योति-
र्ज्योतिरग्निः स्वाहेति प्रातः। तथोभाभ्याꣳ सायꣳ हूयते [१०]
उभाभ्यां प्रातः। न देवताभ्यः समदं दधाति" इति। अथो-
शब्दः पक्षान्तरोपसङ्क्रमार्थः। लोके यस्य गृहे द्वौ पुरुषौ पुण्या-
त्मानौ समानैश्वर्य्यौ समानविद्यौ परस्परस्नेहयुक्तौ निवसतः तस्य
गृहे तयोः पुण्यात्मनोर्मध्ये कश्चित् पुण्यात्मानं यः पूजयित्वान्यं

न पूजयति स पूजकस्तावुभौ पुण्यात्मानावुभावपि स्वच्छति हि-नस्तीत्यर्थः। पूजाराहित्यमेकस्य हिंसा इतरस्य तु सत्यामपि पूजायां स्निग्धस्य द्वितीयस्य तदभावेन मनः क्लिश्नाति। एव-मत्रापि परस्परस्निग्धयोरग्न्यादित्ययोर्मध्ये सायं प्रातर्वा कस्य-चिदेव होमे सति उभावपि क्लिश्नातः। परस्परस्नेहश्चैवमवगन्त-व्यम्। सायङ्कालादूर्द्ध्वं आदित्योऽग्निं प्रविशति। अत एव तेजो-द्वयमेलनात् रात्रौ दूरेऽप्यग्निर्दृश्यते। तथोद्यन्तमादित्यमग्नि-रनुकूलः समारोहति। तस्मादग्नितेजसः सूर्य्ये प्रविष्टत्वात् अहनि दूरे धूम एव दृश्यते न तु तेजः। एवं परस्परस्नेहे सति सायङ्काले यद्यग्न्यर्थमेव हुत्वा सूर्य्यार्थं न जुहुयात् तदानी-मयं सूर्य्याद्विच्छिद्येत। एवं प्रातरपि सूर्य्यार्थमेव हुत्वा वह्न्य-र्थमजुह्वन् पुमान् अग्नेर्विच्छिद्येत। अपि च देवतानां वह्न्या-दीनां सपरिवाराणां स कलहं सम्पादयेत्। अतस्तत्परिहाराय सायङ्कालेऽग्निना सह सूर्य्यं मिश्रयित्वा तादृशेन मन्त्रेण जुहु-यात्। मन्त्रस्य चायमर्थः। अग्निरूपं यज्ज्योतिः, सूर्य्यरूपञ्च यज्ज्योतिः, उभयविधं यत्तस्मा इदं हविरिति स्वकीया वा-गाह। यद्वा स्वाहाशब्दस्य निपातस्य दानार्थवाचित्वादिदं हवि-र्दत्तमिति। एवं प्रातःकालेऽपि सूर्य्येण सह अग्निं मिश्रयित्वा सूर्य्य इत्यादि मन्त्रेण जुहुयात्। तथा सति कालद्वयेऽपि पुण्या-त्मनोरुभयोर्होमात् कलहं न सम्पादयेत्॥

सायङ्कालीनमन्त्रेण पूर्व्वभागस्य तात्पर्य्यं दर्शयति। "अग्नि-र्ज्योतिरित्याह। अग्निर्वै रेतोधाः" इति। रेतसां गर्भाशये

स्थापकोऽग्निरतस्तद्भागपाठे न यजमानो रेतो धारयति। अ-
थोत्तरभागब्राह्मणमन्वेयम्। यदुक्तं बोधायनेन। "द्विरङ्गुल्या
प्राश्नाति प्रजा ज्योतिरिति" इति॥

तमिमं मन्त्रं प्रसङ्गादुद्दिश्य व्याचष्टे। "प्रजा ज्योतिरित्याह।
प्रजा एवास्मै प्रजनयति" इति। येयमुत्पादनीया प्रजा सा ज्योतिः-
स्वरूपोत्पद्यताम्। अनेन मन्त्रेण यजमानार्थं प्रजा उत्पादयति।
अथ वा सूर्यो ज्योतिः स्वाहेत्युत्तरभागस्यार्थतो निर्देशः प्रजा
ज्योतिरित्यनेन विवक्षितः। सूर्यात्मकं ज्योतिः प्रजा उत्पाद-
यतीति तस्यार्थः। अनेनोपलक्षिते मन्त्रभागे पठिते सति यज-
मानार्थं प्रजा उत्पादयति। एतदेव श्रुत्यभिप्रायं हृदि निधा-
यापस्तम्बः "प्रजा ज्योतिः" इत्येतं मन्त्रमुपेक्ष्य भक्षणे शाखान्त-
रमुदाजहार।

"पूषासीति लेपं प्राश्नाति" इति। प्रातःकालीनमन्त्रे पूर्वभा-
गस्य तात्पर्यं दर्शयति। "सूर्यो ज्योतिरित्याह। प्रजास्वेव प्रजातासु
रेतो दधाति" इति। पूर्वमन्त्रस्योत्तरभागे याः प्रजा उत्पादि-
तास्तासु प्रजासु पुनरुत्पादनार्थं सूर्यो ज्योतिरिति भागपाठेन
तेजः स्थापयति। ज्योतीरूपः सूर्यो रेतः स्थापयत्विति तस्यार्थः॥

उत्तरभागस्य तात्पर्यं दर्शयति। "ज्योतिरग्निः स्वाहेत्याह।
प्रजा एव प्रजाता अस्यां प्रतिष्ठापयति" [११] इति। भूयोऽग्नि-
रस्यां भूमावुत्पन्नाः प्रजा प्रतिष्ठापयत्विति मन्त्रार्थः। तेन तथैव
प्रतिष्ठापयति॥

कालद्वयेऽपि द्वितीयामाहुतिं विधत्ते। "तूष्णीमुत्तरामा-

हुतिं जुहोति । मिथुनत्वाय प्रजात्यै" इति । आहुत्योर्द्वित्वेन मिथुनहोमस्य मिथुनत्वं न तु प्रजात्यै प्रजार्थं भवति ॥

उदितानुदितरूपौ यौ द्वौ पक्षौ तयोरुदितहोमपक्षः पूर्वं विहितः । इदानीमनुदितहोमपक्षं विधत्ते । "यदनुदिते सूर्ये प्रातर्जुहुयात् । यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरन्ति । तादृगेव तत् । क्वाह ततस्तद्भवतीत्याहुः । यत्स न वेद । यस्मै तद्धरन्तीति । तस्माद्यदोषसं जुहोति । तदेव सम्प्रति । अथो यथा प्रार्थमोषसं परिवेवेष्टि । तादृगेव तत्"[१२] इति। सूर्योऽयमतिथिरूपेण उदयकाले समागच्छति । अतस्तदागमनात् प्रागेवार्घ्यपाद्यादिस्थानीयं आहुतिरूपं संस्कारसाधनं सम्पादनीयम्। तत् परित्यज्योदयादूर्द्धं होमे सति यथा लोके कश्चिन्मन्दः पुरुषोऽतिथौ प्रतिनिवृत्य गते सति पश्चादर्घ्यपाद्यादिकं सम्पादनीयं संस्कारसाधनं सम्पादयति तादृगेव तदनुष्ठानं भवति। तच्चायुक्तम्। यस्मात् अतिथये तत्संस्कारद्रव्यं सम्पादयति सोऽतिथिर्यस्मात् कारणान्न जानाति तस्मात् कारणात् संस्कारसाधनं द्रव्यं क्व खलु भवति न क्वाप्युपयुज्यत इत्येवं अभिज्ञा आहुः । यस्मादेवमुदयादूर्द्धं होमे दोषोऽस्ति तस्मादोषसमुषःकालसम्बन्धि हव्यं जुहोतीति यत्तदेव सम्प्रति सम्यगनुष्ठानम्। अपि च यथा लोके राजसेवको जनसमूहः उषःकाले राज्ञः शयनोत्थानात् पूर्वं औषसमुषःकाले सेवोचितं प्रार्थं प्रकृष्टेन प्रयोजनेनोपेतं पादप्रक्षालनार्थं जलपादुकादिकं पुरतः स्थापितं परिविष्य राजावसरं प्रतीक्षमाणस्ति-

इति तादृगेव तद्द्रयात् प्राचीममनुष्ठानं द्रष्टव्यम्। अथाग्निहोत्रशब्दः कर्म्मनामधेयं न तु देवताविधिपरमिति प्रथमाध्यायस्य चतुर्थपादे यन्मीमांसितं तदस्माभिराघारप्रतिपादके 'भुवनमसि' इत्यनुवाक एवोदाहृतम्। आघाराग्निहोत्रशब्दयोर्नामत्वस्यैकेनैवाधिकरणेन निर्णीतत्वात् अग्निहोत्रस्य मूलप्रकृतित्वमष्टमे चिन्तितम्। तदपि 'वायव्यꣳ श्वेतमालभेत' इत्यादीनां काम्यपशूनां विकृतित्वप्रतिपादनप्रसङ्गे उदाहृतम्। इष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वस्यैकेनैवाधिकरणेन निर्णीतत्वाद्वायव्यादिपशूनामग्नीषोमीयः पशुः प्रकृतिः। तस्य चावान्तरप्रकृतित्वेन मूलप्रकृतिमापेक्षत्वान्मूलविचारस्तत्र कृतः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः॥२॥

अथ तृतीयोऽनुवाकः।

द्वितीयानुवाकेऽग्निहोत्रं* निरूपितम्। तृतीयेऽधिश्रयणादिका हविःसंस्कारा उच्यन्ते। गार्हपत्याद्दुदीचोऽङ्गारान्निरूह्याग्न्यन्तान् गार्हपत्येन कृत्वोपक्रम्य तेष्वग्निहोत्रमधिश्रयति इति यत् सूत्रकारेणोक्तं तदिदं विधत्ते। "रुद्रो वा एषः। यदग्निः। पत्नी स्थाली। यन्मध्येऽग्नेरधिश्रयेत्। रुद्राय पत्नीमपि दध्यात्। प्रमायुका स्यात्। उदीचोऽङ्गारान्निरूह्याधिश्रयति। पत्निये गोपीथाय" इति। योऽयमग्निः स एष रुद्रः क्रूरो देवः। 'रुद्रो वै क्रूरः' इति श्रुत्यन्तरात्। येयं हविराधानभूता स्थाली सा

* द्वितीयेऽग्निहोत्रमिति वा पाठः।

पत्नीस्थानीयेति। एवं सत्यग्निमध्ये स्थाल्यामधिश्रितायां रुद्राय पत्नी समर्पिता स्यात्। ततः सा म्रीयेत, अतस्तत्परिहारायोत्तरदिग्वर्त्तिनोऽङ्गारान् पृथक्कृत्य तेषु स्थालीमधिश्रयेत्। तच्च पत्न्या रक्षणार्थं भवति ॥

अङ्गाराणां पृथक्करणे विशेषं विधत्ते। "व्यन्तान् करोति। तथा पत्न्यप्रमायुका भवति" [१] इति। गार्हपत्यायतनेन वियुक्तं स्थानं येषामङ्गाराणां ते व्यन्ताः। तथा सति रुद्रसंस्पर्शाभावात् पत्नी न म्रीयेत ॥

सन्तापाधिक्यात् पात्रस्योर्द्ध्वमुद्गतस्य क्षीरस्य वहिःपतनव्यावृत्तये जलेन प्रतिषेकं विधत्ते। "घर्म्मो वा एषोऽशान्तः। अहरहः प्रवृज्यते। यदग्निहोत्रम्। प्रतिषिञ्चेत्पशुकामस्य। शान्तमिव हि पशव्यम्" इति। अग्निहोत्रहविर्यदस्ति एषोऽशान्तो घर्म्मः। यथा घर्मशब्दवाच्यं प्रवर्ग्यहविरशान्तं एवमिदमप्यशान्तम्, प्रतिदिनं प्रकर्षेण तप्यमानत्वात्। अतस्तच्छान्त्यर्थमुद्गतस्य क्षीरस्य उपरि जलेन प्रतिषेकं पशुकामः कुर्यात्, यस्माच्छान्तमेव हविः पशुभ्यो हितं भवति ॥

अधिकारिविशेषेण प्रतिषेकं निषेधति। "न प्रतिषिञ्चेद्ब्रह्मवर्चसकामस्य। समिद्धमिव हि ब्रह्मवर्चसम्" इति। यस्माद् ब्रह्मवर्चसमुज्ज्वलं भासते, तस्मात् तत्कामी प्रतिषेकेन क्षीरोत्षेकं न शमयेत् ॥

तमिमं पक्षं दूषयित्वा प्रतिषेकस्य प्रतिप्रसवं विधत्ते। "अथो खलु। प्रतिषिच्यमेव। यत्प्रतिषिञ्चति [२] तत्पशव्यम्।

यज्जुहोति । तद्ब्रह्मवर्चसि । उभयमेवाकः" इति । अथोशब्दः पक्षान्तरार्थः, खलु आहुरिति विशेषः । प्रतिषेकेण पशव्यत्वं होमेन ब्रह्मवर्चसमित्युभयमपि करोत्येव । यदुक्तं सूत्रकारेण 'तृणेन ज्वलतावेक्षत' इति ॥

तदिदं विधत्ते । "प्रच्युतं वा एतदस्माल्लोकात् । अगतं देवलोकम् । यच्छृतꣳ हविरनभिघारितम् । अभिद्योतयति । अभ्येवैनद्धारयति । अथो देवत्रैवैनद्गमयति" [१] इति । शास्त्रीयश्रपणेन हविषोऽस्माल्लोकात्प्रच्युतिः । अनभिघारितत्वात् स्वर्गप्राप्त्यभावः । अतस्तं वारयितुं ज्वलता तृणेनाभिद्योतिते सति एतद्धविरभिघारितमेव भवति । अपि चैतद्धविर्देवेष्वेव गमयति ॥

विधत्ते । "पर्य्यग्निकरोति । रक्षसामपहत्यै" इति । ज्वलतस्तृणस्य परितः प्रदर्शनं पर्य्यग्निकरणम् । तेन रक्षांस्यपहन्यन्ते ॥

तस्यावृत्तिं विधत्ते । "त्रिः पर्य्यग्निकरोति । रक्षसामपहत्यै । त्रिः पर्य्यग्निकरोति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय" इति । तिस्र आवृत्तयो यस्य यज्ञस्य सोऽयं त्र्यावृत् । 'त्रिसत्या हि देवाः' इति श्रुत्यन्तरेण त्रिवारानुष्ठाने देवानां सत्यत्वबुद्ध्युदयात् त्रिरावृत्तो यज्ञः प्रशस्तः । अपि च त्रिरावृत्त्या दोषाभावस्य पर्य्यालोचितत्वाद्धविर्यज्ञयोग्यं भवति । यदुक्तं सूत्रकारेण । 'वर्त्म कुर्व्वन् प्रागुद्वासयत्युदक् प्रागुदग्वा' इति ॥

तत उदगुद्वासने पक्षं विधत्ते । "यत्प्राचीनमुद्वासयेत् । यजमानꣳ शुचार्पयेत् । यद्दक्षिणा । पितृदेवत्यꣳ स्यात् । यत्प-

त्यक् [४] पत्नीᳬ शुचार्पयेत्। उदीचीनमुद्वासयति। एषा वै देवमनुष्याणाᳬ शान्ता दिक्। तामेवैनदनूद्वासयति शान्त्यै" इति। प्राक्प्रतीच्योर्यजमानस्य पत्नीस्थानत्वात् तत्र हविरुद्वासने तयोस्तापप्राप्तिः। दक्षिणतः पितृधीनत्वात् तत उद्वासितं हविः पितृदेवत्यं भवेत्। देवमनुष्याणां चोपद्रवाभावेन शान्तेयमुत्तरा दिक्। अतस्तामनूद्वासितं हविः शान्त्यै भवति॥

विधत्ते। "वर्त्म करोति। यज्ञस्य सन्तत्यै" इति। पात्रस्य भूमावाकर्षणेन मनुष्यो भस्मना च लाञ्छिता भूमिर्वर्त्मवदेव करोति। उद्वासनकाले तथा कुर्य्यात्। तेन यज्ञः सन्ततो भवति। यदुक्तं सूत्रकारेण 'स्रुक्स्रुवमादाय प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्या" इति॥

तदिदं प्रतितपनं विधत्ते।"निष्टपति। उपैव तत् स्तृणाति" इति। तेन निःशेषतपनेन स्रुक्स्रुवयोरुपस्तरणं कृतं भवति॥

निष्टप्तायां स्रुचि चतुर्वारं हविःपूरणं स्रुवेण कुर्य्यादिति विधत्ते। "चतुरुन्नयति। चतुष्पादः पशवः [५] पशूनेवावरुन्धे" इति। चतुर्वारावृत्त्या चतुष्पादः पशवो भवन्ति॥

ग्रहणकाले तेषां पूरणं विधत्ते। "सर्व्वान् पूर्णानुन्नयति। सर्व्वे हि पुण्याराद्धाः" इति। स्रुवाणां परिपूर्त्त्या यजमानसम्बन्धिनः सर्व्वे पुरुषाः पुण्यात्मानो धनसमृद्धा भवन्ति॥

चतुर्णां पर्य्यायाणां मध्ये व्यापारान्तरेण व्यवधानं विधत्ते। "असंभिन्दन्नुन्नयति। प्रजाया अनूचीनत्वाय। अनूच्येवास्य प्रजार्धुका भवति" इति। एकं स्रुवमनु द्वितीयस्रुवोऽस्मिति प्रवर्त्तत

इत्येते चत्वारोऽग्नयः। तेन ज्येष्ठं पुत्रमनुद्वितीयः पुत्र इत्येवमनूचीनाः प्रजा भवन्ति। सा च द्रव्यसमृद्धिः सम्पद्यते। यदुक्तं सूत्रकारेण। "गार्हपत्ये हस्तं सम्प्रताप्य सम्मृशतीति"॥

तदिदं विधत्ते। "सम्मृशति व्यावृत्त्यै" इति। सम्मर्शनेन चतुरुन्नीतस्य द्रवद्रव्यार्थस्येतरस्मात् पात्रस्थाद्व्यावृत्तिर्भवति। सम्मर्शनात् पूर्वं गार्हपत्यसमीपे हविःस्थानं* शाखान्तरसिद्धं सूत्रकारेणोदाहृतम्। अपरेण गार्हपत्यमन्वाहार्यपचनदक्षिणतोऽतितरां वासादयित्वा गार्हपत्ये हस्तं प्रताप्य सम्मृशतीति। तस्मात् सादनादुत्तरकालभाविसादनमुपसादनम्। तच्चोपसादनमादौ गार्हपत्यसमीपे कृत्वा पश्चादाहवनीयसमीपमुपसाद्यानन्तरं होतव्यमिति शाखान्तराध्यायिनां मतम्॥

तत्र गार्हपत्यसमीपे यदुपसादनं तदेतं निषेधति। "नाहोष्यन्नुपसादयेत्। यदहोष्यन्नुपसादयेत्। यथान्यस्मा उपनिधाय [६]॥ अन्यस्मै प्रयच्छति। तादृगेव तत्। आवृश्च्येत। यदेव गार्हपत्येऽधिश्रयति। तेन गार्हपत्यं प्रीणाति" इति। इदं हविराहवनीय एव होष्यति न तु गार्हपत्ये। तस्मादहोष्यन् गार्हपत्यसमीपे उपसादनं कुर्यात्। तत्करणञ्च गार्हपत्यार्थं समीपे निधाय तस्मिन्नकृत्वा पश्चादाहवनीये होमे सति यथालोके देवदत्तार्थं पात्रेषु परिवेषणं कृत्वा यज्ञदत्ताय प्रयच्छति तादृगेव तत् भवेत्। ततो होमाभावेन रुष्टाद्गार्हपत्यादयं विच्छिद्येत। तस्मान्न तत्रोपसादनं

---

* हविःसाधनमिति A चिह्नितपुस्तकपाठः।

कर्त्तव्यम्। गार्हपत्ये त्वधिश्रयणेनैव प्रीता भवति। यदुक्तं सूत्रकारेण। "होष्यन्नप उपस्पृश्य पालाशीं समिधमादधाति"।

तदेतद्विधत्ते। "अग्निरबिभेत्। आहुतयोमात्येष्यन्तीति। स एताꣳ समिधमपश्यत्। तामाधत्त। ततो वा अग्नावाहुतयोऽध्रियन्त [७]॥ यदेनꣳ समयच्छत्। तत्समिधः समित्त्वम्। समिधमादधाति। समेवैनं यच्छति। आहुतीनां धृत्यै। अथो अग्निहोत्रमेवेध्मवत्करोति। आहुतीनां प्रतिष्ठित्यै" इति। आहुत्यर्थं हविषि समीपमानीते सति सोऽग्निरबिभेत्। तस्यायमभिप्रायः। हूयमानास्त्वाहुतयो मामतिलङ्घ्यान्यत्र गमिष्यन्तीति। अतस्तन्निवारणसमर्थां काञ्चित् समिधं निश्चित्य स्वस्मिन्नाधत्त तया समिधया नियमिता आहुतयो अग्नावेवावस्थिता यस्मात्कारणादाहुतयो यथातिलङ्घ्य नान्यत्र गच्छन्तीति। तथैनमग्निं समर्थं कृत्वा समिदियं नियतवती तस्मात्समयच्छत् सङ्गच्छदिति व्युत्पत्त्या समिन्नाम सम्पन्नम्। अतः समिधमादध्यात्तेनाहुतिधारणाय सामर्थ्यं दत्वा अग्निं नियच्छति। अपिच दर्शपूर्णमासयोरिवाग्निहोत्रे पूर्व्वमिध्मो नास्ति। इदानीं तदग्निहोत्रमिध्मवद्युक्तं करोति। तेनाहुतयः प्रतिष्ठिता भवन्ति। अत्र शाखान्तरमाश्रित्य समित्सङ्ख्याविकल्पं सूत्रकार उदाजहार। "एका द्वे तिस्रो वेति"।

तत्राक्षेपसमाधानाभ्यां स्वयमेकलपक्षं दृढयति। "ब्रह्मवादिनो वदन्ति। यदेकाꣳ समिधमाधाय द्वे आहुती जुहोति। अथ कस्याꣳ समिधि द्वितीयामाहुतिं जुहोतीति [८] यद्वे

समिधावादध्यात्। भ्रातृव्यमस्मै जनयेत्। एकाᳫं समिधमाधाय। यजुषान्यामाहुतिं जुहोति। उभे एव समिद्वती आहुती जुहोति। नास्मै भ्रातृव्यं जनयति" इति। अत्रैतच्चिन्त्यते। द्वितीयसमिधाधातव्या न वेति। नाद्यः। द्वितीयस्याः प्रतियोगिरूपत्वेन भ्रातृव्योत्पत्तिप्रसङ्गात्। न द्वितीयः। द्वितीयाहुतेः समिधभाववत्समन्त्रवादिति ब्रह्मवादिनामाक्षेपः। तत्रैतदुत्तरम्। एकस्या एव समिध आधानं नास्ति भ्रातृव्योत्पत्तिः। प्रथमाहुतिं मन्त्रेण परितोऽस्य द्वितीयाहुतेः समिधा परितोषादुभयोः समिधाऽदाधारत्वं सिध्यतीति समिदाधानादूर्द्ध्वं तस्य प्रदीप्तिपर्यन्तं प्रतीक्ष्य॥

तस्यां होमं विधत्ते। "आदीप्तायां जुहोति। समिद्धमिव हि ब्रह्मवर्चसम। अथो यथातिथिं ज्योतिष्कृत्वा परिवेविष्टि। तादृगेव तत्" इति॥ आहितायां समिधि सर्वतोदीप्तायां सत्यां पश्चाज्जुहुयात्। तस्यां ब्रह्मवर्चसमुज्ज्वलमिव दृश्यते। तस्मात्तदा होमो युक्तः। अपिच यथा लोके समागतमतिथिं भोक्तुमुपवेश्य समीपे दीपं कृत्वा पश्चात् परिवेषणं करोति तादृगेवैतत्॥

आदीप्तायामनुष्ठानं पूर्व्वोक्तामुन्नयनसङ्ख्यामाहुतिसङ्ख्याञ्च प्रशंसति। "चतुरुन्नयति। द्विर्जुहोति। तस्माद् द्विपाच्चतुष्पादमत्ति। अथो द्विपद्येव चतुष्पदः प्रतिष्ठापयति" [८] इति। येयं चतुःसङ्ख्या या च द्विसङ्ख्या तयोः परस्परोपकार्य्योपकारित्वादेकस्मिन्ननुष्ठाने सहावस्थानं युक्तम्। यस्मादेवं तस्माल्लोकेऽपि द्विपान्मनुष्यश्चतुष्पदां गवां सम्बन्धि क्षीरादिकं उप-

भुङ्क्ते। तत्र चतुष्पदामुपकारकत्वम्। अपिच द्विपद्येव मनुष्ये चतुष्पदः प्रतिष्ठापयति। मनुष्यो हि शालानिर्माणादिना गवादिपशून् पालयति। तत्र द्विपदामुपकारकत्वम्॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ३ ॥

अथ चतुर्थोऽनुवाकः।

तृतीये हविष उपयोक्ष्यमाणस्य संस्कारोऽभिहितः। चतुर्थे तूपसंस्कारोऽभिधीयते। तत्रादौ तावदन्वयव्यतिरेकाभ्यामाहुतिप्रकारं विवक्षितत्वात् प्रथममन्वयं दर्शयति। "उत्तरावतीं वै देवा आहुतिमजुहवुः। अवाचीमसुराः। ततो देवा अभवन्। परासुराः। यं कामयेत वसीयान्स्यादिति। कनीयस्तस्य पूर्व्वꣳ हुत्वा। उत्तरं भूयो जुहुयात्। एषा वा उत्तरावत्याहुतिः। तां देवा अजुहवुः। ततस्तेऽभवन् [१]॥ यस्यैवं जुह्वति। भवत्येव" इति। प्रथमाहुतावल्पमेव द्रव्यं हुत्वा द्वितीयस्यामधिकहोमे सति उत्तरमधिकस्यामाहुताविति उत्तराहुतिः। तादृशहोमेन देवा धनिका अभवन् एवमन्योऽपि धनिको भवति॥

अथ व्यतिरेकं दर्शयति। "यं कामयेत पापीयान्स्यादिति। भूयस्तस्य पूर्व्वꣳ हुत्वा। उत्तरं कनीयो जुहुयात्। एषा वा अवाच्याहुतिः। तामसुरा अजुहवुः। ततस्ते पराभवन्। यस्यैवं जुह्वति। परैव भवति [२]" इति॥ प्रथमाहुतावधिकं

द्रव्यं हुत्वा द्वितीयायामाहुतावन्यद्रव्यहोमे सति प्रथमं चीर्णं यथा भवति तथा अस्युति प्रवर्त्तत इत्यर्थः। तादृशो होताऽसुरवदन्योऽपि पराभवति।

प्रथमाहुतेरूर्द्धं स्रुचोऽधस्तादुपसादनं विधत्ते। "हुत्वोपसादयत्यजामित्वाय। अथो व्यावृत्त्यै" इति। नैरन्तर्येणाहुतिद्वये सति आलस्यं भवेत्। मध्ये स्रुचमुपसादनं तत्परिहृतं भवति। अपि च नैरन्तर्येण होमे सति आहुतिद्वयस्य मध्ये व्यावृत्तेरप्रतीतेरेकैकाहुतिः स्यात्। अत उपसादनमिदं व्यावृत्त्यै भवति॥

उपसादनादूर्द्ध्वमाहवनीयसमीपे एव स्थितस्य पश्चिमाभिमुखं तेन* गार्हपत्य-प्रतीक्षणं विधत्ते। "गार्हपत्यं प्रतीक्षते। अनन्तुध्यायिनमेवैनं करोति" इति। स्वमेवां परित्यज्याहवनीयमेवायां कुपिता गार्हपत्य एनं यजमानं हिंसितुं अनुध्यायति। तत्र प्रतीक्षणेन सेवितत्वात् ध्यानरहितं करोति॥

द्वितीयाहुतेर्होमदेशं विधत्ते। "अग्निहोत्रस्य वै स्थाणुरस्ति। तं य ऋच्छेत्। यज्ञस्थाणुमृच्छेत्। एष वा अग्निहोत्रस्य स्थाणुः। यत् पूर्व्वाहुतिः। तां यदुत्तरयाभिजुहुयात् [३]॥ यज्ञस्थाणुमृच्छेत्। अतिहाय पूर्व्वामाहुतिं जुहोति। यज्ञस्थाणुमेव परिवृणक्ति। अथो भ्रातृव्यमेवाप्यातिक्रामति" इति। स्थाणुस्तम्भः। यथा गृहस्य स्तम्भ आधारभूतः। एवमग्निहोत्रस्यापि प्रथमाहुतिर्मूलस्तम्भः। यदेतां प्रथमाहुतिमभिलक्ष्य तस्या उपरि उत्तरयाऽऽहुत्यामुष्टानं निष्पादयेत्।

---

* पश्चिमाभिमुखत्वेनेति A चिह्नितपुस्तकपाठः।

तदानीं यज्ञसम्बन्धिनं मूलस्तम्भमृच्छेत्। चलेत् प्राप्नुयात्। अभिघातेन पातयेदित्यर्थः। अतस्तदाहुतिप्रदेशं परित्यज्य पूर्व्वभागे जुहुयात्। अतएव सूत्रकारः। ह्यङ्गुलेर्मूलात् समिधमभिजुहोतीत्युक्त्वाऽनन्तरमिदमाह। भूर्भुवः सुवरित्युत्तरामाहुतिं पूर्व्वार्द्धे समिधि जुहोति। तूष्णीं वेति। एवं सति यज्ञस्तम्भभूता पूर्व्वाहुतिर्व्विवर्ज्जिता भवति। अपि चेयमाहुतिर्भ्रातृव्यमेव प्राप्यातिक्रामति विनाशयतीत्यर्थः। यदुक्तं सूत्रकारेण। "इषेत्वेति स्रुङ्मुखादवाचीनं सायं लेपमवमार्ष्टुर्ज्जेत्वेति ऊर्द्ध्वं प्रातरिति"॥

तदिदं विधत्ते।"अर्वाचीनꣳ सायमुपमार्ष्टि। रेत एव तद्दधाति। ऊर्द्ध्वं प्रातः। प्रजनयत्येव तत्" इति। यदुक्तं स्रुवलक्षणे*। मुखमष्टाङ्गुलं प्रोक्तं बिलन्तु चतुरङ्गुलमिति। तस्य मुखस्याग्रमारभ्य बिलपर्य्यन्तं होमादूर्द्ध्वं लेपमवाचीनं सायङ्काले मृज्यात्। तेन बिलमध्ये लेपापनयनात् यजमानो रेतो धारयति। प्रातःकाले तु बिलमारभ्य मुखाग्रपर्य्यन्तमूर्द्ध्वलेपमुपमृज्यात्। तेन प्रजामुत्पादयति॥

अथ हविःशेषप्राशनं विधत्ते। "ब्रह्मवादिनो वदन्ति। चतुरुन्नयति [४]॥ द्विर्जुहोति। अथ क्व द्वे आहुती भवत इति। अग्नौ वैश्वानर इति ब्रूयात्। एष वा अग्निर्वैश्वानरः। यद्ब्राह्मणः। हुत्वा द्विः प्राश्नाति। अग्नावेव वैश्वानरे द्वे आहुती जुहोति" इति। पूर्वं स्रुवेण चतुर्वारं स्रुचि द्रव्यपूरणं

* शुल्व लक्षणे इति A चिह्नितपुस्तकपाठः।

हुतम्। तच्च आहुतिचतुष्टयाय पर्य्याप्तम्। तत्र द्वे आहुती आहवनीये समाहितायां समिधि हुते। इतः परं द्वयोराहुत्योः कुत्र होम इति ब्रह्मवादिनां प्रश्नः। विप्रेषाम्नराणां सम्बन्धी योऽग्निस्तस्मिन्नित्युत्तरम्। ब्राह्मणस्य वैश्वानरोऽग्निः हवि-र्दातुरग्निवत्फलप्रदत्वात्। अतो वह्नौ द्वे आहुती हुत्वा यज-मानो द्विः प्राश्नीयात्। यदान्यो जुहोति तदान्यः प्राश्नीयात्। एवं सति ब्राह्मणरूपे वैश्वानराग्नावाहुतिद्वयं भवति॥

होमसार्जनप्राशनमन्त्रां प्रशंसति। "द्विर्जुहोति। द्विर्निमा-र्ष्टि। द्विः प्राश्नाति [५]॥ षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति" इति॥

अथ प्रश्नोत्तराभ्यां सर्वदेवतासम्बन्धित्वेनाग्निहोत्रं प्रशंसति। "ब्रह्मवादिनो वदन्ति। किन्देवत्यमग्निहोत्रमिति। वैश्वदेव-मिति ब्रूयात्। यद्यजुषा जुहोति। तदैन्द्राग्नम्। यत् तूष्णीम्। तत्प्राजापत्यम् [६]॥ यन्निमार्ष्टि। तदोषधीनाम्। यद्द्वितीयम्। तत्पितृणाम्। यत्प्राश्नाति। तद्गर्भाणाम्। तस्माद्गर्भा अनश्नन्तो वर्द्धन्ते। यदाचामति। तन्मनुष्याणाम्" इति। यद्यपि होम्यं द्रव्यमग्निसूर्ययोर्भागः तथाप्यग्निहोत्रप्रयोगेण कासां देवतानां प्रीतिरिति ब्रह्मवादिनां प्रश्नः। विश्वेषां सर्व्वेषां देवानां प्रीतिरित्युत्तरम्। तत्कथमिति तदुच्यते। समन्त्रकहोमेनैन्द्राग्न्योः प्रीतिः। इन्द्रशब्देन सूर्य्यो विवक्षित इत्युक्तम्। तूष्णींहोमेन प्रजापतेः प्रीतिः। अन्यत्र प्रजापते-राघारे तूष्णींहोमदर्शनात् निर्मार्जनं द्विविधम्। तच्च स्रुच-

कारेणोदाहृतम् । "ओषधीभ्यस्त्वौषधीर्जिन्वति । वर्हिषि लेपं निमृज्येति । प्राचीनावितो स्वधा पितृभ्यः पितॄन् जिन्वेति । दक्षिणेन वेदिभूम्यां लेपं निमृज्येति च" । तेनाभयेनौषधीनां पितॄणाञ्च प्रीतिः । ब्राह्मणप्राशनेन गर्भाणां तृप्तिः यस्मादेवं तस्माद्गर्भाश्च तत्रभोजनमन्तरेणैव वर्द्धन्ते । प्राशनव्यतिरिक्तं यच्छेषलक्षणं तेन मनुष्याणां प्रीतिः । प्राशनं भक्षणञ्च सूत्रकारो पृथगेव दर्शयति । पूषासीतिलेपं प्राश्नात्यशब्दं कुर्व्वन् तिहाय यत्तोप आचम्यैवं पुनः प्राश्याचम्य वर्हिषोपयम्योदङ्ङावृत्तोन्मृज्य गर्भेभ्यस्त्वेति उदग्दण्डया प्राग्दण्डया वा स्रुचाऽऽचामतीति वा । अत्र यत्प्राशनं तत्पूर्व्वमेव द्विः प्राश्नातीतिवाक्येन विहितं यत्वाचामत्युक्तं लक्षणम् ॥

तदिदं विधत्ते । "उदङ् पर्य्यावृत्याचामति[७] ॥ आत्मनो गोपीथाय । निर्णेनेक्ति शुध्यै" इति । यदुक्तं सूत्रकारेण । "आहवनीये स्रुचं प्रताप्य हस्तोऽवधेयः । हस्तो वा प्रताप्य स्रुच्यवधेयः । तयोरुद्देशनं दिशति । सप्तर्षिभ्यस्त्वा सप्तर्षीञ्जिन्वेतीति ॥

तदेतं निष्टपनमुद्देशनं च क्रमेण विधत्ते । "निष्टपति स्वगाकृत्यै । उद्दिशति । सप्तर्षीनेव प्रीणाति । दक्षिणा पर्य्यावर्त्तते । स्वमेव वीर्य्यमनुपर्य्यावर्त्तते । तस्माद्दक्षिणोर्ध आत्मनो वीर्य्यवत्तरः । अथो आदित्यस्यैवावृतमनुपर्य्यावर्त्तते" इति । निष्टपति नितरां तपनं स्वगाकृत्यै स्वर्गप्राप्त्यै भवति । योयमुदङ्मुखः सप्तर्षीणामुद्देशं कृतवान् सोयं वा वामभागे पर्य्यावृत्तिर्न कुर्य्यात् । किन्तु दक्षिणभागमुद्दिश्य पर्य्यावृत्तिं कुर्य्यात् । तथा

मति दक्षिणभागे विद्यमानां स्वशक्तिमनुपर्य्यावृत्तिं करोति। यस्मादेवं तस्मात् पुरुषस्य दक्षिणभागोऽतिशयेन शक्तिमान्। अपिचादित्यो गोलोके प्रादाक्षिण्येन वर्त्तते। अतस्तदीयामावृत्तिमन्वयं पर्य्यावृत्तो भवति। सूत्रकारेण दीर्दिहि दोदिदामि दिदायत्येषोऽग्न्युपसमिन्धने आम्नातः" इति॥

यस्मिन् समिन्धने सन्त्वा उदाहृतास्तदिदं समिन्धनं विधत्ते। "उपसमिन्धे [८] ब्रह्मवर्चसस्य समिद्ध्यै" इति। सम्यक् प्रकाशनायेत्यर्थः॥

दर्शपूर्णमासादाविव बर्हिःप्रहरणशङ्कां वारयितुं निषेधति। "न बर्हिरनुप्रहरेत्। असंस्थितो वा एष यज्ञः। यदग्निहोत्रम्। यदनुप्रहरेत। यज्ञं विच्छिन्द्यात। तस्मान्नानुपहृत्यम्। यज्ञस्य सन्तत्यै" इति। करिष्यमाणानां यज्ञानामन्याधानत्वात्तेषामिदानीमप्यनुष्ठितत्वात्तथा चाग्नौ सत्यग्निहोत्रावस्थानात् सर्व्वयज्ञानुष्ठानमन्तरेणाग्निहोत्राख्यो यज्ञो न समाप्तः। तस्मात् समाप्निहोतकं बर्हिःप्रहरणं न कुर्य्यात्। तस्मिन् कृते स यज्ञो विच्छिद्येत। तस्माद्यज्ञसन्तत्यर्थं प्रहरणं न कर्त्तव्यम्। यदुक्तं सूत्रकारेण अग्निहोत्रस्थाल्यौ प्रक्षाल्य चितमचित्यं जुहोमि स्वाहेत्युन्नयनदेशे निनयत्यन्तर्वेदि वेति॥

तदिदं विधत्ते। "अपो निनयति। अवभृथस्यैव रूपमकः" [९] इति॥ सोमयागे अवभृथस्य यत्स्वरूपं तदिव अपां निनयनेन करोति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-

यजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः।

चतुर्थे उपयुक्तहविःसंस्कारा उक्ताः पञ्चमे काम्यद्रव्याणामवशिष्टानामङ्गानि चोद्यन्ते। तत्रादौ तावत्प्रश्नोत्तराभ्यामग्निहोत्रहविःसंस्कारोपक्रमं निश्चिनोति। "ब्रह्मवादिनो वदन्ति। अग्निहोत्रप्रायणा यज्ञाः। किं प्रायणमग्निहोत्रमिति*। वत्सो वा अग्निहोत्रस्य प्रायणम्। अग्निहोत्रं यज्ञानाम्" इति। सर्व्वेषां यज्ञानां मध्ये अग्निहोत्रं प्रथमभावि। तथा च सूत्रकारेणोदाहृतम्। अग्नीनाधाय हस्ताववनिज्य संवत्सरमग्निहोत्रꣳ हुत्वा दर्शपूर्णमासावारभते। ताभ्यां संवत्सरमिष्ट्वा सोमेन वा यजते। तत ऊर्द्ध्वमन्यानि कर्म्माणि कुरुत इति॥ यथा सर्व्वेषां यज्ञानामग्निहोत्रादित्वम्। एवमग्निहोत्रहविःसंस्काराणामपि कश्चिदादिर्वक्तव्य इति ब्रह्मवादिनां प्रश्नः। शाखान्तरानुसारेण पूषास्तीति वत्समुपसृज्येति यत्सूत्रकारेणोक्तम्। सोऽयमग्निहोत्रहविःसंस्कारस्यादिः। तत्राग्निहोत्रमुत्तरक्रतूनामादिरित्युत्तरम्। यथा प्रतिमादिषु विष्णवादिबुद्धिः। यथा च श्राद्धे गोत्रान्तरोत्पन्ने ब्राह्मणे पितृपितामहादिबुद्धिः॥

एवमग्निहोत्रे सोमयागबुद्धिः प्रशंसार्थं भावनार्थञ्च सम्पादयति। "तस्य पृथिवी सदः। अन्तरिक्षमाग्नीध्रम्। द्यौर्हविर्धानम्। दिव्या आपः प्रोक्षणयः। ओषधयो बर्हिः [१] वनस्पतय इध्मः। दिशः परिधयः। आदित्यो यूपः। यज-

* F has प्रायणमग्न्यादि।

मानः पशुः । समुद्रोऽवभृथः । संवत्सरः स्वगाकारः । तस्मा-
दाहिताग्नेः सर्व्वमेव बर्हिष्यन्दत्तं भवति । यत्सायं जुहोति ।
रात्रिमेव तेन दक्षिण्यां कुरुते । यत्प्रातः [२] अहरेव तेन
दक्षिणां कुरुते । यत्ततो ददाति । सा दक्षिणा'' इति ।
सोमयागरूपेण भाव्यमानस्य तस्याग्निहोत्रस्य सदः प्रभृति
सोमयागाङ्गमवकल्पनीयम् । या पृथिवी सैव सदःस्थानीया ।
यदन्तरिक्षं तदाग्नीध्रधिष्ण्यस्थानीयम् । येयं द्यौः सा हविर्द्धान-
मण्डपस्थानीया । वृष्टिजन्या दिव्या आपस्ताः प्रोक्षणार्थजल-
स्थानीयाः । या व्रीह्याद्या ओषधयस्ताः बर्हिः । एवं वन-
स्पत्यादिषु द्रष्टव्यम् । स्वगा स्वगतं तत्र देवानां हविः करो-
तीति स्वगाकारः । बृहस्पतिपुत्रः शंयुः स शंयुं बार्हस्पत्य-
मन्त्रवन्निमं नो यज्ञं स्वगा कुर्व्वितीति श्रुत्यन्तरात् यस्मा-
देवं सोमाङ्गानि * सम्पन्नानि । तस्मादाहिताग्नेरग्निहोत्रिणो
बर्हिष्यं सोमयागार्हं सर्व्वमेव कृत्स्नमपि अङ्गजातं दत्तं सम्पादितं
भवति । तत्र हि केचिद्दक्षिणार्हा विद्यन्ते । यावन्तो वै सदस्यास्ते
सर्व्वे दक्षिण्या इति श्रुतत्वात् । अत्रापि सायं प्रातर्होमेन रात्रेर-
ह्नश्च दक्षिणार्हत्वं सम्पादनीयम् । अयमग्निहोत्री बन्धुभ्योऽन्येभ्यो
वा यत् किञ्चिद्ददाति तत्सर्व्वं दक्षिणास्थानीयम् । तदेवमग्निहोत्रं
प्रशस्तम् । सोमयागत्वभावनया तत्र कश्चिदतिशयः सम्पद्यते ।
यथा विष्ण्वादिबुद्ध्या शिलायामतिशयः । यथा वा श्राद्धे
पितृपितामहादिबुद्ध्या दौहित्रस्य नमस्कार्य्यत्वम् । तद्वत् ॥

* F has सर्व्वाणि सम्पन्नानि ।

प्रकारान्तरेणाग्निहोत्रं प्रशंसति। "यावन्तो वै देवा अहुत-मादन्। ते पराभवन्। त एतदग्निहोत्रꣳ सर्व्वस्यैव समवदा-याजुहवुः। तस्मादाहुः। अग्निहोत्रं वै देवा गृहाणां निष्कृति-मपश्यन्निति। यत्सायं जुहोति। रात्रिया एव तद्धुताद्याय [३] यजमानस्यापराभावाय। यत्प्रातः। अह्न एव तद्धुता-द्याय। यजमानस्यापराभावाय। यत्ततोऽश्नाति। हुतमेव तत्" इति। देवानां मध्ये केचिदग्निहोत्रं हुत्वा तच्छेषं भक्षि-तवन्तः। परे तु होममन्तरेणाहुतशेषमेव भक्षितवन्तः। यावन्त एतादृशस्तावन्तः पराभूताः ते च देवाः पुनर्विचार्य्य तदेतदग्निहोत्राख्यं हविः सर्व्वस्यैवाग्नेः सूर्य्यस्य चेत्युभयस्यार्थं सम्यगवदानं कृत्वा होमं अकार्षुः। तस्मादभिज्ञा एवमाहुः। अग्निहोत्रमेव स्वगृहाणां निष्कृतिः पुनः प्राप्त्युपायं निर्म्मितवन्त इति। सायं होमो रात्रौ हुतशेषभक्षणाय प्रातर्होमोऽहनि-हुतशेषभक्षणाय तेन *कालद्वयेऽपि यजमानस्य पराभवो न भवति। ततो होमादूर्द्ध्वं यदश्नाति तत्सर्व्वं हुतमेव भवति। यदुक्तं सूत्रकारेण। द्वयोः पयसा पशुकामस्य जुहुयात्। अग्निहोत्रस्या-न्यां पूर्व्वां दोहनेनोत्तरां अधिश्रित्य पूर्व्वमुत्तरमानयतीति॥

तदेतद्विधत्ते। "द्वयोः पयसा जुहुयात् पशुकामस्य। एतद्वा अग्निहोत्रं मिथुनम्। य एवं वेद। प्र प्रजया पशुभि-र्मिथुनैर्जायते [४] इमामेव पूर्व्वया दुहे। अमूमुत्तरया। अधिश्रित्योत्तरमानयति। योनावेव तद्रेतः सिञ्चति प्रजनने"

---

* F has तेन च।

इति। गोद्वयक्षीरेण होमे सति द्वित्वादग्निहोत्रस्य मिथुन-रूपत्वं तद्वेदितुं मिथुनरूपाणां प्रजानां पशूनाश्चोत्पत्तिद्वयो-र्गवोर्मध्ये पूर्व्वया गवा भूमिरेव दुग्धा भवति। प्रथमगोक्षीरं वत्सावधिश्रित्य पश्चादुत्तरगोक्षीरमानयेत्। तेन पूर्व्वक्षीरे क्षीरान्तरसेचने कृते प्रजोत्पत्तौ योनौ रेतः सिक्तं भवति॥

अथ काम्यानि चत्वारि द्रव्याणि * विधत्ते। "आज्येन जुहु-यात् तेजस्कामस्य। तेजो वा आज्यम्। तेजस्व्येव भवति। पयसा पशुकामस्य। एतद्वै पशूनाꣳ रूपम्। रूपेणैवास्मै पशू-नवरुन्धे [५] पशुमानेव भवति। दध्नेन्द्रियकामस्य। इन्द्रियं वै दधि। इन्द्रियाव्येव भवति। यवाग्वा ग्रामकामस्य। ओषध्या † वै मनुष्याः। भागधेयेनैवास्मै सजातानवरुन्धे। ग्राम्येव भव-ति" इति। आज्यस्य स्निग्धत्वात्तेजस्त्वं यन्नित्यहोमद्रव्यं पयः तदेव काम्यमाने पशुफलायापि कामुकस्य सम्पद्यते। न तु पयोन्तरं सम्पादनीयमिति। दध्युदाहरणेन न निषिध्यते। एकगोक्षीरेण पशुमात्रं फलम्। गोद्वयक्षीरेण पशुबाहु-ल्यम्। कर्म्मभूयस्त्वात्फलभूयस्त्वमिति न्यायात् क्षीरार्थमेव पशूनां सम्पादनम्। पयसः पशुस्वरूपत्वम्॥ दध्न इन्द्रिय-हेतुत्वादिन्द्रियहेतुत्वम्। मनुष्या ओषधा ओषधद्रव्यभाजिनः। अतो यवागूर्या मे सहोत्पन्नानामुचितभागधेयम्॥

चतुरुन्नयनादिकमग्निहोत्रे यत् पूर्व्वमुक्तं तदत्र प्रशं-

---

* F has क्रमेण विधत्ते।
† F has ओषधा वै।

मति। "अयज्ञो वा एषः। योऽसामा [६] चतुरुन्नयति। चतुरक्षरꣳ रथन्तरम्। रथन्तरस्यैष वर्णः। उपरीव हरति। अन्तरिक्षं वामदेव्यम्। वामदेव्यस्यैष वर्णः। द्विर्जुहोति। द्व्यक्षरं बृहत्। बृहत एष वर्णः। अग्निहोत्रमेव तत्साम त्वत्करोति" [७] इति। अग्निष्टोमादीनां प्रसिद्धयज्ञानां सामयुक्तत्वात् सामरहितस्याग्निहोत्रस्य यज्ञत्वं तदमुख्यमिति चेत्॥ नैवम्। उपचरितानां साम्नां सम्पादयितुं शक्यत्वात्। उन्नयने या चतुःसङ्ख्या पूर्व्वं विहिता सा रथन्तरनामाऽक्षरेषु विद्यते। तेन साम्येनोन्नयनव्यापारो रथन्तरस्य स्वरूपभूतः। उन्नीतस्य हविष आहवनीयदेशं प्रतिस्पर्शमन्तरेणोदर्ध्येण यद्धरणं तस्य चान्तरिक्षवर्त्तित्वादन्तरिक्षद्वारा वामदेव्यसाम्नः स्वरूपत्वेनोपचरितुं शक्यं वामदेव्यसाम्नोऽन्तरिक्षत्वेन श्रुतिरन्यत्र श्रूयते। अन्तरिक्षं वै वामदेव्यमिति। या त्वाहुतिविशेषगता द्वित्वसङ्ख्या बृहदित्येतस्मिन् सामनाम्नि विद्यते इति। बृहत्साम्नत्वोपचारः। तेनाग्निहोत्रं सामयुक्तमेव करोति। यत्त्वेतद्धविषो भूमावुपसादनम्॥

तदेतज्ज्योतिष्टोमगतोपसदुपचारेण प्रशंसति। "यो वा अग्निहोत्रस्योपसदो वेद। उपैनमुपसदो नमन्ति। विन्दत उपसत्तारम्। उन्नीयोपसादयति। पृथिवीमेव प्रीणाति। होष्यन्नुपसादयति। अन्तरिक्षमेव प्रीणाति। हुत्वोपसादयति। दिवमेव प्रीणाति। एता वा अग्निहोत्रस्योपसदः [८] य एवं वेद। उपैनमुपसदो नमन्ति। विन्दत उपसत्तारम्" इति।

अग्निहोत्रसम्बन्धिनोरुपचरिताः उपसदो यो वेदात्रायमुपसत्तारं स्वमेवकं लभन्ते ॥ अत्र हविषस्त्रिवारमुपसादनं विधत्ते । उन्नयनानन्तरमभिमर्शनार्थं गार्हपत्यसमीपे प्रथममुपसादनं विद्यते । तत ऊर्द्धमाहवनीयसमीपे होमात् प्राक् पश्चाच्च द्विरुपसादनम् । तेन त्रयेण लोकत्रयप्रीतिः एता एव त्रिविधा उपसादनक्रियाः । अग्निहोत्रसम्बन्धिन्य उपचरिता उपसदः ॥ उपपूर्वस्य सदिधात्वर्थस्य समानत्वात् उपेनमिति पुनरुक्तिर्वेदनफलोपसंहारार्था ॥

अथोपचरिताश्रवणादिसम्पादनेनाग्निहोत्रहोमं प्रशंसति । "यो वा अग्निहोत्रस्याश्रावितं प्रत्याश्रावितꣳ होतारं ब्रह्माणं वषट्कारं वेद । तस्य त्वेव हुतम् । प्राणो वा अग्निहोत्रस्याश्रावितम् । अपानः प्रत्याश्रावितम् । मनो होता । चक्षुर्ब्रह्मा । निमेषो वषट्कारः । [८] य एवं वेद । तस्य त्वेव हुतम्" इति । यदुक्तं सूत्रकारेण । समिधमाधाय प्राणापानौ निमील्यावोक्ष्य हुत्वा ध्यायेद्यत्कामस्यादिति । तत्र प्राणादीनामाश्रावितत्वादिरूपेण यो जानाति तस्यैव होमो मुख्यो भवति ॥

अथ ससत्त्वकहविःस्पर्शनं विधत्ते । "सायं यावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति । तान् यन्न तर्पयेत् । प्रजया पशुभिर्वितिष्ठेरन् । यत् तर्पयेत् । तृप्ता एनं प्रजया पशुभिस्तर्पयेयुः । सजूर्देवैः सायं यावभिरिति सायꣳ संमृशति । सजूर्देवैः प्रातर्यावभिरिति प्रातः । ये चैव देवाः सायंयावानो ये च प्रातर्यावाणः । [१०] तानेवोभयाꣳस्तर्प-

यति। त एनं तृप्ताः प्रजया पशुभिस्तर्पयन्ति" इति। साय-ङ्काले यावन्त्यग्निहोत्रिणो गृहं गच्छन्तीति सायंयावानः। एवं प्रातर्यावाणः। तेषामुभयेषामतृप्तौ प्रजापशुवियोगः। तत्तृप्तौ प्रजादिसम्पत्तिः। अतस्तर्पणाय मन्त्रः स्पर्शनीयं हविः सायं यावभिर्देवैः सहेति मन्त्रार्थः। एवमितरत्रापि। पुनः फलो-क्तिरुपसंहारार्था॥

अथाग्निहोत्रकर्मणोन्नुनयनादिकं वज्रत्वकल्पनया प्रशंस-ति। "अरुणो ह स्माहौपवेशिः। अग्निहोत्र एवाहꣳ सायं प्रातर्वज्रं भ्रातृव्येभ्यः प्रहरामि। तस्मान्मत्पापीयाꣳसो भ्रातृव्या इति। चतुरुन्नयति। द्विर्जुहोति। समित् सप्तमी। सप्तपदा शक्करी। शाक्करो वज्रः॥ अग्निहोत्र एव तत्सायं प्रातर्वज्रं य-जमानो भ्रातृव्याय प्रहरति। भवत्यात्मना। परास्य भ्रातृव्यो भवति" [११] इति। अरुणो नामतः सचोपवेशस्य पुत्रः कदाचित् सभामध्ये स एवमुवाच। सायं प्रातश्च यदनुष्ठानं सायं भ्रातृव्येभ्यो मदीयो वज्रप्रहारः। तस्मात् कारणाद् भ्रा-तृव्यो मत्तोऽप्यतिदरिद्र इति कथं वज्रसम्पादनमिति तदु-च्यते। उन्नयनहोमसमीपे तया सप्तसङ्ख्यया सप्तभिः पादैरुपेता शक्करी बुद्धिस्था वज्रस्य शाक्करः। वज्रो वै शाक्करेत्यादि श्रुत्यन्तर-प्रसिद्धः तस्मादीदृशाग्निहोत्रप्रयोगेण यजमानः स्वयं सम्पन्नो भवति। भ्रातृव्या परा भवन्ति। अत्र मीमांसायां प्रथमाध्या-यस्य द्वितीयपादे चिन्तितम्।

"आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः।

द्वारं चात्तुषमारूप्यं घृताक्तो तैजसेऽसि तत्" ॥

आदित्ये यच्चक्षुर्गम्यं तेजस्वित्वं तद्यूपेऽप्यस्ति, घृताक्तस्य यूपस्य तेजस्वित्वावगमात्। तत आदित्यशब्देन यूपः स्तूयते। एवं यजमानो यूप इत्यत्र चक्षुर्गम्ययोर्ज्जुत्वस्य समानत्वाद्यजमानः स्तूयते। द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्।

"दध्ना होमेऽन्यकर्म्मत्वगुणो वान्यत्तु पूर्व्ववत्।
विगुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः" ॥

दध्ना जुहोतीति श्रूयते। तत्राग्निहोत्रं जुहोतीत्येतस्मात् प्रकृतात् कर्म्मणोऽन्यद्दधिहोमरूपं कर्म्मेति पूर्व्वन्यायेनावगम्यते। यथा पूर्व्वत्र वाजिनद्रव्येण कर्म्म भिद्यते। तथा दधिद्रव्येणेति चेत्। वैषम्यात्। यथा वैश्वदेवयाग आमिक्षागुणावरुद्धः। तथा-ऽग्निहोत्रं न गुणान्तरावरुद्धम्। प्रत्युत निर्गुणत्वाद्गुणमाका-ङ्क्षति। तस्मादयं गुणविधिः। एवं पयसा जुहोतीत्यादिषु द्रष्ट-व्यम्। पयोदध्यादीनां सर्व्वेषामुत्पन्नशिष्टतया समबलत्वात्। एकेनैव द्रव्येणाग्निहोत्रे निष्पन्ने* व्रीहियववद्विकल्पः। तत्रै-वान्यच्चिन्तितम्।

"यद्दध्नेन्द्रियकार्य्यस्य जुहुयादिति तत्पृथक्।
गुणो वाभिद्यते कर्म्म धात्वर्थस्य फलित्वतः॥
मत्वर्थगौरवादिभ्यो नान्यत्कर्म्मफलाय तु।
गुणो विधेयो धात्वर्थो विहितत्वादनूद्यते" ॥

दध्नेन्द्रियकामस्य जुहुयादिति श्रूयते। तदिदं प्रकृताद-

* अग्निहोत्रनिष्पत्तेरिति E पुस्तकपाठः।

ग्निहोत्रादन्यत्कार्य्यं* नत्वत्र गुणविधिः। कुत इन्द्रियकामस्ये-त्युक्तस्य फलस्य धात्वर्थमन्तरेण द्रव्यमात्रादनिष्पत्तेरिति चेत्। मैवम्। कर्म्मान्तरविधौ दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षणाप्रसङ्गाद् गुणविशिष्टक्रियाविधौ गौरवात्। प्रकृ-तहानाप्रकृतक्रियाप्रसङ्गाच्च। गुणमात्रं फलाय विधीयते। यद्यपि दध्ना जुहोतीति दधि प्राप्तं तथापि फलसम्बन्धो न प्राप्तः। धात्वर्थाभावे फलासम्भव इतिचेन्न। अग्निहोत्रं जुहो-तीति विहितस्य प्रकृतस्य धात्वर्थस्येहानूद्यमानत्वात्। चतुर्था-ध्यायस्य तृतीयपादे चिन्तितम्।

"दध्ना त्विन्द्रियकामस्य नित्येऽन्यदुत तद्दधि।
अन्यत्स्यात् पूर्व्ववन्मैवं संयोगस्य पृथक्त्वतः"॥

अग्निहोत्रे श्रूयते। दध्नेन्द्रियकामस्य जुहुयादिति। तत्र दध्नः काम्यत्वं नित्येऽग्निहोत्रे पूर्व्वन्यायेन तद्दधि न प्रयोक्तव्यम्। किन्त्वन्यदेव किञ्चिद्द्रव्यमितिचेत्। मैवम्। दध्ना जुहोतीत्य-स्मिन् वाक्यान्तरे कामसंयोगमनुपन्यस्य नित्यसंयोगेन दधि-विधानात्। तस्मादेकस्यापि दध्नो वाक्यद्वयेन नित्यत्वं काम्यत्व-ञ्चाविरुद्धम्॥ एवमग्नीषोमीयपशौ खादिरे बध्नाति खादिरं वीर्य्यकामस्य यूपं कुर्व्वीतेति उदाहरणम्॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनु-वाकः॥ ५॥

---

* कर्म इति E पुस्तकपाठः।

## अथ षष्ठोऽनुवाकः।

पञ्चमे काम्यद्रव्याण्युक्तानि। षष्ठेऽभ्युद्रवणं होमाभावप्रतीकारमित्युभयमभिधीयते। तत्राभ्युद्रवणं विधातुमादावुपाख्यानेनाग्निहोत्ररूपाद् गोरुत्पत्तिं दर्शयति। "प्रजापतिरकामयतात्मन्वन्मे जायेतेति। सोऽजुहोत्। तस्मात्मन्वदजायत। अग्निर्वायुरादित्यः। तेऽब्रुवन्। प्रजापतिरहौषीदात्मन्वन्मे जायेतेति। तस्य वयमजनिष्महि। जायतां न आत्मन्वदिति तेऽजुहवुः। प्राणानामग्निः। तनो वायुः। [१] चक्षुष आदित्यः। तेषाꣳ हुतादजायत गौरेव" इति। पुरा कदाचित् प्रजापतिरचेतनगिरिनगरादिकमुत्पाद्य आत्मवज्जीवात्मयुक्तं चेतनं वस्तुजातमयमुत्पद्यतामिति कामयित्वा तत्साधनहोमं कृतवान्। तेन होमेनाग्निवाय्वादित्यरूपं चेतनमजायत। तेऽप्यग्न्यादयः परस्परं विचार्य प्रजापतेर्होमाद्यथा वयमुत्पन्नास्तथास्माकमपि चेतनं जायतामिति विचार्य होमञ्चक्रुः। तत्राग्निः प्राणेभ्यः स्वाहेत्येवं प्राणानामर्थं हुतवान्। तथा वायुस्तन्वर्थं आदित्यश्चक्षुरर्थं तेषां त्रयाणां होमादूर्द्ध्वं एका गौरुदपजायत॥

अथ तस्या गोरग्निहोत्रशब्दाभिधेयत्वं सम्पाद्य प्रशंसां दर्शयति। "तस्यै पयसि व्यायच्छन्त। मम हुतादजनि ममेति। ते प्रजापतिं प्रश्नमायन्। स आदित्योऽग्निमब्रवीत्। यतरो नौ जयात्। तन्नौ सहासदिति। कस्यैकोऽहौषीदिति प्रजाप-

तिरब्रवीत् कस्मैक इति। प्राणानामहमित्यग्निः [२] तनुवा अहमिति वायुः। चक्षुषोऽहमित्यादित्यः। य एव प्राणानाम-हौषीत्। तस्य हुतादजनीति। अग्नेर्हुतादजनीति। तदग्नि-होत्रस्याग्निहोत्रत्वम्। गौर्वा अग्निहोत्रम्। य एवं वेद गौरग्नि-होत्रमिति। प्राणापानाभ्यामेवाग्निꣳ समर्द्धयति। अव्यर्द्धुकः प्राणापानाभ्यां भवति [३]॥ य एवं वेद" इति। त्रयाणां होमाद् येयं गौरुत्पन्ना तस्याः पयसि कलहरूपं विरोधं त्रयो-ऽप्याचरन्। तदीयं वचनं प्रदर्श्यते। मम होमादियं गौरज-नीत्यग्निः। एवं वायुरादित्योऽपि। अतो वाक्यवीप्साद्योतनाय पुनर्ममेति शब्दः। ततस्ते सर्व्वे तां निर्म्माय तदर्थं प्रजापतिं प्रति प्रश्नं कर्त्तुमागच्छन्। आगमनकाले स आदित्योऽग्निं प्रति एवं समयं कृतवान्। आवयोर्मध्ये यतरस्य जयो भवति अन्यतरस्य तदस्तु नौ सह आवयोर्भवति। ततस्तैः पृष्टः प्रजापतिस्तेषां होमप्रकारं पप्रच्छ। युष्माकं मध्ये कः कस्मै देवतायै हुतवानिति। बहून् प्रति प्रश्नद्योतनाय वीप्सार्थं द्वि-रुक्तिः। तत्राग्निः प्राणानामर्थेऽहं हुतवानित्युवाच। वायुः श-रीरार्थमुक्तवान्। आदित्यश्चक्षुरर्थमुक्तवान्। तदा प्रजापतिः शरीरचक्षुषोः प्राणाधीनत्वेन प्राणानां मुख्यत्वात् तद्विषयहो-माद्गौरुत्पन्नेत्युवाच। अग्निसम्बन्धाद्धोमादुत्पन्नेति व्युत्पत्त्याऽग्नि-होत्रमिति गोनामसम्पन्नम्। गौरग्निहोत्रं यो जानाति सोऽग्निः प्राणापानाभ्यामेव समृद्धं करोति। य एवं वेद सोऽयमा-युषः पुरा केनाप्यपमृत्युना प्राणापानाभ्यां वियुक्तो न भवति॥

अथाभ्युद्रवणं विधत्ते। "तौ वायुरब्रवीत्। अनु मा भजतमिति। यदेव गार्हपत्येऽधिश्रित्याहवनीयमभ्युद्रवन्। तेन त्वां प्रीणातीत्यब्रूताम्। तस्माद्यद्गार्हपत्येऽधिश्रित्याहवनीयमभ्युद्रवति। वायुमेव तेन प्रीणाति" इति। तावग्निसूर्य्यौ प्रति वायुः प्रार्थितवान्। युवामुभावनु पयस्यग्निहोत्रिणः प्रीणयन्त्विति। यस्मादेवं तस्माद्गार्हपत्याधिश्रयणादूर्द्ध्वमाहवनीयमभिलक्ष्य तत्पय उद्रवेत्। तेन वायुः प्रीतो भवति। तदेतत् सूत्रकारेणोक्तम्। वातायत्वत्युद्द्रवतीति॥

अथ होमाभावप्रतीकारं दर्शयितुं प्रस्तौति। "प्रजापतिर्देवताः सृजमानः। अग्निमेव देवतानां प्रथममसृजत। सोऽन्यदालम्भ्यमवित्त्वा [४]॥ प्रजापतिमभिपर्य्यावर्त्तत। स मृत्योरबिभेत्। सोऽमुमादित्यमात्मनो निरमिमीत। तꣳ हुत्वा पराङ् पर्य्यावर्त्तत। ततो वै स मृत्युमपाजयत्। अपमृत्युं जयति। य एवं वेद" इति। पुरा प्रजापतिर्देवताः सर्व्वाः सिसृक्षुः प्रथममग्निमेवासृजत। सोऽग्निर्देवतान्यद्भिन्नमवित्त्वा स्वार्थमालम्भनीयं पशुस्थानीयं चेतनमन्यत्किञ्चिदप्यलब्ध्वा प्रजापतिमेवालब्धुमभिलक्ष्य तत्समीपे पर्य्यावृत्तः। स च प्रजापतिः मृत्योर्भीतः सन्नात्मनः सकाशादादित्यं निर्म्माय तमादित्यमग्नौ हुत्वा स्वयं पराङ्मुखो जगाम। तेनापमृत्युं जितवान्। एवमन्यस्याप्येवंविदोऽपमृत्युजयो भवति॥

अथ होमाभावप्रतीकारं दर्शयति। "तस्माद्यस्यैवं विदुषः। उतैकाहमुत द्व्यहं न जुह्वति। हुतमेवास्य भवति। असौ ह्या-

दित्योऽग्निहोत्रम्" [५] इति॥ एकाहं द्व्यहं वा केनापि नि-मित्तेन प्रतिबद्धाःसन्तोऽग्निहोत्रं तदीयाः केऽपि न जुह्वति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः॥ ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

षष्ठे होमाभावप्रतीकारोऽभिहितः। सप्तमे होतव्यस्य ह-विषोऽवस्थाभेदेन देवता प्रियत्वं प्रशंसार्थमनुसन्धानार्थञ्च दर्श-यति। "रौद्रं गवि। वायव्यमुपसृष्टम्। आश्विनं दुह्यमानम्। सौम्यं दुग्धम्। वारुणमधिश्रितम्। वैश्वदेवाभिन्दवः। पौष्ण-मुदन्तम्। सारस्वतं विष्यन्दमानम्। मैत्रꣳ शरः। धातुरु-द्वासितम्॥ बृहस्पतेरुन्नीतम्। सवितुः प्रक्रान्तम्। द्यावा-पृथिव्यꣳ ह्रियमाणम्। ऐन्द्राग्नमुपसन्नम्। अग्नेः पूर्व्वाहुतिः। प्रजापतेरुत्तरा। ऐन्द्रꣳ हुतम् [१] इति॥ पयो यदा गवि तिष्ठति तदा रुद्रस्य प्रियम्। वत्सेनोपसृष्टं चोद्यमाणं वायोः प्रियम्। दोहनेन आपन्नमश्विनोः प्रियम्। दोहादूर्द्ध्वं सोमस्य प्रियम्। वह्नावधिश्रितं वरुणस्य प्रियम्। दर्व्या चोभ्यमाणस्य पयसः ये विन्दवस्ते विश्वेषां देवानां प्रियाः। तापाधि-क्येन पात्रस्यान्तपर्य्यन्तं यदुद्गमनं तत्पूष्णः प्रियम्। उत्सिक्तस्य पात्रगतप्रदेशेषु सर्व्वेषु विविधं स्यन्दनं प्रसरणं यत्तत्सरस्व-त्याः प्रियम्। क्षीरमध्ये घनीभूतं यच्छरः सारं तन्मित्रस्य प्रियम्। पाकादूर्द्ध्वमुद्वासितं धातुः प्रियम्। स्रुच्युन्नीतं बृह-

स्पतेः प्रियम्। आहवनीयसमीपे गन्तुं यत् प्रक्रान्तं तत्सवितुः प्रियम्। तत्र ह्रीयमाणं* द्यावापृथिव्योः प्रियम्। नीता तत्समीपे उपसन्नमिन्द्राग्न्योः प्रियम्। प्रथमाहुतिरग्नेः प्रिया। द्वितीयाहुतिः प्रजापतेः प्रिया। होमादूर्द्ध्वमिन्द्रस्य प्रियम्॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

अथाष्टमोऽनुवाकः।

सप्तमे हविषः सर्वदेवतासम्बन्धेन प्रशंसा कृता। अष्टमे दोहनप्रकारोऽभिधीयते। तत्रादौ गोसमीपे वत्सप्रेरणं विधत्ते। "दक्षिणत उपसृजति। पितृलोकमेव तेन जयति" इति। अग्निहोत्र्या धेनोर्दक्षिणपार्श्वे यथा वत्सः सम्बध्नाति तथा तं वत्समुपसृजेत्। तेन पितृलोकस्य जयो भवति॥

धेनोः प्राङ्मुखता च विकल्पेन विधत्ते। "प्राचीमावर्त्तयति। देवलोकमेव तेन जयति। उदीचीमावृत्य दोग्धि। मनुष्यलोकमेव तेन जयति" इति। देवलोकमनुष्यलोकयोः प्रागुदक्वर्तित्वेन तज्जयोऽनेकेष्वर्थवादेषु प्रसिद्धः। तथा च शाखाहरणे श्रूयते। यत्प्राचीमाहरेत्। देवलोकमेव तेन जयति। उदीचीमावृत्य दोग्धि। मनुष्यलोकमिति॥

अधिकारिभेदेन दोहनीयस्थानव्यवस्थां विधत्ते। "पूर्व्वा

---

* नीयमानमिति E चिह्नितपुस्तकधृतं पाठान्तरम्।

दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य। यो वा गतश्रीः स्यात्। अपरौ दुह्यात् कनिष्ठस्य कनिष्ठिनेयस्य। योवा बुभूषेत्" [१] इति। ज्येष्ठभार्यायाः पुत्रो ज्यैष्ठिनेयः। स्वयञ्च भ्रातॄणां मध्ये ज्येष्ठः। तादृशस्य पश्चिमदिग्वर्त्तिनौ स्तनौ दुह्यात्। यो भवितुमितःपरं श्रियं प्राप्तुमिच्छति। तस्यापपरौ दुह्यात्। लोके दोहनात्पूर्वं वत्सपोषणादूर्ध्वं अतिप्रश्रवणीयाऽङ्गुलीभिस्तनान्मर्दयन्ति॥

तदत्र निषेधति। "न समृशति। पापवस्य सस्यव्यावृत्त्यै" इति। स्तनोपद्रवेण प्राप्तं पापवस्य सम्पापयुक्तं वस्तु तद्व्यावृत्यर्थं स्तनापमर्दाभावः।

पूर्वोक्तं सर्व्वदेवतासम्बन्धमनुक्तैः कैश्चिद्विशेषैः सहानूद्य तेन हविषाग्निहोत्रहोमः प्रयोगं विधत्ते। "वायव्यं वा एतदुपसृष्टम्। आश्विनं दुह्यमानम्। मैत्रं दुग्धम्। अर्य्यम्ण उद्वास्यमानम्। त्वाष्ट्रमुन्नीयमानम्। बृहस्पतेरुन्नीतम्। सवितुः प्रक्रान्तम्। द्यावापृथिव्यꣳ ह्रियमाणम् [२] ऐन्द्राग्नमुपसादितम्। सर्व्वाभ्यो वा एष देवताभ्यो जुहोति। योऽग्निहोत्रं जुहोति" इति। उक्तरीत्या हविषः सर्व्वदेवताप्रियत्वात्तादृशं हविर्जुहुयात्। तेन सर्व्वाभ्यो देवताभ्यो हुतं भवति।

तमेवं होमं तद्वेदनं बहुविधफलदर्शनेन प्रशंसति। "यथा खलु वै धेनुं तीर्थे तर्पयति। एवमग्निहोत्री यजमानं तर्पयति। तृप्यति प्रजया पशुभिः। प्र सुवर्गं लोकं जानाति। पश्यति पुत्रम्। पश्यति पौत्रम्। प्र प्रजया पशुभिर्मिथुनैर्जायते॥

यस्यैवं विदुषोऽग्निहोत्रं जुह्वति। य उचैनमेवं वेद" [३] इति॥ लोके क्षीरप्रदां धेनुं विविधघासादिप्रदानेन तीर्थे स्वीय-भोगस्थाने तर्पयति प्रीणयति। एवमियमग्निहोत्री धेनुः होमद्रव्यं बहुक्षीरं प्रयच्छती साङ्गकर्मसम्पादनद्वारा यजमानं तर्पयति। अथवा धेनुमग्निहोत्रीं तीर्थेऽग्निहोत्राख्ये कर्मणि यजमानः यथा तर्पयति। तथेयमग्निहोत्री कर्मफलं यजमानं तर्पयति। स च यजमानः प्रजया पशुभिश्च सह देहपातादूर्ध्वं स्वर्गं प्रजानाति। ततः पूर्वं दीर्घायुषेण युक्तः पुत्रं पौत्रञ्च पश्यति। एवमग्निहोत्रीमहिमानं जानता यस्य यजमानस्याग्निहोत्रं अध्वर्युः पुत्रादयो जुह्वति। यश्च केवलमुक्तवृत्तान्तं जानाति। तावुभावपि मिथुनरूपैः पुत्रादिभिश्च सम्बद्धौ भवतः॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः॥ ८॥

## अथ नवमोऽनुवाकः।

अष्टमेऽग्निहोत्रविधिरुक्तः। नवमे तदीयमन्त्रा उच्यन्ते। यद्यपि द्वितीयानुवाके संसृष्टासंसृष्टमन्त्रावुक्तौ। तथापि संसृष्टहोम एव न तु तन्मन्त्रौ। तस्मात् तौ मन्त्रावत्र विधत्ते। "त्रयो वै प्रैयमेधा आसन्। तेषां त्रिरेकोऽग्निहोत्रमजुहोत्। द्विरेकः। सकृदेकः। तेषां यस्त्रिरजुहोत्। स ऋचाऽजुहोत्। यो द्विः। स यजुषा। यः सकृत्। स तूष्णीम् [१]॥ यश्च यजुषाऽजुहोद्यश्च

तूष्णीम् । तावुभावार्ध्नुताम् । तस्माद्यजुषाहुतिः पूर्वा होतव्या । तूष्णीमुत्तरा । उभे एवर्धी अवरुन्धे । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । रेत एव तद्दधाति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । रेत एव हितं प्रजनयति" इति । मेधा श्रुतग्रन्थतदर्थयोर्धारणाशक्तिः । प्रिया मेधा यस्यासौ प्रियमेधः । कश्चिदृषिः । तस्य पुत्रा प्रैय्यमेधाः । तेषां त्रयाणां मध्ये ह्येक आदिर्वा यजुषा होतव्यं प्रतिदिनं त्रिवारमग्निहोत्रमृचा कृत्वा समस्मृद्धिं न प्राप । द्वितीयो यजुषा द्विरजुहोत् । तृतीयस्तूष्णीं सकृदजुहोत् । तावुभावृद्धिं प्राप्नुताम् । तस्मादन्येनापि प्रथमाहुतिरग्निर्ज्योतिरित्यादिना वा यजुषा होतव्या । द्वितीया तूष्णीं होतव्या । तथा सति समृद्धिं प्राप्नोति । मन्त्रस्य चायमर्थः । अग्निरङ्गारात्मकज्योतिः प्रभाद्रव्यम् । योऽग्निरङ्गारात्मकः स एव प्रभाद्रव्यरूपः । यच्च प्रभाद्रव्यम् । तदेवाङ्गारात्मकं तयोरविनाभावस्य दृष्टत्वात् । तदेतत्स्वकीया वागाह । अनेन मन्त्रेण सायं हुते सति रेतो धारणं भवति । एवं सूर्यमण्डलं तत्प्रभयोरविनाभावो द्वितीयमन्त्र उच्यते । तेन प्रातर्होमे सति आहितं रेतः प्रजोत्पत्तिं करोति । द्वितीयस्मिन्ननुवाक उदितानुदितहोमपक्षौ विहितौ । तयोः प्रक्रमानुसारेण व्यवस्था द्रष्टव्या । प्रक्रमे यथाकामी प्रक्रमात्तु नियम्यत इति सूत्रकारेणोक्तन्यायात् । एवं सति योऽनुदितहोमं प्रक्रम्यानुतिष्ठति । तस्य प्रमादाद्धोमात् प्रागेव सूर्योऽभ्युदियात् ॥

तदानीं प्रायश्चित्तं विधत्ते। "रेतो वा एतस्य हितं न प्रजायते [२]॥ यस्याग्निहोत्रमहुतꣳ सूर्य्योऽभ्युदेति। यद्यन्ते स्यात्। उन्नीय प्राङुदाद्रवेत्। स उपसाद्यातमितोरासीत्। स यदा ताम्येत्। अथ भूः स्वाहेति जुहुयात्। प्रजापतिर्वै भूतः। तमेवोपासरत्। स एवैनं तत उन्नयति। नार्त्तिमार्च्छति यजमानः" [३] इति॥ अनुदितहोमं प्रक्रम्यानुतिष्ठतो यस्य यजमानस्याग्निहोत्रमहुतमेवाभिलक्ष्य सूर्य्य उदेति। एतस्य गर्भाशये निषिक्तमपि रेतो न प्रजामुत्पादयति। तदानीं यदि यजमानोऽन्ते स्यात्। ग्रामान्तरमगत्वा समीपे तिष्ठेत्। तदानीं स्वयमेव हविरुन्नीय प्राङ्मुखमाहवनीयं प्रति उद्धृतहविष्क आद्रवेत्। आगच्छेत्। स यजमान आहवनीयसमीपे हवि-रुपसाद्य स्वयं श्रमपर्य्यन्तं निरुद्धश्वासस्तिष्ठेत्। यदा श्रान्तो भवति तदा निरोधं परित्यज्य भूः स्वाहेति मन्त्रेण जुहुयात्। प्रजापतिर्भूतो नित्यसिद्ध इति तन्मन्त्रगतस्य भूतशब्दस्यार्थः। अतस्तेन मन्त्रेण तमेव प्रजापतिं प्राप्तवान् भवति। स एव प्रजापतिरेनं यजमानम्। ततः कालापराधदोषादुद्धृत्य सगुणं कर्म्म प्रापयति। यजमानो विनाशं न प्राप्नोति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः॥ ॥ ९ ॥

## अथ दशमोऽनुवाकः ।

असंसृष्टहोममन्त्रौ नवमेऽभिहितौ। दशमे अवस्थाविशेषानुसारेण होमो विधीयते । तत्र प्रथमामवस्थां दर्शयति । "यदग्निमुद्धरति। वसवस्तर्ह्यग्निः । तस्मिन्यस्य तथाविधे जुह्वति। वसुष्वेवास्याग्निहोत्रꣳ हुतं भवति" इति। यदा यजमानो गार्हपत्यादाहवनीयेऽग्निमुद्धृत्य प्रतिष्ठापयति। तदानीमुद्धरणावस्थाया वसुप्रियत्वाद्वसवोऽग्निरूपेण वर्त्तन्ते । यस्य यजमानस्य तथाविधे तस्मिन्नग्नावृत्विजो जुह्वति। तस्य यजमानस्य तदग्निहोत्रं वसुष्वेव हुतं भवति तेन वसवः प्रियन्त इत्यर्थः। एवमुत्तरत्रापि योज्यम्॥

अथ द्वितीयावस्थामाह। "निहितो धूपो यच्छते। रुद्रास्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। रुद्रेष्वेवास्याग्निहोत्रꣳ हुतं भवति" इति। आहवनीये निहितो धूपो यन्निर्गच्छता धूमेन युक्तो यदावतिष्ठते तदानीमयं रुद्रस्वरूपः॥

अथ तृतीयावस्थामाह। "प्रथममिध्ममर्चिरालभते। आदित्यास्तर्ह्यग्निः [१]॥ तस्मिन् यस्य तथाविधे जुह्वति। आदित्येष्वेवास्याग्निहोत्रꣳ हुतं भवति" इति । अर्चिर्ज्वाला सा यदा इध्मं काष्ठं प्रथमं स्पृशति ॥

अथ चतुर्थामवस्थामाह। "सर्व्व एव सर्व्वश इध्म आदीप्तो भवति। विश्वे देवास्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। विश्वेष्वेवास्य देवेष्वग्निहोत्रꣳ हुतं भवति" इति। सर्व्वोऽपि

काष्ठसमूहः सर्व्वेषु प्रदेशेषु यस्मिन् काले आदीप्तो भवति तदा विश्वे देवा अग्निस्वरूपाः॥

अथ पञ्चमावस्थामाह। "नितरामर्चिरुपावैति लोहिनीकेव भवति। इन्द्रस्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। इन्द्र एवास्याग्निहोत्रꣳ हुतं भवति" [२] इति। आर्चिः सर्व्वापि काष्ठानि यदा नितरामुपाप्नोति तेषु च काष्ठेषु लौहित्यमेव भवति तदानीमिन्द्रस्वरूपोऽग्निः॥

अथ षष्ठीमवस्थामाह। "अङ्गारा भवन्ति। तेभ्योऽङ्गारेभ्यो-ऽर्चिरुदेति। प्रजापतिस्तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। प्रजापताविवास्याग्निहोत्रꣳ हुतं भवति" इति। प्रौढ-ज्वालासु शान्तासु काष्ठान्यङ्गारा भवन्ति। तेभ्यश्चाङ्गारेभ्य ईषदेवार्चिरुदेति। तदा प्रजापतिरूपोऽयमग्निः॥

अथ सप्तमीमवस्थामाह। "शरोऽङ्गारा अध्यूहन्ते। ब्रह्म तर्ह्यग्निः। तस्मिन् यस्य तथाविधे जुह्वति। ब्रह्मन्नेवास्याग्निहोत्रꣳ हुतं भवति" इति। शरशब्देन चीरसारभूतं मण्डम्। अङ्गा-रशब्देन चाञ्चल्यमात्ररूपेणावभासमानो ज्वालांशोऽभिधी-यते। तादृशाः शरोऽङ्गारा यदाध्यूहन्ते उपरि धावन्ति तदा परब्रह्मरूपोऽयमग्निः॥

इदानीमेवंविधज्ञानपूर्व्वकानुष्ठानस्य तथाविधध्यानस्य च प्रशंसां दर्शयति। "वसुषु रुद्रेष्वादित्येषु विश्वेषु देवेषु॥ इन्द्रे प्रजापतौ ब्रह्मन्। अपरिवर्गमेवास्यैतासु देवतासु हुतं भवति। यस्यैवं विदुषोऽग्निहोत्रं जुह्वति। य उचैनदेवं वेद" [२] इति॥

यस्य ज्ञानपूर्व्वको होमः यस्य च ध्यानं तयोरुभयोरपि एक-मपि दिनमवर्जयित्वा वस्वादिषु ब्रह्मान्तेषु देवेषु हुतं भवति। अ इति आङर्थे परिवर्गः परिवारः। इदं क्रियाविशेषणम्। एतासु पूर्व्वोक्तासु देवतासु अस्य यजमानस्य आहुतं भवत्येव॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः॥ ॥ १० ॥

## अथ एकादशोऽनुवाकः।

दशमे वह्नेरवस्थाविशेषं होमं प्राशस्त्यं दर्शितम्। एकादशे भेदेन परिषेचनं मन्त्रौ विधत्ते। "ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति। सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः। अग्निर्वा ऋतम्। असावादित्यः सत्यम्। अग्निमेव तदादित्येन सायं परिषिञ्चति। अग्निनादित्यं प्रातः सः। यावदहोरात्रे भवतः। तावदस्य लोकस्य। नार्त्तिर्न रिष्टिः। नान्तो न पर्य्यन्तोऽस्ति॥ यस्यैवंविदुषोऽग्निहोत्रं जुह्वति। य उचैनदेवं वेद" [१] इति। ऋतशब्देन मानससत्यवाचिना अग्निरत्र विवक्षितः। सत्यशब्देन वाचिकसत्यवाचिना आदित्योऽत्र विवक्षितः। ऋतमग्निं त्वामादित्येन परितः सिञ्चामीति सायं मन्त्रस्यार्थः। सत्यं आदित्यं त्वां सत्येन अग्निना परितः सिञ्चामीति प्रातःकालीनमन्त्रस्यार्थः। एवंविधज्ञानपूर्व्वकाऽनुष्ठाने तथाविधज्ञाने च यावन्तं कालमहोरात्रे उभे सुस्थिते

वर्त्तते। तावन्तं कालमेतदीयपुत्रपौत्रादिपरम्परायां अग्निहो-त्रानुष्ठानोपयुक्तस्य अस्य विघ्नकारी कालार्त्तिर्न भवति। नापि सर्व्वात्मना नाशो भवति। तथा भोग्यवस्तुना कदापि अन्तः पर्य्यन्तो नस्तः। अन्तो नाशः पर्य्यन्तः प्रतिबन्धस्य सर्व्वात्मना नाशः। तस्मादेतत् प्रशस्तमग्निहोत्रमनुष्ठेयमिति प्रपाठकस्य तात्पर्य्यार्थः॥ अथ प्रपाठकस्य अनुवाकार्थः सङ्गृह्यते।

"उपोद्घातोऽग्निहोत्रस्य संस्काराः प्राकृतास्तथा।
उदीच्या अपि संस्काराः काम्यक्रयविधिस्तथा॥
अहोमः सप्रकारोक्तो दोहनीयहविः स्तुतिः।
दोहासंसृष्टहोमस्य वत्सावस्याप्रशंसनम्॥
परिषेचनमित्येवं प्रपाठक उदाहृतः *।
अग्निहोत्रविधिः साङ्गप्रशंसाज्ञानसंयुतः॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवर्त्तयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः॥ ११॥

समाप्तश्चायं प्रथमः प्रपाठकः॥

---

* उदीरित इति A चिह्नितपुस्तकपाठः।

# तैत्तिरीय-ब्राह्मणभाष्ये

## द्वितीयकाण्डे द्वितीयप्रपाठके

### प्रथमोऽनुवाकः।

हरिः ॐ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
आद्ये प्रपाठके प्रोक्तो नित्यकाम्यविभेदतः।
आरण्यकाण्डगा मन्त्रा दशहोत्रादयः श्रुताः॥
तद्ब्राह्मणे स्पष्टमुक्तं द्वितीयेऽस्मिन् प्रपाठके।

आरण्यकाण्डस्य तृतीयप्रपाठके प्रथमानुवाके दशहोत्राख्या चितिः स्रुगित्यादिहोममन्त्रा आम्नाताः। तस्य विधिरस्मिन् प्रथमानुवाकेऽभिधीयते। होतृमन्त्राणाञ्च प्रयोगव्यवस्था सूत्रकारेण विस्पष्टं दर्शिता। त इमे चतुर्होतारो यत्र होमार्थाः सग्रहाः सस्वाहाकारास्तत्र प्रयुज्येरन्। यत्राहोमार्था अग्रहा अस्वाहाकारा यत्र यजमानास्तेषां ये विहारसंयुक्ताः। आहिताग्नेस्तान् प्रतीयादुभयोरितरानिति। चतुर्होतृशब्दः कृत्स्नः होतृमन्त्रविषयः। एतच्च प्रश्नोत्तराभ्यां विस्पष्टमाम्नास्यते। एतेषु च होतृमन्त्रेषु यावन्ति पूर्व्वभागे होमसाधननामानि श्रूयन्ते। तेषां प्राधान्येन दशहोतृमन्त्रत्वम्। उपरिभागो ग्रहशब्दवाच्यः। तस्यान्ते स्वाहाकारः पठितः। तौ ग्रहस्वाहाकारौ होमेष्वेवाजपादौ तद्रहितौ हो-

द्वभाग एव प्रयोक्तव्यो विहाय आहवनीयादियुक्तं कर्म्म। तद्विषयविधिस्त्वाहिताग्निरेवाधिकारी इतरेषु त्वनाहिताग्निरपि। अतएव तेषां क्रत्वर्थः पुरुषार्थश्चेत्युभयविधः प्रयोगो विद्यते ॥

एवं सत्यत्र पुरुषार्थप्रयोगं तावदादौ विधत्ते। "प्रजापतिरकामयत प्रजाः सृजेयेति। स एतं दशहोतारमपश्यत्। तं मनसाऽनुद्रुत्य दर्भस्तम्बेऽजुहोत्। ततो वै स प्रजा असृजत। ता अस्मात् सृष्टा अपाक्रामन्। ता ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। यः कामयेत प्रजायेयेति। स दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे जुहुयात्। प्रजापतिर्वै दशहोता [१]॥ प्रजापतिरेव भूत्वा प्रजायते" इति। पुरा कदाचित् प्रजापतिः प्रजा उत्पादयितुं कामयमानस्तदुपायं वेदेषु परीक्ष्य दशहोत्राख्यं मन्त्रमपश्यत्। आरण्यकाण्ड एवं समाम्नातः। चित्तिः स्रुक्। चित्तमाज्यम्। वाग्वेदिः। आधीतं बर्हिः। केतो अग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मन उपवक्ता। प्राणो हविः। सामाध्वर्युरिति। अत्र चित्तिचित्तशब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकावन्तःकरणभेदौ विवक्षितौ वाक्प्रसिद्धा आधीतमुच्चार्य्यमाणं केतविज्ञानशब्दाभ्यां निर्विकल्पकसविकल्पकविज्ञानविषयावभिधीयेते। वाक्पतिशब्देन वाचः प्रवर्त्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते। मनःप्राणौ प्रसिद्धौ सामशब्देन तद्धेतुः स्वरोच्चारणशक्तिरुच्यते। एवं चित्त्यादयो दश शरीरगताः पदार्थविशेषाः स्रुगादयो दश

पदार्था होमनिष्पादकाः। अग्निशब्दद्वयेनाहवनीयगार्हपत्यौ विवक्षितौ। उपवक्तृशब्देनानुवचनकर्त्तुर्होतुः पुरा प्रैषवक्ता मैत्रावरुणो विवक्षितः। चित्त्यादयः शारीरपदार्थाः स्रुगादि-रूपा इति वाक्यार्थः। अस्मिन्मन्त्रे स्रुगादीनां होमसाधना-नां दशानामभिहितत्वात्। अयं मन्त्रो दशहोतेत्युच्यते। सोऽयं मन्त्रस्य पूर्व्वभागः। उत्तरभागस्तु ग्रहशब्दवाच्य एव-मान्नातः। वाचस्पते विधनामन्। विधेम ते नाम। विधेस्त्व-मस्माकं नाम। वाचस्पतिः सोमं पिबतु। आस्मासु नृम्णं धात्स्वाहेति। हे वाचस्पते वाचः पालक हे विधे जगद्विधातः। हे नामन् सर्व्वस्य वशीकर्त्तः ते तव नाम विधेम अस्मद-नुग्रहकारी देवोऽयमित्येवं प्रसिद्धिं कुर्म्मः। यद्वा नमनं प्रह्वीभावं सम्पादयामः त्वमप्यस्माकं नामविधेः देवेषु मध्ये यजमानोऽयं यथाशास्त्रं कृतवानिति प्रसिद्धिं कुरु। अयं वाचस्पतिर्मदीयं सोममदृशमाज्यं पिबतु। अस्मासु होम-कर्त्तृषु नृम्णमपेक्षितं धनं धाद्वाचस्पतिः सम्पादयतु इमं वृत्तान्तमुद्दिश्य जुहोमीति स्वकीया वागाह। अत्र वाचस्पत इत्यादि नृम्णं धात् इत्यन्तो ग्रहभागः। तेन ग्रहभागेन स्वा-हाकारेण च सहितं तं दशहोतृमन्त्रं मनसोच्चार्य्य कस्मिंश्चि-द्दर्भस्तम्बे आज्येन कृतवान्। ततो होमसामर्थ्यात् स प्रजापतिः कामिताः प्रजाः ससर्ज ताः सृष्टाः प्रजा अनुरागरहिताः अस्मात् प्रजापतेरपक्रान्ताः स च प्रजापतिर्वाचस्पत इत्यादि ग्रहभागपठितसामर्थ्येन ताः प्रजाः पुनरगृह्णात्। ततो गृहा-

त्यनेनेति व्युत्पत्त्या ग्रहत्वं सम्पन्नम्। प्रजापतिवदन्योऽपि होमं कृत्वा प्रजापतिसामर्थ्यं प्राप्य प्रजोत्पत्तिं करोति सोऽयं विधिः सूत्रकारेण सङ्गृहीतः। यः कामयेत प्रजायेयेति स द्वादशगृहीतेन स्रुचं पूरयित्वा दशहोतारं मनसाऽनुद्रुत्य दर्भस्तम्बे सग्रहं जुहुयादूर्द्ध्वं वा पूर्व्वेण ग्रहेणार्द्धमुत्तरेणेति ॥

मानसं मन्त्रोच्चारणं प्रशंसति। "मनसा जुहोति। मन इव हि प्रजापतिः। प्रजापतेराप्त्यै" इति। यथास्मदीयं मनः सङ्कल्पमात्रेण मनोराज्यगतान् गिरिनद्यादीन् सृजति। एवं प्रजापतिरपि सङ्कल्पमात्रेण सृजतीति तत्साम्यम्। अतो मानसमुच्चारणं प्रजापतेः प्राप्त्यै भवति ॥

विधत्ते। "पूर्णया जुहोति। पूर्ण इव हि प्रजापतिः। प्रजापतेराप्त्यै" इति। द्वादशगृहीतेनाज्येन या स्रुक् पूर्णा तया जुहुयात्। सर्व्वात्मकत्वात् प्रजापतेः पूर्णत्वम् ॥

पक्षान्तरं विधत्ते। "न्यूनया जुहोति। न्यूनाद्धि प्रजापतिः प्रजा असृजत। प्रजानाꣳ सृष्ट्यै" [२] इति। चतुर्गृहीतेनाज्येन युक्ता येयमपूर्णस्रुक् तया सृष्टेः प्राक् प्रजापतेः स्वरूपं सर्व्वजगद्बीजावस्थामव्याकृतं सर्व्वविशेषराहित्येन न्यूनं तस्मादेव व्याकृताद्व्याकृतरूपाः प्रजाः सृष्टवान्। अतो न्यूनया होमः प्रजासृष्ट्यै भवति। पूर्णत्वपक्षो न्यूनत्वपक्षो समबलत्वाद्विकल्पितौ ग्रहरहितेन होतृमन्त्रेण सर्व्वद्रव्यं सकृद्धोतव्यमित्येकः पक्षः। होतृभागेनार्द्धं हुत्वा पुनरर्द्धं ग्रहभागेन

होतव्यमिति द्वितीयः पक्षः। ताविमौ पक्षौ सूचीकृतौ॥

अथ पक्षान्तरं विधत्ते। "दर्भस्तम्बे जुहोति। एतस्माद्वै योनेः प्रजापतिः प्रजा असृजत। यस्मादेव योनेः प्रजापतिः प्रजा असृजत। तस्मादेव योनेः प्रजायते" इति। भूमिष्ठ-दर्भस्तम्बस्य प्रजा योनित्वम्। तथा च पञ्चकाण्डे समाम्नातम्। यद्वा अस्या अमृत यद्वीर्य्यं तद्दर्भास्तस्मिन् जुहोति। प्रैव प्रजायत इति॥

विधत्ते। "ब्राह्मणो दक्षिणत उपास्ते। ब्राह्मणो वै प्रजानामुपद्रष्टा। उपद्रष्टुमत्येव प्रजायते" इति। होमकाले कश्चिद्ब्राह्मणो दक्षिणभागे स्थापनीयः। उपद्रष्टा हिताहितस्य प्रजानामुपदेष्टा उपद्रष्टा उपद्रष्टुमतिहिताहितद्रष्टृयुक्ते देशे प्रजायते॥

ग्रहभागं प्रशंसति। "ग्रहो भवति। प्रजानाᳲ सृष्टानां धृत्यै" इति। यथा प्रजापतिरपक्रान्ताः प्रजा ग्रहभागेन धृतवान्। एवं यजमानोऽपि॥

इत्थं प्रजाकामस्य प्रयोगमभिधायाथ यशस्कामस्य प्रयोगं विधत्ते। "यं ब्राह्मणं विद्यां विदाᳲसं यशो नर्च्छेत् [२]॥ सोऽरण्यं परेत्य। दर्भस्तम्बमुद्ग्रथ्य। ब्राह्मणं दक्षिणतो निषाद्य। चतुर्होतॄन् व्याचक्षीत। एतद्वै देवानां परमं गुह्यं ब्रह्म। यच्चतुर्होतारः। तदेव प्रकाशं गमयति। तदेनं प्रकाशं गतम्। प्रकाशं प्रजानां गमयति" इति। वेदशास्त्रविद्यां तां जानन्तं ब्राह्मणं यदि तदनुरूपं यशो न प्राप्नुयात् तदा स

ब्राह्मणोऽरण्यमनुप्रविश्य दर्भस्तम्बमूर्द्धग्रन्थिकं बध्नीत तत्रासीनः सन् कश्चिद्विशिष्टं ब्राह्मणं दक्षिणभाग उपवेश्य तत्समीपे होतृमन्त्रान् विस्पष्टमुच्चारयेत्। चित्तिः स्रुगित्यादिको दश-होता पृथिवी होतेत्यादिकश्चतुर्होताग्निर्होतेत्यादिकः पञ्च-होता सूर्य्यन्ते चक्षुरित्यादिकः षड्ढोता महाहविर्होतेत्या-दिकः सप्तहोता एते सर्व्वेऽपि होतृमन्त्राश्चतुर्होतृशब्देन छत्रि-न्यायेनोपलक्षिताः। अन्यथा बहुवचनानुपपत्तेः। चतुर्होतृ-शब्दस्यैव सर्व्वोपलक्षकत्वम्। न तु दशहोत्रादिदशकस्येत्यय-मर्थो उपरिष्टाद्विस्पष्टीभविष्यति। अत्र होमविधानाभावाद् कृतभागस्वाहाकारभागौ न प्रयोक्तव्यौ। यत्ते चतुर्होतारो मन्त्राः एतदेव देवानामुत्कृष्टं गोप्यं ब्रह्म देवाः परस्मिन् ब्र-ह्मणि यादृशं गौरवं तादृशमेतेषु कुर्व्वन्ति। तदेव देवाभि-मन्त्ररूपं ब्रह्म देवेषु मध्ये विद्वांसमेनं प्रकाशं गमयति। ततो देवेषु ख्यातिं गतमेनं ब्राह्मणं देवानुग्रहयुक्तं पुनः प्रजानां मध्ये प्रकाशं गमयति। ततो लोकद्वयप्रख्यातो भवति॥

उक्तदर्भस्तम्बं प्रशंसति। "दर्भस्तम्बमुद्ग्रथ्य व्याचष्टे [४]॥ अग्निवान् वै दर्भस्तम्बः। अग्निवत्येव व्याचष्टे" इति। यथा-ग्निर्होमाधारः तद्वद्दर्भस्तम्बोऽपि तत्र होमाधारत्वेन विहितः॥

ततोऽग्निमत्त्वं हिताहितमाचिख्यासोरुपवेशितं ब्राह्मणं प्रशं-सति। "ब्राह्मणो दक्षिणत उपास्ते। ब्राह्मणो वै प्रजानामुप-द्रष्टा। उपद्रष्टुमत्येवैनं यश ऋच्छति" इति। इदं हितमि-दमहितमिति ब्राह्मणः प्रजाभ्य उपदिशति तस्मादयमुपद्रष्टा।

तथाविधब्राह्मणैर्युक्त एव देशे विद्वांसमेनं यशः प्राप्नोति ॥

अथ साक्षिणे ब्राह्मणाय गोदानं विधत्ते। "ईश्वरं तं यशोर्त्तोरित्याहुः। यस्यां ते व्याचष्ट इति। वरस्तस्मै देयः। यदेवैनं तत्रोपरमति। तदेवावरुन्धे" [५] इति। यं ब्राह्मणं सन्निधाप्य होतॄन् पठति। तमेव ब्राह्मणं तद्यश आर्तीरीश्वरं प्राप्तं समर्थम्। अतस्तस्मै गोदानेन यद्यश एनं ब्राह्मणं प्राप्नोति तत्स्वयमेव स्वीकरोति॥

तदेवं पुरुषार्थप्रयोगद्वयमभिधाय क्रत्वर्थं दशहोतृमन्त्रस्य प्रयोगचतुष्टयं क्रमेण विधत्ते। "अग्निमादधानो दशहोत्रा-रणिमवदध्यात्। प्रजातमेवैनमाधत्ते। तेनैवोद्धृत्याग्निहोत्रं जुहुयात्। प्रजातमेवैनज्जुहोति। हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत। प्रजातमेवैनं निर्वपति। सामिधेनीरनुवक्ष्यं दश-होतारं व्याचक्षीत। सामिधेनीरेव सृष्ट्वारभ्य प्रतनुते। अथो यज्ञो वै दशहोता। यज्ञमेव तनुते" [६] इति॥ प्रजातं प्रभूतं आधेयोऽग्निर्होतव्यहविर्निर्वपणीयञ्च हविर्दशहोतृम-न्त्रेण वर्द्धते। तथा सामिधेनीरेव दशहोतृपाठेन तदनुष्ठानं प्रारभ्य विस्तारयति। अपि च दशहोतृमन्त्रस्य यज्ञसाधनत्वेन यज्ञरूपत्वाद्यज्ञमेव विस्तारयति। यदुक्तं सूत्रकारेण। दश-होत्राभिचरन् यजेत स्वकृतइरिणे प्रदरे वा जुहुयादिति॥

तदिदं पुरुषार्थत्वेन विधत्ते। "अभिचरं दशहोतारं जु-हुयात्। नव वै पुरुषे प्राणाः। नाभिर्दशमी। स प्राणमेवै-नमभिचरति। एतावद्वै पुरुषस्य स्वम्। यावत्प्राणाः। या-

वदेवास्यास्ति। तदभिचरति" इति। शिरसि छिद्राणि सप्त अधस्तने द्वे छिद्रे तेषु सञ्चरन्तः प्राणा नवसङ्ख्याकाः तदपेक्षया नाभेर्दशमत्वे एवं सति होतृमन्त्रगततया दशसङ्ख्यया सर्व्व-प्राणयुक्तमेवैनं शत्रुमुद्दिश्याभिचारः कृतो भवति। अपि च प्राणा इति यावदस्ति एतावदेव पुरुषस्य मुख्यं स्वम्॥

अतस्तत्सर्व्वमुद्दिश्याभिचारः कृतो भवति होमदेशं वि-धत्ते। "स्वकृत इरिणे जुहोति प्रदरे वा। एतद्वा अस्यै नि-र्ऋतिगृहीतम्॥ निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति" इति। इरिणमुरस्थानं तच्च स्वकृतं स्वयमेव सिद्धं न तु गार्हपत्याद्यायतनवदूषनिर्वपनेन सम्पादितं प्रदरोऽभ्रच्छिद्राः अनयोर्मध्य एकस्मिन् जुहुयादेतच्चोभयं निर्ऋत्या राक्षसरू-पया गृहीतं स्थानम्॥

अतस्तस्मिन्नवस्थाने एतं वैरिणं निर्ऋत्या ग्राहयति। "य-द्वाचः क्रूरम्। तेन वषट्करोति। वाच एवैनं क्रूरेण प्रवृश्चति। ताजगार्त्तिमार्च्छति" [७] इति। आरण्यकाण्डे क्रूराणि स-माम्नातानि "खट् फट् जहि छिन्धि भिन्धि हन्धि कट्" इति वाचः क्रूराणीति तेषां मध्ये केचित् क्रूरेण दशहोतृमन्त्रान्ते वषट्कारकृत्यं सम्पादयेत्। ततस्ते क्रूरेणैनं शत्रुं छिनत्ति। तदानीमेवासौ मरणं गच्छति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः॥ ॥ १ ॥

अथ द्वितीयोऽनुवाकः।

प्रथमे दशहोतृमन्त्रस्य क्रत्वर्थप्रयोगद्वयं दर्शितम्। द्वितीये चतुर्होत्रादिमन्त्राणां क्रत्वर्थप्रयोगः प्रदर्श्यते। तदादौ चतुर्होतृभिः प्रयोगं विधत्ते। "प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति। स एतं चतुर्होतारमपश्यत्। तं मनसानुद्रुत्याहवनीयेऽजुहोत्। ततो वै स दर्शपूर्णमासावसृजत। तावस्मात्सृष्टावपाक्रामताम्। तौ ग्रहेणागृह्णात्। तद्ग्रहस्य ग्रहत्वम्। दर्शपूर्णमासावालभमानः। चतुर्होतारं मनसानुद्रुत्याहवनीये जुहुयात्। दर्शपूर्णमासावेव सृष्ट्वारभ्य प्रतनुते [१]॥ ग्रहो भवति। दर्शपूर्णमासयोः सृष्टयोर्धृत्यै" इति। चतुर्होतृमन्त्र आरण्यकाण्डे समाम्नातः। पृथिवी होता द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्तेति सोऽयं होतृभागः। तत्र पृथिव्यादयः प्रसिद्धाः। तथा होत्रादयश्च स उपवक्तृशब्देन समीपे स्थितत्वात् तत्कर्मानुजानीतो ब्रह्मा विवक्षितः। ग्रहभागस्त्वेवमाम्नातः। वाचस्पतेर्वाचो वीर्येण। सम्भृततमेनायक्ष्यसे। यजमानाय वार्यम्। आसुवस्करस्मै। वाचस्पतिः सोमं पिबति। जजनदिन्द्रमिन्द्रियाय स्वाहा" इति। हे वाचस्पते अत्यन्तं सम्पादितेन मन्त्रात्मिकाया वाचः सामर्थ्येन त्वमासमन्ताद्यक्ष्यसे। अस्मै यजमानाय वार्यं वरणीयं सुवः स्वर्गं आकः समन्तात् कुरु। अयं वाचस्पतिः अस्मदीयेषु यागेषु सोमं पिबति। इन्द्रदेवमिन्द्रियायेन्द्रियसमृध्यर्थं जजनत् जनयन् प्रेरयत्वित्यर्थः। तदेतदुद्दिश्य जुहुधीति स्वकीया वागाह। होमकाले

यथोक्तग्रहेण स्वाकारेण च युक्तश्चतुर्होतृमन्त्रः प्रयोक्तव्यः। आलभमानः उपक्रममाणः अन्यत्सर्वं दशहोतृमन्त्रवद्व्याख्येयम् ॥

अथ पञ्चहोतुः प्रयोगं विधत्ते। "सोऽकामयत चातुर्मास्यानि सृजेय" इति। स एतं पञ्चहोतारमपश्यत्। तं मनसानुद्रुत्याहवनीयेऽजुहोत्। ततो वै स चातुर्मास्यान्यसृजत। तान्यस्मात् सृष्टान्यपाक्रामन्। तानि ग्रहेणागृह्णात्। तद् ग्रहस्य ग्रहत्वम्। चातुर्मास्यान्यालभमानः[२]पञ्चहोतारं मनसानुद्रुत्याहवनीये जुहुयात्। चातुर्मास्यान्येव सृष्ट्वाऽऽरभ्य प्रतनुते। ग्रहो भवति। चातुर्मास्यानाꣳ सृष्टानां धृत्यै" इति। पञ्चहोतृमन्त्र आरण्यकाण्ड एवमाम्नातः। अग्निर्होता अश्विनावध्वर्यू। त्वष्टाग्नीत्। मित्र उपवक्तेति। अन्याहयः प्रसिद्धाः अध्वर्युः प्रतिप्रस्थाता चेत्यध्वर्युद्वित्वेन होतृपञ्चकं पूरणीयम्। तत्र ग्रहभाग एवमाम्नातः। "सोमः सोमस्य पुरोगाः। शुक्रः शुक्रस्य पुरोगाः। आतास्त इन्द्रसोमाः। वातापेर्हवनश्रुत स्वाहा" इति। योऽयं देवतात्मकः सोमः सोऽयं लतात्मकस्य सोमस्य यागदेशं प्रत्यागमने पुरतो गच्छति। शुक्रो भासको देवतादिप्रकाशको मन्त्रयुक्तस्य गृह्यमाणतया भासमानस्य सोमस्य पुरतो गच्छति। आदौ मन्त्रं पठित्वा पश्चात्सोमा गृह्यन्ते। हे इन्द्र त्वदर्थं एते सोमाः आताः पक्का आश्रिता वा। कीदृशस्य ते वातापेः वायुवदाप्नोति सहसा गच्छतीति वातापिः। तस्य हवनमाह्वानं शृणोतीति हवनश्रुतस्य एत-

दर्थं जुहुधीति स्वकीया वागाह। अत्र सर्व्वत्र दर्शपूर्णमास-चातुर्मास्यादीनामुपक्रमणं तदभिमानिचेतनविषयं द्रष्टव्यम्। अन्यत् पूर्व्ववद्व्याख्येयम्॥

षड्ढोतृमन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयत पशुबन्धꣳ सृजेयेति। स एतꣳ षड्ढोतारमपश्यत्। तं मनसानुद्रुत्याहवनीयेऽजुहोत्। ततो वै स पशुबन्धमसृजत। सोऽस्मात्सृष्टोऽपाक्रामत्। तं ग्रहेणागृह्णात् [३] तद् ग्रहस्य ग्रहत्वम्। पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसानुद्रुत्याहवनीये जुहुयात्। पशुबन्धमेव सृष्ट्वाऽऽरभ्य प्रतनुते। ग्रहो भवति। पशुबन्धस्य सृष्टस्य धृत्यै" इति। षड्ढोतृमन्त्र आरण्यकाण्ड एवमाम्नातः। सूर्य्यं ते चक्षुः। वातं प्राणः। द्यां पृष्ठम्। अन्तरिक्षमात्मा। अङ्गैर्यज्ञम्। पृथिवीꣳ शरीरैरिति। हे पशो योऽयं सूर्य्यः स च ते चक्षुः। यो वायुः स ते प्राणः। तथा च पशुविषये अध्रिगुप्रैषे समाम्नायते। सूर्य्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतादिति। सा द्यौः ते पृष्ठभागः। उपरिवर्त्तित्वसाम्यात्। यदिदमन्तरिक्षन्ते त्वदीयो जीवात्मा मध्यवर्त्तित्वसाम्यात्। यानि हृदयादीन्यङ्गानि तैर्यज्ञं सम्पादयेति शेषः। यान्यन्यान्यस्थ्यादीनि शरीरगतानि तैः पृथिवीं प्राप्नुहीति शेषः। सूर्य्यन्ते चक्षुरित्यादावपि त्वदीयं चक्षुः सूर्य्यं प्राप्नोत्विति वा योजनीयम्। होमनिष्पादकस्य पशोः चक्षुरादीन्यत्रोक्तानीत्यस्य मन्त्रस्य षड्ढोतृमन्त्रस्य ग्रहभाग एवमाम्नातः। वाचस्पतेऽच्छिद्रया वाचा। अच्छिद्रया जुह्वा। दिवि देवावृधꣳ होत्रा-

मेरयस्व स्वाहेति। हे वाचस्पते अच्छिद्रया वाचा स्वराक्षर-सम्पूर्णेन मन्त्रेण अच्छिद्रया जुह्वा घृतसम्पूर्णया स्रुवा देवावृधं देवानां वर्धयित्रीं होत्रां होमक्रियां दिवि द्युलोके एरयस्व सर्व्वतः प्रेरय। एवमर्थमुद्दिश्य जुहोधीति स्वकीया वागाह। अन्यत् पूर्व्ववद्व्याख्येयम्॥

सप्तहोतृमन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयत सौम्यमध्वरꣳ सृजेयेति। स एतꣳ सप्तहोतारमपश्यत्। तं मनसानुद्रुत्याहवनीयेऽजुहोत्। ततो वै स सौम्यमध्वरमसृजत। [४] सोऽस्मात्सृष्टोऽपाक्रामत्। तं ग्रहेणागृह्णात्। तद् ग्रहस्य ग्रहत्वम्। दीक्षिष्यमाणः सप्तहोतारं मनसानुद्रुत्याहवनीये जुहुयात्। सौम्यमेवाध्वरꣳ सृष्ट्वाऽऽरभ्य प्रतनुते। ग्रहो भवति। सौम्यस्याध्वरस्य सृष्टस्य धृत्यै" इति। न विद्यतेऽध्वरो हिंसा यस्याग्निष्टोमादेः सोऽयमध्वरः। न हि तदनुष्ठायिनः काचिद्धिंसास्ति। तस्य सर्व्वकामस्यापि होतृत्वात्। स च सोमद्रव्येण निष्पाद्यत्वात् सौम्यः। सप्तहोतृमन्त्रश्चारण्यकाण्ड एवमाम्नातः। महाहविर्होता सत्यहविरध्वर्य्युः। अच्युतमाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गातेति। महाहविः सत्यहविरित्याद्या अयास्यान्ताः सप्तसङ्ख्याका महर्षयः तन्महर्षिस्वरूपा मन्त्रगता अत्र होत्रादयः यज्ञस्य सोमयागस्याभिगरौ सन्निहित उद्गातुः पुरस्तात् पश्चाच्च गृहीतः प्रस्तारप्रतिहारभागौ गायत इति प्रस्तोतृप्रतिहर्त्तारावभिगरौ। होताऽध्वर्य्युः आग्नीध्रो ब्रह्मा प्रस्तोतः प्रतिह-

र्त्तोद्गातेति सप्तसङ्ख्याका होमनिष्पादका: ऋत्विग इति । अयं मन्त्र: सप्तहोतेत्युच्यते । अस्य ग्रहभागस्त्वेवमाम्नात: । वाचस्पते हृद्विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम। वाचस्पति: सोममपात् । मा दैव्यस्तन्तुः च्छेदि मा मनुष्य: । नमो दिवे । नम: पृथिव्यै स्वाहेति । हे वाचस्पते हे हृद्विधे हृदयस्य विधात: चित्तप्रेरकेत्यर्थ: । हे नामन् सर्व्वजनसम्बद्धप्रणामयुक्त ते तुभ्यं नाम नमनं प्रणतिं विधेम कुर्म्म त्वं चास्माकं नामविधेर्देवानां मध्ये सम्यगिष्टवानिति प्रसिद्धं नामधेयं कुरु। अयं वाचस्पति: सोममपात् पीतवान् दैव्यस्तन्तु: मद्गृहे हवि:स्वीकारार्थमागतो देवसम्बन्धी सन्तानो माच्छेदि कदाचिदपि विच्छिन्नो माभूत् मम मनुष्यस्तन्तुः ऋत्विक्प्रवाहोऽपि विच्छिन्नो माभूत् द्यावापृथिवीभ्यां नमोस्तु । तमिममर्थमुद्दिश्य जुहुधीति स्वकीया वागाह । स्वाहाकारसहितेन दशहोत्रादीन् दीक्षार्थी जुहुयात्। सोमयागस्य दीक्षादित्वेन तदारम्भार्थ एवायं होम: । दीक्षाद्यङ्गेष्वग्नीषोमीयपश्वोरन्तर्भावाद्यद्यपि पृथगुपक्रमो नास्ति तथापि निरूढपश्वबन्धवायव्यादीनामन्तर्भावात्तदर्थ: पूर्व्वो मन्त्रहोम: । अन्यत् पूर्व्ववद्व्याख्येयम्॥

तदेवं चतुष्टयस्य क्रत्वर्थ: प्रयोग उक्त:। अथ सम्भारयजुर्मन्त्राणां क्रत्वर्थप्रयोगं विधत्ते । "देवेभ्यो वै यज्ञो न प्राभवत्। तमेतावच्छ: समभरन्। [५] यत्सम्भारा:। ततो वै तेभ्यो यज्ञ: प्राभवत्। यत्सम्भारा भवन्ति। यज्ञस्य प्रभूत्यै"

इति। योऽयमग्निष्टोमादिर्यज्ञः स देवेभ्यः पर्य्याप्तो नाभूत्। तत्साधनेषु वैकल्यसम्भवात् तदा देवास्तं यज्ञसम्भाराः सम्भारयजुराख्या मन्त्रा यावन्तः सन्ति तावद्भिः समभवन् सम्पूर्त्तिर्यथा भवति तथा पोषितवन्तः। ततस्तेभ्यो देवेभ्यः स यज्ञः पर्य्याप्तोऽभवत्। सम्भारयजूंषि चारण्यकाण्ड एवमाम्नातानि। अग्निर्यजुर्भिः। सविता स्तोमैः। इन्द्र उक्थामदैः। मित्रावरुणा वाशिषा। अङ्गिरसोऽधिष्ण्यैरग्निभिः। मरुतः सदोहविर्धानाभ्याम्। आपः प्रोक्षणीभिः। ओषधयो बर्हिषा। अदितिर्वेद्या। सोमो दीक्षया। त्वष्टेध्मेन। विष्णुर्यज्ञेन। वसव आज्येन। आदित्या दक्षिणाभिः। विश्वेदेवा ऊर्जा। पूषा स्वगाकारेण। बृहस्पतिः पुरोधया। प्रजापतिरुद्गीथेन। अन्तरिक्षं पवित्रेण। वायुः पात्रैः। अहꣳ श्रद्धयेति। अत्राग्निसवित्रादयो देवाः यजुस्तोमादीनि यज्ञे सम्भरणीयान्यङ्गानि एते देवास्तैः सम्भरणीयैः सहास्मिन् कर्माण्यागच्छन्त्विति वाक्यार्थः। उक्थामदशब्दः शस्त्रवाची यज्ञशब्दो हविःप्रक्षेपवाची स्वगाकारः शंयुवाकमन्त्रः पुरोधाग्रहणकाले पठनीयः। पुरोरुक्पवित्रशब्दो दशापवित्रवाची। अहं यजमानः श्रद्धया सहागच्छामि त एते सम्भारमन्त्राः प्रयोक्तव्याः। तेन यज्ञस्य प्रभूतिः पर्य्याप्तिर्भवति॥

सामान्यतो यज्ञसम्बन्धेन विहितानां सम्भारयजुषां पुनः स्थानविशेषं विधत्ते। "आतिथ्यमासाद्य व्याचष्टे। यज्ञमुखं वा आतिथ्यम्। मुखत एव यज्ञꣳ सम्भृत्य प्रतनुते"

इति । 'आतिथ्येष्टावग्नेरातिथ्यमसीत्यादिभिर्मन्त्रैर्निरुक्तं यद्धविः तदेतद्वेदिमध्य आसाद्य पूर्व्वोक्तान्यग्निर्यजुर्भिरित्यादीनि सम्भारयजूंषि पठनीयानि आतिथ्यहविषोऽनुष्ठास्यमानः सोमयज्ञमुखत्वान्मुखत एव सम्पूर्णावयवयज्ञं सम्पाद्य विस्तारयति ॥

अथ देवपत्न्याख्यान् मन्त्रान् फलार्थतया विधत्ते । "अयज्ञो वा एषः । योऽपत्नीकः । न प्रजाः प्रजायेरन् । पत्नीर्व्याचष्टे । यज्ञमेवाकः । प्रजानां प्रजननाय" इति । यो देवपत्नीमन्त्ररहितः स तावद्यज्ञ एव न भवति कुतस्तस्य फलपर्य्यन्तत्वात् । तस्मात्तादृशानुष्ठाने प्रजा नोत्पाद्यन्ते । अतस्तत्परिहाराय देवपत्नीमन्त्रान् विस्पष्टं पठेत् । ते च मन्त्रा आरण्यकाण्ड एवमाम्नायते । सेनेन्द्रस्य । धेना बृहस्पतेः । पथ्या पूष्णः । वाग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुक् । आदित्यानां जगती । विष्णोरनुष्टुक् । वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापतेरनुमतिः । मित्रस्य श्रद्धा । सवितुः प्रसूतिः । सूर्य्यस्य मरीचिः । चन्द्रमसो रोहिणी । ऋषीणामरुन्धती । पर्जन्यस्य विद्युत् । चतस्रो दिशः । चतस्रो वान्तरदिशः । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क्सूनृता च देवानां पत्नय" इति । देवजातावित्द्रादयः पतयः । सेनादयः पत्न्यः । दिग्विदिगादयोऽपि केषां विश्वेदेवानां पत्न्यः । एताः सर्व्वा आगत्य यज्ञमविकलं कुर्व्वन्त्विति वाक्यार्थः । एतेषां देवपत्नीमन्त्राणां पाठेन वैकल्प-

कृतमयज्ञत्वं परिहृत्य सम्पूर्णमेव यज्ञं करोति। तत्र पत्नीसम्बन्धात्प्रजानामुत्पत्तिर्भवति ॥

देवपत्नीनां सामान्येन यज्ञसम्बन्धं विधाय स्थानमभिधत्ते। "उपसत्सु व्याचष्टे। एतद्वै पत्नीनामायतनम्। स्व एवैना आयतनेऽवकल्पयति" [६] इति॥ या ते अग्ने याशयेत्यादिमन्त्रसाध्या आहुतय उपसदः तासां स्त्रीत्वविवक्षया स्त्रीलिङ्गेनोपसच्छब्देनातिदेशात् सामीप्यं पत्नीनामुचितस्थानम्। अत एता देवपत्नीः स्वोचित एव स्थाने यजमानः स्थापयति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥
॥ २ ॥

अथ तृतीयोऽनुवाकः।

द्वितीये चतुर्होतादिमन्त्राणां कृत्स्नार्थप्रयोगो दर्शितः। तत्रादौ तावदनुक्तकालविशेषाणां कर्म्मणां सामान्येन शुक्लपक्षमन्वयव्यतिरेकाभ्यां विधत्ते। "प्रजापतिरकामयत प्रजायेयेति। स तपोऽतप्यत। स त्रिवृतꣳ स्तोममसृजत। तं पञ्चदशस्तोमो मध्यत उदतृणत्। तौ पूर्व्वपक्षश्चापरपक्षश्चाभवताम्। पूर्व्वपक्षं देवा अन्वसृज्यन्त। अपरपक्षमन्वसुराः। ततो देवा अभवन्। परासुराः। यं कामयेत वसीयान्त्स्यादिति [१]। तं पूर्व्वपक्षे याजयेत्। वसीयानेव भवति। यं कामयेत पापी-

यान्त्स्यादिति। तमपरपक्षे याजयेत्। पापीयानेव भवति। तस्मात् पूर्व्वपक्षोऽपरपक्षात् कारुण्यतरः” इति। सिसृक्षुः प्रजापतिस्तत्साधनं तपोऽनुष्ठाय तपःसामर्थ्येन नवसङ्ख्याकाभिर्ऋग्भिरुपेतं त्रिवृन्नामकं स्तोममसृजत्। तस्य सृष्टं स्तोममपरः पञ्चदशस्तोमः केनापि वैरेण मध्ये विच्छिन्नमकरोत्। तावेतौ त्रिवृत्स्तोमस्य पूर्वोत्तरभागौ शुक्लकृष्णपक्षरूपेण परिणतौ। तत्र शुक्लपक्षं देवताः अनुमताभवन्नैश्वर्य्ययुक्तत्वात् पूर्व्वपक्षे यागं कुर्व्वाणो धनिको भवति। अपरपक्षे तु विपरीतः। तस्मादनुक्तकालविशेषेषु कर्म्मसु पूर्व्वपक्षः कारुण्यतरः अतिशयेन प्रशस्तः॥

अथ प्रसङ्गात् स्रष्टुः प्रजापतेः सर्व्वात्मकत्वेन स्तुवन् तदनुसन्धानं पुरुषार्थतया विधत्ते। “प्रजापतिर्वै दशहोता। चतुर्होता पञ्चहोता। षड्ढोता सप्तहोता। ऋतवः संवत्सरः [२]। प्रजाः पशव इमे लोकाः। य एवं प्रजापतिं बहोर्भूयाꣳसं वेद। बहोरेव भूयान् भवति” इति। प्रजापतेर्दशहोतृप्रभृतिलोकपर्य्यन्तं सर्व्ववस्त्वात्मकत्वेनासौ बहोरप्यतिशयेन बहुत्वं तादृशं विदित्वा ध्यानं कुर्व्वन्। स्वयमपि तादृशो भवति॥

अथ चतुर्होतृमन्त्रस्य पुरुषार्थप्रयोगं विधातुं प्रस्तौति। प्रजापतिर्देवासुरानसृजत। स इन्द्रमपि नासृजत। तन्देवा अब्रुवन्। इन्द्रं नो जनयेति। सोऽब्रवीत्। यथाहं युष्माꣳस्तपसाऽसृक्षि। एवमिन्द्रं जनयध्वमिति [३]। ते तपोऽतप्यन्त। त आत्मन्निन्द्रमपश्यन्। तमब्रुवन्। जायस्वेति। सोऽब्रवीत्।

किं भागधेयमभिजनिष्य इति। ऋतून्त्संवत्सरम्। प्रजाः पशून्। इमाँल्लोकानित्यब्रुवन्। तं वै माहुत्या प्रजनयतेत्यब्रवीत् [४]। तं चतुर्होत्रा प्राजनयन्" इति। प्रजापतिर्देवानसुरांश्च सृष्ट्वा देवस्वामिनमिन्द्रं नासृजत। अपिशब्दादसुरस्वामिनमपि नासृजत। इन्द्रसृष्ट्यर्थं देवैः प्रार्थितः सृष्टिसाधनं तप उपदिदेश। ततो देवास्तपस्तप्त्वा स्वहृदय एवावस्थितमिन्द्रं दृष्ट्वा जायस्वेति प्रार्थितवन्तः। इन्द्रश्च भागधेयमाकाङ्क्षन् ऋत्वादिलोकपर्य्यन्तं जगत् स्वभोग्यत्वेन देवेभ्यो लब्ध्वा स्वोत्पादनहेतुमाहुतिमुपदिदेश। ते च देवाश्चतुर्होत्रा हुत्वा तमिन्द्रमजनयन्॥

इन्द्राणीं विधत्ते। "यः कामयेत वीरो म आजायेतेति। स चतुर्होतारं जुहुयात्। प्रजापतिर्वै चतुर्होता। प्रजापतिरेव भूत्वा प्रजायते। जजन*दिन्द्रमिन्द्रियाय स्वाहेति ग्रहेण जुहोति। आस्य वीरो जायते। वीरꣳ हि देवा एतयाऽऽहुत्या प्राजनयन्" इति। वीरो लौकिकवैदिककर्म्मसु शूरः पुत्रः पृथिवी होतेत्यादिरुक्तहस्तिरूपत्रकोत्यन्तश्चतुर्होता, उपरितन इन्द्रियाय स्वाहेत्यन्तो ग्रहभागः, तेन सर्व्वेणापि चतुर्होतारं जुहुयादिति होमो विहितः। जजनदिन्द्रमित्यादिग्रहभागान्त एकहोम इत्येकः पक्षः। होतृभागेन ग्रहभागेन चाहुतिद्वयं वाक्याभ्यां विधीयत इत्यपरः पक्षः। तदुभयं सूत्रकार आह। यः कामयेत वीरो जायेतेति। स चतुर्होतारं जुहुयाच्चतुर्गृहीतेनाज्येनार्द्धं वा पूर्व्वेण ग्रहेणार्द्धमुत्तरेणेति॥

* प्रजनदिति मुद्रितब्राह्मणपुस्तकपाठः।

अथ क्रतुमध्य एव होमेन पशुकामस्येत्यादिवत् पुरुषार्थं पञ्चहोतृमन्त्रेण ग्रहहोमं विधत्ते। "आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्द्धन्त। वयं पूर्व्वे सुवर्गं लोकमियाम वयं पूर्व्व इति [५]। त आदित्या एतं पञ्चहोतारमपश्यन्। तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः। ततो वै ते पूर्व्वे सुवर्गं लोकमायन्। यः सुवर्गकामः स्यात्। स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्। संवत्सरो वै पञ्चहोता। संवत्सरः सुवर्गो लोकः। संवत्सर एवर्तुषु प्रतिष्ठाय। सुवर्गं लोकमेति" इति। प्रथमतः स्वर्गं प्राप्तु*मिमे मत्सरग्रस्ता आदित्याः यागमध्ये प्रातरनुवाकाख्यस्त्वपाठात् पुरा पञ्चहोत्रा हुत्वा प्रतिस्पर्धिभ्योऽङ्गिरोभ्यः पूर्व्वमेव प्राप्ताः। अतोऽन्योऽपि तथा हुत्वा स्वर्गं प्राप्नोति। संवत्सरस्य सर्व्वात्मकप्रजापतिरूपत्वेन पञ्चहोतृत्वं स्वर्गलोकरूपत्वञ्च द्रष्टव्यम्॥

अथोक्तहोमकर्त्ताऽऽदित्यप्रशंसामुखेन तदादित्यध्यानं फलाय विधत्ते। "तेऽब्रुवन्नङ्गिरस आदित्यान् [६]। क्व स्थ। क्व वस्सद्भ्यो हव्यं वक्ष्याम इति। छन्दःस्वित्यब्रुवन्। गायत्रियां त्रिष्टुभि जगत्यामिति। तस्माच्छन्दःसु सद्भ्य आदित्येभ्यः। आङ्गीरसीः प्रजा हव्यं वहन्ति। वहन्त्यस्मै प्रजा बलिम्। एतमप्रतिख्यातं गच्छति। य एवं वेद" इति। ते पूर्व्वोक्ताः प्रथमतः स्वर्गप्राप्तिरहिता अङ्गिरस आदित्यान् पप्रच्छुः। हे आदित्याः कुत्र यूयं स्थिताः युष्मदर्थं हव्यं बोढुकामा वयं कुत्र स्थितेभ्यो

---

* गन्तुमिति F चिह्नितपुस्तकपाठः।

युष्मभ्यं हविर्वहनं करिष्याम इति। ते चादित्याः गायत्र्यादिछन्दःसु वयं गूढा स्थिता इति अब्रुवन्। तस्मादङ्गिरोगोत्रे समुत्पन्नाः प्रजा गायत्र्यादिछन्दांस्युच्चार्य्य तेष्वादित्यान् भावयन्तः तेभ्यो हव्यं पप्रच्छन्ति। एवमावृत्तान्तं यो वेद अस्मै वेदित्रे सर्व्वाः प्रजाः प्रजां वहन्ति। केनाप्यप्रतिख्यातमेतमादित्यसमूहमसौ वेदिता प्राप्नोति। अतो य एवं वेदेति नात्र प्रशंसापरम्। आदित्यध्यानविवक्षयोक्तफलप्राप्तिपरम्। एवं सर्व्वत्र द्रष्टव्यम्॥

प्रकारान्तरेणादित्यप्रशंसामुखेन ध्यानं विधत्ते। "द्वादश मासाः पञ्चर्त्तवः॥ त्रय इमे लोकाः। असावादित्य एकविंशः। एतस्मिन् वा एष श्रितः। एतस्मिन् प्रतिष्ठितः। य एवमेतं श्रितं प्रतिष्ठितं वेद। प्रत्येव तिष्ठति" [७] इति। मासाद्यपेक्षया योऽयमेकविंश आदित्यः स एष एतस्मिन् प्रकृते पञ्चहोतृमन्त्रे श्रितः। तद्विषयानुष्ठानयुक्तत्वात्। किञ्च एतं पञ्चहोतृमन्त्रे आश्रितं प्रतिष्ठितञ्च यो वेद स प्रतितिष्ठत्येव॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥ ३ ॥

अथ चतुर्थोऽनुवाकः।

तृतीये चतुर्होतृमन्त्रग्रहभागयोः पुरुषार्थप्रयोगो विहितः। चतुर्थे जगत्सृष्टिकथनमुखेन होतृमन्त्रप्रशंसा क्रियते। तत्र प्रथमं तावद्दशहोतारं प्रशंसति। "प्रजापतिरकामयत प्रजाये-

येति। स एतं दशहोतारमपश्यत्। तेन दशधात्मानं विधाय। दशहोत्राऽतप्यत। तस्य चित्तिः स्रुगासीत्। चित्तमाज्यम्। तस्यैतावत्येव वागासीत्। एतावान् यज्ञक्रतुः'' इति। प्रजापतिः स्रष्टुकामः तत्साधनं वेदेषु विचार्य्य दशहोतृमन्त्रं दृष्ट्वा तन्मन्त्रोक्तप्रकारेण स्वस्वरूपमेव चित्तिविचित्तवागाद्यवयवैर्दशधा दशप्रकारं जातेन दशहोतृमन्त्रेण तपः कृतवान्। तपःशब्दोऽयं पर्य्यालोचनरूपं मानसं यज्ञं कृतवानित्यर्थः। तस्य मानसयज्ञप्रवृत्तस्य वाह्यसाधनाभावाद्येयं विक्रिया चित्तिर्निर्विकल्पकज्ञानहेतुभूतान्तःकरणवृत्तिः सैव स्रुगासीत्। यत्तु चित्तं सविकल्पकज्ञानसाधनमन्तःकरणं तदेवाज्यम्। एवमुत्तरत्रापि योज्यम्। तदेवं प्रगृह्य प्रदर्श्यते। तस्य प्रजापतेस्तदानीं दशहोतृमन्त्ररूपा यावत्युच्चार्य्यते एतावत्येव वागासीत्। इदमेव पुनः पुनरावर्त्तयति। तत्रान्यं वाग्व्यापारं न करोतीत्यर्थः। तस्मिन्मन्त्रे यावानर्थः प्रतीयते। एतावानेव तदीयो यज्ञक्रतुः। ननु वाह्यानुष्ठानरूपो यज्ञशब्दो हविस्त्यागवाची। क्रतुशब्दो हविस्त्यागयुक्तकृत्स्नप्रयोगं वक्ति। तदेवं प्रजापत्यनुष्ठानवाचित्वात् प्रशस्तोऽयं दशहोतृमन्त्रः॥

अथ चतुर्होतृमन्त्रं प्रशंसति। "स चतुर्होतारमसृजत। सोऽमन्दत्[१]। असृचि वा इममिति। तस्य सोमो हविरासीत्। स चतुर्होत्राऽतप्यत। सोऽताम्यत्। स भूरिति व्याहरत्। स भूमिमसृजत। अग्निहोत्रं दर्शपूर्णमासौ यजूꣳषि। स द्वितीयमतप्यत। सोऽताम्यत्। स भुव इति व्याहरत् [२]।

सोऽन्तरिक्षमसृजत। चातुर्मास्यानि सामानि। स तृतीयमत-प्यत। सोऽताम्यत्। स सुवरिति व्याहरत्। स दिवमसृजत। अग्निष्टोममुक्थ्यमतिरात्रमृचः। एता वै व्याहृतय इमे लोकाः। इमान् खलु वै लोकाननुप्रजाः पशवश्छन्दाꣳसि प्राजायन्त। य एवमेताः प्रजापतेः प्रथमा व्याहृतीः प्रजाता वेद [३]। प्र प्रजया पशुभिर्मिथुनैर्जायते" इति। स प्रजापतिर्दशहोतृ-मन्त्रानुष्ठानेन सत्यसङ्कल्पः सन् स्वसङ्कल्पेन चतुर्होतृमन्त्रमसृ-जत् तत्र तमिमं मन्त्रं सृष्टवानस्मीत्येवं दृष्टवान्। तस्य मन्त्रोप-युक्तस्य प्रजापतेः सङ्कल्पमात्रेण सोमवल्लीरसो हविरासीत्। स पुनश्चतुर्होतृमन्त्रेण सोमाख्यं हविः प्रक्षिप्य होमानुष्ठानरूपं तपोऽकुरुत। तेन व्यापारेण श्रान्तो दीर्घस्वरवाद्यं कृतवान्। तदनुकरणरूपो भूरितिशब्दः प्रजापतिना व्याहृतत्वात् प्र-थमलोकप्रकाशकव्याहृतिरूपो मन्त्र इत्युच्यते। तेन मन्त्रेण ज्ञातां तदर्थरूपां भूमिं सङ्कल्पयासृजत। ततः सङ्कल्पादेवाग्नि-होत्रादिकमसृजत। एवं द्वितीयतृतीयपर्यायौ व्याख्यातव्यौ। एवमुक्तेन प्रकारेणैता भूरादिव्याहृतय एव लोकत्रयरूपेण परिणताः। तानिमान् लोकाननुसृत्य प्रजादिकमुत्पन्नम्। एत-द्वेदनस्य प्रजादिप्राप्तिः फलम्॥

अथ पञ्चहोतृमन्त्रं प्रशंसति। "स पञ्चहोतारमसृजत। स हविर्नाविन्दत। तस्मै सोमः स्तनुवं प्रायच्छत्। एतत्ते हविरिति। स पञ्चहोत्रा तप्यत। सोऽताम्यत्। स प्रत्यङ्ङबाध-त। सोऽसुरानसृजत। तदस्याप्रियमासीत् [४]। तद्दुर्वर्णꣳ

हिरण्यमभवत्। तद्दुर्वर्णस्य हिरण्यस्य जन्म। स द्वितीयमतप्यत। सोऽताम्यत्। स प्राङबाधत। स देवानसृजत। तदस्य प्रियमासीत्। तत्सुवर्णꣳ हिरण्यमभवत्। तत्सुवर्णस्य हिरण्यस्य जन्म। य एवꣳ सुवर्णस्य हिरण्यस्य जन्म वेद [५]। सुवर्ण आत्मना भवति। दुर्वर्णोऽस्य भ्रातृव्यः। तस्मात्सुवर्णꣳ हिरण्यं धार्य्यम्। सुवर्ण एव भवति। एनं प्रियं गच्छति नाप्रियम्" इति। स प्रजापतिः पञ्चहोतृमन्त्रं सृष्ट्वा तेन होतुमलब्धे हविषि सोमस्य शरीरं हविष्ट्वेन लब्धः। पञ्चहोतृमन्त्रेण तं सोमं हुत्वा श्रान्तवान्। श्रान्तः सन् असौ प्रत्यङबाधत निरुद्धप्राणवृत्तिः सन् शरीर एव महतीं पीडां प्राप्तवान्। तस्यामुपद्रववेलायामसुरानसृजत। तेषामसुराणां सृष्टिहेतुभूतं तत्पीडायुक्तं शरीरमस्य प्रजापतेरप्रियमासीत्। तच्चाप्रियं शरीरं दुर्वर्णहिरण्यरूपेण निष्पन्नम्। न हिरण्यशब्दः सुवर्णलोकवाची अत्र। तत्र दुर्वर्णविशेषणात् रजतसीसताम्रादिवाची भवति। तदेवं रजतताम्रादिरूपस्य लोहस्य लोके जन्म सम्पन्नम्। स प्रजापतिर्द्वितीयवारं पञ्चहोतृमन्त्रेण सोमद्रव्यहोमरूपं तपः कृत्वा श्रान्तः प्राङबाधत। अतिप्राणत्वात् श्वासनिरोधमन्तरेण समयमन्तरे ध्यातवान्। तस्मिन्नवसरे देवानसृजत। ते देवाः स्वशरीरसौन्दर्य्येण मणिमुक्ताद्याभरणेन सुवर्णेन च युक्ता अभवन्। तद्वैपरीत्येन भ्रातृव्यो दुर्वर्णो भवति। यस्मादेव सुवर्णं प्रशस्तं तस्मात् पुरुषेण हस्तकर्णादौ सुवर्णाभरणं धार्य्यते। तेन लोकद्वयेऽपि रमणीयो भवति। एनं सुवर्णधारिणं पुरुषं

सत्काररूपं प्रियमेव प्राप्नोति न तु कदाचिदपि तिरस्कारादिरूपमप्रियम् ॥

अथ सप्तहोतृमन्त्रं प्रशंसति। "स सप्तहोतारमसृजत। स सप्तहोत्रैव सुवर्गं लोकमैत्" इति। स प्रजापतिः सप्तहोतृमन्त्रं सृष्ट्वा तेन हुत्वा स्वर्गं प्राप्तवान्। यद्यपि प्रजापतौ नैतत्फलं युक्तं तथाप्याचारप्रवर्त्तकत्वेन स्वर्गलोकं गतवानिति नास्ति विरोधः ॥

होतृमन्त्रप्रशंसाप्रसङ्गेन सामवेदगतान् स्तोमान् प्रशंसति। "त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान् प्राणुदत। त्रयस्त्रिꣳशेन प्रत्यतिष्ठत्। एकविꣳशेन रुचमधत्त [६]। सप्तदशेन प्राजायत। य एवं विद्वान् सोमेन यजते। सप्तहोत्रैव सुवर्गं लोकमेति। त्रिणवेन स्तोमेनैभ्यो लोकेभ्यो भ्रातृव्यान् प्रणुदते। त्रयस्त्रिꣳशेन प्रतितिष्ठति। एकविꣳशेन रुचन्धत्ते। सप्तदशेन प्रजायते। तस्मात् सप्तदशः स्तोमो न निर्हृत्यः। प्रजापतिर्वै सप्तदशः। प्रजापतिमेव मध्यतो धत्ते प्रजात्यै" ॥७॥ इति। स प्रजापतिस्त्रिणवादिस्तोमैरसुरनिराकरणादिफल ईदृशः आसीत्तस्मादन्योऽपि एवं ज्ञात्वा सोमेन यजमानो दीक्षाकालीनसप्तहोतृहोमेन स्वर्गं प्राप्नोति। त्रिणवादिस्तोमैर्भ्रातृव्यनिराकरणादिफलञ्च प्राप्नोति। यस्मात् सप्तदशस्तोमः प्रजोत्पत्तिहेतुः तस्मादयं सोमयागाद्बहिर्न निःसारणीयः। * किन्तु यागमध्ये एवं प्रयोक्तव्यः। तस्य च स्तोमस्य सप्तदशा-

* करणीय इति वा F चिह्नितपुस्तकपाठः।

चरात्मकस्य प्रजापतिसाम्यात् प्रजापतिमेव मध्ये स्थापयति तच्च प्रजोत्पत्त्यर्थं भवति॥

अत्र मीमांसातृतीयाध्यायस्य चतुर्थपादे चिन्तितम्।

हिरण्यं वर्णवद्धार्य्यं क्रत्वङ्गं भरणं भवेत्।
हिरण्यसंस्कृतिर्वात्र वर्णो वोत पुमर्थता॥
वैदिकत्वात्क्रतुस्मृत्या तदङ्गं कर्म्मकारके।
प्राधान्यात्संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात्॥
अनारभ्य श्रुतित्वेन नियता न क्रतुस्मृतिः।
अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वास्तु रात्रिवत्॥

अनारभ्य श्रूयते। तस्मात् सुवर्णꣳ हिरण्यं धार्य्यं सुवर्ण एव भवतीति। तत्र यदेतच्छोभनवर्णोपेतं हिरण्यधारणं तस्य वैदिकक्रियारूपत्वेन क्रतुस्मारकत्वात् क्रत्वङ्गधारणमित्येकः पक्षः। क्रत्वङ्गत्वेऽपि नारादुपकारकं किन्तु क्रतुगतं हिरण्यधारणेन संस्क्रियते। धार्य्यमित्यत्र ण्यत्प्रत्ययस्य कर्म्मणि विहितत्वेन कर्म्मकारकस्य हिरण्यस्य प्राधान्यावगमादिति द्वितीयः पक्षः। वर्णविशिष्टधारणविधाने गौरवात् धारणसहितं हिरण्यमनूद्य शोभनवर्णमात्रं विधेयमिति तृतीयः पक्षः। त्रेधापि क्रत्वर्थो विधिः। न तु पुरुषार्थ इति प्राप्ते ब्रूमः। यद्धि क्रतुप्रकरणे श्रुतं तस्य अस्ति नियमेन क्रतुस्मारकत्वम्। इदं त्वनारभ्याधीतम्। न चात्र हिरण्यं जुह्वादिवत् क्रतावव्यभिचरितम्। येन क्रतुस्मृतिर्नियम्येत। ननु संस्कार्य्यत्वात् यथानुपपत्त्या क्रतुप्रवेशः स्यात्। नहि धारणेन संस्कृतस्य हिरण्यस्य लौकिकः कश्चिदुपयोगोऽस्तीति चेत्

न। क्रतावप्युपयोगाभावात्। क्रतूपयोगोऽपि कल्प्यत इति चेत् न। क्रतूपयोगित्वेन संस्कार्य्यत्वं तेन च क्रतूपयोग इत्यन्योन्याश्रयत्वात्। न च कर्मकारकत्वात् संस्कार्य्यत्वम्। परसमवेतक्रियाफलशालित्वमात्रस्य कर्मलक्षणत्वात्। अतः क्रतौ नियन्तुमशक्यत्वात् पुरुषार्थमिदं धारणं न ह्यत्र फलाभावः। विश्वजिन्न्यायेन स्वर्गस्य कल्प्यत्वात्। अथवा रात्रिसत्रे यथा वाक्यशेषेणार्थवादेन श्रुता प्रतिष्ठा फलत्वेन कल्पिता। तथात्रापि सुवर्ण एव भवति। दुर्वर्णोऽस्य भ्रातृव्य इत्यर्थवादगतं फलमस्तु। तस्मात् पुरुषार्थो धारणविधिः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ४॥

अथ पञ्चमोऽनुवाकः।

चतुर्थे होतृमन्त्रप्रशंसा कृता। पञ्चमे दक्षिणाप्रतिग्रहमन्त्रानुवाकव्याख्यानं क्रियते। स चानुवाक आरण्यककाण्ड एवमाम्नातः। "देवस्य त्वा सवितुः प्रसवे अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते कामदक्षिणा। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु" इति। सोऽयं

तस्मिन्ननुवाक एको मन्त्रः। हे प्रतिगृह्यमाणद्रव्य सवितुर्देवस्य प्रसवे प्रेरणे सति अश्विसम्बन्धिभ्यां बाहुदण्डाभ्यां पूष्णसम्बन्धिभ्यां हस्ताभ्यां त्वां प्रतिगृह्णामि। हे दक्षिणे देवि वरुणो राजा हिरण्यरूपां त्वां अग्नये प्रापयतु। तेनाग्निप्रापणेन प्रतिग्रहदोषाभावात् अहममृतत्वमस्यां नरकाभावरूपं प्राप्नुयाम्। इयं स्वदक्षिणा दात्रे वयः पक्षी भूत्वा दातारं स्वर्गं नयत्वित्यर्थः। प्रतिग्रहीत्रे मह्यं मयः सुखकरमस्तु। कः प्रजापतिः इदं द्रव्यं कस्मै प्रजापतये दत्तवान्। अन्तर्यामिरूपेण दातृप्रतिग्रहीत्रोः प्रेरकत्वात् तथा कामः दाता कामः प्रतिग्रहीता। ततो हे दक्षिणे समुद्रसमानं कामं प्रविश्य कामेन निमित्तेन त्वां प्रतिगृह्णामि। हे मद्धृदयवर्त्तिकामदेव तद्द्रव्यं तुभ्यं भवतु। हे काम ते त्वमेवैषा दक्षिणा प्रवृत्ता। अङ्गिरोगोत्रे समुत्पन्न उत्तानाख्यो महर्षिस्त्वां प्रतिगृह्णातु॥

अथ वस्त्रादिद्रव्यविषयाः षोडशमन्त्रास्तस्मिन्ननुवाक एवमाम्नाताः। "सोमाय वासः। रुद्राय गाम्। वरुणायाश्वम्। प्रजापतये पुरुषम्। मनवे तल्पम्। त्वष्ट्रेऽजाम्। पूष्णोऽविम्। निर्ऋत्या अश्वतरगर्दभौ। हिमवते हस्तिनम्। गन्धर्व्वाप्सरोभ्यः स्रगलङ्करणे। विश्वेभ्यो देवेभ्यो धान्यम्। वाचेऽन्नम्। ब्रह्मण ओदनम्। समुद्रायापः। उत्तानायाङ्गिरसाय यानः। वैश्वानराय रथम्" इति। एतेषु सर्व्वेषु मन्त्रेषु देवि दक्षिणे इत्यन्तः पूर्व्वानुषङ्गः। तेनामृतत्वमित्यादिरुत्तरानुषङ्गः। तत्र च प्रतिग्रहमन्त्रस्योत्तरानुषङ्गात्पूर्व्वं काचिदृगेवमाम्नाता।

"वैश्वानरः प्रत्नथा नाकमारुहत्
दिवः पृष्ठं भन्दमानः सुमन्मभिः।
स पूर्व्ववज्जनयज्जन्तवे धनं
समानमज्मा परियाति जागृविः" इति॥

वैश्वानराख्यो देवः प्रत्नथा पुरातनशरीरधारी सन् स्वर्ग-मारूढवान्। स च दिवः पृष्ठं द्युलोकस्योपरिभागं मन्मभिर्म-ननविशेषैर्भन्दमानः कल्याणं कुर्व्वन् वर्त्तते। अयं यजमान इमां दक्षिणां दत्तवानित्येवं देवानामग्रे स्मारयतीत्यर्थः। स वैश्वा-नरो जन्तवे प्राणिरूपाय यजमानाय धनं पूर्व्ववज्जनयत्। यत्र यजमानः पुरा यथा दक्षिणां दत्तवान् तथैव तदनुरूपं फलं जनयति। स वैश्वानरो जागृविः सावधानः सन् अज्मा स्वर्गे गमनशीलः समानं परियाति यावत् दक्षिणार्थं द्रव्यं दत्तं तेन सदृशं तद्योग्यं फलं परिप्रापयति। अस्या ऋच उपरि अनु-षङ्गाभ्यां सह पूर्व्वोक्त एव रथविषयो मन्त्रः। तस्मिन्ननुवाक एवमाम्नातः। "राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वान-राय रथम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे। क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृ-ह्णामि। कामैतत्ते। एषा ते कामदक्षिणा। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु" इति। अनुषङ्गौ योजयित्वा प्रदर्शयितुं पुनः पाठः। सोयमनुवाकोऽत्र व्याख्येयः॥

तत्रादौ प्रतिग्रहप्रकारं विधत्ते। "देवा वै वरुणमयाज-

यन्। स यस्यै यस्यै देवतायै दक्षिणामनयन्। तामव्लीनात्। तेऽब्रुवन्। व्यावृत्य प्रतिगृह्णाम। तथा नो दक्षिणा न व्लेष्य-तीति। ते व्यावृत्य प्रत्यगृह्णन्। ततो वै तां दक्षिणां नाव्ली-नात्। य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति। नैनं दक्षिणा व्लीनाति'' [१] इति। यदा देवाः स्वयमृत्विजो भूत्वा वरुणं याजितवन्तः तदा वरुण एकैकस्यै देवतायै दक्षिणां दत्त्वा तां देवतां विशीर्णामकरोत्। ते च देवास्तत्परिहारोपाय यमन्यं व्यवधानं निश्चित्याग्नये हिरण्यं सोमाय वास इत्येवं तत्तद्द्रव्येषु देवतान्तरव्यवधानेन स्वयं व्यावृत्ता भूत्वा प्रत्यगृह्णन्। ततो व्य-वधानादियं दक्षिणा तान् देवान् शीर्णानकरोत्। अत्रान्योऽप्ये-तैर्मन्त्रैर्देवतान्तरव्यवधानं कृत्वा प्रतिगृह्णन् विशीर्णो नैव भवेत्॥

अथ मन्त्रेषु द्रव्याधिपतीनां देवानामेव प्रतिग्रहीतृत्वेन निर्देशात्तद्व्यवधाने न प्रतिग्रहो न तु साक्षादित्यनुमन्त्रण-मभिप्रायं दर्शयति। "राजा त्वा वरुणो नयतु देवि दक्षिणे-ऽग्नये हिरण्यमित्याह। आग्नेयं वै हिरण्यम्। स्वयैवैनद्देवतया प्रतिगृह्णाति। सोमाय वास इत्याह। सौम्यं वै वासः। स्वयैवै-नद्देवतया प्रतिगृह्णाति। रुद्राय गामित्याह। रौद्री वै गौः। स्वयैवैनान्देवतया प्रतिगृह्णाति। वरुणायाश्वमित्याह [२]। वारुणो वा अश्वः। स्वयैवैनं देवतया प्रतिगृह्णाति। प्रजापतये पुरुषमित्याह। प्राजापत्यो वै पुरुषः। स्वयैवैनं देवतया प्रति-गृह्णाति। मनवे तल्पमित्याह। मानवो वै तल्पः। स्वयैवैनं देवतया प्रतिगृह्णाति। उत्तानायाङ्गीरसायान इत्याह। अयं

वा उत्तान आङ्गीरसः [३]। अनयैवैनम् प्रतिगृह्णाति'' इति। हिरण्यस्याग्निरेतोरूपत्वमाधानप्रकरणे श्रुतम्। तस्मात् तदाऽग्नये हिरण्यं वस्त्रादीनां सोमादिसम्बन्धः शाखान्तरगतार्थवादेषु प्रसिद्ध इत्येवं वैशब्देन सूच्यते। केषुचिन्मन्त्रेषु व्याख्यानस्य व्युत्पादितत्वात् अन्येष्वपि त्वष्टेऽजामित्यादिषु व्याख्यानमुन्नेयम्। शकटमन्त्रे योऽयमुत्तानाख्यो देवस्तस्य भूमित्वेन प्रशंसनाद् भूम्यैव शकटं परिगृहीतं भवति॥

रथप्रतिग्रहे वैश्वानरप्रत्नयेत्येतामृचं विधत्ते। "वैश्वानर्य्यर्चा रथं प्रतिगृह्णाति। वैश्वानरो वै देवतया रथः। स्वयैवैनं देवतया प्रतिगृह्णाति'' इति॥

अश्यामित्यस्योत्तमपुरुषस्य तात्पर्य्यं दर्शयति। "तेनामृतत्वमश्यामित्याह। अमृतमेवात्मन्धत्ते'' इति॥

पक्षिवाचकस्य वयःशब्दस्य तात्पर्य्यं दर्शयति। "वयो दात्र इत्याह। वय एवैनं कृत्वा। सुवर्गं लोकं गमयति'' इति। पक्षिवदुत्पतनसमर्थमेनं यजमानं कृत्वेत्यर्थः॥

मयशब्दवाच्यस्य मङ्गलस्य सुखसम्बन्धप्रार्थनया स्वस्य परिरक्षा क्रियत इत्येतत्तात्पर्य्यं दर्शयति। "मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह [४]। यद्वै शिवम्। तन्मयः। आत्मन एवैषा परीत्तिः'' इति॥

परीत्तिः परिदानं रक्षा। कशब्दस्य प्रजापतिवाचकत्वं दर्शयति। "क इदं कस्मा अदादित्याह। प्रजापतिर्वै कः। स प्रजापतये ददाति'' इति॥

दानप्रतिग्रहीत्रोः काम एव प्रेरक इत्येतत्प्रसिद्ध इति द-र्शयति। "कामः कामायेत्याह। कामेन हि ददाति। कामेन प्रतिगृह्णाति" इति॥

कामस्य प्रेरकत्वे सति अन्वयव्यतिरेकाभ्यां दातृत्वं प्रति ग्रहीतृत्वञ्च कामस्यैव पर्यवस्यतीत्येतद्दर्शयति। "कामो दाता कामः प्रतिग्रहीतेत्याह [५]। कामो हि दाता। कामः प्र-तिग्रहीता" इति॥

अवसानराहित्येन समुद्रसाम्यं दर्शयति। "काम॒ᳪ समुद्र-माविशेत्याह। समुद्र इव हि कामः। नैव हि कामस्यान्तो-ऽस्ति। न समुद्रस्य" इति॥

कामेनेतिनिमित्तत्वनिर्देशः परलोके काम्यमानफलसि-द्ध्यर्थ इत्येतद्दर्शयति। "कामेन त्वा प्रतिगृह्णामीत्याह। येन का-मेन प्रतिगृह्णाति। स एवैनममुष्मिँल्लोके काम आगच्छति" इति॥

कामं सम्बोध्य द्रव्यसमर्पणं दक्षिणात्वनिर्देशस्य परलोके कामदेवतायामेव दक्षिणाफलं वाञ्छयेत्येतद्दर्शयति। "कामै-तत्त एषा ते काम दक्षिणेत्याह। काम एव तद्यजमानोऽमु-ष्मिँल्लोके दक्षिणामिच्छति। न प्रतिग्रहीतरि" इति। न हि यजमानेन सह प्रतिग्रहीता स्वर्गं वाञ्छति। येन यजमानः प्रतिग्रहीतरि फलमिच्छेत्। कामदेवतायास्तु तत्र विद्यमानतया यजमानस्य दक्षिणाफलेच्छा युक्ता॥

अत्र प्रतिग्रहमन्त्रतात्पर्यं सङ्क्षिप्य दर्शयति। "य एवं वि-द्वान्दक्षिणां प्रतिगृह्णाति। अनृणामेवैनां प्रतिगृह्णाति" [६]

इति। य एवमुक्तप्रकारं विद्वान् एतैर्मन्त्रैर्देवतान्तरव्यवधानं कृत्वा यः प्रतिगृह्णाति स एनां दक्षिणामृणरहितामेव प्रतिगृह्णाति। अन्यथा परद्रव्यस्वीकारादृणवती दक्षिणा स्यात्॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

अथ षष्ठोऽनुवाकः।

पञ्चमे प्रतिग्रहमन्त्रा व्याख्याताः षष्ठे द्वादशाहभागगतस्य दशमरात्रस्य दशमेऽहनि होत्रमन्त्रान्विधित्सुरादौ तावत्सर्पराज्ञीभिर्ऋग्भिः स्तुतिं विधत्ते। "अन्तो वा एष यज्ञस्य। यद्दशममहः। दशमेऽहन्त्सर्पराज्ञिया ऋग्भिः स्तुवन्ति। यज्ञस्यैवान्तं गत्वा। अन्नाद्यमवरुन्धते" इति। यद्यपि दशमादह्नादूर्द्ध्वभाव्युदयनीयाख्याहे द्वादशाहयज्ञस्यान्तः तथाप्युपान्तत्वादन्तत्वोपचारः। सर्पराज्ञी भूमिः तस्याः सम्बन्धिन्य ऋचो भूमिर्भूम्नेत्याद्याः ताभिः स्तुतौ सत्यां द्वादशाहयज्ञस्यान्तं प्राप्य समीचीनमन्नं प्राप्नोति॥

तस्यामृच्यग्निमन्नादमन्नाद्यायेत्याम्नानात ऋक्सङ्ख्यां विधत्ते। "तिसृभिः स्तुवन्ति। त्रय इमे लोकाः। एभ्यः एव लोकेभ्योऽन्नाद्यमवरुन्धे" इति। तास्वृक्षु आयं गौः पृश्निरक्रमीदिति यः पृश्निशब्दयोगः तं प्रशंसति। "पृश्निवतीर्भवन्ति। अन्नं वै पृश्नि [१] अन्नमेवावरुन्धते" इति। पृश्निशब्द आस्वृक्षु

विद्यत इति पृश्निवतीशब्दः। अन्नस्य श्वेतवर्णत्वात् पृश्निशब्द-वाच्यत्वम्॥

आस्तुषु गानवेलायां प्रस्तावोद्गीतप्रतिहारभागेषु मानस-गानं विधत्ते। "मनसा प्रस्तौति। मनसोद्गायति। मनसा प्रतिहरति। मन इव हि प्रजापतिः। प्रजापतेराप्त्यै" इति। जगत्सृष्टेः पूर्व्वमव्यक्तरूपत्वात् प्रजापतेर्मनःसाम्यत्वम्॥

ऋचां सर्पराज्ञीसम्बन्धं प्रशंसति। "देवा वै सर्पाः। तेषा-मियꣳ राज्ञी। यत्सर्पराज्ञिया ऋग्भिः स्तुवन्ति। अस्यामेव प्रतितिष्ठन्ति" [२] इति। सर्पन्ति गच्छन्तीति देवाः सर्पास्तेषां सर्पाणां देवानां राज्ञी भूमिः। भूमौ हि सर्पणं सुशकम्। अत-स्तदीयाभिः ऋग्भिः स्तुतौ भूम्यां प्रतिष्ठा भवति॥

यथोक्तस्तुतेरूर्द्ध्वं होतृमन्त्रपाठं विधत्ते।"चतुर्होतॄन् होता व्याचष्टे। स्तुतमनुशꣳसति शान्त्यै" इति। स्तोत्रानुभाविशंसनेन देवाः शान्ता अनुग्रहकरा भवन्ति॥

अहर्विशेषमन्त्रविशेषयोः सम्बन्धं प्रशंसति। "अन्तो वा एष यज्ञस्य। यद्दशममहः। एतत् खलु वै देवानां परमं गुह्यं ब्रह्म। यच्चतुर्होतारः। दशमेऽहꣳश्चतुर्होतॄन् व्याचष्टे। यज्ञस्यैवान्तं गत्वा। परमं देवानां गुह्यं ब्रह्मावरुन्धे। तदेव प्रकाशं गम-यति [३]। तदेनं प्रकाशं गतम्। प्रकाशं प्रजानां गमयति" इति। प्रथमानुवाकोक्तवद्व्याख्येयम्। यदुक्तं सूत्रकारेण। "औदु-म्बरीं परिष्वज्योदरैरुपस्पृशन्तो वाग्यतास्तिष्ठन्ति" इति॥

तदेतद्विधत्ते। "वाचं यच्छति। यज्ञस्य धृत्यै" इति। यद-

प्यन्यत् सूत्रकारेणोक्तम्, भूर्भुवःसुवरित्यक्ता रात्रिं ध्यात्वाधि-वृक्षसूर्य्ये सुब्रह्मण्यया वाचं विसृज्येति॥

तत्र ध्यानवाग्विसर्गौ च क्रमेण विधत्ते। "यजमानदेवत्यं वा अहः। भ्रातृव्यदेवत्या रात्रिः। अह्ना रात्रिं ध्यायेत्। भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते। यद्दिवा वाचं विसृजेत्। अहर्भ्रातृव्यायोच्छिꣳषेत्। यन्नक्तं विसृजेत्। रात्रिं भ्रातृव्यायोच्छिꣳषेत्। अधिवृक्षसूर्य्ये वाचं विसृजति। एतावन्तमेवास्मै लोकमुच्छिꣳषति। यावदादित्योऽस्तमेति" इति। अहर्यथा प्रकाशं करोति तथा यजमानो देवताभ्यो हविः प्रकाशयतीत्यह्नो यजमानो देवता। पाप्मा भ्रातृव्य इति श्रुत्यन्तरात् पाप्मनश्च देवहविर्विरोधात् रात्रेश्च प्रकाशराहित्यात् रात्रेर्भ्रातृव्यो देवता। एवं सति अहोरूपेण रात्रेर्यद् ध्यानं तेन रात्रिस्वरूपं भ्रातृव्यस्य तं लोकं वर्जितं भवति। दिवा रात्रौ वा वाग्विसर्गे स कालो भ्रातृव्यायावशेषितः स्यात्। अतस्तत्परिहारायाधि-वृक्षसूर्य्ये वाचं विसृजेत्। सूर्य्यशब्देनातप उपलक्ष्यते। स चातपो भूमिं परित्यज्य वृक्षमधिरुह्य तदग्र एव यदा दृश्यते तदा वाग्विसर्गे सति तत आरभ्य समयात् एतावन्तमल्पमेव कालमस्मै भ्रातृव्यायावशेषयति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः॥

॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

षष्ठे दशमेऽहनि होढमन्त्रा विहिताः । सप्तमे काम्यफलसाधनत्वमभिप्रेत्य सप्तहोढमन्त्रं प्रशंसितुमुपाख्यानमाह।"प्रजापतिः प्रजा असृजत । ताः सृष्टाः समश्लिष्यन् । ता रूपेणानुप्राविशन् । तस्मादाहुः । रूपं वै प्रजापतिरिति । ता नाम्नानुप्राविशत् । तस्मादाहुः । नाम वै प्रजापतिरिति । तस्मादप्यामित्रौ सङ्गत्य । नाम्ना चेध्वयेते [१] । मित्रमेव भवतः" इति । प्रजापतिना याः प्रजाः सृष्टास्ताः सर्व्वाः संश्लिष्टा अभवन् रूपविशेषस्य नामविशेषस्य वा सृष्टत्वात् एकविधा एव भूत्वा देवोऽयं मनुष्योऽयं पशुरयमित्येवं विशेषव्यवहारयोग्या नाभवन् । तदा प्रजापतिर्विचार्य्य स्वयमेव रूपविशेषाकारेण नामविशेषाकारेण तासु प्रजासु प्रतिष्ठितः । अतएव शास्त्रज्ञा नामरूपयोः सर्व्ववस्तुव्याप्तिं दृष्ट्वा प्राजापत्यात्मकं रूपमाहुः । यस्मान्नाम प्रजापतिरेव तस्मात् पूर्व्वममित्रावपि द्वौ पुरुषौ कदाचिन्मार्गे ग्रामान्तरे वा सङ्गत्य भो देवदत्त भो यज्ञदत्तेत्येवं तत्तन्नाम्ना परस्परमाह्वयते चेत् तदानीमेव मित्रौ भवतः । प्रजापतेः सर्व्वमित्रत्वेन तदात्मकस्य नाम्नो मित्रत्वसम्पादकत्वं युक्तम् । अतएव लौकिकाः साप्तपदीनं सख्यमित्याहुः ॥

नामरूपसृष्टिमुक्त्वा विशेषाकारेणैव सृष्टिमाह।"प्रजापतिर्देवासुरानसृजत । स इन्द्रमपि नासृजत। तं देवा अब्रुवन् । इन्द्रं नो जनयेति। स आत्मन्निन्द्रमपश्यत् । तमसृजत । तं त्रिष्टुग्वीर्य्यं भूत्वानुप्राविशत् । तस्य वज्रः पञ्चदशो हस्त आपद्यत । तेनो-

दय्यासुरानभ्यभवत्" [२] इति। यदा देवानसुरांश्चासृजत तदा प्रजापतिर्देवस्वामिनमिन्द्रम् अपिशब्दादसुरस्वामिनञ्च नासृजत। ततो देवैः प्रार्थितः स्वात्मन्येवावस्थितमिन्द्रं दृष्ट्वा तं बहिरसृजत। तञ्च सृष्टमिन्द्रं त्रिष्टुब्देवता वीर्य्यरूपा भूत्वा प्राविशत्। तस्य वीर्य्यवत इन्द्रस्य हस्ते पञ्चदशभिर्धाराभिर्युक्तः कश्चिद्वज्रः प्रादुरभूत्। तेन वज्रेण युक्तं हस्तमुद्यम्यासुरानभिभूतवान्॥

एतद्वेदनं प्रशंसति। "य एवं वेद। अभि भ्रातृव्यान् भवति" इति॥

अथ सप्तहोतृमन्त्रं प्रशंसति।"ते देवा असुरैर्विजित्य। सुवर्गं लोकमायन्। तेऽमुष्मिँल्लोके व्यक्षुध्यन्। तेऽब्रुवन्। अमुतः प्रदानं वा उपजिजीविमेति। ते सप्तहोतारं यज्ञं विधायायास्यम्। आङ्गीरसं प्राहिण्वन्। एतेनामुत्र कल्पयेत [३]। तस्य वा इयं कॢप्तिः। यदिदं किञ्च। य एवं वेद। कल्पतेऽस्मै। स वा अयं मनुष्येषु यज्ञः सप्तहोता। अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति। य एवं वेद। उपैनं यज्ञो नमति" इति। ते देवा इन्द्रसाहाय्यवशात् असुरैः सह * युद्धे विजित्य स्वर्गं प्राप्य तत्र विशेषेण क्षुधिताः सन्तः परस्परमिदमब्रुवन्, अयं स्वर्गो भोग्यवस्तुसम्पादनस्थानं न भवति। तस्य कर्म्मभूमित्वाभावात्। कस्मादमुतः प्रदानं मनुष्यलोके प्रदीयमानं हविरुपजीव्य तिष्ठामेति। अमुतः शब्दः परोक्षवाचित्वाद्भूम्यपेक्षया

* असुरान् युद्धे इति F चिह्नितपुस्तकपाठः।

परोक्षं स्वर्गं ब्रूते। तथा स्वर्गापेक्षया परोक्षं भूलोकमपि ब्रूते। अत्र तु स्वर्गवासिभिः प्रयुज्यमानत्वात् भूलोकवाची, ते देवा इत्थं विचार्य्य सप्तहोतृमन्त्रसाध्यं कञ्चिद्यागं निर्म्मायाङ्गिरोगोत्रोत्पन्नमयास्यनामकमृषिं मनुष्यलोके प्रेषितवन्तः, भो अयास्यैतेन सप्तहोतृयज्ञेनामुत्र मनुष्यलोकेऽनुष्ठानं निष्पादयेति। ततो यदिदं किञ्चिदनुष्ठानं लोके दृश्यते सेयं सर्व्वापि तस्यैवायास्यनामकस्य महर्षेः क्लृप्तिः प्रवर्त्तना। य एवं मुनेः क्लृप्तिं वेद। तदर्थमनुष्ठानं सम्यक् प्रवर्त्तते। सप्तहोतृयज्ञो मनुष्येषु प्रवृत्तः सन् अमुत्र सद्यः स्वर्गनिवासिभ्यो देवेभ्यो हव्यं प्रापयति। य एवं सप्तहोतृयज्ञं महिमानं वेद। तमेतं वेदितारं सर्व्वो यज्ञः प्राप्नोति। यज्ञानुष्ठानसमर्थो भवतीत्यर्थः॥

सप्तहोतृमन्त्रे वाचस्पतेर्हृद्विधेनामन्निति योयं ग्रहभागस्तं प्रशंसति। "सोऽमन्यत। अभि वा इमेऽस्माल्लोकादमुं लोकं कमिष्यन्त इति। स वाचस्पतेहृदिति व्याहरत्। तस्मात् पुत्रो हृदयम्। तस्मादस्माल्लोकादमुं लोकं नाभिकामयन्ते। पुत्रो हि हृदयम्"[४] इति। मनुष्यलोके यज्ञप्रवर्त्तकः सोऽयास्यो मुनिः मनस्येवमचिन्तयत्, इमे सर्व्वे मनुष्या अस्माद्भूलोकादमुं स्वर्गलोकं अभिकमिष्यन्तः, स्वर्गो मे भूयादित्येवं कामयमाना यज्ञाननुष्ठास्यन्ति। न तु पुत्रानुत्पादयिष्यन्ति। ततः सन्ततिविच्छेदे सति स्वर्गवासिनां देवानां भागोऽपि विच्छिद्यतीति विचार्य्य तत्परिहाराय वाचस्पतेहृद्विध इत्यादिग्रहभागमुच्चारितवान्। तत्र मनो वाक्पतिना हृच्छब्देन मनःकार्य्यः पुत्रो

विवक्षितः । मनःकार्य्यञ्च वाजसनेयिनः समामनन्ति, मनसा वै समास्त्रियमभिहार्यते । तस्यां वै प्रतिरूपः पुत्रो जायते । स समानन्द इति । तस्मादत्र पुत्रविवक्षया हृच्छब्दः प्रयुक्तः । तस्माल्लोके पुत्रो हृदयं पुत्रविषयमेव चित्तं सर्व्वदा प्रवर्त्तत इत्यर्थः । यस्मात् पुत्रासक्तचित्ता मनुष्याः, तस्मात्तत्प्राधान्येन पुत्रानेव कामयमाना अस्मान्मनुष्यलोकादमुं स्वर्गलोकं नात्यन्तं कामयन्ते । यस्मात् पुत्राश्चित्तस्वरूपास्तस्मान्मनुष्याणां तदुचितम् । अतएव सन्तानविच्छेदो देवहविर्विच्छेदश्च न भविष्यति । तथा च तस्मिन्मन्त्रशेषे समाम्नातम्, मा दैव्यस्तन्तुश्छेदि मा मनुष्य इति ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथाष्टमोऽनुवाकः ।

सप्तमे सप्तहोतृमन्त्रसाध्ययज्ञप्रशंसा कृता । अष्टमे होतृमन्त्राणां सोमयागाङ्गत्वमभिधीयते । तत्रादौ सामान्येन यज्ञसम्बन्धं विधत्ते । “देवा वै चतुर्होतृभिर्यज्ञमतन्वत । ते विपाप्मना भ्रातृव्येणाजयन्त । अभि सुवर्गं लोकमजयन् । य एवं विद्वाꣳश्चतुर्होतृभिर्यज्ञं तनुते । विपाप्मना भ्रातृव्येण जयते । अभि सुवर्गं लोकं जयति” इति । चतुर्होतृशब्द एकवचनान्तः पृथिवी होतेत्यमुमेव मन्त्रं ब्रूते । बहुवचनान्तस्तु सर्व्वानपि होतृमन्त्रान् । तैर्मन्त्रैर्यज्ञमतन्वत । ते देवाः पापरूपेण भ्रातृव्येण

वियुक्ता इह लोके जयं प्राप्य स्वर्गमपि जितवन्तः। तथान्यो-ऽपि लोकद्वयं जयति॥

मन्त्रविशेषस्य यज्ञसम्बन्धं विधत्ते। "षड्ढोत्रा प्रायणीय-मासादयति। अमुष्मै वै लोकाय षड्ढोता। घ्नन्ति खलु वा एतत् सोमम्। यदभिषुण्वन्ति [१]। ऋजुधैवेनममुं लोकं गमयति। चतुर्होत्रातिथ्यम्। यशो वै चतुर्होता। यश एवा-त्मन्धत्ते। पञ्चहोत्रा पशुमुपसादयति। सुवर्ग्यो वै पञ्चहोता। यजमानः पशुः। यजमानमेव सुवर्गं लोकं गमयति। ग्रहान् गृहीत्वा सप्तहोतारं जुहोति। इन्द्रियं वै सप्तहोता [२]। इन्द्रियमेवात्मन्धत्ते" इति। प्रायणीयायामिष्टौ यद्धविस्तत्सूर्यं ते चक्षुरितिमन्त्रेण वेद्यामासाद्य अयं षड्ढोतृमन्त्रः स्वर्गार्थं प्रवृत्तः तत्कथमिति तदुच्यते। सोमाभिषवरूपं शब्दनं यत्कृतं तत्प्रत्यवायं परिहृत्य ऋजुधैव नरकलोकरूपं वक्रमार्गं परि-त्यज्यैनं यजमानं ऋजुनैव मार्गेण प्रापयति। आतिथ्येष्टौ यद्ध-विस्तत्पृथिवी होतेत्यनेन चतुर्होतृमन्त्रेण वेद्यामासादयेत्। तस्य मन्त्रस्य पशुहेतुत्वात् स्वात्मनि यशः सम्पादयति। अग्नीषो-मीयपशोर्यद्धविस्तदग्निर्होतेत्यनेन पञ्चहोतृमन्त्रेण वेद्यामुपसा-दयेत्। तस्य स्वमन्त्रस्य स्वर्गसाधनत्वात् पशोश्च यजमान-निष्क्रयणार्थत्वात् यजमानं स्वर्गं प्रापयति। ऐन्द्रवायवादिग्र-हग्रहणादूर्ध्वं महाहविर्होतेत्यनेन सप्तहोतृमन्त्रेण जुहुयात्। तस्येन्द्रियसाधनत्वात् इन्द्रियं स्वस्मिन् सम्पादयति॥

सवनेषु होतृमन्त्रप्रयोगं विधत्ते। "यो वै चतुर्होतृननु-

सवनं तर्पयति। तृप्यति प्रजया पशुभिः। उपैनꣳ सोमपीथो नमति। बहिष्पवमाने दशहोतारं व्याचक्षत। माध्यन्दिने पवमाने चतुर्होतारम्। आर्भवे पवमाने पञ्चहोतारम्। पितृयज्ञे षड्ढोतारम्। यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम्। अनुसवनमेवैनाꣳस्तर्पयति [३]। तृप्यति प्रजया पशुभिः। उपैनꣳ सोमपीथो नमति" इति। चतुर्होतृमन्त्राभिमानिनां देवानां तन्मन्त्रप्रयोगेण तृप्तिर्भवति। तथा यजमानोऽपि प्रजया पशुषु उत्तरक्रतौ प्रकृतमन्त्रं सोमपानं प्राप्नोति। तस्माद्बहिष्पवमानादिस्तोत्रादिकाले होतृमन्त्रान् सग्रहान् यजमानः पठेत्। एतच्च सूत्रकारेण स्पष्टमुक्तम्, सन्नेषु नाराशꣳसेषु चमसिनः स्वꣳ स्वं चमसमनून्यन्ते त्रीꣳस्त्रीन् पुरोडाशशकलानुपवपन्त एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं नमो वः पितरो रसायेति नमस्काराञ्जपन्ति, षड्ढोतारं यजमानो व्याचष्ट इति। सोऽयं सूत्रोक्तः प्रयोगोऽत्र पितृयज्ञशब्देन व्यवहृतः॥

अनुसवनमित्यादिरूपसंहारार्था पुनरुक्तिर्यज्ञाङ्गत्वेन विहितान् होतृमन्त्रान् प्रशंसति। "देवा वै चतुर्होतृभिः सत्रमासत। ऋद्धिपरिमितं यशस्कामाः। तेऽब्रुवन्। यन्नः प्रथमं यश ऋच्छात्। सर्व्वेषां नस्तत्सहासदिति। सोमश्चतुर्होता। अग्निः पञ्चहोता। धाता षड्ढोता [४]। इन्द्रः सप्तहोता। प्रजापतिर्दशहोता। तेषाꣳ सोमꣳ राजानं यश आर्च्छत्" इति। सोमाग्न्यादयो देवा धनादिसमृध्यायुक्तं यशः कामय-

माना: सत्रमनुष्ठातुं प्रारब्धवन्त:। तदानीमेवं परस्परं भाषां कृतवन्तः, अस्माकं मध्ये यं पुरुषं आदौ धनसमृद्धियुक्तं यशः प्राप्नुयात्। तस्य पुरुषस्य तद्यशः सर्व्वेषामस्माकं साधारणमस्त्विति। ततः सोमादयो यथायथं सत्रे होतृमन्त्राननुष्ठितवन्तः। तदा तेषां मध्ये सोममेवादौ यशः प्राप्नोत्॥

अथ प्रसङ्गाद्यज्ञाङ्गभूतान् प्रैषनिविदाप्रीग्रहानत्र प्रशंसति। "तं न्यकामयत। तेनापाक्रामत्। तेन प्रलायमचरत्। तं देवाः प्रैषैः प्रैषमैच्छन्। तत्प्रैषाणां प्रैषत्वम्। निविद्भिर्न्यवेदयन्। तन्निविदां निवित्त्वम् [५]। आप्रीभिराप्नुवन्। तदाप्रीणामाप्रित्वम्। तमघ्नन्। तस्य यशो व्यगृह्णत। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वम्। यस्यैवं विदुषो ग्रहा गृह्यन्ते। तस्य त्वेव गृहीताः" इति। तत् धनसमृद्धियुक्तं यशो ममैव भूयादिति सोमो नितरां कामयित्वा तेन धनेन सहापक्रम्य पुनस्तेन युक्तः सन् प्रकर्षेण लीनो भूत्वा यथा देवा न जानन्ति तथैव व्यचरत्। ततो देवा होता यक्षादित्यादिभिः प्रैषमन्त्रैः प्रैषं प्रकृष्टं सोमस्यान्वेषणमैच्छन्। ततः प्रैष्यत एभिरिति व्युत्पत्त्या मन्त्राणां प्रैषनाम सम्पन्नम्। ततोऽग्ने महान् असीत्यादिभिः निविन्मन्त्रैरिमं वृत्तान्तं तत्र तत्र नितरामावेदयन्। निवेद्यत एभिरिति व्युत्पत्त्या मन्त्राणां निविन्नाम सम्पन्नम्। समिद्धो अद्य मनुषोदुरोण इत्याप्रीमन्त्रैस्तं सोममाप्नुवन्। आप्यत एभिरिति व्युत्पत्त्या मन्त्राणामाप्रीनाम सम्पन्नम्। ततः सोमं हत्वा तस्याधीनं यशोहेतुर्धनं प्रत्येकं विभज्य गृहीतवन्तः।

ते च यागा ऐन्द्रवादिग्रहा अभवन्। तस्माद्गृह्यन्त इति व्युत्पत्त्या ग्रहनाम सम्पन्नम्। य एतं वृत्तान्तं जानाति तस्यैव यागे ग्रहा मुख्यत्वेन गृहीता भवन्ति। इतरस्य तु यागे गृहीता अप्यधिककल्पकाभावात् अगृहीता एव॥

अथ ग्रहप्रसङ्गाच्छन्दःसामोक्थानि प्रशंसति। "तेऽब्रुवन्। यो वै न श्रेष्ठोऽभूत् [६]। तमवधिष्म। पुनरिमꣳ सुवामहा इति। तं छन्दोभिरसुवन्त। तच्छन्दसां छन्दस्त्वम्। साम्ना समानयन्। तत्साम्नः सामत्वम्। उक्थैरुदस्थापयन्। तदुक्थानामुक्थत्वम्। य एवं वेद। प्रत्येव तिष्ठति [७]। सर्व्वमायुरेति" इति। ते देवाः परस्परमिदं विचारितवन्तः, यः सोमोऽस्माकं मध्ये श्रेष्ठोऽभूत् तं वयमवधिष्म। तदेतन्महदनुचितम्। तस्मात् पुनरिमं सोममुत्पादयाम इति विचार्य्य गायत्र्यादिच्छन्दांस्यनुष्ठाय तत्सामर्थ्यात् सोममुत्पादयन्। उत्पादनविषयां छन्दसि इच्छां सिध्यत्येभिर्व्युत्पत्त्या छन्दोनाम सम्पन्नम्। ततः साम्नानसामर्थ्येन तं सोमं समानयन्। समानीयतेऽनेनेति व्युत्पत्त्या सामनाम सम्पन्नम्। उक्थनामकशस्त्रसामर्थ्येन तं सोमं भूमावनुपविष्टमुत्थापितवन्तः। उत्थाप्यते सोमोऽनेनेति व्युत्पत्त्योक्थनाम सम्पन्नम्। य एवं सोमवृत्तान्तं वेद स भूमौ प्रतिष्ठितो भूत्वा सम्पूर्णमायुः प्राप्नोति॥

अथ सोमप्रशंसाप्रसङ्गात् पुरुषार्थं सोमयागसमीपगमनं विधत्ते। "सोमो वै यशः। य एवं विद्वान्त्सोममागच्छति। यश एवैनमृच्छति। तस्मादाहुः। यश्चैवं वेद यश्च न। ता-

वुभौ सोममागच्छतः। सोमो हि यशः। तं त्वाव यश ऋच्छ-तीत्याहुः। यः सोमे सोमं प्राहेति। तस्मात् सोमे सोमः प्रोच्यः। यश एवैनमृच्छति" [८] इति। यः सोमयागः यशः यशोहेतुत्वाद्यशः। तस्मात् सोमस्य यशोहेतुत्वं यो विद्वान् सः सोमयागस्थानं प्रत्यागच्छेत्। तत्तदनुष्ठानप्रकारोपन्यासेन तमेनं यशः ऋच्छति प्राप्नोति। यस्मादेवं तस्मादभिज्ञा यं महात्मेत्येवं सर्व्वे जना आहुः। किञ्च यः सोमप्रयोगं यशो-हेतुत्वञ्च वेद यश्च न वेद तावुभौ सोमस्थानमागच्छतः। सो-मयागस्य यशोत्पादकत्वात् तयोर्मध्ये सोमे सोमयागे सोमं सोमप्रयोगं स्वकीयवाक्पाण्डित्यप्रकटनाय यः प्राह तं अभि-ज्ञाः त्वाव त्वामेव यश ऋच्छति प्राप्नोति इत्याहुः। यस्मा-देवं तस्मादभिज्ञः सोमे सोमयागे। सोमः सोमप्रयोगः प्रोच्यः प्रकर्षेण वाच्यः। यश एनं अभिज्ञं ऋच्छत्येव प्राप्नोत्येव॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके अष्टमोऽनु-वाकः॥ ८॥

## अथ नवमोऽनुवाकः।

अष्टमे होतृमन्त्राणां सोमाङ्गत्वेन प्रयोग उक्तः। अथ होतृमन्त्रोत्पत्तिकथनप्रसङ्गेन जगत्सृष्टिर्नवमे विधीयते। "इदं वा अग्रेनैव किञ्च नासीत्। न द्यौरासीत्। न पृथिवी। ना-न्तरिक्षम्। तदसदेव सन्मनोऽकुरुत स्यामिति। तदतप्यत।

तस्मात्तपनाद्धूमोऽजायत । तद्भूयोऽतप्यत । तस्मात्तपनादग्नि-रजायत । तद्भूयोऽतप्यत [१] । तस्मात्तपनाज्ज्योतिरजायत । तद्भूयोऽतप्यत । तस्मात्तपनादर्चिरजायत । तद्भूयोऽतप्यत । तस्मात्तापनान्मरीचयोऽजायन्त । तद्भूयोऽतप्यत । तस्मात्तपना-दुदारा अजायन्त । तद्भूयोऽतप्यत । तदभ्रमिव समहन्यत'' इति । यदिदं स्थावरजङ्गमरूपं भूलोकादिरूपञ्च जगत् इदानीं दृश्यते तत्किमपि सृष्टेः पूर्व्वं नैवासीत् । तत्तादृशम-सद्रूपमेव वर्त्तमानं स्यात् । सद्रूपतां प्राप्नुयामित्येतादृशं मनो-ऽकुरुत । तथा चोपनिषदि पूर्व्वमसद्रूपं पश्चात् सद्रूपतोत्पत्तिश्च विस्पष्टमाम्नायते । असद्वा इदमग्र आसीत् । ततो वै सदजा-यतेति । अत्रासच्छब्देन न शशविषाणादिसमानं शून्यत्वं वि-वक्षितं किं तर्ह्यनभिव्यक्तनामरूपत्वम् । अत एव वाजसनेयिनः समामनन्ति । तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियेत इति । भूमिराप इत्यादिकं नाम काठिन्यद्रवादिकं रूपम् । तत्तद्भूतसमाकारेण विस्पष्टमासमन्तान्निष्पादनं व्याक-रणं तद्रहितत्वेनाविस्पष्टदशापन्नत्वमव्याकृतत्वम् । तदेवं मनुना स्मर्य्यते, आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यम-विज्ञेयं प्रसुप्तमिव सर्व्वत इति । शून्यत्वविवक्षायां छन्दोगश्रुति-र्विरुध्येत । छन्दोगा ह्येवमामनन्ति, सदेव सोम्येदमग्र आ-सीदेकमेवाद्वितीयम् इति । पुनरपि तद्धैक आहुरसदेवेदमग्र आसीत् इति । शून्यत्वपक्षमुपन्यस्य तन्निराकरणमेवमामनन्ति, कुतस्तु खलु सोम्यैवं स्यादिति होवाच, कथमसतः सज्जायत इति ।

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति। ऐतरेयिण-स्त्वधीयते, आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चनमि-षत् इति। तस्मान्नैव किञ्चनासीदित्ययं निषेधः परमात्म-निर्म्मितनामरूपात्मकजगद्विषयो न तु कृत्स्नविषयः। नाम-रूपरहितत्वेनासच्छब्दवाच्यं सदेवावस्थितं परमात्मतत्त्वं स्वा-त्मन्यन्तर्हितप्राणिकर्म्मप्रेरितं सन्नामरूपाकारेणाविर्भवेयमिति पर्य्यालोचनरूपं मनो कुरुत। यथा गाढनिद्रां प्राप्तस्य पुरुषस्य कर्म्मफलभोगाय प्रबोध उत्पद्यते, तथा सर्व्वान् प्राणि-नः स्वस्वकर्म्मफलं भोजयितुमीदृशो विचारः परमात्मनः प्रादुरभूत्। तथाविविधविचारयुक्तं तत्परमात्मतत्त्वरूपं नाम-रूपसृष्टिसाधनरूपं तपोऽकुरुत। नात्र तपः कृच्छ्रचान्द्रा-यणादिरूपम्। किन्तु स्रष्टव्यपदार्थविशेषविषयं पर्य्यालोचनम्। अत एवाथर्व्वणिका आमनन्ति, यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञान-मयं तप इति। कृच्छ्रादिरूपलाभावात् अशरीरस्यापि सर्व्व-शक्तियुक्तस्य पर्य्यालोचनमुपपन्नम्। तादृशीं शक्तिञ्च श्वेताश्वतरा आमनन्ति, परास्य शक्तिर्व्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया च इति। तच्छक्तिवशादेवेन्द्रियनिरपेक्षव्यवहारश्च। अत एव आमनन्ति, अपाणिपादोजवनो गृहीता पश्य-त्यचक्षुः स शृणोत्यकर्ण इति। तस्मादचिन्त्यशक्तिपरमेश्व-रस्य लीलाविशेषो यथावचनमवबोद्धव्यः। वचनं चात्रा-रण्यके आम्नायते, सतन्तपंस्तपः कृतवान् इत्यर्थः। तादृ-शात्तस्मात्परमेश्वरात् स्वसङ्कल्पानुसारेण कश्चिद्धूम उदप-

यत। एवमग्न्यादयोऽपि सङ्कल्पादुत्पन्नाः। अग्निरङ्गारवज्ज्योतिरङ्गारनिष्ठप्रकाशः। अर्चिर्ज्वाला। मरीचयः सर्व्वत्र प्रसृतप्रभाद्रव्यम्। उदारा उल्वणज्वालाः। तत्सर्व्वं धूमज्वालादिकं सङ्घातरूपं कठिनमभूत्। यथा धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघ इति। तद्वत् तच्च घनीभूतं वस्तु परमात्मनो वस्तिस्थानमासीत्। वस्तिशब्दार्थश्चाचार्य्यैर्दर्शितः। मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयते।

अथ समुद्रोत्पत्तिं दर्शयति। "तद्वस्तिमभिनत् [१]। स समुद्रोऽभवत्। तस्मात् समुद्रस्य न पिबन्ति। प्रजननमिव हि मन्यन्ते। तस्मात् पशोर्जायमानादापः पुरस्ताद्यन्ति" इति। यदेतत्संवत्सरपर्य्यन्तस्य वस्तुनः स्रष्टुः परमात्मनो रूपं वस्तिस्थानीयं तस्य भेदमकरोत्। परितो मूत्राशये पूर्णे सति यथा लोके मेहनद्वारात् मुञ्चति तद्वत्। स च प्रभिन्नवस्तिगतो जलसङ्घः समुद्ररूपेण प्रादुरभूत्। यस्मात्समुद्रस्य जलं प्रजननमिव गर्भाशयगतमुदकमिवास्पृश्यं मन्यन्ते। तस्माच्छिष्टाः समुद्रस्य जलं न पिबन्ति। यस्मादस्ति प्रजनने गर्भाशये जलं तस्माल्लोके जायमानात् पशोः पुरस्तादाप एव निर्गच्छन्ति॥

अथ प्रकृतस्य होतृमन्त्रस्य सृष्टिमाह। "तद्दशहोतान्वसृज्यत। प्रजापतिर्वै दशहोता" इति। ततस्तत् समुद्रपर्य्यन्तं सृष्टं जगत् तत्पश्चाच्चित्तिःस्रुगित्यादिर्दशहोताऽसृज्यत। तन्मन्त्रप्रतिपाद्याकारयुक्तप्रजापतिरेवात्र दशहोता॥

यथोक्तस्य परमात्मतपसो वेदनं प्रशंसति। "य एवं तपसो

*वीर्यं विद्वाꣳस्तप्यते। भवत्येव” इति। पूर्व्वोक्तस्य तपःसा-मर्थ्यं विद्वान् यः स्वयं तपः करोति सोऽयमैश्वर्य्यं प्राप्नो-त्येव॥*

अथ लोकत्रयसृष्टिं दर्शयति। “तद्वा इदमापः सलिल-मासीत्। सोऽरोदीत्प्रजापतिः [३]। स कस्मा अज्ञि। यद्यस्या-अप्रतिष्ठाया इति। यदप्स्ववापद्यत। सा पृथिव्यभवत्। य-द्व्यमृष्ट। तदन्तरिक्षमभवत्। यदूर्द्ध्वमुदमृष्ट। सा द्यौरभवत्। यदरोदीत्। तदनयोरोदस्त्वम् [५]। य एवं वेद। नास्य गृहे रुदन्ति। एतद्वा एषां लोकानां जन्म। य एवमेषां लोकानां जन्म वेद। नैषु लोकेष्वार्त्तिमार्च्छति। स इमां प्रतिष्ठामविन्दत” इति। तदिदं परमात्मना सृष्टं जगत् समुद्ररूपेण सलिलमा-सीत्। तस्मिन् सलिले पृथिवीमिश्रणं वारयितुम् आप इत्यु-क्तम्। केवलं जलमेवासीदित्यर्थः। तदिदं निरन्तरं जलं दृष्ट्वा दग्धदोहरूपः स प्रजापतिः अरोदीत्। रुदतस्तस्यायमभि-प्रायः, यद्यहं अप्रतिष्ठाया अवस्थातुमयोग्याया अविद्यमानाया अस्या पृथिव्याः सकाशात् किमपि प्राणिजातं स्रष्टुं न शक्नो-मि तर्हि तादृशः सोऽहं कस्मै अज्ञि किमर्थमुत्पादितोऽ-स्मीति रुदतस्तस्य यन्नेत्रजलादिकं समुद्ररूपास्वप्सु पतितं तद्घनीभूतं पृथिव्यभवत्। तस्याः पृथिव्या उपरि उच्चा-वचभावं वारयितुं विविधं मार्जनं कृतवान्। तच्च मृष्टस्थानं अन्तरिक्षमभूत्। ततो हस्तमूर्द्ध्वं प्रसार्य्य यत्स्थानममृष्टं सा द्यौरभवत्। यस्मात् प्रजापतिररोदीत् तेन च रोदनेन द्या-

वापृथिव्यावुत्पन्नौ। तस्माद्रोदःशब्दाभिधेयत्वं तयोः सम्पन्नम्। तं प्रकारं वेदितुर्गृहे बन्धुमरणाभावान्न केऽपि गृहे रुदन्ति। योऽयं लोकत्रयजन्मप्रकारं वेद। तद्वेत्ता लोकत्रये नाशं न प्राप्नोति। स प्रजापतिः इमां पृथिवीं प्रतिष्ठां लब्धमाणः प्राण्याधारभूतामालभत॥

अथ तस्यां पृथिव्यां असुरसृष्टिं दर्शयति।"स इमां प्रतिष्ठां वित्वाऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स जघनादसुरानसृजत [५]। तेभ्यो मृण्मये पात्रेऽन्नमदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। सा तमिस्राऽभवत्" इति। प्रजापतिरिमां भूमिं लब्धमाणः प्राण्याधारयोग्यां लब्धा प्रजोत्पादनं कामयमानः तदुपायपर्य्यालोचनरूपं तपः कृत्वा स्वयमेव देहान्तरेण गर्भवानभूत्। तस्य गर्भयुक्तस्य जघनभागादसुरानसृजत। तेभ्यः कस्मिंश्चिन्मृत्पात्रे भोजनार्थमन्नं प्रक्षिप्य दत्तवान्। ततः असुराणामुत्पादिका या स्वकीया तनूः तां विनाशितवान्। सा तनूः शरीराकारं परित्यज्य तमोयुक्ता रात्रिरभवत्॥

अथ मनुष्यादिसृष्टिं दर्शयति। "सोऽकामयत। प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स प्रजननादेव प्रजा असृजत। तस्मादिमा भूयिष्ठाः। प्रजननाद्ध्येना असृजत [६]। ताभ्यो दारुमये पात्रे पयोऽदुहत्। याऽस्य सा तनूरासीत्। तामपाहत। सा ज्योत्स्नाभवत्" इति। प्रजननात् प्रजोत्पादनसमर्थात् द्वारा ह्यस्मादुत्पादनसामर्थ्यं कारणं तस्मा-

त्प्रजा अत्यन्तबहुलाः ज्योत्स्नाचन्द्रप्रकाशाः। अन्यत् पूर्व्ववद्व्याख्येयम्॥

अथ वसन्तादिकालाभिमानिपुरुषस्य सृष्टिं दर्शयति। "सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स उपपक्षाभ्यामेवर्त्तूनसृजत। तेभ्यो रजते पात्रे घृतमदुहत्। यास्य सा तनूरासीत् [७]। तामपाहत। साऽहोरात्रयोः सन्धिरभवत्" इति पूर्व्ववद्व्याख्येयम्॥

अथ देवसृष्टिं दर्शयति। "सोऽकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स मुखाद्देवानसृजत। तेभ्यो हरिते पात्रे सोममदुहत्। यास्य सा तनूरासीत्। तामपाहत। तदहरभवत्" [८] इति। पूर्व्ववद्व्याख्येयम्॥

अथोक्तानां अन्नपयोघृतसोमानां वेदनं प्रशंसति। "एते वै प्रजापतेर्दोहाः। य एवं वेद। दुह एव प्रजाः" इति। गोभ्यः क्षीरमिव प्रजाभ्यः धनं लभत इत्यर्थः॥

देवतावेदनं प्रशंसति। "दिवा वै नोऽभूदिति। तद्देवानां देवत्वम्। य एवं देवानां देवत्वं वेद। देववानेव भवति" इति। देवानामुत्पादिका या प्रजापतेस्तनूः सेयमहोरूपेण निष्पन्ना। अतो देवाः हर्षादस्माकं दिवैवाभूदित्युच्चारितवन्तः। अतो दिवायोगेन देवत्वं सम्पन्नम्। तद्वेदिता देववान् प्रकाशवान् भवति॥

तदेतद्देवासुरोत्पादकतनूभ्यां अहोरात्रयोर्जन्म तस्य वेदनं प्रशंसति। "एतद्वा अहोरात्राणां जन्म। य एवमहोरा-

त्राणां जन्म वेद । नाहोरात्रेष्वार्त्तिमार्च्छति" [९] इति ॥

तदसदेव सन्मनोऽकुरुत स्यामिति प्रथमभावि परमात्मनो यन्मनः पूर्व्वमुक्तं तदेतन्मनः प्रशंसति। "असतोऽधि मनोऽसृज्यत। मनः प्रजापतिमसृजत। प्रजापतिः प्रजा असृजत। तद्वा इदं मनस्येव परमं प्रतिष्ठितम्। यदिदं किञ्च। तदेतच्छ्वोवस्यसन्नाम ब्रह्म" इति। यत्किञ्चिदिदं जगदिदानीं दृश्यते तदिदं सर्व्वं मूलकारणे मनस्येव सम्यक् प्रतिष्ठितं सत् सङ्कल्पाधीनात् सतः सृष्टिस्थितिप्रलयाः। तदेतत्सङ्कल्पितमर्थं मनः श्वोवस्यसन्नामकं ब्रह्म। यदुत्तरोत्तरदिने वसीयोऽतिशयेन श्रेष्ठं श्वोवस्यसं द्विविधं हि ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेत्येवं लक्षणं सजातीयविजातीयस्वगतभेदरहितत्वात् निजस्वरूपमात्रे पर्य्यवसितं सर्व्वजनैकरूपमेकं ब्रह्म। अत एव तदेतच्छ्वोवस्यसं न भवति। निर्विकारत्वेन तस्य स्रष्टृत्वाभावात् तदेव सर्व्वं सृष्टिगोचरशक्तियुक्तम्। सत् सोपाधिकत्वेनान्यत् ब्रह्म भवति। सङ्कल्पपरम्परया प्रतिक्षणमुत्तरोत्तराधिकजगत्स्रष्टृत्वात् ईदृक् ब्रह्मरूपत्वात् मनः प्रशस्तम् ॥

तदेतद्वृत्तान्तवेदनं प्रशंसति। "व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसो वस्यसी व्युच्छति। प्रजायते प्रजया पशुभिः। प्र परमेष्ठिनो मात्रामाप्नोति। य एवं वेद" [१०] इति। यथोक्तं ब्रह्म सृष्टिप्रकारं विदित्वोपास्ते। अस्मै वेदित्रे प्रतिदिनं प्रभातं कुर्व्वन्ति। देवता पुनः पुनरधिकश्रेयस्करा सती प्रभातं करोति। दिने दिने श्रेयोऽवर्द्धत इत्यर्थः। इह लोके प्रजापशुसम्पन्नः

परलोके परमेष्ठिनः प्रजापतेरैश्वर्य्यस्य या मात्रा इयत्ता तया परिच्छित्तिः तां सर्व्वमपि प्राप्नोति ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

नवमेऽनुवाके होतृसृष्टिप्रसङ्गेन सर्व्वजगत्सृष्टिरुक्ता दशमे देवसृष्टिमध्येऽवस्थितस्येन्द्रस्य देवाधिपतित्वमुच्यते । तदर्थमाख्यायिकामाह । "प्रजापतिरिन्द्रमसृजतानुजावरं देवानाम् । तं प्राहिणोत् । परे हि । एतेषां देवानामधिपतिरेधीति । तं देवा अब्रुवन् । कस्त्वमसि । वयं वै त्वच्छ्रेयाꣳसः स्म इति । सोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयाꣳसः स्म इति मा देवा अवोचन्निति" इति । प्रजापतिर्देवान् सृष्ट्वा तेषां देवानां मध्ये अनुजावरमिन्द्रमसृजत । यथा भ्रातॄणां मध्ये अनुजो पश्चाज्जातः अवरः निकृष्टस्तद्वदयमित्यनुजावरः । आनुजावरशब्दस्यापि स एवार्थः । सृष्टं तमिन्द्रं देवलोके प्रेषितवान् । हे इन्द्र स्वर्गं गच्छ एतेषां मया सृष्टानामधिपतिर्भव । प्रेषितमिन्द्रं देवाः पृच्छां कृतवन्तः । प्रजापतिनाहं प्रेषितोऽस्मीत्युत्तरे दत्ते ते देवा अब्रुवन्, वयं वै त्वच्छ्रेयांसः स्म इति त्वया कल्याणयुक्ता भवेम इति । तदानीमेव इन्द्रः परावृत्य प्रजापतिसमीपं गतवान् । प्रजापतिना सृष्टे सति स इन्द्र अब्रवीत् ।

कस्त्वमसि वयं वै त्वच्छ्रेयांसः स्म इति। मा मा देवा अवोचन्
अब्रुवन्निति ॥

कनामवेत्तुः इन्द्राधिपत्यवेत्तुश्च आख्यायिकापुरःसरं वेद-
नफलं दर्शयति। "अथ वा इदं तर्हि प्रजापतौ हर आ-
सीत्[१]। यदस्मिन्नादित्ये। तदेनमब्रवीत्। एतन्मे प्रयच्छ।
अथाहमेतषां देवानामधिपतिर्भविष्यामीति। कोऽह्ँ स्या-
मित्यब्रवीत्। एतत् प्रदायेति। एतत्स्या इत्यब्रवीत्। यदेत-
द्ब्रवीषीति। कोह वै नाम प्रजापतिः। य एवं वेद [२]।
विदुरेनं नाम्ना। तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत्। ततो वा
इन्द्रो देवानामधिपतिरभवत्। य एवं वेद। अधिपतिरेव
समानानां भवति" इति। अथ प्रजापतेरग्रे स्वकीयतिरस्कर-
णात् ऊर्द्ध्वमेवं वृत्तान्तमासीत्। यदिदमिदानीमस्मिन्नादित्ये
सन्तापकं तेजो दृश्यते तदिदं हरस्तस्मिन् काले प्रजापतौ
आसीत्। यादृश आदित्यः अन्धकारादिभर्त्सने समर्थः।
तथा प्रजापतिरपि दुष्टशिक्षायां समर्थ आसीत्। तत्तेज
उद्दिश्येन्द्र एनं प्रजापतिमब्रवीत्, हे प्रजापते एतत्तेजः मह्यं
प्रयच्छ। अथाहं तेजस्वी सन् एतेषां देवानामधिपतिर्भविष्या-
मीति। ततः प्रजापतिरिदमब्रवीत्, एतत्तेजः तुभ्यं प्रदाय
कोऽस्यां अथमं मां को वा गणयेदित्यभिप्रायः। अथेन्द्रः प्र-
जापतिं प्रत्यब्रवीत्, कोऽहमित्यत्र क इत्यनेन शब्देन यदेत-
द्ब्रवीषीति एतदेव त्वम्। अत्र यदेतदिन्द्रेणोक्तं तदेतद्युक्तम्।
क इत्येतस्य प्रजापतिनोक्तत्वात्। अत्र किंशब्दः कशब्दश्चेति

सकारान्ताकारान्तौ द्वौ शब्दौ। तयोरुभयोरपि नपुंसक-पुंल्लिङ्गैकवचने ब्रूते। अकारान्तस्तु प्रजापतिवाचकः। तत्र सकारान्तमभिप्रेत्य प्रजापतौ प्रायुङ्क्त। तेजोबलादेव प्राणिनामपि गौरवम्। तस्मिंश्च तुभ्यं दत्ते सति प्रजापतित्वगौरवस्य गतत्वात् को नामाहं स्यामिति प्रजापतिप्रश्नः। न कोऽहं स्यामिति प्रजापतित्वमेव विनश्यतीत्याक्षेपः। इन्द्रस्तु शब्दच्छलात् सकारान्तत्वमाश्रित्य प्रजापतिरहं स्यामिति यदेतद्ब्रूते तदेतत्स्याः प्रजापतिरेव भवेत्यर्थः। न हि तेजोनिमित्तं तव प्रजापतित्वं प्रजाजनकत्वम्। तेजसा अनुपादानत्वाद्यतः अतेजसायाः प्रजायाः स्रष्टृत्वात्। किन्तु स्वाभाविकम्। अतस्तेजसि दत्ते तव स्वभावो नापगच्छतीत्यब्रवीत्। य एवं प्रजापतेः क इति नामत्वं वेद। एनं सर्व्वोऽपि नाम्ना विदुः प्रख्यातो भवतीत्यर्थः। ततः प्रजापतिस्तत्तेजोमयं पट्टाख्यमाभरणं कृत्वा प्रत्यमुञ्चत् ललाटे बबन्धेत्यर्थः। ततः पट्टबन्धनात् इन्द्रो देवानामधिपतिरभवत्। तदेतदाधिपत्यं विद्वान् पुरुषः समानां पुरुषाणां स्वयमधिपतिर्भवति॥

अथेन्द्रं बहुधा स्तोतुमादौ तावत्तदुपयुक्तं चन्द्रमःशब्दस्य निर्वचनं दर्शयति। "सोऽमन्यत। किं किं वा अकरमिति। स चन्द्रम आहरेति प्रालपत्। तच्चन्द्रमसश्चन्द्रमस्त्वम्। य एवं वेद [३]। चन्द्रवानेव भवति" इति। स प्रजापतिरेवममन्यत, देवाधिपत्ये स्थापितस्येन्द्रस्यापेक्षितकार्य्यं किं किं महत्कार्य्यं यन्मया कृतं न पर्य्याप्तं पुनरपि करिष्यामीत्यभि-

प्रायः। तथाविधं प्रजापतिं दृष्ट्वा स इन्द्रश्चन्द्रं आह्लादकं तेजः मदर्थमाहरेत्येवं बालवत्प्रलापं कृतवान्। ततः आह्लादवाची चन्द्रशब्दोच्चारणात् स्ववाची अस्मच्छब्दोच्चारणाच्च तदक्षर-सदृशं चन्द्रमा इति नाम सम्पन्नम्। चन्द्रं आह्लादकरं तेजो मीयते अत्रेति चन्द्रमाः। एवं वेत्ताऽपि आह्लादवानेव भवति॥

अथ सूर्य्यनाम निर्वचनं दर्शयति। "तं देवा अब्रुवन्। सुवीर्य्योऽसर्य्या यथा गोपायत इति। तत्सूर्य्यस्य सूर्य्यत्वम्। य एवं वेद। नैनं दभ्नोति" इति। दुष्टशिक्षणक्षमेण सौर्य्यतेजसा शिष्टपरिपालनक्षमेण चान्द्रतेजसा च युक्तमिन्द्रं दृष्ट्वा देवाः परस्परमिदमब्रुवन्। हे असर्य्याः मरणरहिता देवाः शोभन-वीर्य्योपेतो यमिन्द्रोऽस्मान् यथा गोपायते सम्यक् रक्षितुं प्र-भवतीत्यर्थः। ततः सुवीर्य्यशब्दाक्षरसादृश्यात् सूर्य्यनाम सम्प-न्नम्। तन्नामवेदिनं पुरुषं वैरी न हिनस्ति॥

इन्द्रशब्दनिर्वचनं दर्शयति। "कश्चनास्मिन् वा इदमि-न्द्रियं प्रत्यस्थादिति। तदिन्द्रस्येन्द्रत्वम्। य एवं वेद। इन्द्रि-याव्येव भवति" [४] इति। अस्मिन्नधिपतौ स्थितमिन्द्रियं सामर्थ्यं कश्च कोऽपि न प्रत्यस्थात् प्रत्यवस्थातुं निराकर्तुं न शक्नोतीति देवाः परस्परमूचुः। तत्रेदमिन्द्रियमित्यक्षरसा-म्यात् इन्द्रनाम सम्पन्नम्। तन्नामाभिज्ञः सामर्थ्यातिशयवान् भवति॥

परमेष्ठिनामनिर्वचनं दर्शयति। "अयं वा इदं परमो-

ऽभूदिति। तत्परमेष्ठिनः परमेष्ठित्वम्। य एवं वेद। परमामेव काष्ठां गच्छति" इति। परमः सर्व्वोत्तमः प्रजापतिरेवेदमिन्द्ररूपोऽभूदिति देवा अब्रुवन्। तस्मात् परमे स्थित इत्यक्षरसाम्यात् परमेष्ठिनाम सम्पन्नम्। एतन्नामवेदी ऐश्वर्य्यस्य काष्ठां प्राप्नोति॥

अथेन्द्रस्य सर्व्वदेवसेव्यत्वं दर्शयति। "तं देवाः समन्तं पर्य्यविशन्। वसवः पुरस्तात्। रुद्रा दक्षिणतः। आदित्याः पश्चात्। विश्वे देवा उत्तरतः। अङ्गिरसः प्रत्यञ्चम् [५]। साध्याः पराञ्चम्। य एवं वेद। उपैनꣳ समानाः संविशन्ति" इति। सभायामुपविष्टं तमिन्द्रं सर्व्वतः परिवेष्ट्य सेवन्ते। वस्वादयो गणाः चतुर्षु दिक्षु व्यवस्थिता उपविष्टा अङ्गिरसःप्रभृतयो महर्षयः कश्चिदपि उपवेशनं कृत्वा यथा यन्मुखमिन्द्रं प्रत्यञ्चं सम्मुखं कृत्वा सेवन्ते। साध्याख्या देवविशेषास्तमिन्द्रं पराञ्चं विमुखं कृत्वा पृष्ठतः कृत्वा सेवन्ते। एवं वेदितारमेनं पुरुषं समानाः सर्व्वे पुरुषा उपेत्य समीप उपविश्य सेवन्ते॥

अथेन्द्रस्य राजनीत्या प्रजाभ्यः सम्पादनप्रकारं दर्शयति। "स प्रजापतिरेव भूत्वा प्रजा आवयत्। ता अस्मै नातिष्ठन्तान्नाद्याय। ता मुखं पुरस्तात् पश्यन्तीः। दक्षिणतः पर्य्यायन्। स दक्षिणतः पर्य्यवर्त्तयत। ता मुखं पुरस्तात् पश्यन्तीः। मुखं दक्षिणतः पर्य्यायन्। स दक्षिणतः पर्य्यवर्त्तयत। ता मुखं पुरस्तात् पश्यन्तीः। मुखं दक्षिणतः [६]। पश्चात् पर्य्यायन्। स पश्चात्पर्य्यवर्त्तयत। ता मुखं पुरस्तात् पश्यन्तीः।

मुखं दक्षिणतः । मुखं पश्चात् । उत्तरतः पर्य्यायन् । स उत्तरतः पर्य्यावर्त्तयत । ता मुखं पुरस्तात् पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । मुखमुत्तरतः । ऊर्द्ध्वा उदायन् । स उपरिष्टान्न्यवर्त्तयत । ताः सर्व्वतोमुखो भूत्वाऽवयत् । ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय" इति । इन्द्रः स्वयं प्रजापतिरेव प्रजापतिसमानसामर्थ्ययुक्त एव भूत्वा ताः प्रजा आवयत् स्वाधीना अकरोत् । स्वस्योचितं करं दातुं आज्ञापितवानित्यर्थः । ताः सर्व्वाः प्रजाः अस्मै अस्येन्द्रस्य अन्नाद्याय नातिष्ठन्त । अन्नभागकरं दातुं नाङ्गीकृतवन्त इत्यर्थः । तास्तथाविधाः पूर्व्वस्यां दिशि वर्त्तमाना इन्द्रस्य मुखं मुख्यं कञ्चिदिन्द्रप्रेषितं करस्वीकारक्षमं पूर्व्वस्यां दिशि पश्यन्तः ततः पलाय्य दक्षिणस्यां दिशि पर्य्यायन् गताः । ततः स इन्द्रः तदवगत्या स्वमुखसमानप्रबलं पुरुषं दक्षिणस्यां दिशि प्रेरितवान् । ततस्ताः प्रजा दिग्द्वये मुखं पश्यन्तः पश्चिमां दिशं प्राविशन् । एवं पश्चिमोत्तरोर्द्धदिक्षु योज्यम् । ततः स इन्द्रः पञ्चस्वपि दिक्षु स्वकार्ये भृत्यानवस्थाप्य तद्द्वारा स्वयं सर्व्वतो मुखो भूत्वा सर्व्वाः प्रजाः वशीकृतवान् । ततः प्रजाः पलायितुं दिगन्तरमलभमाना अस्येन्द्रस्यान्नाद्यरूपं करं दातुमङ्गीकृतवन्तः ॥

एतद्विज्ञानं प्रशंसति । "य एवं विद्वान् परि न्यवर्त्तयतेति च । प्रजापतिरेव भूत्वा प्रजा अत्ति । तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय । अन्नाद एव भवति" इति । यः पुमानेवमिन्द्रस्य

परिपालनप्रकारं विद्वान् परिवर्त्तयते निवर्त्तयते च शिक्षकस्य प्रेरणं परिवर्त्तनं शिक्षिताभ्यः प्रजाभ्यः स्वपुरुषनिवारणं निवर्त्तनं तदुभयकुशलः स्वयं प्रजानां पालको भूत्वा सर्व्वाः प्रजा अत्ति अनुभवतीत्यर्थः। तास्र प्रजाः अस्मै करं दातुं अभ्युपगच्छन्ति असंशयं भोगसम्पन्नो भवति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥ १० ॥

अथ एकादशोऽनुवाकः।

दशमेऽनुवाके इन्द्रस्याधिपत्यं प्रपञ्चितम्। तमेवं होतृमन्त्रसृष्टिप्रसक्तानुप्रसक्तं प्रपञ्चं परित्यज्य एकादशे प्रकृतानां होतृमन्त्राणामेव पुरुषार्थाः केचित्प्रयोगा अभिधीयन्ते। तत्रादौ दशहोतृमन्त्रस्य प्रयोगं विधत्ते। "प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति। स एतं दशहोतारमपश्यत्। तं प्रायुङ्क्त। तस्य प्रयुक्तिबहोर्भूयानभवत्। यः कामयेत बहोर्भूयान्त्स्यामिति। स दशहोतारं प्रयुञ्जीत। बहोरेव भूयान् भवति" इति। लोके विद्यैश्वर्य्यादिसम्पन्नः पुरुषः बहुरित्युच्यते। ततोऽपि भूयस्त्वं कामयमानः प्रजापतिः चित्तिः स्रुगित्यादिमन्त्रेण जपहोमरूपं प्रयोगं कृत्वा तया प्रयुक्त्या भूयानभवत्॥

अथ पृथिवीहोतेति मन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयत। वीरो म आजायेतेति। स दशहोतुश्चतुर्होतारं नि-

रमिमीत। तं प्रायुङ्क्त [१]। तस्य प्रयुक्तीन्द्रोऽजायत। यः कामयेत वीरो म आजायेतेति। स चतुर्होतारं प्रयुञ्जीत। आस्य वीरो जायते" इति। वीरो वैदिकलौकिककर्म्मसु शूरः दशहोतुश्चित्तिः स्रुगित्यादिमन्त्रात् चतुर्होतारं पृथिवीहोतेति मन्त्रं प्रायुङ्क्त। मन्त्रप्रयोगेणेत्यर्थः॥

अथाग्निर्होतेति मन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयत पशुमान्त्स्यामिति। स चतुर्होतुः पञ्च होतारं निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्तिपशुमानभवत्। यः कामयेत पशुमान्त्स्यामिति। स पञ्चहोतारं प्रयुञ्जीत [२]। पशुमानेव भवति" इति। एकस्य मन्त्रस्यानुष्ठानान्मन्त्रान्तरं सृष्ट्वा तदनुष्ठानेन पश्वादिफलप्राप्तौ प्रजापतेरिच्छैव नियामिका॥

सूर्य्यं ते चक्षुरिति मन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयतर्तवो मे कल्पेरन्निति। स पञ्चहोतुः षड्ढोतारं निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्त्यृतवोऽस्मा अकल्पन्त। यः कामयेतर्तवो मे कल्पेरन्निति। स षड्ढोतारं प्रयुञ्जीत। कल्पन्तेऽस्मा ऋतवः" इति। कल्पेरन् स्वस्वोचितफलप्रदा भूयासुरित्यर्थः॥

अथ महाहविर्होतेत्यस्य मन्त्रस्य प्रयोगं विधत्ते। "सोऽकामयत सोमपः सोमयाजी स्याम्। आ मे सोमपः सोमयाजी जायेतेति [३]। स षड्ढोतुः सप्तहोतारं निरमिमीत। तं प्रायुङ्क्त। तस्य प्रयुक्तिसोमपः * सोमयाज्यभवत्। आस्य

* अत्र तस्य सोमप इति F चिह्नितपुस्तकपाठः।

सोमपः सोमयाज्यजायत। यः कामयेत सोमपः सोमयाजी स्याम्। आ मे सोमपः सोमयाजी जायेतेति। स सप्तहोतारं प्रयुञ्जीत। सोमप एव सोमयाजी भवति। आस्य सोमपः सोमयाजी जायते" इति। परकीययज्ञे स्वयमृत्विक्त्वेन सोमस्य पाता सोमपः स्वयं यागस्य कर्त्ता सोमयाजी स्वयं तादृश उभयविधो भूया स्वपुत्रोऽपि उभयविधो भूयादित्यत्र कामना॥

अथ मन्त्रपञ्चकस्य कामधेनुरूपत्वविवक्षया पशुत्वं सम्पाद्य प्रशंसति। "स वा एष पशुः पञ्चधा प्रतितिष्ठति [४]। पद्भिर्मुखेन" इति। यथा लौकिकपशुश्चतुर्भिः पादैः एकेन मुखेन च प्रतिष्ठितो भवति। तथाऽयं पञ्चमन्त्रसङ्घः पशुरूपः। तत्र चत्वारः पादाः पञ्चमो मन्त्रः मुखः सोऽयं पशुः पञ्चभिः प्रकारैः फलप्रदो लोके प्रतिष्ठितः॥

अथ कामधेनुरूपान् पशून् स्वर्गप्राप्तितया प्रशंसति। "ते देवाः पशून् वित्वा। सुवर्गं लोकमायन्" इति॥

अथ होतृमन्त्रं स्वर्गदानप्रदत्वेन विशेषतः प्रशंसति। "तेऽमुष्मिँल्लोके व्यक्षुध्यन्। तेऽब्रुवन्। अमुतः प्रदानं वा उपजिजीविमेति। ते सप्तहोतारं यज्ञं विधायायास्यम्। आङ्गीरसं प्राहिण्वन्। एतेनामुत्र कल्पयेति। तस्य वा इयं क्लृप्तिः [५]। यदिदं किञ्च। य एवं वेद। कल्पतेऽस्मै। स वा अयं मनुष्येषु यज्ञः सप्तहोता। अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति।

य एवं वेद। उपैनं यज्ञो नमति" इति। तदेतद्वाक्यं सप्तमानुवाके व्याख्यातम्॥

होतृमन्त्राणामग्निहोत्रादिषु यः प्रयोगो विवक्षितस्तद्वेदनं प्रशंसति। "यो वै चतुर्होतॄणां निदानं वेद। निदानवान् भवति। अग्निहोत्रं वै दशहोतुर्निदानम्। दर्शपूर्णमासौ चतुर्होतुः। चातुर्मास्यानि पञ्चहोतुः। पशुबन्धः षड्ढोतुः। सौम्योऽध्वरः सप्तहोतुः। एतद्वै चतुर्होतॄणां निदानम्। य एवं वेद। निदानवान् भवति [६] इति। नितरां दीयते प्रयुज्यतेऽस्मिन्निति निदानम्। तन्मन्त्रप्रयोगस्थानम्। तच्च सूत्रकारेण विशदीकृतम्, अग्निहोत्रमारभ्यमाणो दशहोतारं मनसानुद्रुत्य आहवनीये हुत्वा सायमग्निहोत्रं जुहोति। दर्शपूर्णमासावारप्स्यमाणो चतुर्होतारं मनसानुद्रुत्येत्यादिना। तदेतदग्निहोत्रादिरूपं होतॄणां निदानं यो वेद निदानवान् भवति। स्थानवान् उपजीवनस्थानवान् भवति॥

अथास्य प्रश्नस्यानुवाकार्थसङ्ग्रहः।

दशहोतृद्वितीयाद्य पुंसः क्रत्वर्थमीरितम्।
चतुर्होत्रादिमन्त्राणां क्रत्वर्थन्तु द्वितीयके॥
तृतीये शुक्लपक्षाश्च चतुर्थे होतृमन्त्रतः।
लोकसृष्टिः पञ्चमे तु ब्राह्मणं स्यात् प्रतिग्रहः॥
दशमेऽहनि मन्त्राणां प्रयोगः षष्ठ ईरितः।
सप्तमे तूत्तरे शस्ता यज्ञा सोमाग्रताष्टमे॥
नवमे स्याज्जगत्सृष्टिर्दशमे त्विन्द्रराजता।

अन्ते पुमर्थो होतॄणां प्रयोगस्य समीरितः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवर्त्तयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

समाप्तश्चायं द्वितीयः प्रपाठकः ।

# तैत्तिरीय-ब्राह्मणभाष्य

## द्वितीयकाण्डे तृतीयप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ॐ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके द्वितीये हि होतृब्राह्मणमीरितम् ।
तद्ब्राह्मणस्य शेषोऽथ तृतीये समुदीर्य्यते ॥

तत्र प्रथमानुवाके सर्व्वेषां होतृमन्त्राणां चतुर्होतृमन्त्रेण व्यवहारः प्रश्नोत्तराभ्यां प्रतिपादयति। "ब्रह्मवादिनो वदन्ति। किं चतुर्होतॄणां चतुर्होतृत्वमिति। यद्देवेषु चतुर्द्धा होतारः। तेन चतुर्होतारः। तस्माच्चतुर्होतार उच्यन्ते। तच्चतुर्होतॄणां चतुर्होतृत्वम्" इति। चतुर्होतृशब्देन व्यवह्रियमाणानां चित्तिःस्रुगित्यादिमन्त्राणां चतुर्होतृशब्दवाच्यत्वं कथमिति एवं ब्रह्मवादिनां प्रश्नः। तत्रोत्तरमेतत्, होताध्वर्य्युराग्नीध्रो ब्रह्म, इत्येवं चतुर्द्धा होमकर्त्तारो यस्मादेषु मन्त्रेषु श्रूयन्ते तेन कारणेन एते मन्त्राश्चतुर्होतारः। तत्र पृथिवीहोता, द्यौरध्वर्य्युः, रुद्रोऽग्नीत, वृहस्पतिरुपवक्ता, इत्येतस्मिन्मुख्ये चतुर्होतृमन्त्रे यथा होत्रादय एवमग्निर्होता, अश्विनावध्वर्य्युः, त्वष्टाऽग्नीत्, मित्र उपवक्ता, इत्यादिष्वपि मन्त्रेषु होत्रादयः श्रुताः। तत्रोपवक्ता ब्रह्मा। चित्तिःस्रुगिति मन्त्रे यद्यप्याग्नीध्रो न श्रुतः तथापि होत्रादिभिरसावुपलक्षणीयः। यद्यपि सूर्य्यन्ते चक्षुरिति मन्त्रे होत्रादयो न श्रुताः तथापि सृष्टिन्यायेन बाहुल्यात् तेऽप्युपलक्षयितुं शक्यन्ते। यथा सृष्टीरुपदधातीत्येकस्मिन्मन्त्रे सृष्टिलिङ्गाभावेऽपि अन्येषु सृष्टिलिङ्गेषु सद्भावात्तत्र हि तेनापि सह सृष्टिशब्दार्थत्वं निर्णीतम्। एवमत्रापि होतृप्रतिपादनरहितेनापि मन्त्रेण सह तत्सहितोत्तरे सर्व्वे मन्त्राश्चतुर्होतृशब्देन व्यवहर्तुं शक्यन्ते। अस्ति चात्र लौकिको दृष्टान्तः। "एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति। यस्मादेवं

तस्माद्वैदिकैः सर्व्वैरेते मन्त्राश्चतुर्होतार इत्युच्यन्ते। चत्वारो होमकर्त्तारो येषु मन्त्रेष्विति व्युत्पत्त्या तेषां मन्त्राणां चतुर्होतृनाम सम्पन्नम् ॥

एतेषां मन्त्राणां तदभिमानीदेवतातादात्म्यज्ञानेन समृद्धिफलं दर्शयति। "सोमो वै चतुर्होता। अग्निः पञ्चहोता। धाता षड्ढोता। इन्द्रः सप्तहोता [१]। प्रजापतिर्दशहोता। य एवं चतुर्होतॄणामृद्धिं वेद। ऋध्नोत्येव" इति। यथोक्ता सोमादिदेवता रूपकमेव मन्त्राणां समृद्धिः ॥

पुनरपि चतुर्द्धाफलप्रदर्शनेन प्रशंसति। "य एषामेवं बन्धुतां वेद। बन्धुमान् भवति। य एषामेवं क्लृप्तिं वेद। कल्पतेऽस्मै। य एषामेवमायतनं वेद। आयतनवान् भवति। य एषामेवं प्रतिष्ठां वेद [२]। प्रत्येव तिष्ठति" इति। बन्धूनां समूहो बन्धुता। यथा लोके ब्राह्मणाः क्षत्रियाः भारद्वाजगोत्रीया इत्येवमेतेनोपाधिना व्यवह्रियमाणाः परस्परं बन्धवः। एवमेतेऽपि मन्त्रा एकेन होतृत्वोपाधिना व्यवह्रियमाणत्वात् परस्परं बन्धवः। तत्समूहं बन्धुभावं यो वेद सोऽयं बहुभिर्बन्धुभिर्युक्तो भवति। क्लृप्तिरनुष्ठानजपहोमादिकम्। तद्वेदिनः स्वाभिमतमन्त्रक्रिया कल्प्यते निष्पाद्यते। आयतनं तदनुष्ठानाधारभूतमग्निहोत्रादिकं कर्म्म। तच्च पूर्व्वमेवोदाहृतम्, अग्निहोत्रं वै दशहोतुर्निदानमित्यादिना। तद्वेदिता निवासस्थानं लभते। प्रतिष्ठाफलमास्य वीरो जायत इत्यादिकम्। तद्वेदिता धनादिभिः प्रतिष्ठितो भवति ॥

पूर्वं चतुर्होतृशब्देन सर्व्वेषां व्यवहारकारणमुक्तम्। इदानीं दशहोत्रादिशब्दैः सर्व्वव्यवहाराभावे कारणं प्रश्नोत्तराभ्यां दर्शयति। "ब्रह्मवादिनो वदन्ति। दशहोता चतुर्होता। पञ्चहोता षड्ढोता सप्तहोता। अथ कस्माच्चतुर्होतार उच्यन्त इति। इन्द्रो वै चतुर्होता। इन्द्रः खलु वै श्रेष्ठो देवतानामुपदेशनात्। य एवमिन्द्रं श्रेष्ठं देवतानामुपदेशनाद्वेद। वसिष्ठः समानानां भवति। तस्माच्छ्रेष्ठमायन्तं प्रथमेनैवानुबुध्यन्ते। अयमागन्। अयमवासादिति। कीर्त्तिरस्य पूर्व्वागच्छति जनतामायतः। अथो एनं प्रथमेनैवानुबुध्यन्ते। अयमागन्। अयमवासादिति" [३] इति। दशहोत्रादयः पञ्चशब्दा विद्यन्ते तेषां मध्ये चतुर्होतृशब्देन यथा सर्व्वेषामुपलक्षणम्। एवं दशहोत्रादिशब्देनापि छत्रिन्यायेन उपलक्षयितुं शक्यत्वात् कुतः शब्दान्तरैर्नोपलक्ष्यन्ते। चतुर्होतृशब्देनैव तदुपलक्षणनियमे किं कारणमिति ब्रह्मवादिनां प्रश्नः। तत्रैतदुत्तरम्। चतुर्होतृमन्त्राणां कारणत्वादयं मन्त्र इन्द्रस्वरूपः। तत्कारणत्वञ्च पूर्व्वोक्तम्, तं चतुर्होत्रा प्राजनयन्निति। इन्द्रस्य देवतानां मध्ये प्रशस्ततमः कुतः, उपदेशनात्। उपदिष्टं किं पूर्व्वस्मिन् प्रपाठके। इन्द्रस्य देवाधिपत्यं इन्द्ररूपत्वेन चतुर्होता सर्व्वेषु श्रेष्ठः। ततः श्रेष्ठेनैव सर्व्वस्य उपदेशो युक्तो न त्वन्येन। यः पुमानिन्द्रश्रेष्ठत्वं श्रुत्युपदिष्टं वेद स पुमान् समानानां स्वकीयानां निवासहेतुर्भवति। यस्मादत्र श्रेष्ठेनैव चतुर्होत्रा सर्व्वेषां व्यपदेशो

नेतरेण। तस्माल्लोकेऽपि सहस्रसङ्ख्याकैर्जनैः सह समागच्छन्तं श्रेष्ठं राजानममात्यं वा दृष्ट्वा प्रजाः सर्व्वाः प्रथमेनैव श्रेष्ठपुरुषनाम्ना अनुबुध्यन्ते व्यवहरन्ति। अयमागन्, अयं राजा आगन् आगच्छति। अयममात्यः समागच्छतीति। अथापि तेन सह सर्व्वेऽप्यन्ये समागच्छन्ति तथापि बहवः समागच्छन्ति। छत्रधारी समागच्छति चामरधारी समागच्छतीत्येवं श्रेष्ठत्वं व्यवहरन्ति। तथा तस्मिन् ग्रामे अयमवासात् ग्रामस्वामी देवदत्तोऽत्र निवसतीत्येवं श्रेष्ठनाम्ना व्यवहरन्ति। न त्वस्मिन्नगरे दासो निवसति दासी निवसतीति वा कदाप्यश्रेष्ठनाम्ना व्यवहरन्ति। किञ्च दूरदेशादागच्छतो राज्ञः कीर्त्तिः पूर्व्वभाविनी सति देशविशेषेऽवस्थितं जनसमूहं प्राप्नोति तदापि मुख्यस्यैव कीर्त्तिर्न च श्रेष्ठस्य भृत्यादेः। अतोऽपि कारणादेनं जनसङ्घमायन्तं मुख्यस्य नाम्नैव व्यवहरन्ति अयं राजा समागच्छतीति। तथास्मिन् ग्रामे अयं स्वामी निवसतीति। तस्माल्लोकवद्वेवात्रापि श्रेष्ठेन चतुर्होत्रा सर्व्वमन्त्रव्यवहारो न त्वितरैर्दशहोत्रादिभिरित्यर्थः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

## अथ द्वितीयोऽनुवाकः।

प्रथमानुवाके चतुर्होतृशब्देन सर्व्वहोतृमन्त्रव्यवहार उपपादितः। द्वितीये होतृमन्त्रेण नैमित्तिका अभिधीयन्ते। तत्रादौ तावद्दक्षिणाप्रतिग्रहे कश्चिद्विशेषं विधत्ते। "दक्षिणां प्रतिग्रहीष्यन्त्सप्तदशकृत्वोऽपान्यात्। आत्मानमेव समिन्धे। तेजसे वीर्य्याय। अथो प्रजापतिरेवैनां भूत्वा प्रतिगृह्णाति। आत्मनो नार्त्यै" इति। अपान्यात् वायोरेकतराकर्षणरूपं निश्वासं कुर्य्यात्। तेन शरीरमध्ये स्थितो भवति। तेजः प्रतिग्रहयोग्यता, वीर्य्यं प्रतिग्रहप्रयुक्तदोषनिवारणसामर्थ्यम्, तदुभयं अनेन निश्वासेन मध्ये तिष्ठति। अपि च प्रजापतेः सप्तदशाचरत्वात् सङ्ख्यासाम्येन तद्रूप एवं भूत्वा दक्षिणां प्रतिगृह्णाति ततस्त्वात्मन आर्त्तिः प्रत्यवायरूपो न भवति॥

अथ होतृमन्त्रेण नैमित्तिकं विधत्ते। "यद्येनमार्त्विज्याद्वृतꣳ सन्तं निर्हरेरन्। आग्नीध्रे जुहुयाद्दशहोतारम्। चतुर्गृहीतेनाज्येन। पुरस्तात् प्रत्यङ् तिष्ठन्। प्रतिलोमं विग्राहम् [१]। प्राणानेवास्योपदासयति" इति। आर्त्विज्यार्थं तं कश्चिदेनं पुरुषं इतरे यदि दोषेण आर्त्विज्यान्निराकृतवन्तस्तदानीं निराकृतः पुरुषः होमं जुहुयात्। तदा होतृमन्त्रस्य सामाध्वर्य्युरित्येतद्यदन्तिमं वाक्यं तदारभ्य चित्तिःस्रुगित्यादिवाक्ये समाप्तिः प्रातिलोम्यम्, तत्रापि प्रतिवाक्यं विगृह्य पृथक् पृथक् आहुतीर्जुहुयात्। एतस्य यो निराकर्त्ता तस्य प्राणानुपचपयति॥

अथ प्रकारान्तरेण नैमित्तिकहोमं विधत्ते। "यद्येनं पुनरुपशिक्षेयुः। आग्नीध्र एव जुहुयाद्ग्रहोतारम्। चतुर्गृहीतेनाज्येन। पश्चात्प्राङासीनः। अनुलोममविग्राहम्। प्राणानेवास्मै कल्पयति" इति। यदि तदीयहोमाद्भीताः मन्त्र एनं निराकृतं पुरुषं पुनरपि स्वीकुर्युः। तदानीं विरोधिनिग्रहार्थमनुष्ठितात् पूर्वं होमात् विपर्ययेणानुग्रहार्थं होमं कुर्यात्। तत्र चित्तिस्रुगादिरनुलोमपाठः। आहुतिश्चैकैव। न तु विगृह्य होमः। तेन तस्य निराकर्तुः प्राणान् कल्पयति स्वस्थान् करोति॥

अथान्यं प्रयोगं विधत्ते। "प्रायश्चित्ती वाग्घोतेत्यृतुमुख ऋतुमुखे जुहोति। ऋतूनेवास्मै कल्पयति। कल्पन्तेऽस्मा ऋतवः [२]। क्लृप्ता अस्मा ऋतवः आयन्ति" इति। प्रायश्चित्तं कर्त्तव्यमित्येवं बुद्धिमान् प्रायश्चित्ती स पुमान् वाग्घोतेत्यनुवाकेन तस्मिन् ऋतुप्रक्रमे जुहुयात्। यथाविहितानुष्ठानं स्वमनसि शङ्कितं भवति। प्रतिपदोक्तञ्च प्रायश्चित्तं न दृश्यते तदानीं शङ्कितदोषपरिहाराय समनन्तरभाविनः ऋतोरुपक्रमदिने तेन अनुवाकेन जुहुयात्। स चानुवाक आरण्यकाण्ड एवमाम्नातः, वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। अपोऽभिगरः। मनो हविः। तपसि जुहोमि। भूर्भुवः स्वः। ब्रह्म स्वयम्भु। ब्रह्मणे स्वयम्भुवे स्वाहेति। तत्र वागादिदेवतानां होत्रादिरूपत्वमनुसन्धेयम्, होत्रा शस्त्रेषु शंसमानेषु अथामोद इवेति अभिगरोऽध्वर्युकर्तृकः प्रतिगरः शंसनकाले होता

अध्वर्य्युमाभिमुख्येन आह्वयति शंसावोमिति। हे अध्वर्य्यो शस्त्रं पठामि मदीयशस्त्रपाठकाले प्रतिगराय त्वं सावधानो भव *। य एते भूरादयस्त्रयो लोकास्तेषामादिकारणं यत् स्वयम्भु ब्रह्म तस्मै जुहुधीति स्वकीया वागाह। अनेन मन्त्रेण होमे सति शङ्कितप्रायश्चित्तपरिहारेण सर्व्वानृतूनस्मै होमकर्त्रे तत् स्वयम्भु ब्रह्म फलप्रदान् करोति। तदृतवः एतदर्थं फलप्रदानसमर्था भवन्ति। समर्थाः सन्त अस्य समीपमागच्छन्ति। तत्र सूत्रकारस्तु कल्पन्तेऽस्मादित्यादिफलसवलोक्य काम्यप्रयोगत्वेनोदाजहार, अथैष ऋतुमुखी यः षड्ढोता वाग्घोतेति तस्य वदत्यृतुमुख ऋतुमुखे जुहुयादिति स सार्व्वकाम इति॥

अथ वाग्घोतेति मन्त्रं प्रशंसति। "षड्ढोता वै भूत्वा प्रजापतिरिदꣳ सर्व्वमसृजत। स मनोऽसृजत। मनसोऽधि गायत्रीमसृजत। तद्गायत्रीं यश आर्च्छत्। तामालभत। गायत्रिया अधिछन्दाꣳस्यसृजत। छन्दोभ्योऽधिसाम। तत् साम यश आर्च्छत्। तदालभत [३]। साम्नोऽधियजूꣳष्यसृजत। यजुर्भ्योऽधिविष्णुम्। तद्विष्णुं यश आर्च्छत्। तमालभत। विष्णोरध्योषधीरसृजत। ओषधीभ्योऽधिसोमम्। तत्सोमं यश आर्च्छत्। तमालभत। सोमादधि पशूनसृजत। पशुभ्योऽधीन्द्रम् [४]। तदिन्द्रं यश आर्च्छत्। तदेनं नाति-

* शंसनकाल इत्यादिः सावधानो भवेत्यन्तः पाठः G चिह्नितपुस्तके वर्त्तते। F चिह्नितपुस्तके तु नैष पाठो दृश्यते।

प्राच्यवत। इन्द्र इव यशस्वी भवति। य एवं वेद। नैनं यशोऽतिप्रच्यवते" इति। वाग्घोतेति मन्त्रे होतृपत्न्यादीनां होमानां वर्णानां विद्यमानत्वात् अयं षड्ढोता प्रजापतिस्तन्मन्त्रानुष्ठानेन तद्रूपो भूत्वा सर्व्वमिदमसृजत। आदौ तावत्सर्व्वसङ्कल्पक्षमं मनः सृष्ट्वा तेन मनसा सङ्कल्प्य तदूर्द्ध्वं गायत्रीदेवतामसृजत। तदानीं प्रजापतिसम्बन्धि यद्यशः सामर्थ्यं तद्गायत्रीं प्राप्नोति। ततः प्रजापतिः तां गायत्रीं पशुवदालभ्य गायत्र्या अधिकानि उष्णिगादीनि छन्दांस्यसृजत। तेभ्यः छन्दोभ्यः अत्यधिकं समस्वरोपेतं साम असृजत। ततः सामदेवतां यशः प्राप्नोत्। अथ प्रजापतिस्तदपि साम पशुत्वेनालभत। एवमुत्तरत्र योज्यम्। तत्प्रजापतेर्यशः अन्तत इन्द्रं प्राप्य तमनतिक्रम्य नान्यत्र क्वापि गतम्। तदेवं षड्ढोतृमन्त्रसामर्थ्यात् इन्द्राधिपत्यपर्य्यन्ता सृष्टिरासीत्। ततोऽयं अत्यन्तप्रशस्तः। य एवं मन्त्रवृत्तान्तं वेद सोऽपि इन्द्रवद्यशस्वी भवति। तद्यशस्तं पुरुषं कदाचिदप्यतिक्रम्य नान्यत्र गच्छति॥

प्रतिग्रहमन्त्रानुवाके सोमाय वासो रुद्राय गामित्यादिना यानि द्रव्याण्याम्नातानि तद्व्यतिरिक्तद्रव्यविषये प्रतिग्रहमन्त्रं विधत्ते।"यद्वा इदं किञ्च। तत्सर्व्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात्। तदेनं प्रतिगृहीतं नाहिनत्। यत् किञ्च प्रतिगृह्णीयात्। तत्सर्व्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्। इयं वा उत्तान आङ्गीरसः। अनयैवैनत् प्रतिगृह्णाति। नैनꣳ हिनस्ति" इति। लोके प्रतिग्रहयोग्यं यत्किञ्चिद्द्रव्यं तत्सर्व्वम-

ङ्गिरसः पुत्र उत्तानाख्य एव पुरा कदाचित् प्रत्यगृह्णात्। तत्र प्रतिगृहीतं द्रव्यं प्रतिग्रहीतारमुत्तानमेनं नैव हिंसेत्। अतः अन्योऽपि सर्व्वमुत्तान इति मन्त्रेणैव प्रतिगृह्णीयात्। यथा भूमिः सर्व्वं सहा तथायमुत्तानः सर्व्वप्रतिग्रहसहिष्णुः। ततो भूमिरूपत्वात् भूम्या सर्व्वं प्रतिगृहीतं न तु पुरुषेणेति एनं पुरुषं प्रतिग्रहदोषो न हिनस्ति॥

अथ गवाश्वप्रतिग्रहे विशेषं विधत्ते। "बर्हिषा प्रतीयाद्गां वाश्वं वा। एतद्वै पशूनां प्रियं धाम। प्रियेणैवैनं धाम्ना प्रत्येति" [५] इति। गामश्वं वा प्रतिग्रहीष्यन् पुरुषः तृणमुष्टिना युक्तः सम्मुखं गच्छेत्। तृणस्य पशुप्रियवस्तुत्वात् पशुप्रियेणैव वस्तुना सह सम्मुखो भवति॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

अथ तृतीयोऽनुवाकः।

द्वितीये नैमित्तिको होतृमन्त्रहोम उक्तः। तृतीये केशनिवर्त्तनविषये कञ्चिज्ज्ञानविशेषं दर्शयति। एतच्च होतृमन्त्रप्रयुक्तेषु कर्म्मसु चातुर्मास्यादिकर्म्मसु च यत्र यत्र केशनिकृन्तनमस्ति तत्र सर्व्वत्राकुलेन एतद्वेदनं द्रष्टव्यम्। तदिदं वेदनमन्वयव्यतिरेकाभ्यां विधत्ते। "यो वा अविद्वान्निवर्त्तयते। विशीर्षा स पाप्माऽमुष्मिंल्लोके भवति। अथ यो विद्वान्निवर्त्तयते। स शीर्षा विपाप्माऽमुष्मिंल्लोके भवति" इति।

वक्ष्यमाणप्रकारेणाग्न्यादयो देवाः केशनिवर्त्तनेन यां पुष्टिं सम्पादितवन्तः। तत्पुष्टिसाधनमिदं निवर्त्तनमित्यविदित्वा यः केशनिकृन्तनं प्राप्नोति स स्वर्गलोके शिरोरहितः पापी भवति। तद्वेदनपूर्व्वके तु निवर्त्तने शिरःसहितः पापरहितो भवति। तस्माद्वेदनं सम्पादयेत्॥

तास्ता अग्न्यादिभिः सम्पादिताः पुष्टीः क्रमेण दर्शयति। "देवता वै सप्त पुष्टिकमान्यवर्त्तयन्त। अग्निश्च पृथिवी च। वायुश्चान्तरिक्षञ्च। आदित्यश्च द्यौश्च चन्द्रमाः। अग्निर्न्यव-र्त्तयत। स साहस्रमपुष्यत् [१]। पृथिवी न्यवर्त्तयत। सौषधी-भिर्वनस्पतिभिरपुष्यत्। वायुर्न्यवर्त्तयत। स मरीचिभिरपु-ष्यत्। अन्तरिक्षं न्यवर्त्तयत। तद्वयोभिरपुष्यत्। आदित्यो न्यवर्त्तयत। स रश्मिभिरपुष्यत्। द्यौर्न्यवर्त्तयत। सा नक्षत्रैर-पुष्यत्। चन्द्रमा न्यवर्त्तयत। सोऽहोरात्रैरर्द्धमासैर्मासैर्ऋतुभिः संवत्सरेणापुष्यत्। तान् पोषान् पुष्यति। यांस्तेऽपुष्यन्। य एवं विद्वान्नि च वर्त्तयते परि च" [२] इति। न्यवर्त्तयन्त स्वकीयान् केशान्निवर्त्तयन्त, साहस्रं सहस्रसङ्ख्योपेतं धनमपु-ष्यत् पुष्टमकरोत्। पृथिव्यादय ओषध्यादिभिः जगत्सृष्टिं स-म्पादितवन्तः। मरीचिशब्देन अग्नय उपलक्ष्यन्ते। वायुना ह्यग्नयः प्रज्वाल्यन्ते। वयोभिः पक्षिभिर्यः पुमान् अग्न्यादिदे-वताभिः सम्पादितां सृष्टिं तत्साधनत्वञ्च निवर्त्तनस्य विद्वान् निवर्त्तयते परिवर्त्तयते वा केशानां कर्त्तनं स पुमान् अग्न्या-दिभिर्याः पोषाः सम्पादितास्तान् पोषान् सर्व्वान् प्राप्नोति॥

इति श्रीमायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः।

तृतीये केशवपनाङ्गं पुष्टिवेदनमुक्तम्। अथ प्रतिग्रहमन्त्रेषु तत्तन्मन्त्रविज्ञानं चतुर्थेऽभिधीयते। तत्र हिरण्यप्रतिग्रहस्य महिमावेदनमन्वयव्यतिरेकाभ्यां विधत्ते। "तस्य वा अग्नेर्हिरण्यं प्रतिजगृहुषः। अर्द्धमिन्द्रियस्यापाक्रामत्। तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽर्द्धमिन्द्रियस्यात्मन्नुपाधत्त। अर्द्धमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वान् हिरण्यं प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। अर्द्धमस्येन्द्रियस्यापक्रामति" इति। पुरा कदाचिदग्निः मन्त्रमन्तरेण हिरण्यं प्रतिगृहीतवान्। तस्याग्नेः शरीरवर्त्ति यदिन्द्रियं वीर्य्यं तस्यार्द्धमग्नेः सकाशादपगतम्। तदानीं स्वकीयं बलक्षयं दृष्ट्वा तत्परिहाराय राजा त्वा वरुणो नयतु। देविदक्षिणेऽग्नये हिरण्यमित्येतेनैव मन्त्रेण प्रत्यगृह्णात्। तत्राग्निना पठ्यमाने मन्त्रे योऽयं चतुर्थ्यन्तोऽग्निशब्दस्तस्य कल्पान्तरगतोऽग्निरित्यर्थः। तद्ब्रवधानेन प्रतिग्रहे सति तेनैव मन्त्रेण पूर्व्वमेवं गतं स्वकीयवीर्य्यस्यार्द्धं स्वस्मिन्नेव पुनः समाधत्ते। यः पुमानेवं मन्त्रमहिमानं विद्वान् प्रतिगृह्णाति तस्येन्द्रियभागो नातिक्रामति। किन्तु स्वस्मिन्नेव समाहितो भवति। अविदुषस्तु स भागः स्वस्मादपगच्छति ॥

हिरण्यमन्त्रवत् वस्त्रगवाश्वपुरुषतल्पशकटप्रतिग्रहमन्त्राणां षण्णां वेदनमन्वयव्यतिरेकाभ्यां विधत्ते। "तस्य वै सोमस्य वासः प्रतिजग्रहुषः। तृतीयमिन्द्रियस्यापाक्रामत्[१]। तदेतेनैव प्रत्यगृह्णात्। तेन वै स तृतीयमिन्द्रियस्यात्मन्नुपाधत्त। तृतीयमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वान् वासः प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। तृतीयमस्येन्द्रियस्यापक्रामति। तस्य वै रुद्रस्य गां प्रतिजग्रहुषः। चतुर्थमिन्द्रियस्यापाक्रामत्। तामेतेनैव प्रत्यगृह्णात्। तेन वै स चतुर्थमिन्द्रियस्यात्मन्नुपाधत्त [२]। चतुर्थमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वान् गां प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। चतुर्थमस्येन्द्रियस्यापक्रामति। तस्य वै वरुणस्याश्वं प्रतिजग्रहुषः। पञ्चममिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स पञ्चममिन्द्रियस्यात्मन्नुपाधत्त। पञ्चममिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वानश्वं प्रतिगृह्णाति [३]। अथ योऽविद्वान् प्रतिगृह्णाति। पञ्चममस्येन्द्रियस्यापक्रामति। तस्य वै प्रजापतेः पुरुषं प्रतिजग्रहुषः। षष्ठमिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स षष्ठमिन्द्रियस्यात्मन्नुपाधत्त। षष्ठमिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वान् पुरुषं प्रतिगृह्णाति। अथ योऽविद्वान् प्रतिगृह्णाति। षष्ठमस्येन्द्रियस्यापक्रामति [४]। तस्य वै मनोस्तल्पं प्रतिजग्रहुषः। सप्तममिन्द्रियस्यापाक्रामत्। तमेतेनैव प्रत्यगृह्णात्। तेन वै स सप्तममिन्द्रियस्यात्मन्नुपाधत्त। सप्तममिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वाꣳस्तल्पं प्रतिगृह्णाति। अथ

योऽविद्वान् प्रतिगृह्णाति। सप्तममस्येन्द्रियस्यापक्रामति। तस्य वा उत्तानस्याङ्गीरसस्याप्राणत् प्रतिगृह्णतः। अष्टममिन्द्रियस्यापाक्रामत् [५]। तदेतेनैव प्रत्यगृह्णात्। तेन वै सोऽष्टममिन्द्रियस्यात्मन्नुपाधत्त। अष्टममिन्द्रियस्यात्मन्नुपाधत्ते। य एवं विद्वानप्राणत् प्रतिगृह्णाति। अप यो द्विद्वान् प्रतिगृह्णाति। अष्टममस्येन्द्रियस्यापक्रामति" इति। तृतीयचतुर्थादिशब्दा वीर्य्यभागपरा अप्राणत् प्राणवायुरहितमचेतनं शकटं उत्तानायाङ्गीरसायान इति तत्तत्पर्य्यायेषु प्रथमपर्य्यायवद्व्याख्येयम्॥

यदुक्तं द्वितीयानुवाकेनाम्नातमन्त्राणां उत्तानमन्त्रेण प्रतिग्रह इति। तदप्यत्र मन्त्रमहिमाविदनप्रसङ्गेन तदीयवेदनविधानार्थं पुनः पठति। "यद्वा इदं किञ्च। तत्सर्व्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात्। तदेनं प्रतिगृह्णीतन्नहिनत्। यत्किञ्च प्रतिगृह्णीयात्। तत्सर्व्वमुत्तानस्त्वाङ्गीरसः प्रतिगृह्णात्वित्येव प्रतिगृह्णीयात्। इयं वा उत्तान आङ्गीरसः। अनयैवैनत् प्रतिगृह्णाति नैनꣳ हिनस्ति" इति। पूर्व्ववद्व्याख्येयम्। एवं मन्त्रमहिमाप्यनुसन्धेयमिति तात्पर्य्यार्थः॥

इति चतुर्थोऽनुवाकः॥ ४॥

## अथ पञ्चमोऽनुवाकः।

चतुर्थे प्रतिग्रहमन्त्रमहिमाम्नानं विहितं द्वादशाहगतदशरात्रस्य दशमेऽहनि अध्वर्य्युप्रभृतयः प्रष्टारः सदस्पतिः

प्रवक्ता प्रश्नोत्तरे पञ्चमानुवाकेऽभिधीयते। अत्र प्रश्नोत्तर-रूपं सम्वादं विधत्ते। "ब्रह्मवादिनो वदन्ति" इति। इति वक्ष्यमाणप्रश्नोत्तररूपं वेदवाक्यं ब्रह्म तद्वदनमतिलङ्घ्य ब्रह्मवादिभिस्ते परस्परं वदन्ति सम्वादं कुर्युरित्यर्थः। अत एव सूत्रकारः, ब्रह्मवाद्यं वदन्त इति विज्ञायत इति शाखान्तरवचनमुदाजहार। उदाहृत्य चैवमुक्तम्, गृहपतिमेव सहर्त्विजः पर्युपविश्य पृच्छेयुरिति॥

तत्राध्वर्युगृहपत्योः प्रश्नोत्तरे वाक्ये दर्शयति। "यद्दशहोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केन प्रजा असृजन्तेति। प्रजापतिना वै ते गृहपतिनार्ध्नुवन्। तेन प्रजा असृजन्त" इति। यदा दशहोतृमन्त्राभिमानिनो देवाः सत्रमन्वतिष्ठन्त तदानीं केन गृहपतिः सत्ररूपां समृद्धिं प्राप्ताः। प्राप्य च केन गृहपतिना प्रजाः सृष्टवन्तः। सत्रार्थं दीक्षितेषु मध्ये मुख्यो गृहपतिः। स त्वितरेऽध्वर्युप्रभृतय ऋत्विजः। तत्राध्वर्युप्रश्नस्य गृहपतिनोत्तरमेव दत्तं प्रजापतिरेव दशहोतॄणां सत्रे गृहपतिरासीत् तेन प्रजापतिना फलसमृद्धिः प्रजोत्पत्तिश्च सम्पादिता॥

ब्रह्मणः प्रश्नस्योत्तरं दर्शयति। "यच्चतुर्होतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केनौषधीरसृजन्तेति। सोमेन वै ते गृहपतिनार्ध्नुवन् [१]। तेनौषधीरसृजन्त" इति।

होतुः प्रश्नस्योत्तरं दर्शयति।"यत्पञ्चहोतारः सत्रमासत। केन ते गृहपतिनार्ध्नुवन्। केनैभ्यो लोकेभ्योऽसुरान् प्राणुदन्त।

केनैषां पशूनवृञ्जतेति । अग्निना वै ते गृहपतिनार्ध्नुवन् । ते-नैभ्यो लोकेभ्योऽसुरान् प्राणुदन्त । तेनैषां पशूनवृञ्जत'' इति । एषामसुराणां पशून् विनाशितवन्तः । अन्यत् पूर्व्ववद्व्याख्येयम् ॥

अथ होत्रकाणां प्रश्नस्योत्तरं दर्शयति । ''यत् षड्ढोतारः सत्रमासत । केन ते गृहपतिनार्ध्नुवन् [२] । केनर्त्तूनकल्पय-न्तेति । धात्रा वै ते गृहपतिनार्ध्नुवन् । तेनर्त्तूनकल्पयन्त'' इति । पूर्व्ववद्व्याख्येयम् ॥

अथा होतुः प्रश्नस्योत्तरं दर्शयति । ''यत् सप्तहोतारः सत्रमासत । केन ते गृहपतिनार्ध्नुवन् । केन सुवरायन् । केने-माँल्लोकान्त्समतन्वन्निति । अर्य्यम्णा वै ते गृहपतिनार्ध्नुवन् । तेन सुवरायन् । तेनेमाँल्लोकान्त्समतन्वन्निति [३]'' । सुवरायन् स्वर्गं प्राप्ताः । समतन्वन् सन्तताम् अविच्छिन्नान् क्षतवन्तः ॥

उक्तेषु प्रश्नोत्तरेषु निर्णीतानां गृहपतीनां वदनं प्रशंसति । ''एते वै देवा गृहपतयः । तान् य एवं विद्वान् । अप्यन्यस्य गार्हपतेर्दीक्षते । अवान्तरमेव सत्रिणामृध्नोति'' इति । प्रजा-पतिः, सोमः, अग्निः, धाताः, अर्य्यमा च, इत्येते देवाः पूर्व्वोक्त-प्रश्नोत्तरेषु निर्णीता गृहपतयः । यः पुमान् तान् गृहपतीन् वि-दित्वा ध्यायेत् सोऽन्यस्यापि गार्हपत्ये कर्म्मणि यदि दीक्षते त-दानीमवान्तरमेव पृथगेव सत्रिणां फलं प्राप्नोति अयमर्थः । दीक्षितेषु सत्रिषु स्वयं गृहपतिर्न भवति । किन्तु अध्वर्य्युप्रभृ-तिषु कश्चित् गृहपतिस्तस्य यत्फलं तदेव तस्मै भवति । किञ्च तस्य एव सर्व्वे ऋत्विजः गृहपतिलोपपत्तिकर्म्मणि अनुकूला

भवन्ति। तथाच तस्य मुख्यत्वाभावेऽपि प्रजापत्यादिगृहपति-वेदनसामर्थ्येन सर्व्वेषां सत्रिणां यावत्फलं तावत्स्वयं पृथगेव प्राप्नोति॥

पूर्व्वोक्तस्य पञ्चमस्य गृहपतेरर्य्यमाख्यस्य वेदनं पुनर्विशेषेण प्रशंसति। "यो वा अर्य्यमणं वेद। दानकामा अस्मै प्रजा भवन्ति। यज्ञो वा अर्य्यमा। आर्य्या वसतिरिति वै तमाहुर्य्यं प्रशꣳसन्ति" इति। आर्य्याः पूज्याः गुर्वादयस्तेषामादौ योऽयमर्य्यमा देवेषु गृहपतित्वेनोक्तः सोऽयं यज्ञनिष्पादकत्वात् यज्ञ एव। एवं तमर्य्यमणं यो वेद अस्य वेदितुः पुत्राद्याः प्रजा दानातिशयेन कामा भवन्ति। स्वकर्तृकं दानं कामयन्ते दातारो भवन्तीत्यर्थः॥

प्रकारान्तरेण तमर्य्यमणं पुनः प्रशंसति। "आर्य्या वसतिर्भवति। य एवं वेद"[४] इति। आर्य्याः पूज्याः गुर्वादयस्तेषामावसतिः साकल्येन निवासहेतुरित्यनेनैव शब्देन लोके व्यवहरन्ति यः प्रशंसितुमिच्छति अयमर्थः। दानशीलं राजानं अमात्यं वा यदा प्रशंसति तदानीमयं राजा स्वयमार्य्याणां साधूनां विदुषां यष्टॄणां गुरूणाञ्च स्वकीयगृहनिवासहेतुरयमिति दातारं प्रशंसन्ति। तस्मादार्य्यावसतिशब्दः निरतिशयप्रशंसावाची। अर्य्यमाशब्दस्य आर्य्यावसतिशब्दपर्य्यायः। आर्य्याः पूज्यन्ते मन्यन्त इति वा व्युत्पत्तेः। ईदृशमर्य्यमाणं सर्व्वेषामार्य्याणां निवासहेतुं यो वेद सोऽप्यार्य्याणां निवासभूमिर्भवति॥

अथ चतुर्होतृमन्त्रवेदनं प्रशंसति। "यद्वा इदं किञ्च। तत् सर्व्वं चतुर्होतारः। चतुर्होतृभ्योऽधियज्ञो निर्म्मितः। स य एवं विद्वान् विवदेत। अहमेव भूयो वेद। यश्चतुर्होतॄन् वेदेति। स ह्येव भूयो वेद। यश्चतुर्होतॄन् वेद" इति। यदिदं किञ्चित् प्रजापतिसृष्टं जगत् दृश्यते तत्सर्व्वं होतृमन्त्राणां स्वरूपभूतम्। तन्मन्त्रबलादेव तत्सृष्टेः पूर्व्वप्रपाठके बहुधा प्रपञ्चितत्वात्। किञ्च चतुर्होतृमन्त्रेभ्यः ऊर्द्ध्वं सर्व्वोऽपि यज्ञो निर्म्मितः। तत्तद्यज्ञारम्भे होतृमन्त्रहोमस्य पूर्व्वं विहितत्वात्। एवं सति एवं विद्वान् विवदेत यः कोऽपि होतृमन्त्रमाहात्म्यं विद्वान् इतरैः सह विवादं कुर्य्यात्। कीदृशो विवाद इति तदुच्यते, योऽहं होतृमन्त्रान् वेद सोऽहमेव सर्व्वेषां मध्ये भूयो वेदितेति तस्मिन् विवादे तस्यैव होतृमन्त्राभिज्ञस्य जय इत्युत्तरवाक्ये प्रसिद्धवाचिना हि शब्देन स्पष्टीकरोति होतृमन्त्ररहस्यं यो वेत्ति स एव भूयो वेदेत्यतिप्रसिद्धमित्यर्थः॥

अथ होतृमन्त्राभिमानी देवविषयं वेदनं प्रशंसति। "यो वै चतुर्होतॄणाꣳ होतॄन् वेद। सर्व्वासु प्रजास्वन्नमत्ति [५]। सर्व्वा दिशोऽभिजयति। प्रजापतिर्वै दशहोतॄणाꣳ होता। सोमश्चतुर्होतॄणाꣳ होता। अग्निः पञ्चहोतॄणाꣳ होता। धाता षड्ढोतॄणाꣳ होता। अर्य्यमा सप्तहोतॄणाꣳ होता। एते वै चतुर्होतॄणाꣳ होतारः। तान् य एवं वेद। सर्व्वासु प्रजास्वन्नमत्ति। सर्व्वा दिशोऽभिजयति" [६] इति। होतृमन्त्रैर्होमादिकं निष्पाद्य फलसाधकाः प्रजापत्यादयो मन्त्राणां हो-

तारः। तान् यो वेद सोऽयं सर्व्वासु प्रजासु यदन्नं तत्सर्व्वमनुभवति। सर्व्वाः प्रजा अस्मै प्रशस्तमन्नं समर्पयन्तीत्यर्थः। किञ्च सर्व्वदिग्वर्त्तिन्यः प्रजाः अस्य वश्या भवन्ति। प्रजापतिर्वै दशहोतॄणामित्यादौ होतृमन्त्रस्य अवयवभेदात् प्रयोगभेदाद्वा बहुवचननिर्देशः। तान् य एवं वेदेत्यादि पुनरुक्तिरुपसंहारार्था॥

इति पञ्चमोऽनुवाकः॥ ५॥

अथ षष्ठोऽनुवाकः।

पञ्चमेऽनुवाके प्रश्नोत्तररूपः ब्रह्मविषयः सम्वाद उक्तः। षष्ठे होतृमन्त्रप्रशंसार्थमग्निहोत्रादिकर्म्मभिः प्रजापतिशरीरनिष्पादनमभिदधानः कर्म्मविशेषेषु ऋत्विक् विशेषेषु निर्णयोऽभिधीयते। तत्रादौ तावदग्निहोत्रस्यैक ऋत्विजं दर्शयति। "प्रजापतिः प्रजाः सृष्ट्वा व्यस्रꣳसत। स हृदयं भूतोऽशयत्। आत्मन् हा३ इत्यह्वयत्। आपः प्रत्यशृण्वन्। ता अग्निहोत्रेणैव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। ताः कुसिन्धमुपौहन्। तस्मादग्निहोत्रस्य यज्ञक्रतोः। एक ऋत्विक्" इति। प्रजापतिर्महता प्रयासेन प्रजाः सृष्ट्वा तेन प्रयासेन विस्रस्तहस्तपादादिसर्व्वावयवो हृदयमात्रावशेषः सन् व्यवहर्त्तुमशक्तः क्वचित् शयितोऽभूत्। तदानीं हे आत्मन्निति एवं स्वकीयं शरीरं आह्वतवान्। हेशब्दे योऽयं एकारः तस्य प्लुत आकार इकारशिरस्क आदेशो भवति। दूराद्धूानार्थः प्लुतः। आत्मशब्दः

शरीरवाची। तदेतच्छरीराक्रान्तं अब्देवता श्रुत्वा अग्निहो-त्रेण सह प्रजापतिसमीपे समागत्य कुभिन्धं शिरोव्यतिरिक्तं कवन्धमुपायन्। कुभिमात्मशोकं दधातीति कुभिन्धः। यद्य-पि यूपवन्तो यज्ञक्रतवः तथाप्यग्निहोत्रस्य तद्रूपत्वमुपचरितम्। यस्मात् सक्तदाक्रान्तेनाद्भिः सह अग्निहोत्रमागतं तस्मादग्नि-होत्रस्याध्वर्य्युरेक ऋत्विक्॥

अथ दर्शपूर्णमासयोः ब्रह्मा होताध्वर्य्युराग्नीदिति चतुर ऋत्विज इति दर्शयति। "चतुष्कृत्वोऽक्रयत्। अग्निर्वायुरा-दित्यश्चन्द्रमाः [१]। ते प्रत्यशृण्वन्। ते दर्शपूर्णमासाभ्यामेव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। त उपोहꣳश्चत्वार्य्यङ्गानि। तस्मा-द्दर्शपूर्णमासयोर्यज्ञक्रतोः। चत्वार ऋत्विजः" इति। अग्न्या-दयो देवाः दर्शपूर्णमासाभ्यां सहागत्य द्वौ हस्तौ द्वौ पादा-वित्येवं चत्वार्य्यङ्गान्यानीतवन्तः। ततो दर्शपूर्णमासयोश्चत्वार ऋत्विजः सम्पन्नाः॥

अथ चातुर्मास्यानां प्रतिप्रस्थात्रा सह पूर्व्वोक्ताश्चत्वार ऋ-त्विजो दर्शयति। "पञ्च कृत्वोऽक्रयत्। पशवः प्रत्यशृण्वन्। ते चातुर्मास्यैरेव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। त उपोहꣳल्लोमछवीं माꣳसमस्थिमज्जानम्। तस्माच्चातुर्मास्यानां यज्ञक्रतोः [२]। पञ्चर्त्विजः" इति। यथा प्रथमे पर्य्याये शरीरस्य सकृदाक्रान्तं यथा च द्वितीये पर्य्याये चतुराक्रान्तम्। तथा तृतीये पर्य्याये पञ्चवारमाक्रान्तम्। तदेतत्पश्वभिमानिनो देवाः श्रुत्वा चातु-र्मास्यैः सहागत्य लोमादीन्यानीतवन्तः। छवि त्वक्। यद्यपि

*प्रथमपर्य्याय एव कबन्धमानीतवन्तः। तथापि तत्र कण्ठस्याधस्तन जरुभ्यां ऊर्द्ध्ववर्त्तिमध्यभाग एव विवक्षितः। अतो द्वि-*तीयपर्य्याये हस्तपादानयनम्। तत्र उभयत्राकारमात्रं सम्पन्नम्। न तु लोमादिपरिपूर्त्तिः। स चास्मिन् पर्य्याये एव क्षतः। यस्मात् पञ्चवारमाम्नानं यस्माच्च लोमादिपञ्चकसम्पत्तिः। तस्मात्तत्साधनभूतानां चातुर्मास्यानां ऋत्विजः पञ्चसङ्ख्याकाः॥

अथ निरूढपशुबन्धादौ मैत्रावरुणेन सहितान् पूर्व्वोक्तान् पञ्चर्त्विजो दर्शयति। "षट्कृत्वोऽक्षयत्। ऋतवः प्रत्यशृण्वन्। ते पशुबन्धेनैव यज्ञक्रतुनोपपर्य्यावर्त्तन्त। त उपोहंस्तनावाण्डौ शिश्नमवाञ्चं प्राणम्। तस्मात् पशुबन्धस्य यज्ञक्रतोः। षडृत्विजः" इति। षड्वारमाम्नानात् स्तनादीनामपि षट्त्वात् तत्साधनभूते पशुबन्धे षड् ऋत्विजः सम्पन्नाः॥

अथ सोमयागे होता मैत्रावरुणब्राह्मणाच्छंसीनेष्टापोता आग्नीध्रो अच्छावाकश्चेति सप्तहोत्रान् दर्शयति। "सप्तकृत्वोऽक्षयत्। होत्राः प्रत्यशृण्वन्। ताः सौम्येनैवाध्वरेण यज्ञक्रतुनोपपर्य्यावर्त्तन्त [१]। ता उपोहन्त्सप्त शीर्षण्यान् प्राणान्। तस्मात् सौम्यस्याध्वरस्य यज्ञक्रतोः। सप्तहोत्राः प्राचीर्वषट् कुर्व्वन्ति" इति। सप्तवारमाम्नानात् शिरोनिष्ठसप्तच्छिद्रवर्त्तिप्राणानयनात् तत्साधने सोमाध्वरे सप्तहोत्राः सम्पन्नाः। ताश्च प्राङ्मुखत्वेनावस्थिता याज्यान्ते वौषट्शब्दान् पठन्ति॥

अथ संवत्सरसत्रगवामयने सर्व्वं क्रत्वन्तर्भावं दर्शयति। "दशहोतेोऽक्रयत्। तपः प्रत्यशृणोत्। तत् कर्म्मणैव संवत्सरेण सर्व्वैर्यज्ञक्रतुभिरुपपर्य्यावर्त्तत। तत् सर्व्वमात्मानमपरिवर्गमु-पैाहत्। तस्मात् संवत्सरे सर्व्वे यज्ञक्रतवोऽवरुध्यन्ते" इति। दशवारमाह्वानेन योऽभिमानीदेवः श्रुत्वा संवत्सरसत्ररूपेण सह कर्म्मणा तदवयवभूतैश्च सर्व्वैः यज्ञक्रतुभिः सहागत्य प्र-जापतेरात्मानं देहं सर्व्वमप्यपरिवर्गमानयत्। यथा किञ्चि-दपि वर्ज्जितं न भवति तस्मात् सम्पूर्त्तिसाधनं संवत्सरसत्रम्। तत्राग्निष्टोमोक्थ्यादयः सर्व्वेऽपि क्रतवोऽन्तर्भवन्ति॥

अथैकेनाध्वर्य्युणा निष्पाद्यमग्निहोत्रं प्रथमभावित्वेन प्रशं-सति। "तस्माद्दशहोता चतुर्होता। पञ्चहोता षड्ढोता सप्त-होता। एकहोत्रे बलिꣳ हरन्ति। हरन्त्यस्मै प्रजा बलिम्। ऐतिमप्रतिख्यातं गच्छति। य एवं वेद" [४]इति। यस्मादेवम-ग्निहोत्रेण एकहोत्रा प्रथमं कुक्षिन्धमुपासीते सति पश्चाद्दर्श-पूर्णमासादिभिरङ्गैरुपक्रान्तं तस्माद्दशहोत्रादयः पञ्चापि आ-त्मविशेषाः एकहोत्रे परमात्मने बलिं हरन्ति पूजां कुर्व्वन्ति। य एवं परमात्मपूज्यत्वं वेद तस्मै सर्व्वाः प्रजाः पूजां समर्प-यन्ति। अप्रतिख्यातं अवमानरहिता कीर्त्तिश्च एतं वेदितारं प्राप्नोति॥

इति षष्ठोऽनुवाकः॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

षष्ठे होतृप्रशंसाप्रसङ्गेन क्रतूनामृत्विग्विशेषं व्यवस्थाप्य अग्निहोत्रस्य तन्मध्ये प्राशस्त्यं दर्शितम् । अथ तस्मिन्नग्निहोत्रे सर्व्वक्रतुसद्भावसम्पादनेन तदग्निहोत्रं सप्तमे प्रशंसति । तत्रादौ होतृमन्त्राणां प्रजापतेः शरीररक्षकत्वं दर्शयति । "प्रजापतिः पुरुषमसृजत । सोऽग्निरब्रवीत् । ममायमन्नमस्त्विति । सोऽबिभेत् । सर्व्वं वै मायं प्रधक्ष्यतीति । स एताꣳश्चतुर्होतृनात्मस्परणानपश्यत् । तानजुहोत् । तैर्वै स आत्मानमस्पृणोत्" इति । प्रजापतेः पूर्व्वमशरीरः सन् पूर्व्वानुवाकोक्तक्रमेण कुसिन्धादिलोमान्तैः सर्व्वैरेकं पुरुषाकारं देहं असृजत । तदानीमग्निस्तं देहं दृष्ट्वा सोऽयं पुरुषं ममान्नमस्त्विति अब्रवीत् । ततः स प्रजापतिः पुरुषाकारमेव सर्व्वमप्ययमग्निर्धक्ष्यतीति भयमापन्नः होतृमन्त्रानात्मस्परणान् स्वशरीररक्षकत्वेन प्रीतिहेतून् अपश्यत् । तान् हुत्वा तैः स्वदेहं प्रीतमकरोत् रक्षतीत्यर्थः ॥

होतृमन्त्रेषु च दशहोतुः प्रथमभावित्वात् तस्याग्निहोत्रप्रक्रमरूपत्वात् अग्निहोत्रहोमेनैव सर्व्वरक्षां विवक्षुरादौ कुसिन्धरक्षां दर्शयति । "यदग्निहोत्रं जुहोति । एकहोतारमेव तद्यज्ञक्रतुमाप्नोत्यग्निहोत्रम् [१] । कुसिन्धञ्चात्मनः स्पृणोति । आदित्यस्य च सायुज्यं गच्छति" इति । यदा पुरुषोऽग्निहोत्रं जुहोति तदा पूर्व्वोक्तरीत्या तस्य एकहोतृकत्वादेकहोतृकं यज्ञक्रतुं प्राप्नोति । तत्फलभूतादित्यस्य च सायुज्यं गच्छति, आत्मनः कुसिन्धञ्च स्पृणोति रक्षतीत्यर्थः ॥

अथ अग्निहोत्रे एव चतुर्होतृफलं दर्शयति। "चतुरुन्न-यति। चतुर्होतारमेव तद्यज्ञक्रतुमाप्नोति दर्शपूर्णमासौ। चत्वारि चात्मनोऽङ्गानि स्पृणोति। आदित्यस्य च सायुज्यं गच्छति" इति। यदेतदग्निहोत्रे चतुर्वारं स्रुक्पूरणं तेन चतुः-सङ्ख्यासाम्यात् चतुर्होतृकदर्शपूर्णमासक्रतुं प्राप्य हस्तपादाङ्ग-चतुष्टयरक्षापूर्व्वकमादित्यसायुज्यप्राप्तिश्च सम्पद्यते।

अथ पञ्चहोतृफलं दर्शयति। "चतुरुन्नयति। समित्प-ञ्चमी। पञ्चहोतारमेव तद्यज्ञक्रतुमाप्नोति चातुर्मास्यानि। लोमत्वचौं मा९समस्थिमज्जानम् [२]। तानिचात्मनः स्पृणो-ति। आदित्यस्य च सायुज्यं गच्छति" इति। अग्निहोत्रे यच्च-तुर्वारं स्रुक्पूरणं या चाहुत्याधारभूता समित् तदुभय-निष्ठया पञ्चसङ्ख्यया पञ्चहोतृकचातुर्मास्यफलप्राप्तिर्लोमादि-पञ्चावयवप्राप्तिः, आदित्यसायुज्यञ्च॥

अथ षड्ढोतृफलं दर्शयति। "चतुरुन्नयति। द्विर्जुहोति। षड्ढोतारमेव तद्यज्ञक्रतुमाप्नोति पशुबन्धम्। मनोवाण्प्रा-णश्चक्षुःश्रोत्रम्। तानि चात्मनः स्पृणोति। आदित्यस्य च सायुज्यं गच्छति" इति॥

उन्नयनहोमद्वयगतया सङ्ख्यया षड्ढोत्रादिफलं सप्तहोतृ-फलं दर्शयति। "चतुरुन्नयति। द्विर्जुहोति [३]। समित्सप्तमी। सप्तहोतारमेव तद्यज्ञक्रतुमाप्नोति सौम्यमध्वरम्। सप्त चात्मनः शीर्षण्यान् प्राणान् स्पृणोति। आदित्यस्य च सायुज्यं गच्छति" इति। उन्नयनहोमसमिद्गतया सप्तसङ्ख्यया सप्तहोत्रादिफलम्॥

अथ दशहोतृफलं दर्शयति। "चतुरुन्नयति। द्विर्जुहोति। द्विर्निमार्ष्टि। द्विः प्राश्नाति। दशहोतारमेव तद्यज्ञक्रतुमाप्नोति संवत्सरम्। सर्व्वं चात्मानमपरिवर्गᳪ स्पृणोति। आदित्यस्य च सायुज्यं गच्छति" [४] इति। यदेतत् चतुर्वारं स्रुक्पूरणं यच्चाहुतिद्वयं यदपि बर्हिषि भूमौ च द्विर्लेपनिर्मार्ज्जनं यदप्याहुतिद्वयशेषयोः द्विः प्राशनं तद्गतया दशसङ्ख्यया तत्साध्यसंवत्सरसत्रप्राप्त्या तदन्तर्गतकृत्स्नक्रतुप्राप्तिः। आदित्यसायुज्यञ्च। तदेवं पूर्व्वानुवाके एकहोत्रे बलिं हरन्तीति एकहोतृकाग्निहोत्रप्रशंसनं यत्सङ्क्षेपेणोक्तं तदिहाग्निहोत्रे सर्व्वहोतृकसर्व्वक्रतुसम्पादनेन प्रपञ्चितम्॥

इति सप्तमोऽनुवाकः॥ ७॥

अथाष्टमोऽनुवाकः।

सप्तमेऽनुवाके एकहोतृकाग्निहोत्रे सर्व्वयज्ञक्रतुहोतृफलान्तर्भावद्वारेण सर्व्वा ऋत्विक्त्वनुगत एकहोता प्रशंसितः। अथाष्टमे होतृमन्त्रसामर्थ्यं प्रशंस्यते। तत्र तावदासुरसृष्टिं दर्शयति। "प्रजापतिरकामयत प्रजायेयेति। स तपोऽतप्यत। सोऽन्तर्वानभवत्। स हरितः श्यावोऽभवत्। तस्मात्स्त्र्यन्तर्वत्नी। हरिणी सती श्यावा भवति। स विजायमानो गर्भेणाताम्यत्। स तान्तः कृष्णः श्यावोऽभवत्। तस्मात्तान्तः कृष्णः श्यावो भवति। तस्यासुरेवाजीवत् [१]। तेनासुना सुरानसृजत।

तदसुराणामसुरत्वम्। य एवमसुराणामसुरत्वं वेद। असु-मानेव भवति। नैनमसुर्जहाति" इति। प्रजामुत्पादयितुं कामयमानः प्रजापतिर्होत्रमन्त्रानुष्ठानरूपं तपः कृत्वा स्वो-दरे गर्भं धृत्वा हरितश्यावः नीलश्वेतमिश्रवर्णोऽभवत्। अत एव लोके गर्भिणी स्त्री तादृग्वर्णा दृश्यते। स प्रजापतिः विजायमानः गर्भस्थितजन्तुविशेषेण प्रसवकाले ताम्यत् ग्लानिं प्राप्नोत् कृष्णश्वेतमिश्ररूपोऽभवत्। अत एव लोके मार्गश्रम-रोगश्रमादिना तादृग्गर्भा भवति। तस्य तादृशस्य ग्लानिं प्राप्तस्य प्रजापतेरसुरेवाजीवत् श्वासमात्रं स्वव्यापारक्षमम-भूत्। न तु हस्तपादादयः स्वव्यापारक्षमाः। तदानीं तेना-सुना प्राणवायुना बलाधिकानसुरानसृजत। बलहेतुरसुः प्राणवायुरेषामस्तीति व्युत्पत्त्या तेषामसुरनाम सम्पन्नम्। तस्य वेदिता बलकारिणा प्राणेन युक्तो भवति। स च प्राण एनं वेदितारं अपमृत्युना न परित्यजति॥

अथ पितृसृष्टिं दर्शयति। "सोऽसुरान् सृष्ट्वापितेऽवा-मन्यत। तदनु पितॄनसृजत। तत्पितॄणां पितृत्वम्। य एवं पितॄणां पितृत्व वेद। पितेवैव स्वानां भवति [१]। यन्त्यस्य पितरो हवम्" इति। स प्रजापतिरसुरान् सृष्ट्वा पितृत्वाभि-मानमकरोत्। यथा मनुष्यगृहादिकं निर्माय गृहस्य पिता-महमिति न मन्यते पुत्रानुत्पाद्य तथा मन्यते। एवमयं प्रजा-पतिरपि गिरिनद्यचेतनं सृष्ट्वा पितृत्वं न मन्यते। तेना-नसुरान् सृष्ट्वा पितृत्वं मन्यते। अतः पितृवासनावासितं त-

त्मनः सृष्टावपि पितृलोकस्वामिनः पितॄन् असृजत। पितृत्वाभिमानेन सृष्टत्वात् पितृनाम सम्पन्नम्। एवं वेदिता स्वकीयानां सर्व्वेषां पितेव मान्यो भवति। अपि चास्य वेदितुः स्वयं मृताः पितरः सर्व्वे हवयन्ति आह्वानं प्राप्नुवन्ति। एतेन स्वापादौ आहूताः सन्तः फलप्रदानेनानुगृह्णन्तीत्यर्थः॥

अथ मनुष्यसृष्टिं दर्शयति। "स पितॄन्त्सृष्ट्वा मनस्यत्। तदनु मनुष्यानसृजत। तन्मनुष्याणां मनुष्यत्वम्। य एवं मनुष्याणां मनुष्यत्वं वेद। मनस्व्येव भवति। नैनं मनुर्जहाति" इति। स प्रजापतिः पितृसृष्टेरूर्द्ध्वं किमिदानीमन्यत् सृजामीत्येवं मनस्यत् सृष्टिविषयं मनोऽकरोत्। तन्मनोऽनुसृत्य मनुष्यानसृजत। यस्मान्मनोऽनुसारेणोत्पन्नाः, तस्मात्तन्मनुष्यनाम सम्पन्नम्। य एवं वेदिता मनस्वी सर्व्वकार्य्येषु स्थिरचित्तो भवति। मनुर्मननशक्तिः कदाचिदप्येनं न जहाति॥

अथ देवसृष्टिं दर्शयति। "तस्मै मनुष्यान्त्ससृजानाय। दिवा देवत्राभवत्। तदनु देवानसृजत। तद्देवानां देवत्वम्। य एवं देवानां देवत्वं वेद। दिवा हैवास्य देवत्रा भवति" इति। यो मनुष्यान्ससृजान सृष्टवान् प्रजापतिः, तस्मै प्रजापतये दिवा देवत्राभवत्। दिवसः द्योतनशीलोऽभवत्। सृष्टैर्मनुष्यैर्लौकिकवैदिकव्यवहारे सर्व्वस्मिन् क्रियमाणे सति दिवसः सर्व्वोऽपि व्यवहारैर्द्योत्यते तदेतद्दैवमनुसृत्य देवानसृजत। देवतानुसारेणोत्पन्नत्वात् देवानां देवत्वं सम्पन्नम्। एवं वेदितुः सर्व्वोऽपि दिवसः सर्व्वैर्व्यवहारैः प्रकाशितो भवति॥

उक्तां सृष्टिं निगमयति। "तानि वा एतानि चत्वार्य्यम्भांसि। देवा मनुष्याः पितरोऽसुराः" इति। यानि चत्वारि देवादिस्थानानि सर्व्वाण्यम्भांसि जलसदृशानि यथा तडागनद्यादिजलं स्नानपानाद्युपयुक्तम्, एवमेतानि भोगोपयुक्तानीत्यर्थः॥

एतद्वेदनं प्रशंसति। "तेषु सर्व्वेष्वम्भो नभ इव भवति। य एवं वेद" [३] इति। सर्व्वेषु देवादिस्थाने इव अम्भःशब्दोपलक्षितो भोगः आकाशेषु व्याप्तः सम्पूर्णो भवतीत्यर्थः॥

इति अष्टमोऽनुवाकः॥ ८॥

अथ नवमोऽनुवाकः।

अष्टमे सृष्टिसाधनत्वेन होतृमन्त्राः प्रशंसिताः। अथ नवमे वायुरूपत्वज्ञानेन मन्त्राणां प्रशंसा क्रियते। तदेतज्ज्ञानं विधातुं आदौ ब्रह्मवादिवाक्येन तस्मिन् होतृरूपवायुविज्ञाने श्रद्धामुत्पादयति। "ब्रह्मवादिनो वदन्ति। यो वा इमं विद्यात्। यतोऽयं पवते। यदभिपवते। यदभिसम्पवते। सर्व्वमायुरियात्। न पुरायुषः प्रमीयेत। पशुमान्स्यात्। विन्दते प्रजाम्" इति। होतृमन्त्रस्य सामर्थ्यमेव वाय्वाकारेण परिणतं सर्व्वलोके सञ्चरति तदेतदुपासकानां प्रसिद्धम। अत एवान्यत्र श्रूयते, वायोरात्मानं कवयो निचिक्युरिति। सोऽयं वायुः यतः कारणात वाति यदभिलक्ष्य वाति तस्मिन्नपि लक्ष्ये वस्तुनि यत्

सम्यग्वाति तादृशसञ्चारोपेतमिमं वायुं यः पुमान् विद्यात् सोऽयं आयुरादिफलचतुष्टयं प्राप्नुयात् अयमर्थः। वायुर्हि किञ्चिद्वस्तुषु सञ्चरति सञ्चरंस्तेषु किञ्चिदुपयोगं करोति। तत्प्रयोजनं तद्वस्तुतमुपयोगञ्च यो विदित्वाध्यायति, सोऽयं सर्व्वमायुः प्राप्नोति। अत एवापमृत्योरभावात् आयुषः पुरा न म्रियते प्रजापशुसम्पत्तिश्च तस्य भवतीत्येवं ब्रह्मवादिनो वायुध्यानमहिमानं परस्परं कथयन्ति॥

तदेवं ब्रह्मवादिवाक्यं विद्वान् सप्राणत्वेनोपन्यस्येदानीं श्रुतिः स्वयं विधत्ते। "यो वा इमं वेद [१]। यतोऽयं पवते। यदभिपवते। यदभिसम्पवते। सर्व्वमायुरेति। न पुरायुषः प्रमीयते। पशुमान् भवति। विन्दते प्रजाम्" इति। ब्रह्मवादिवाक्यवद् विधिवाक्यं व्याख्येयम्॥

ध्यानविदा ध्यातव्यं निरूपयति।"अद्भ्यः पवते। अपोऽभिपवते। अपोऽभिसम्पवते" इति। अद्भ्यः निमित्तभूताभ्यो वाति जलव्यवहारनिर्व्वाहो वायुसञ्चारस्य प्रयोजनमित्यर्थः। तथा आपोऽभिलक्ष्य सञ्चरति, वायुसञ्चारविषयभूतं वस्तु जलमित्यर्थः। तथा आपोऽभिप्रपद्य सम्यक् पवते। यत्र निम्नदेशे गन्तव्यं तत्र तदा गमयति। यत्र शोषणीयं तदा शोषयति। यदा वृष्टिरपेक्षिता तदा वर्षयति। सोऽयं वायुसञ्चारस्योपयोगः जलव्यवहारनिर्व्वाहः, प्रयोजनं जलमेव सञ्चारस्य विषयः, निम्नदेशादिप्रेरणमुपयोगः, इत्येतत्त्रयं वायौ ध्यातव्यम्॥

एवं पृथिव्यन्तरिक्षादित्यद्युदिग्विषये ध्यातव्यं दर्शयति। "अस्याः पवते। इमामभिपवते। इमामभिसम्पवते। अग्नेः पवते। अग्निमभिपवते। अग्निमभिसम्पवते। अन्तरिक्षात् पवते। अन्तरिक्षमभिपवते। अन्तरिक्षमभिसम्पवते। आदित्यात् पवते [३]। आदित्यमभिपवते। आदित्यमभिसम्पवते। द्यौः पवते। दिवमभिपवते। दिवमभिसम्पवते। दिग्भ्यः पवते। दिशोऽभिपवते। दिशोऽभिसम्पवते" इति। जलपर्य्यायवदेते पर्य्याया व्याख्येयाः॥

अथ प्राच्यादिभेदेन प्राणादिनामानि वायौ ध्यातव्यानि। तत्र प्राणनामध्यानं विधत्ते। "स यत्पुरस्ताद्वाति। प्राण एव भूत्वा पुरस्ताद्वाति [४]। तस्मात् पुरस्ताद्वान्तम्। सर्व्वाः प्रजाः प्रतिनन्दन्ति। प्राणो हि प्रियः प्रजानाम्। प्राण इव प्रियः प्रजानां भवति। य एवं वेद। स वा एष प्राण एव" इति। स वायुः यदा पूर्व्वस्यां दिशि सञ्चरति तदा प्राणरूपो भूत्वा सञ्चरति। यस्मात् पूर्व्वस्यां दिशि सञ्चरन् वायुः प्राणत्वेन प्रजानां प्रियः। तस्मात् पूर्व्वस्यां दिशि सञ्चरन्तं वायुं प्रति सर्व्वाः प्रजाः हृष्यन्ति। वायौ समागते सति शरीरस्वेदः शुष्यति तृप्तिर्भविष्यतीत्येवं प्रजानां सन्तोषः। य एवं वायोः प्राणरूपत्वं वेद सः प्रजानां प्राणवत् प्रियो भवति। जन्मान्तरे च स एषः प्राणदेवतारूप एव भवति॥

मातरिश्वनामध्यानं विधत्ते। "अथ यद्दक्षिणतो वाति। मातरिश्वैव भूत्वा दक्षिणतो वाति। तस्माद्दक्षिणतो वान्तं

विद्यात्। सर्व्वा दिश आवाति [५]। सर्व्वा दिशोऽनुविवाति। सर्व्वा दिशोऽनुसंवातीति। स वा एष मातरिश्वैव" इति। यदा वायुर्दक्षिणस्यां दिशि सञ्चरति तदा मातरिश्वेति तस्य नाम ध्यातव्यम्। मातरि अन्तरिक्षेऽश्वयति वर्द्धते मातृवन्नयतीति वा मातरिश्वा सर्व्वेषामाप्यायनकारीत्यर्थः। यस्मादयमेवंविधो मातरिश्वनामकस्तस्माद्दक्षिणस्यां दिशि सञ्चरन्तं वायुमेनं विद्यात्। मातरिश्वनामकोऽयं वायुः सर्व्वा अपि दिश आ-भिमुख्येन गच्छति। सर्व्वा अपि दिशोऽनुकूलः सन् विशेषेण सञ्चरति तथा सर्व्वा दिशोऽनुप्राप्य सम्यक् सञ्चरति। यत्र यादृशो वायुरपेक्षितः तत्र तादृश एव सञ्चरतीत्यर्थः। एवं वेदिता मातरिश्वैव भवति॥

अथ पवमाननामध्यानं विधत्ते। "अथ यत्पश्चाद्वाति। पवमान एव भूत्वा पश्चाद्वाति। पूतमस्मा आहरन्ति। पूत-मुपहरन्ति। पूतमश्नाति। य एवं वेद। स वा एष पवमान एव" [६] इति। यदा स वायुः पश्चिमायां दिशि सञ्चरति तदा पवमान इति तस्य नाम,शोधक इत्यर्थः।यः पुमान् एवंविधं वायुं ध्यायति तस्मै विदुषे पूतदोषरहितं धनादिकमाहरन्ति। तथा पूतं शुद्धमन्नमुपहरन्ति समीपे समर्पयन्ति स्वयमपि तत्पूतमे-वाश्नाति।तदेतदैहिकफलम्। आमुष्मिकन्तु पवमानप्राप्तिरूपम्॥

सवितृनामध्यानं विधत्ते। "अथ यदुत्तरतो वाति। सवि-तैव भूत्वोत्तरतो वाति। सवितेव स्वानां भवति। य एवं वेद। स वा एष सवितैव" इति। यदा स वायुः उत्तरस्यां

दिशि सञ्चरति तदा सवितेति तस्य नाम, सर्व्वस्य प्रेरक इत्यर्थः। एवं वेदिता स्वकीयानां सर्व्वेषामिह प्रेरको भवति। परत्राथं सवितैव भवति॥

एवं वायुध्यानं कुर्व्वतां ध्यानाङ्गत्वेन निन्दानुवादं विधित्सुः। प्रथमं तावत्साधने काञ्चिदुपपत्तिं दर्शयति। "ते य एनं पुरस्तादायन्तमुपवदन्ति। य एवास्य पुरस्तात् पाप्मानः। ताꣳस्तेऽपघ्नन्ति। पुरस्तादितरान् पाप्मनः सचन्ते" इति। पूर्व्वस्यां दिशि आगच्छन्तमेनं वायुध्यायिनं ते लोकप्रसिद्धाः निन्दकाः दाम्भिकोऽयमित्यादिभिर्दुर्वाक्यैः निन्दति। तदानीं अस्य ध्यातुः पूर्व्वस्यां दिशि ये केचित् सम्भाविताः पाप्मानः, तान् सर्व्वान् ते निन्दका अपघ्नन्ति अस्य ध्यातुः। तया निन्दया पापक्षयो भवति। निन्दकास्तु त एतं निन्दाजन्यानितरान् पाप्मनः प्राप्नुवन्ति॥

पूर्व्वस्यां दिश्युक्तं ध्यातुः पापक्षयं निन्दकस्य पापसम्बन्धवदितरेष्वपि क्रमेण दर्शयति। "अथ य एनं दक्षिणत आयन्तमुपवदन्ति [७]। य एवास्य दक्षिणतः पाप्मानः। ताꣳस्तेऽपघ्नन्ति। दक्षिणतः इतरान् पाप्मनः सचन्ते। अथ य एनं पश्चादायन्तमुपवदन्ति। य एवास्य पश्चात् पाप्मानः। ताꣳस्तेऽपघ्नन्ति। पश्चादितरान् पाप्मनः सचन्ते। अथ य एनमुत्तरत आयन्तमुपवदन्ति। य एवास्योत्तरतः पाप्मानः। ताꣳस्तेऽपघ्नन्ति [८]। उत्तरत इतरान् पाप्मनः सचन्ते" इति। प्रथमपर्य्यायवत् इतरपर्य्यायत्रयं व्याख्येयम्॥

तदेवं निन्दाया अनुग्राहकत्वेन सद्योग्यत्वं प्रतिपाद्य निन्दितेन ध्यात्वा अनुष्ठेयं विधत्ते। "तस्मादेवं विद्वान्। नीव नृत्येत्। प्रेव चलेत्। व्यस्येवाक्ष्यौ भाषेत। मण्टयेदिव। क्राथयेदिव। शृङ्गायेतेव" इति। यस्मात् अन्यैः स्वस्मिन् प्रयुक्ता निन्दा निन्दकानामेव प्रत्यवायोत्पत्तिहेतुः। तस्मादेवं विद्वानुपासको निन्दां श्रुत्वा विशेषेण नृत्येदिव। यथा लोके कांश्चित् प्रियकरीं पुत्रजन्मादिवार्त्तां श्रुत्वा हृष्यन्तः स्वमनोगतं हर्षं द्योतयितुं वाद्ये मुखविलासादिभिर्नृत्यन्तीव दृश्यन्ते। एवमयमपि स्वमुखं विकासयेदित्यर्थः। तथा प्रहृष्टेव चरेत्। यथा लोके नृत्यन्तः प्रमादीव प्रमादितपदविन्यासादिकं कुर्व्वन्ति तद्वदयमपि पदाभ्यामभिनयेत्। अथ अक्ष्यौ चक्षुषी व्यस्येव विकास्येव हर्षविकसिते कृत्वा समीचीनानि प्रियवचनानि निन्दकेन सह भाषेत। एवं मोक्षशास्त्रेषु स्मर्य्यते। "तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचिदिति" किञ्च मण्टयेदिव उन्मादीव। मटि उन्माद इति धातुः। अत एव जावालोपनिषदि श्रूयते। अव्यक्तलिङ्गा अव्यक्त आचाराः अनुन्मत्ता उन्मत्तवदाचरन्तीति। उन्मादनटनमेव स्पष्टीक्रियते। क्राथयेदिव, क्रथ हिंसायामिति धातुः। कञ्चित्कान्तां ताडयितुमिव गच्छेत्। शृङ्गायेतेव, महावृषभः शृङ्गाभ्यां मृगमुत्क्षिप्य उद्धृत्य स्वपृष्ठे विक्षिप्य क्रीडति। तदिदं क्रीडनं शृङ्गायितं तथायं क्रीडेत्। तस्य चोन्मादनटनस्य जनैः सङ्गाभावः प्रयोजनम्। अतएव स्मर्य्यते।

तथाचरति वै योगी सतां धर्ममदूषयन्।
जना यथा न मन्येरन् गच्छेयुर्नैव सङ्गतिमिति॥

निन्दासहमानस्याभिप्रायः स्पष्टीक्रियते। "उतमेऽपवदेयुः। उतमे पाप्मानमहन्युरिति" इति। किमेते मां निन्देयुः। किं वा मे पाप्मानं विनाशयेयुरिति। अस्यास्तु वाचो भङ्ग्या अयमर्थः। नैते निन्दन्ति किन्तु पाप्मानमेव विनाशयन्ति॥

अथास्य भिक्षाटनप्रकारं दर्शयति। "स यान्दिशꣳ सनिमेष्यन्त्स्यात्। यदा तान्दिशं वातो वायात्। अथ प्रवेयात्। प्रवा धावयेत्। सा तमेव रदितं व्यूढं गन्धमभिप्रच्यवते। आस्य तं जनपदं पूर्वा कीर्त्तिर्गच्छति" इति। स वायूपासको यां दिशमभिप्रेत्य सनिमेष्यन् भैक्ष्यं प्राप्स्यामीत्येवं बुद्धिः स्यात्। दानवाची सनिःशब्दोऽत्र स्वत्वत्यागपूर्वकं परैर्देयं भैक्ष्यमुपलक्षयति। यस्यां दिशि भैक्ष्यं लभ्यते इत्येवं बुद्धिर्योगी तां दिशं अनुकूलो वायुर्यदा वायात् तदा प्रवेयात् प्रकम्पेत् तस्यां दिशि गन्तुं प्रचलेत् इत्यर्थः। स्वयं सहसा गन्तुमशक्तश्चेत् शिष्यं वाक्प्रकर्षेण धावयेत्। तदानीं मातादिविशेषणविशिष्टमेव भैक्ष्यं अभिलक्ष्यायं प्रच्यवते प्रकर्षेण गच्छति। सा तं स्वयं लब्धं प्राप्ता वेदितमित्यर्थः। रदितं रद विलेखने धातुः, रदितं विलेखितं कृतमर्यादमित्यर्थः। व्यूढं विभक्तं साधारं पात्रे पृथक् पृथक् उद्धृतमित्यर्थः। गन्धं यादृशं तादृशगन्धोपेतम्। एवंविधैर्नियमैरुपेतस्य योगिनः

कीर्त्तिः, तस्मात् पूर्व्वैव जनपदमागच्छति। ईदृशो महात्मा अभिज्ञः समायातीत्येवं सर्व्वे जनपदवासिनः भक्तिं कुर्व्वन्तीत्यर्थः॥

भिक्षाटनवृत्तान्तज्ञानं प्रशंसति। "दानकामा अस्मै प्रजा भवन्ति। य एवं वेद" [८] इति॥

इति नवमोऽनुवाकः॥ ९॥

---

अथ दशमोऽनुवाकः।

नवमेऽनुवाके सर्व्वहोतृमन्त्रसमष्टिदेवस्य वायोरुपासनमुक्तम्। अथ दशमे होतृमन्त्राणां कश्चित्काम्यप्रयोगोऽभिधीयते। तद्विधातुमादावुपाख्यानमाह। "प्रजापतिः सोमꣳ राजानमसृजत। तं त्रयो वेदा अन्वसृज्यन्त। तान् हस्तेऽकुरुत। अथ ह सीता सावित्री। सोमं राजानं चकमे। श्रद्धामु स चकमे। सा ह पितरं प्रजापतिमुपससार। तꣳ होवाच। नमस्ते अस्तु भगवः। उप त्वायानि [१]। प्र त्वापद्ये। सोमं वै राजानं कामये। श्रद्धामु स कामयत इति। तस्या उ ह स्थागरमलङ्कारं कल्पयित्वा। दशहोतारं पुरस्ताद्व्याख्याय। चतुर्होतारं दक्षिणतः। पञ्चहोतारं पश्चात्। षड्ढोतारमुत्तरतः। सप्तहोतारमुपरिष्टात्। सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य [२]। आस्याꣳ वव्राज। ताꣳ होदीक्ष्योवाच। उपमा वर्त्तस्वेति। तꣳ होवाच। भो गन्तुं म आचक्ष्व। एतन्म आचक्ष्व। यत्ते पाणाविति। तस्या उ ह त्रीन् वेदान् प्रददौ।

तस्माद् ह स्त्रियो भोगमेव हारयन्ते" इति। प्रजापतिः सोमं सृष्ट्वा तमनु त्रीन् वेदानसृजत। स च सोम तान् वेदान् स्वमुष्टिमध्ये गोपयामास। तदानीं सवितुः प्रजापतेः पुत्रिकायास्व नामतः सीता ह सावित्रीति सोमो मे भर्त्ताऽस्त्विति अकामयत। स तु सोमः श्रद्धाख्यां काञ्चित् अन्यां प्रजापतेः दुहितरं कामितवान्, न त्वेतां सीताम्। सा तु सीता प्रजापतिसमीपमागत्य नमस्कारं कृत्वा त्वत्समीपे कार्य्यार्थं समागताऽस्मि, त्वां भजे। सर्व्वदेत्येवमुवाच। ततः प्रजापतिना किं कार्य्यमिति पृष्टा सति सोमविषयां कामनामुवाच। ततः प्रजापतिः तस्याः सीतायाः सोमवशीकरार्थं कञ्चित्प्रयोगं कृतवान्। स्थागरो नाम कश्चित्सुगन्धद्रव्यविशेषः, तं पिष्ट्वा तत्सम्बन्धिनमलङ्कारं मण्डनविशेषं कल्पयित्वा तस्य पूर्व्वादिदिक्षु दशहोत्रादिमन्त्रान् पठित्वा अग्निर्यजुर्भिरित्यादिभिः सम्भारमन्त्रैः सेनेन्द्रस्येत्यादिभिर्देवपत्नीमन्त्रैस्च अभिमन्त्रितेन स्थागरपिष्टेन तस्याः सीतायाः मुखे तिलकाद्यलङ्कारञ्चकार। सा च सीता तस्य सोमस्य समीपे प्रत्याजगाम। स च सोमः तां दृष्ट्वा परवशो मां प्रति समीपे समागच्छेत्युवाच, सा च दयां प्रीतिं परीक्षितुमेवमुवाच। अहमागमिष्यामि त्वं तु भोगमावह, सर्व्वदा भोगं करिष्यामीति प्रतिजानीहि। किञ्च यत्ते पाणौ मुष्टिमध्ये गोप्यं वस्तु वर्त्तते एतत् मह्यमवश्यं कृत्वा कथय। ततः सोमोऽपि प्रीत्यतिशयेन तस्यै सीतायै त्रीन् वेदान् प्रददौ वेदमन्त्रसाञ्छितं किञ्चित् गुटिकाद्रव्यं दत्तवान् इत्यर्थः। यस्मादियं

सीता प्रियं वस्तु ययाचे तस्माल्लोकेऽपि स्त्रियो भोगमुद्दिश्य प्रियं दायं पुरुषा हरन्ते ॥

तदेवमुपाख्यानेन प्रयोगं प्रशस्य तं प्रयोगं विधत्ते। "स यः कामयेत प्रियः स्यामिति [३]। यं कामयेत प्रियः स्यादिति। तस्मा एतꣳ स्थागरमलङ्कारं कल्पयित्वा। दशहोतारं पुरस्ताद्व्याख्याय। चतुर्होतारं दक्षिणतः। पञ्चहोतारं पश्चात्। षड्ढोतारमुत्तरतः। सप्तहोतारमुपरिष्टात्। सम्भारैश्च पत्निभिश्च मुखेऽलङ्कृत्य। आस्याद्धं व्रजेत्। प्रियो हैव भवति" [४] इति। अहमेव तस्मै राज्ञे प्रियो भविष्यामीति वा पुरुषोऽयं राज्ञे प्रियो भवत्विति वा कामनायां सत्यां प्रीतिविषयस्य स्वस्य परस्य वा मुखे पूर्व्वोक्तप्रकारेण स्थागरपिष्टतिलकादिकं कृत्वा तस्य राज्ञः समीपे गच्छन् अयं तिलकधारी तस्य राज्ञः प्रियो भवति ॥

इति दशमोऽनुवाकः ॥ १० ॥

---

अथ एकादशोऽनुवाकः।

दशमे होतृमन्त्रैः काम्यप्रयोग उक्तः। अथैकादशे दशहोत्रादिमन्त्रनाम्नां प्रवृत्तिनिमित्तमुच्यते। तत्रादौ दशहोतृशब्दस्य प्रवृत्तिनिमित्तं दर्शयति। "ब्रह्मात्मन्वदसृजत। तदकामयत। समात्मना पद्येयेति। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै दशमꣳ हूतः प्रत्यशृणोत्। स दशहूतोऽभवत्। दश-

हूतो ह वै नामैषः। तं वा एतं दशहूतꣳ सन्तम्। दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः'' [१] इति। यदेतज्जगत्कारणं परं ब्रह्म, तदेतदादिसृष्टावात्मवज्जीवात्मोपेतं होतृमन्त्राभिमानिदेवतानां शरीरमसृजत। तत्सृष्ट्वा चानन्तरमनेन जीवात्मना सम्यक् सङ्गतो भवेयमिति विचार्य तं जीवात्मानमुद्दिश्य आत्मन्निति सम्बोध्याऽऽमन्त्रितवान्। द्विरुक्तिर्बह्वर्था। बहुकृत्व आहूतवानित्यर्थः। एवं ब्रह्मण्याकूयति सति दशमे पर्याये समाहूतो जीवात्मा प्रत्यशृणोत्। भो इति प्रत्युत्तरं दत्तवान्। तावता तस्य दशहोतेति नाम सम्पन्नम्। सोऽयं वस्तुतो दशहूत एव। एतमेव वास्तवं नामविशेषमाच्छाद्य अपरेण वर्णान्तरव्यवहितेन दशहोतेतिनाम्ना व्यवहरन्ति। यस्माद्देवाः पूज्याः पित्राचार्यादयः स्वकीयं वास्तवं नाम परित्यज्य हे आचार्येत्यादौ परोक्षेणाह्वानं कुर्वन्ति। तस्माद्युक्तः परोक्षनामव्यवहारः॥

अथ सप्तहोत्रादिनामप्रवृत्तिं दर्शयति। ''आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तमꣳ हूतः प्रत्यशृणोत्। स सप्तहूतोऽभवत्। सप्तहूतो ह वै नामैषः। तं वा एतꣳ सप्तहूतꣳ सन्तम्। सप्तहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठꣳ हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत् [२]। षड्ढूतो ह वै नामैषः। तं वा एतꣳ षड्ढूतꣳ सन्तम्। षड्ढोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै

पञ्चमꣳ हूतः प्रत्यशृणोत्। स पञ्चहूतोऽभवत्। पञ्चहूतो ह वै नामैषः। तं वा एतं पञ्चहूतꣳ सन्तम्। पञ्चहोतेत्याचक्षते परोक्षेण [३]। परोक्षप्रिया इव हि देवाः। आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थꣳ हूतः प्रत्यशृणोत्। स चतुर्हूतोऽभवत्। चतुर्हूतो ह वै नामैषः। तं वा एतं चतुर्हूतꣳ सन्तम्। चतुर्होतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः" इति। सप्तहोतृ-षड्ढोतृ-पञ्चहोतृ-चतुर्होतृनामनिर्वचनवाक्यानि दशहोतृवाक्यवद्व्याख्येयानि॥

अथ चतुर्होतृमन्त्राभिमानिनं पुरुषं विशेषतः प्रशंसति। "तमब्रवीत्। त्वं वै मे नेदिष्ठꣳ हूतः प्रत्यश्रौषीः॥ त्वं वै नानाख्यातार इति। तस्मान्नु हैनाꣳश्चतुर्होतार इत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणाꣳ हृद्यतमः। नेदिष्ठो हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद" [४] इति। चतुर्होतृमन्त्राभिमानिनं देवं प्रजापतिरेवमब्रवीत्, त्वमेवैको मया समाहूतः सन् मदीयं वाक्यं यं नेदिष्ठं अतिसमीपं यथा भवति तथा श्रुत्वा प्रत्युत्तरं दत्तवान्। चतुर्थमामन्त्रणं त्वया श्रुतं इतरे न तथा सहसा श्रुतवन्तः। तस्मात् त्वय्येव सर्व्वानेतान् हि जनाः कथयिष्यन्ति। एते चतुर्होतार इत्येव त्वन्नाम्नैव व्यवहारो भविष्यतीत्यर्थः। यस्मादेवं प्रजापतिना वरो दत्तः तस्मादेतान् दशहोत्रादीन् सर्व्वानपि चतुर्होतार इत्येव वचनं वैदिका आचक्षते। यस्मादेवं शीघ्रं वाक्यं श्रुतवतः चतुर्होतुः प्रजापतेर्वरलाभः तस्माल्लोकेऽपि पुत्राणां मध्ये यः

पितुर्वाक्यमादरेण श्रोतुमिच्छति स एव पितुर्हृद्यतमः अत्यन्तं प्रियः। योऽतिप्रियः स नेदिष्ठः अतिसमीपवर्त्ती भवति। यः पुमान् एवं चतुर्होतृब्रह्मसमीपवर्त्तित्वं वेद सः स्वयमपि ब्रह्मणोऽतिसमीपवर्त्ती भवति। अस्य प्रपाठकस्यानुवाकार्थ-सङ्ग्रहः॥

होतृब्राह्मणशेषेऽस्मिन् तृतीये हि प्रपाठके।
आद्यानुवाके सर्व्वेषां चतुर्होतृत्वमीरितम्॥
नैमित्तिकं द्वितीये स्यात् तृतीये वपनं भवेत्।
विद्वत्प्रतिग्रहस्तुर्येऽन्यस्मिन् प्रश्नोत्तरद्वयम्॥
ऋत्विग्विभागकः षष्ठे अग्निहोत्रं तथोत्तरे।
अष्टमे सृष्टिरन्यस्मिन् वायूपासनमीरितम्॥
वश्यप्रयोगो दशमे दशहोत्रादिनामसु।
निरुक्तिरन्तिमे प्रोक्ता तृतीयोऽयं प्रपाठकः॥
वेदार्थस्य प्रकाशेन तमो हार्द्दं निवर्त्तयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः॥ ११॥

समाप्तश्च तृतीयप्रपाठकः॥

# तैत्तिरीय-ब्राह्मणभाष्ये

## द्वितीयकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः।

हरिः ॐ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
होतृब्राह्मणशेषो यः स तृतीये समापितः।
चतुर्थ उपहोमानां पूर्व्वभागोऽभिधीयते॥

अत्र भरद्वाजेनोक्तम्, उपहोमा अच्छिद्रकाण्डमिति लिङ्गविनियोज्यानि। ततः श्रौते स्मार्त्ते वा यत्र मन्त्रापेक्षा तत्र तदुचितं लिङ्गं पर्य्यालोच्य समन्त्रो बुद्धिमद्भिर्विनियोजनीयः। यत्र विशेषविनियोगो नोपलभ्यते तत्र लिङ्गानुसाराद्देवतायुक्ते कर्म्मणि समाख्याबलादुपहोमार्था मन्त्राः समाख्यापि श्रुतिलिङ्गादिवद् विनियोगेषु सुप्रमाणम्। तत्र प्रथमानुवाके प्रथमामृचमाह। "जुष्टो दमूना अतिथिर्दुरोणे। इमन्नो यज्ञमुपयाहि विद्वान्। विश्वा अग्नेऽभियुजो विहत्य। शत्रूयतामाभरा भोजनानि" इति। हे अग्ने त्वं जुष्टः देवमनुष्यैः सेवितः। दमूनाः शत्रूणां दमयिता। दुरोणे यजमानगृहे अतिथिशब्दवाच्यः विद्वान् सर्व्वज्ञस्त्वं सन् नोऽस्मदीयं यज्ञमिममुपयाहि शत्रूयतामस्मासु शात्रवमिच्छतां पुरुषाणां विश्वा अभियुजः सर्व्वान् अभियोगान् विहत्य विनाश्य भो-

जनानि भोक्तुं योग्यानि द्रव्याणि आभर अस्मान् प्रत्याहर। अस्या ऋचः विनियोगबौधायनगृह्येऽभिहितः, यज्ञियात्काष्ठादग्निं मथित्वा श्रोत्रियागारादाहृत्य व्याहृतिभिर्नियुज्योपसमाधायोपतिष्ठते जुष्टो दमूना इति॥

अथ द्वितीयामृचमाह। "अग्ने शर्द्ध महते सौभगाय। तव द्युम्नान्युत्तमानि सन्तु। सञ्जास्पत्यꣳ सुयममाकृणुष्व। शत्रूयतामभितिष्ठा महाꣳसि" इति। हे अग्ने अस्माकं महते सौभाग्याय शर्द्ध उत्सहस्व तव सर्व्वाणि उत्तमानि मणिमुक्तादीनि अस्माकं सन्तु। सञ्जास्पत्यं जायापतिभावं सुयमं सुष्ठु नियतं समाकृणुष्व सम्यक् सम्पादय। शत्रूयतां शात्रवमिच्छतां पुरुषाणां महाꣳसि तेजांसि अभितिष्ठ अभित आक्रमस्व। अस्य मन्त्रस्य वैश्वधोऽष्टौ स्विष्टकृतः पुरोऽनुवाक्यारूपेण विनियोगमापस्तम्बो दर्शयति, शर्द्धवत्यौ संयाज्ये अग्ने शर्द्ध महते सौभगायेति॥

अथ तृतीयामाह। "अग्ने योनोऽभितो जनः। वृको वारो जिघाꣳसति [१]। ताꣳस्त्वं वृत्रहञ्जहि। वस्वस्मभ्यमाभर" इति। हे अग्ने यः शत्रुजनः वृको वृकसदृशः आरण्यश्वा यथोपद्रवकारी तथोपद्रवकारीत्यर्थः। अतएव वारः अस्मद्व्यवहारस्य निवारकः सन् सर्व्वतोऽस्मान् जिघांसति हन्तुमिच्छति। हे वृत्रहन् वैरिघातिन् अग्ने तान् वृकसदृशान् जहि मारय। अस्मभ्यन्तु वसु धनमाभर सम्पादय॥

अथ चतुर्थीमाह। "अग्ने योनोऽभिदासति। समानो

यश्च निष्ठ्यः। इध्मस्येव प्रक्षायतः। मा तस्योच्छेषि किञ्चन" इति। हे अग्ने यः प्रबलः शत्रुः नोऽस्मानभिदासति हिनस्ति। यश्चान्यः समानबलो निष्ठ्यः शत्रुत्वेनावस्थितो हिनस्ति। तस्य द्विविधस्य शत्रोः सम्बन्धि द्रव्यं किञ्चन किमपि नोच्छेषि अवशिष्टं मा कुरु। अत्र दृष्टान्तः, इध्मस्येव प्रक्षायतः। यथा अग्नौ प्रक्षिप्तस्य प्रदाहेन क्षीयमाणस्येध्मस्य न कोऽप्यंशोऽवशिष्यते तद्वत्। ता एतास्तिस्रः आग्नेयकर्म्मणि विनियोज्याः॥

अथ पञ्चमीमाह। "त्वमिन्द्राभिभूरसि। देवो विज्ञातवीर्य्यः। वृत्रहा पुरुचेतनः" इति। हे इन्द्र त्वमभिभूः शत्रूणामभिभवितासि। कीदृशस्त्वं देवः द्योतमानः, विज्ञातवीर्य्यः प्रख्यातशौर्य्यः, वृत्रहा वृत्राख्यस्यासुरस्य हन्ता, पुरुचेतनः महाप्रज्ञः॥

अथ षष्ठीमाह। "अप प्राच इन्द्रविश्वाँ अमित्रान् [२]। अपापाचो अभिभूते नुदस्व। अपोदीचो अप शूराधराच उरौ। यथा तव शर्म्मन्मदेम" इति। हे इन्द्रः प्राचः पूर्व्वदिग्वर्त्तिनो विश्वान् सर्व्वान् अमित्रान् शत्रूनपनुदस्व निराकुरु। हे अभिभूते अभिभवशक्तियुक्त अवाचः पश्चिमदिग्वर्त्तिनः शत्रूनपनुदस्व। उदीचः उत्तरदिग्वर्त्तिनोऽप्यपनुदस्व। हे शूर अधराचः अधोदिग्वर्त्तिनः तदुपलक्षितदक्षिणदिग्वर्त्तिनश्चापनुदस्व। तव पितृस्थानीयस्य उरौ उत्सङ्गे पुत्रस्थानीया वयं शर्म्मन् सुखकर्म्मणि सुखे प्राप्ते सति मदेम हृष्येम, शत्रुनिराकरणेन तथा कुरु॥

अथ सप्तमीमाह। "तमिन्द्रं वाजयामसि। महे वृत्राय हन्तवे। स वृषा वृषभोऽभुवत्" इति। महे वृत्राय महतः शत्रोः हन्तवे हननाय तं प्रसिद्धमिन्द्रं वाजयामसि अर्चयामः। स इन्द्रः वृषा कामानां वर्षिता सन् वृषभो लौकिकवृषभ इव अप्रधृष्योऽभुवत् भवतु॥

अथ अष्टमीमाह। "युजेरथं गवेषणꣳ हरिभ्याम्। उप ब्रह्माणि जुजुषाणमस्थुः। विबाधिष्टास्य रोदसी महित्वा। इन्द्रो वृत्राण्यप्रतीजघन्वान्" [३] इति। गवेषणं सोमयागान्वेषणपरं इन्द्रस्य रथं हरिभ्यां तदा याभ्यामश्वाभ्यां युजे योजयामि। ब्रह्माणि परिवृढानि मदीयानि स्तोत्राणि जुजुषाणं प्रीतियुक्तमिन्द्रमुपातस्थुः उप प्राप्ता भवन्तु। अस्य सम्बन्धी रथः महित्वा स्वकीयेन महत्त्वेन रोदसी द्यावापृथिव्यौ विबाधिष्ट विशेषेण बाधितवान्। अतएवान्यत्राम्नातम्, अतान्दिवो बाधते वर्त्तनिभ्यामिति। सोऽयमिन्द्रः वृत्राणि शत्रून् अप्रति यथाप्रतिपक्षयुक्ता न भवन्ति तथा जघन्वान् हतवान्। त्वमिन्द्राभिभूरित्यादयश्चत्वारो मन्त्राः ऐन्द्रे कर्म्मणि विनियोज्याः। युजे रथमिति मन्त्रस्तु संहितायामैन्द्रमिति-विहिते पशौ वपायां याज्यात्वेनापि विनियुक्तः। अतएव सूक्तेष्वाम्नातः, इन्द्रं नरोयुजे रथमिति॥

अथ नवमीमाह। "हव्यवाहमभिमातिषाहम्। रक्षोहणं पृतनासु जिष्णुम्। ज्योतिष्मन्तं दीद्यन्तं पुरन्धिम्। अग्निꣳ स्विष्टकृतमाहुवेम" इति। अग्निं देवमाहुवेम कर्म्मण्याह्वयाम।

कीदृशमग्निं हव्यवाहं हविषां बोढारम्, अभिमातिषाहं पाप्मनोऽभिभवितारम्, रक्षोहणं रक्षसां हन्तारम्, पृतनासु जिष्णुम्, परकीयसेनासु जयशीलम्, ज्योतिष्मन्तं रश्मिरूपेण ज्योतिषायुक्तम्, दीद्यन्तं स्वशरीरेऽपि दीप्यमानम्, पुरन्धिं पुरुषु आहवनीयाद्यायतनेषु अवस्थितम्, स्विष्टकृतं वैकल्यपरिहारेण स्विष्टत्वसम्पादकम् ॥

अथ दशमीमाह। "स्विष्टमग्ने अभितत् पृणाहि। विश्वा देव पृतना अभिष्य। उरुन्नः पन्थां प्रदिशन्विभा हि। ज्योतिष्मद्धेह्यजरं न आयुः" इति। हे अग्ने स्विष्टं वैकल्यराहित्येन सुष्टु प्रक्षिप्तं तं अभितत् पृणाहि अभितः पालय, पूरय वा, स्विष्टत्वसम्पादनमेव पालनम्। हे देव विश्वाः पृतनाः सर्वाः शत्रुसेनाः अभिष्य सर्वतो निराकुरु, नोऽस्माकं उरुं पन्थां विस्तीर्णं मार्गं प्रदिशन् विभाहि विशेषेण दीप्यस्व, ज्योतिष्मदुज्ज्वलम् अजरं जरारहितं आयुर्नोऽस्मभ्यं धेहि सम्पादय। अस्य मन्त्रद्वयस्य, अग्नये तन्तुमतेऽष्टाकपालं निर्वपेदित्यस्यामिष्टौ क्रतः संयाज्यारूपेण विनियोग आपस्तम्बेनोक्तः, बौधायनस्तु नक्षत्रेष्टिषु विनियोगमुदाजहार, स्विष्टवत्या संयाज्ये हव्यवाहः स्विष्टमिति। अतएव तदीययाज्यानुवाक्या काण्डे हव्यवाहꣳ स्विष्टमिति प्रतीकद्वयमाम्नातम्। तथा दिवश्येनीयेषु ऐधूनुषु चेष्टिषु तत्प्रतीकद्वयमाम्नातम् ॥

अथैकादशमाह। "त्वामग्ने हविष्मन्तः। देवं मर्त्तास ईडते [५]। मन्ये त्वा जातवेदसम्। स हव्यावक्ष्यानुषक्" इति।

हे अग्ने त्वां देवं हविष्मन्तो हविर्युक्ताः मर्तासो मनुष्याः ईडते स्तुवन्ति। अहं त्वां जातवेदसमनुत्यन्नमर्व्वजगदभिज्ञं मन्ये। स त्वं हव्या हवींषि आनुषक् अनुक्रमेण देवेषु यथा सक्तानि भवन्ति तथा वक्षि वह। अस्य मन्त्रस्य काम्येष्टिषु विकल्पित-संयाज्यारूपेण विनियोगमापस्तम्ब उदाजहार, अनुष्टुभा संयाज्ये त्वां चित्रश्रवस्तमस्त्वामग्ने हविष्मन्त इति॥

अथ द्वादशीमाह। "विश्वानि नो दुर्गहा जातवेदः। सिन्धुं न नावा दुरितातिपर्षि। अग्ने अत्रिवन्मनसा गृणानः। अस्माकं बोध्यविता तनूनाम्" इति। हे जातवेदः नोऽस्मदीयानि दुर्गहा दुष्परिहराणि विश्वानि सर्व्वाणि दुरितानि पापानि अतिपर्षि अतीत्य पालय। तत्र दृष्टान्तः, नावा सिन्धु न यथा लोके नदीं नावा अतिलङ्घयति तद्वत्। हे अग्ने अत्रिवत् अत्रिणा महर्षिणा चतूरात्रे कर्म्मणि यथा स्तुयसे तथास्माभिर्मनसा गृणानः स्तूयमानः। अस्माकं तनूनामविता रक्षिता भूत्वा बोधि अस्मत् भक्तिं बुध्यस्व। अयं मन्त्रः काम्याग्नेये कर्म्मणि विनियोक्तव्यः॥

अथ त्रयोदशीमाह। "पूषा गा अन्वेतु नः। पूषा रक्षत्वर्वतः। पूषा वाजꣳसनोतु नः" इति। पूषाख्यो देवः नः अस्मदीयाः गाः अन्वेतु रक्षणार्थमनुगच्छतु। तथा अर्वतः अस्मदीयानश्वान् पूषा रक्षतु। तथा पूषा देवः नः अस्मभ्यं वाजं अन्नं सनोतु ददातु। एतस्य मन्त्रस्य वृषोत्सर्गे विनियोगं बौधायन उदाजहार, पश्चात् जु-

होति पूषा गा अन्वेतु न इति पुरोऽनुवाक्यमनुच्येति ॥

अथ चतुर्दशीमाह। "पूषेमा आशा अनुवेद सर्व्वाः [५]। सो अस्माँ अभयतमेन नेषत्। स्वस्तिदा अघृणिः सर्व्ववीरः। अप्रयुच्छन् पुर एतु प्रजानन्" इति। पूषा देवः इमाः सर्व्वा आशाः दिशः अनुवेद क्रमेण जानाति स पूषा देवः अस्मान् अभयतमेन अत्यन्तं भयरहितेन मार्गेण नेषत् नयतु। सोऽयं स्वस्तिदा भद्रस्य दाता अघृणिः असोढव्यदीप्तिः, न ह्येतस्य दीप्तिः केनापि विरोधिना सोढुं शक्यते, सर्व्ववीरः सर्व्वैर्मर्त्यैर्युक्तः, अप्रयुच्छन् प्रमादमकुर्व्वन्, प्रजानन् अस्मदभिप्रायं प्रकर्षेण जानन् पुर एतु पुरतो गच्छतु। अयं मन्त्रः पौष्णꣳ श्याममालभेतेति तस्य पशोः पुरोडाशस्य याज्यारूपेण विनियुक्तः। तथा च सूत्रे तत्प्रतीकमाम्नातम्, शुक्रं ते अन्यत् पूषेमा आशा इति ॥

अथ पञ्चदशीमाह। "त्वमग्ने सप्रथा असि। जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते" इति। हे अग्ने सप्रथाः ख्यातियुक्तः, जुष्टः यजमानानां प्रियः, होता देवनामाह्वयिता, वरेण्यः वरणीयश्चासि। त्वया त्वदनुग्रहेण यज्ञं वितन्वते विस्तारयन्ति। एतस्य मन्त्रस्य प्रायश्चित्तविशेषे विनियोगो द्रष्टव्यः। तथाच ब्राह्मणे, यस्यानो वा रथो वान्तराग्नी यातीत्युपक्रम्यान्ते मन्त्रोऽयमुदाहृतः, त्वमग्ने सप्रथा असीत्याहेति ॥

अथ षोडशीमाह। "अग्नी रक्षाꣳसि सेधति। शुक्रशोचिरमर्त्त्यः। शुचिः पावक ईड्यः" इति। अयमग्निः रक्षांसि

प्रतिषेधति, कीदृशोऽग्निः शुक्रशोचिः निर्मलदीप्तिः, अमर्त्यः मरणरहितः, शुचिः शुद्धः, पावक अन्येषामपि शोधकः, ईड्यः स्तुत्यः। एतस्य विनियोगमापस्तम्ब अग्नौ रक्षांसीत्यु-पक्रम्य दर्शयति, शुचिः पावक ईड्य इत्यरणी अभि-मन्त्र्येति॥

अथ सप्तदशीमाह। "अग्ने रक्षाणो अꣳहसः [६]। प्रतिष्मदेव रीषतः। तपिष्ठैरजरोदह" इति। हे अग्ने त्वं नः अस्मान् अꣳहसः पापात् रक्ष। हे देव त्वं अजरः सन् रीषतः हिंसकान् शत्रून् तपिष्ठैः अतिशयेन तापकैः ज्वालाविशेषैः प्रतिदहस्व प्रत्येकं सर्व्वथा दह॥

अथाष्टादशीमाह। "अग्ने हꣳसिन्यत्रिणम्। दीद्यन्म-र्त्येष्वा। स्वे क्षये शुचिव्रत" इति। हे अग्ने त्वमत्रिणं पाप-पुरुषान् निहंसि नितरां जहि। हे शुचिव्रत शुद्धस्य कर्म्मणो निष्पादक, स्वे क्षये स्वकीये यज्ञगृहे मर्त्त्येष्वा सर्व्वेषु मनुष्ये-ष्वपि दीद्यत् प्रकाशमानस्तिष्ठ। एतयोर्मन्त्रयोः पूर्व्वेण मन्त्रेण सह विनियोगं बौधायन उदाजहार, यदि मथ्यमानो न जायेत राक्षोघ्नीरनु ब्रूयात् कृणुष्वपाज इति पञ्च अग्नौ रक्षां-सि सेधतीति तिस्र इति॥

अथैकोनविंशीमाह। "आ वात वाहि भेषजम्। वि वात वाहि यद्रपः। त्वꣳ हि विश्वभेषजः। देवानां दूत ईयसे" इति। हे वात वायो भेषजं यथा भवति तथा आ वाहि अस्मान् प्रति सर्व्वतो वातं कुरु। हे वात यद्रपः पापमस्ति तत् वि

वाहि विशिष्य गमय, यस्मात्त्वं विश्वभेषजः विश्वस्य चिकित्सकः, देवानां दूतश्च मन्नीयमे गच्छमि ॥

अथ विंशीमाह । "द्वाविमौ वातौ वातः [७]। आसिन्धोरापरावतः। दत्तं मे अन्य आवातु । परान्यो वातु यद्रपः" इति। इमौ लोके दृश्यमानौ द्वौ वातौ आसिन्धो समुद्रसहिते प्रदेशे आपरावतो दूरवर्त्तिलोकयुक्ते देशे वातः सञ्चरतः। शान्तो वायुरेकः तीव्रः अपरः तयोर्मध्ये एकः शान्तो मे मम दक्षम् आवातु सुखं सम्पादयतु। अन्यस्तीव्रो वायुः यद्रपः मम यत् पापं अस्ति तत्परावातु विनाशयतु ॥

अथैकविंशीमाह। "यददो वात ते गृहे। अमृतस्य निधिर्हितः। ततो नो देहि जीवसे। ततो नो देहि भेषजम्। ततो नो मह आवह" इति। हे वात ते गृहे यददः योऽसावमृतस्य निधिर्हितः स्थापितः, ततो निधेः सकाशान्नोऽस्माकं जीवसे जीवनाय देहि कियदप्यमृतं प्रयच्छ ततोऽमृतात् नः अस्माकं भेषजं धेहि सम्पादय। ततस्तस्मात् भेषजात् नोऽस्माकं मह आवह तेजः सम्पादय ॥

अथ द्वाविंशीमाह। "वात आवातु भेषजम्। शम्भूर्मयोभूर्नो हृदे [८]। प्राण आयूंषि तारिषत्" इति। अयं वातः भेषजं यथा भवति तथा आवातु। नोऽस्माकं हृदे मनसि शम्भूरनिष्टशान्तिं भावयन् मयोऽभूः सुखञ्च भावयन् वर्त्तताम्। नोऽस्माकं आयूंषि चिरकालजीवनानि प्रतारिषत् प्रकर्षेण

वर्द्धयतु। आवातवाहीत्यादिकं मन्त्रचतुष्टयं कस्मिंश्चित् वायव्ये कर्म्मणि विनियोज्यम् ॥

अथ त्रयोविंशीमाह। "त्वमग्ने अयासि। अयासन् मनसा हितः। अयासन् हव्यमूहिषे। अयानो धेहि भेषजम्" इति। हे अग्ने त्वं अयासि सर्व्वगतोऽसि, अयासन् सर्व्वगत एव सन् यजमानस्य मनसा क्वचित्प्रदेशविशेषे आहितः अयासन् स्वभावतः सर्व्वगत एव सन् हव्यमूहिषे क्वाचित्क इव देशान्तरं हविर्वहसि अयाः सर्व्वगतः सन् नः अस्माकं भेषजं धेहि सम्पादय। आपस्तम्बो जुह्वा स्रुवेण वा सर्व्वप्रायश्चित्तानि जुहोतीति विधाय होममन्त्रेषु त्वमग्ने अयासीत्येतमपि पठितवान् ॥

अथ चतुर्व्विंशीमाह। "इष्टो अग्निराहुतः। स्वाहाकृतः पिपर्त्तु नः। स्वगा देवेभ्य इदन्नमः" इति। अयमग्निरिष्टः दर्शपूर्णमासादियागैः पूजितः आहुतः अग्निहोत्रादिहोमैस्तर्पितः स्वाहाकृतः अग्निमग्नौ स्वाहेति प्रणयनकाले स्वाहाकारेण प्रतिष्ठापितः तादृशः नोऽस्मान् पिपर्त्तु पालयतु। देवेभ्यो देवानामर्थे इदं हविः स्वगा स्वगतं कृतं, देवेभ्यो दातुं त्वया स्वात्मनि स्थापितमित्यर्थः। तादृशाय तुभ्यं नमोऽस्तु। अयं मन्त्र आग्नेयकर्म्मणि विनियोज्यः ॥

अथ पञ्चविंशीमाह। "कामो भूतस्य भव्यस्य। सम्राडेको विराजति [८]। स इदं प्रतिपप्रथे। ऋतूनुत्सृजते वशी" इति। योऽयं कामाभिमानी देवः सोऽयं भूतस्य भव्यस्य च सम्राट् समीचीनो राजा भूत्वा स्वयमेको विराजति विशेषेण

दीप्यते। स च कामः इदं सर्व्वं जगत् प्रतिलक्ष्य पप्रथे प्रथितो-ऽभूत्। वशी स्ववशः सन् ऋतून् वसन्तादीन् उत्सृजते उत्क-र्षेण निर्म्मिमीते ॥

अथ षड्विंशीमाह। "कामस्तदग्रे समवर्त्तताधि। मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन्। हृदि प्रतीष्या कवयो मनीषा" इति। ईश्वरकामस्तुतिरियम्। तस्यान्तर्मनसि कामः समवर्त्तते इदं सृजेयमिति हि ब्राह्मणं प्रजापतेः कामः तदानीं अग्रे जगत्सृष्टिसमये समवर्त्तत प्रा-दुरभूत्। इदं सर्व्वं सृजेयमिति प्रजापतेर्मनसः प्रथमं यद्रेत आसीत् कामरूपं तं कामस्य सृजतः जगतः कार्य्यभूतं बन्धुं निदानभूतं असति कारणभूते प्रजापतौ स्थितं कवयो निर-विदन् निष्कृष्य विन्दन्। केनोपायेनेति तदुच्यते, हृदि प्रतीष्या कवयः स्वे स्वे हृदये मनीषया योगसंस्कृतया बुध्या प्रतीष्या जगत्कारणमिति निश्चितवन्तः प्रजापतेः काम एव सृष्टिका-रणमिति काम एव कारणमव्यक्तत्वादसदित्युच्यते। कार्य्यं तु व्यक्तत्वात् सदित्युच्यते। एतच्च मन्त्रद्वयं दिवश्येनीष्टिषु द्वितीय-स्यामिष्टौ याज्यानुवाक्यारूपेण विनियोजनीयम्। अतएव तत्र प्रतीकद्वयमाम्नातम्, कामो भूतस्य कामस्तदग्र इति ॥

अथ सप्तविंशीमाह। "त्वया मन्यो सरथमारुजन्तः। हर्ष-माणासो धृषता मरुत्वः। तिग्मेषव आयुधा सꣳशिशानाः। उपप्रयन्ति नरो अग्निरूपाः" [१०] इति। मरुच्छब्देन वेगो लक्ष्यते, हे मरुत्वः वेगयुक्त मन्यो क्रोध त्वया प्रेरिताः नरो

मनुष्याः उपप्रयन्ति युद्धसमीपं प्राप्नुवन्ति। कीदृशाः नराः सरथमारुजन्तः रथसहितं शत्रुं सर्व्वतो हिंसन्तः हर्षमाणासः शत्रुबधेन हर्षयुक्ताः धृषता भीत्यभावेन धार्ष्ट्ययुक्ताः तिग्मषवः तीक्ष्णबाणयुक्ताः आयुधासंशिशानाः आयुधानि सम्यक् तीक्ष्णीकुर्व्वन्तः, अग्निरूपाः अग्निवदुग्ररूपाः॥

अथाष्टाविंशीमाह। "मन्युर्भगो मन्युरेवास देवः। मन्युर्होता वरुणो विश्ववेदाः। मन्युं विश ईडते देवयन्तीः। पाहि नो मन्यो तपसा श्रमेण" इति। योऽयं मन्युः क्रोधाभिमानी देवः सोऽयं भगादिरूपेण प्रशस्यते। यो भगो देवः सोऽपि मन्युस्वरूपः। यस्त्वान्यो देवः इन्द्रादि सोऽपि मन्युरेव आस बभूव। होता देवानामाह्वाता अग्निरपि मन्युस्वरूपः। विश्ववेदाः सर्व्वज्ञः वरुणोऽपि मन्युस्वरूपः। देवयन्तीः देवान् कामयमानाः विशः प्रजाः मन्युमीडते स्तुवन्ति। हे मन्यो श्रमेण श्रमहेतुना तपसा युक्तानस्मान् पाहि रक्ष। क्रोधेनास्माकं तपोनाशो माभूदित्यर्थः। भगादीनां मन्युरूपत्वं क्रोधाधीनप्रवृत्तियुक्तत्वादवगन्तव्यम्। एतच्च मन्त्रद्वयं मन्युदेवताके कर्म्मणि विनियोजनीयम्। तादृशं कर्म्म नरमेधे श्रूयते, मन्यवे यस्तापमिति। अयस्तापलोहकारं पुरुषं मन्युदेवतार्थमालभत इत्यर्थः॥

अथैकोनत्रिंशीमाह। "त्वमग्ने व्रतभृच्छुचिः। देवाँ आसादया इह। अग्ने हव्याय वोढवे" इति। हे अग्ने त्वं व्रतभृत् अनुष्ठीयमानकर्म्मपोषकः शुचिः शुद्धः। अतएव देवान्

इह कर्म्मणि आसादय आस्थापय। हे अग्ने हव्याय वोढवे हविषां वाहनाय देवानां सदनं कुरु ॥

अथ त्रिंशीमाह। "व्रता नु बिभ्रद्व्रतपा अदाभ्यः। यजानो देवाँ अजरः सुवीरः। दधद्रत्नानि सुविदानो अग्ने। गोपाय नो जीवसे जातवेदः" [११] इति। जातं जगत् वेत्तीति जातवेदः। तादृश हे अग्ने जीवसे जीवनाय गोपाय। कीदृशस्त्वं व्रता व्रतानि कर्म्माणि नु बिभ्रत् अवश्यं धारयन् व्रतपाः कर्म्मणः पालकः अदाभ्यः केनाप्यतिरस्कार्य्यः देवान् यजानः पूजयमानः अजरः जरारहितः सुवीरः शोभनापत्यप्रदः रत्नानि मणिमुक्तादीनि दधत् धारयन्, सुविदानः सम्यगभिज्ञः। एतच्च मन्त्रद्वयं औपवसथ्येऽहन्यश्रुपातप्रायश्चित्तेष्टौ याज्यानुवाक्यारूपेणापस्तम्बो विनियुक्तवान्। अग्नये व्रतभृदष्टाकपालं यद्यार्तिजमश्रु कुर्य्यात् त्वमग्ने व्रतभृच्छुचिरिति ॥

इति प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः।

अथ द्वितीयानुवाके प्रथमामृचमाह। "चक्षुषो हेते मनसो हेते। वाचो हेते ब्रह्मणो हेते। यो माघायुरभिदासति। तमग्ने मेन्यामेनिं कृणु" इति। हे अग्ने यो मामभिचरति तस्य शत्रोः चक्षुषो मनसो वाचश्च ब्रह्मणः प्राणस्य हेतिरायुधं त्वमसि। हे हेते तादृशो यः शत्रुः अघायुः अघमनिष्टं कर्त्तु-

मिच्छन् मामभिदासति हिनस्ति तं मन्युं मेन्या त्वदीयेन क्रोधेन अमेनिं कृणु क्रोधरहितं कुरु। मेनिशब्दः क्रोधवाची, तथा च वाजसनेयिनः कस्यचिन्मन्त्रस्य ब्राह्मणे समामनन्ति, अमेन्यस्माद्ब्रह्माणि धारयेत्यकुध्यन्नस्मासु ब्रह्माणि धारयेत्ये-वैतदाहेति ॥

अथ द्वितीयां। "यो मा चक्षुषा यो मनसा। यो वाचा ब्रह्मणा घायुरभिदासति। तयाग्ने त्वं मेन्या। अमुममेनिं कृणु" इति। यो मां त्वं यश्चक्षुरादिभिः अघायुः पापमिच्छन् हि-नस्ति तं शत्रुं तया मेन्या त्वदीयेन क्रोधेन क्रोधरहितं कुरु॥

अथ तृतीयां। "यत्किञ्चासौ मनसा यच्च वाचा। यज्ञै-र्जुहोति यजुषा हविर्भिः [१]। तन्मृत्युर्निर्ऋत्या संविदानः। पुरा दिष्टादाहुतीरस्य हन्तु" इति। असौ मच्छत्रुः यत्किञ्च मनसा मद्विषये दुरितं करोति। यच्च वाचा यज्ञैर्हविर्भिश्च यजुषा मच्छामनार्थं जुहोति तत्सर्वं निर्ऋत्या संविदानः ऐकमत्यं गतः मृत्युः हन्तु नाशयतु। पुरा दिष्टात् दिष्टं दैवं शत्रोरनुकूलस्य दैवस्य प्रवृत्तेः पुरा अस्य शत्रोराहुतिं हन्तु नाशयतु ॥

अथ चतुर्थीमाह। "यातुधाना निर्ऋतिराद् रक्षः। ते अस्य घ्नन्त्वनृतेन सत्यम्। इन्द्रेषिता आज्यमस्य मथ्नन्तु। मा तत्स-मृद्धि यदसौ करोति" इति। यातुधानाः क्रूराः भूतविशेषाः या च निर्ऋतिः क्रूरदेवता आद् अनन्तरञ्च यत् रक्षो राक्षसजातिः ते सर्वे अस्य शत्रोः सत्यं अवैतथ्यं कृतं कर्म

अनृतेन दुष्टेन व्यापारेण हविरुपघातेन घ्नन्तु। तदेव पुनराह, इन्द्रेषिताः यातुधानादयः तस्य शत्रोः आज्यं हविर्भूतं मथ्नन्तु केशकीटाद्यशुचिमिश्रणेन दूषयन्तु। यदसौ शत्रुः करोति तत्कर्म्म मा समृद्धि समृद्धं भवतु॥

अथ पञ्चमीमाह। "हन्मि तेऽहं कृतꣳ हविः। यो मे घोरमचीकृतः। अपाञ्चौ त उभौ बाहू। अपनह्याम्यास्यम्" [२] इति। हे शत्रो यस्त्वं मे घोरं अभिचाररूपं कर्म्म अचीकृतः अकार्षीः घोरं कर्त्तनमदृष्टरूपेण अकार्षीदित्यर्थः। तस्य तव कृतं संस्कृतं हविरहमिन्द्रेण प्रेषितैर्भूतैः हन्मि। तव द्वावपि बाहू अपाञ्चौ अपगतौ पृष्ठतः कृत्वा अपनह्यामि दृढं बध्नामि आस्यञ्च बध्नामि॥

अथ षष्ठीमाह। "अपनह्यामि ते बाहू। अपनह्याम्यास्यम्। अग्नेर्देवस्य ब्रह्मणा। सर्व्वं तेऽवधिषं कृतम्" इति। पादद्वयं पूर्व्ववत्। अग्नेर्देवस्य ब्रह्मणा आग्नेयसूक्तरूपेण स्तोत्रेण सर्व्वं कर्म्म तव कृतं अवधिषं अहं हतवानस्मि॥

अथ सप्तमीमाह। "पुरामुष्य वषट्कारात्। यज्ञं देवेषु नस्कृधि। स्विष्टमस्माकं भूयात्। मास्मान् प्रापन्नरातयः" इति। अमुष्य शत्रोर्वषट्कारात् पूर्व्वमेव अस्माकं यज्ञं देवेषु कृधि स्थापय। हे अग्ने अस्माकं यज्ञकर्म्म स्विष्टमस्तु मा शत्रोः। अपि च कदाचिदपि अरातयः अस्मान् प्रापन् मा प्राप्नुवन्तु॥

अथाष्टमीमाह। "अन्ति दूरे सतो अग्ने। भ्रातृव्यस्याभिदासतः [३]। वषट्कारेण वज्रेण। कृत्याꣳ हन्मि कृतामहम्" इति।

हे अग्ने मम भ्रातृव्यस्य शत्रोः अभिदासतः हिंसतः, अन्ति समीपे दूरे वा सतोऽवस्थितस्य कृतामुत्पादितां कृत्यां अहं वषट्कारेण वज्रेण हन्मि नाशयामि ॥

अथ नवमीमाह ।"यो मा नक्तं दिवा सायम् । प्रातश्चाह्नो निपीयति । अद्या तमिन्द्रवज्रेण । भ्रातृव्यं पादयामसि" इति । यः शत्रुरह्नि अहोरात्रयोः सायंप्रातःकालयोश्च मां निपीयति बाधते तं शत्रुं हे इन्द्र त्वदीयेन वज्रेण छित्वा पातयाम । त एते नवमन्त्राः एतयैव यजेताभिचर्यमाण इत्यादिष्विष्टिषु उपहोमार्थत्वेन विनियोक्तव्याः ॥

अथ दशमीमाह । "इन्द्रस्य गृहोऽसि तं त्वा । प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन" इति । अत्रेन्द्रशब्देन परमैश्वर्य-योगादादित्य उच्यते । तथा च ब्राह्मणम्, असौ वा आदित्य इन्द्र एष प्रजापतिरिति । हे आदित्यमण्डल त्वं इन्द्रस्य गृहोऽसि आदित्यनिवासस्थानमसि तं तादृशमादित्यगृहं त्वामहं प्रपद्ये प्राप्नोमि । कीदृशोऽहं सगुः गोसहितः साश्वोऽश्वसहितः अन्यदपि मे यद्वस्तु विद्यते तेन सह त्वां प्रविशामि । अयं मन्त्र आत्मरक्षायां विनियोक्तव्यः ॥

अथैकादशीमाह।"ईडे अग्निं विपश्चितम्[४]। गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम्" इति । अग्निमीडे गिरा स्तौमि, कीदृशं विपश्चितमभिज्ञं यज्ञस्य साधनं होमाधारत्वेन यज्ञनिष्पादकम् । श्रुष्टीवानमन्नवन्तं गिरा च श्रुष्टिरित्यादावन्नपरत्वेन प्रयोगात् धितावानं धारणवन्तम् ॥

अथ द्वादशीमाह। "अग्ने शकेम ते वयम्। यमं देवस्य वाजिनः। अतिद्वेषाꣳसि तरेम" इति। हे अग्ने वाजिने देवाय तुभ्यं हविर्यमं दातुं शकेम। यमशब्दो णमुलन्तो दानवाची। तेन दानेन द्वेषांसि रक्षांस्यतितरेम। एतच्च मन्त्रद्वयमाग्नेयकर्म्मणि विनियोज्यम्॥

अथ त्रयोदशीमाह। "अवतम्ना समनसौ समोकसौ। सचेतसौ सरेतसौ। उभौ मामवतं जातवेदसौ। शिवौ भवतमद्य नः" इति। योऽयमाहवनीयोऽग्निः यश्च तत्र प्रक्षिप्यमाणोऽग्निः तावुभौ, हे अग्नी समानमनस्कौ परस्परप्रीतियुक्तौ समानस्थानौ एकत्रैव निवसन्तौ, समचेतसौ समानज्ञानौ, सरेतसावेककर्म्मप्रवर्त्तकौ भूत्वा मामवतं रक्षतम्। तादृशौ हे जातवेदसौ अद्यास्मिन् कर्म्मणि नोऽस्मान् प्रति शिवौ शान्तौ भवतः। अयं मन्त्र आहवनीयमथिताग्न्योर्मेलने विनियोजनीयः॥

अथ चतुर्दशीमाह। "स्वयं कृण्वानः सुगमप्रयावम् [५]। तिग्मशृङ्गो वृषभः शोशुचानः। प्रत्नꣳ सधस्थमनुपश्यमानः। आतन्तुमग्निर्दिव्यं ततान" इति। अयमग्निर्दिव्यं दिविभवं तन्तुं तन्यमानं यज्ञमाततान आसमन्तात् विस्तृतवान्। कीदृशोऽग्निः सुगं गन्तुं सुशकं अप्रयावं प्रमादरहितं कर्म्म स्वयमेव कृण्वानः कुर्व्वाणः। तिग्मशृङ्गस्तीक्ष्णज्वालः वृषभः कामाभिवर्षकः शोशुचानः अत्यन्तं दीप्यमानः प्रत्नं चिरकालमित्थं सधस्थं सर्व्वेषां देवानां सहावस्थानयोग्यमाहवनीयायतनमनुपश्यमानो निरन्तरं द्रष्टा॥

अथ पञ्चदशीमाह। "त्वन्नस्तन्तुरुत सेतुरग्ने। त्वं पन्था भवसि देवयानः। त्वयाग्ने पृष्ठं वयमारुहेम। अथा देवैः सधमादं मदेम" इति। हे अग्ने त्वं नः अस्माकं तन्तुः अविच्छिन्नो यज्ञो भवसि। उत अपि सेतुरनुष्ठानमर्य्यादानाम साङ्कर्य्याय सेतुवद्विधारकोऽसि। तथा त्वं देवयानो देवैर्गन्तुं योग्यः पन्था भवसि तत्साधनत्वात् तद्रूपत्वं त्वया त्वत्प्रसादेन वयं यजमानाः पृष्ठं स्वर्गस्य उपरिभागं आरुहेम। अथानन्तरं अत्रावस्थितैर्देवैः सधमादं सहैकविधो हर्षो यथा भवति तथा मदेम हृष्यास्मः। तदेतन्मन्त्रद्वयं प्रायश्चित्तेष्टौ याज्यानुवाक्यारूपेण सूत्रकारो विनियुक्तवान्, यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वा अग्नये तन्तुमतेऽष्टाकपालं निर्वपेत् स्वयं कृण्वान इति॥

अथ षोडशीमाह। "उदुत्तमं मुमुग्धि नः। विपाशं मध्यमं चृत। अवाधमानि जीवसे" [६] इति। हे वरुण नः अस्माकमुत्तमं त्वदीयं पाशमुन्मुमुग्धि उत्कर्षेण मोचय। मध्यमं पाशं विचृत वियोजय। जीवसे अस्माकं जीवनार्थं अवाधमानि बन्धनानि अवचृत विनाशय। सोऽयं मन्त्रो बन्धनमोक्षे विनियोज्यः॥

अथ सप्तदशीमाह। "वयँ सोमव्रते तव। मनस्तनूषु बिभ्रतः। प्रजावन्तो अशीमहि" इति। हे सोम तव व्रते त्वदीये कर्म्मणि वयं वर्त्तमानाः तनूषु शरीरेषु मनो बिभ्रतः विचारक्षमं मनो धारयन्तः प्रजावन्तः पुत्रपौत्रादियुक्ताः अशीमहि

भोगान् भुञ्जीमहि। अस्य मन्त्रस्य अग्न्युपस्थाने मुखमार्ज्जने विनियोगं सूत्रकार आह, अशीमहीति मुखं विमृष्ट इत्यन्तेन वाक्येन ॥

अथाष्टादशीमाह। "इन्द्राणी देवी सुभगा सुपत्नी। उदꣳशेन पतिविद्ये जिगाय। त्रिꣳशदस्या जघनं योजनानि। उपस्थ इन्द्रꣳ स्थविरं बिभर्त्ति" इति। येयमिन्द्राणी इन्द्रस्य भार्य्या सेयं देवी द्योतमाना सुभगा सौभाग्ययुक्ता सुपत्नी शोभनपतियुक्ता सती पतिविद्ये पत्युरिन्द्रस्य लाभे स्नेहे सति उदंशेन सेनाया एकदेशेनैव शत्रुमुज्जिगाय उत्कर्षेण जितवती। अस्या ईदृश्या इन्द्राण्याः जघनं पृष्ठभागवर्त्ति सैन्यं त्रिंशत् योजनानि त्रिंशत्सङ्ख्याकेषु योजनेषु व्याप्यावतिष्ठते। सेयमिन्द्राणी स्थविरं स्थैर्य्ययुक्तं निर्भयमिन्द्रं स्वपतिमुपस्थे सेनामुखे बिभर्त्ति धारयति ॥

अथैकोनविंशीमाह। "सेना ह नाम पृथिवी धनञ्जया। विश्वव्यचा अदितिः सूर्य्यत्वक्। इन्द्राणी देवी प्रासहा ददाना [७]। सा नो देवी सुहवा शर्म्म यच्छतु" इति। सेनाह्वनाम देवानां सेना अत्यन्तं प्रसिद्धा, सा च पृथिवी विस्तीर्णा धनञ्जया शत्रूणां धनं जेतुं समर्था विश्वव्यचाः सर्व्वव्यापिनी अदितिः अखण्डनीया सूर्य्यत्वक् सूर्य्यवदुज्ज्वलरूपा तया सेनया युक्तेन्द्राणी देवी प्रासहा प्रकृष्टेन बलेन आददाना शत्रूणां धनं स्वीकुर्व्वाणा वर्त्तते। सा तादृशी सुहवा सुखेनाह्वातुं शक्या देवी नोऽस्मभ्यं शर्म्म यच्छतु सुखं ददातु। एते ऋचौ

इन्द्राण्यै चरुं निर्वपेदित्यत्र विकल्पिते याज्यानुवाक्ये द्रष्टव्ये॥

अथ विंशीमाह। "आ त्वाहार्षमन्तरभूः। ध्रुवस्तिष्ठा विचाचलिः। विशस्त्वा सर्वा वाञ्छन्तु। मा त्वद्राष्ट्रमधिभ्रशत्" इति। शत्रुभिः अपरुद्धो वाऽपरुध्यमानो वा, हे राजन् त्वामाहार्षं स्वकीये राज्ये समानीतवानस्मि। अन्तरभूः तस्मिन् राज्येऽन्तर्भव। तत्र ध्रुवः स्थिरः सन् अविचाचलिः कदाचिदपि चलनरहितस्तिष्ठ सर्वाः विशः प्रजाः त्वां वाञ्छन्तु, इदं राष्ट्रं त्वत् मा भ्रशतु त्वत्तो भ्रष्टं माभूत्॥

अथैकविंशीमाह। "ध्रुवा द्यौर्ध्रुवा पृथिवी। ध्रुवं विश्वमिदं जगत्। ध्रुवा ह पर्वता इमे। ध्रुवो राजा विशामयम्" इति। यथा पृथिव्यादयः लोके ध्रुवाः एवमयं विशां प्रजानां राजा ध्रुवो भवतु॥

अथ द्वाविंशीमाह। "इहैवैधि मा व्यथिष्ठाः। [८]। पर्वत इव विचाचलिः। इन्द्र इवेह ध्रुवस्तिष्ठ। इह राष्ट्रमु धारय" इति। हे राजन् इहैव राष्ट्रे स्थिरो भव, मा व्यथिष्ठाः व्यथां भयं मा प्राप्नुहि। पर्वतः यथा चलनरहितः तथा त्वं निश्चलो भव। इन्द्रो यथा द्युलोके ध्रुवस्तिष्ठति तथा त्वं इह राष्ट्रे ध्रुवस्तिष्ठ इहैव स्थित्वा तदेतद्राष्ट्रम् उ सर्वमपि धारय पोषय॥

अथ त्रयोविंशीमाह। "अभितिष्ठ पृतन्यतः। अधरे सन्तु शत्रवः। इन्द्र इव वृत्रहा तिष्ठ। अपः क्षेत्राणि सञ्जयन्" इति। पृतनामस्मद्विरोधिनीमात्मन इच्छन्तीति पृतन्यतः

तान् वैरिणः अभितिष्ठ अभिक्रम्य निगृह्य स्थिरो भव। ते च शत्रवः त्वत्तोऽधरे नीचाः सन्तु। इन्द्रवत् वृत्रहा शत्रुघाती तिष्ठ। अपः सस्योपकारीणि जलानि चेत्राणि च सञ्जयन् सम्यक् जयेन सम्पादयन्॥

अथ चतुर्विंशीमाह। "इन्द्र एनमदीधरत्। ध्रुवं ध्रुवेण हविषा। तस्मै देवा अधिब्रुवन्। अयञ्च ब्रह्मणस्पतिः" [८] इति। यमिन्द्रोऽस्ति स एनं राजानं ध्रुवो यथा भवति तथा अदीधरत् धारयतु। ध्रुवेण स्थिरेण यथाशास्त्रमनुष्ठितेन हविषा तुष्टा देवा अस्मै यजमानार्थमधिब्रुवन् अधिकोऽयमिति ब्रुवन्तु। यो ब्रह्मणस्पतिर्देवः अयञ्चाधिब्रवीतु। आ त्वाहार्षमित्याद्या ऋचः पञ्च इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वापरुध्यमानो वेत्यत्रोपहोमार्था द्रष्टव्याः॥

इति द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

तृतीयानुवाके प्रथमामृचमाह। "जुष्टी नरो ब्रह्मणा वः पितॄणाम्। अक्षमव्ययन्न किलारिषाथ। यच्छक्करीषु बृहता रवेण। इन्द्रे शुष्ममदधाथा वसिष्ठाः" इति। हे वसिष्ठाः वसिष्ठस्य मम पुत्राः यद्यस्मात्कारणात् शक्करीषु प्रोष्वस्मै पुरोरथमित्यादिकासु शक्करीच्छन्दोयुक्तासु ऋक्षु बृहता रवेण महता सामध्वनिना इन्द्रे शुष्मं बलं अदधाथाः सम्पादितवन्तः।

तस्मात् कारणात् हे नरो मत्पुत्राः पुरुषाः वः युष्मत्सम्बन्धिनां पितॄणां ब्रह्मणा जुष्टी भवदीयेन परिवृढेन स्तोत्रेण प्रीतानां अक्षं क्रुद्धं चक्षुरिन्द्रियमव्ययं वसिष्ठोऽहमाच्छादितवानस्मि। इतः परं यूयं न रिषाथ किल सर्व्वथा हिंसिता न भवथ, अयमर्थः। सौदासनामकैरसुरैर्यदा वसिष्ठो हतपुत्रोऽभूत् तदानीं पुत्राभावात् एतदीयाः पितरः रक्तवर्णेन चक्षुषा युक्ता क्रुद्धाः दृश्यन्ते। तदानीं वसिष्ठः पुत्रानुत्पादितवान्। ते च पुत्रा विद्याधिकाः सन्तः सामगानेनेन्द्रं तोषितवन्तः। तदीयपितॄणां क्रुद्धं मत्तं क्रोधपरित्यागेन शान्तं सपन्नम्। सोऽयं वृत्तान्तः वसिष्ठेन स्वपुत्रान् प्रत्यभिहित इति अयं मन्त्रो रक्षार्थो द्रष्टव्यः॥

अथ द्वितीयामाह। "पावका नः सरस्वती। वाजेभिर्वाजिनीवती। यज्ञं वष्टु धिया वसुः" इति। इयं सरस्वती नः अस्मदीयं यज्ञं धिया स्वबुद्ध्या वष्टु कामयताम्। कीदृशी पावका शोधिका वाजेभिः नानाविधैरन्नैर्युक्तत्वेन वाजिनीवती बहुन्ना वसुः सर्व्वेषां निवासयित्री। अङ्गहीनपशूपाकरणप्रायश्चित्तत्वेन विनियुक्तः सारस्वतीं बार्हस्पत्यामिति च कृत्वा प्रयोजयेदिति॥

अथ तृतीयामाह। "सरस्वत्यभि नो नेषि वस्यः। मा पस्फरीः पयसा मा न आधक्। जुषस्व नः सख्या वेश्या च [१]। मा त्वत्क्षेत्राण्यरणानि गन्म" इति। हे सरस्वति नः अस्मान् वस्योऽधिश्रेयः प्रतिनेषि नय मा पस्फरीः मा हिंसीः पयसा नदीरूपायास्तव जलेन नोऽस्मान् माधक् सर्व्वतो माधाक्षि मा

विनाशय। सख्या सखिलेन वेश्मा च गृहावस्थानेन च नोऽस्मान् प्रति जुषस्व। त्वत् तव प्रसादात् अरणानि रमणरहितानि क्लेशकारणानि क्षेत्राणि मृत्युस्थानानि मा गन्म मा आप्नवाम ॥ अयञ्च पादः अन्यत्र ब्राह्मणेन व्याख्यातः। मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह। मृत्योर्वै क्षेत्राण्यरणानि। तेनैव मृत्योः क्षेत्राण्येव गच्छतीति। तस्मिन्नेव ब्राह्मणे मन्त्रोऽप्ययं विनियुक्तः। सरस्वत्यभिनो नेषि वस्य इति पुरोरुचं कुर्य्यादिति। तत्र उक्थ्याग्रान् गृह्णीतेत्युपक्रान्तत्वात्तदीयेयं पुरोरुक्। तथा सूक्तेऽपि सारस्वतीं मेषीमालभेतेत्यस्य पशोः हविषः पुरोऽनुवाक्यारूपेण प्रतीकमाम्नातम्, सरस्वत्यभिनो नेषीति ॥

अथ चतुर्थीमाह। "वृञ्जे हविर्नमसा बर्हिरग्नौ। अयामि स्रुग्घृतवती सुवृक्तिः। अम्यक्षि सद्मसदने पृथिव्याः। अश्रायि यज्ञः सूर्य्ये न चक्षुः" इति। प्रस्तररूपेण होतव्यं बर्हिर्यदस्ति तदेतन्नमसा नमनेन विनयेन सह वृञ्जे वर्ज्जयामि लुनामीत्यर्थः। आक्रेत्ता ते मारिषमित्याद्युक्तिर्विनयः। घृतवती घृतसम्पूर्णा सुवृक्तिः सुप्रदाना स्रुक् जुहूः अयामि होमार्थं अस्माभिरग्राहि पृथिव्याः सम्बन्धिनि सदने देवयजने सद्म प्राग्वंशादिरूपं अम्यक्षि अस्माभिरप्रापि यज्ञोऽयमस्माभिरश्रायि सूर्य्ये न सूर्य्येऽपि चक्षुरस्मदीयं अश्रायि सूर्य्यावलोकनेन कृतमित्यर्थः। सोऽयं मन्त्रः क्वचित् याजमानजपे विनियोक्तव्यः ॥

अथ पञ्चमीमाह। "इहार्वाञ्चमतिह्वये। इन्द्रं जैत्रा यजतने। अस्माकमस्तु केवलः" इति। इह कर्म्मणि इन्द्रं अर्वाञ्च-

मस्मदभिमुखमतिक्रम्य अन्यान् यजमानान् अतिलङ्घ्य प्रथममेवाह्वयामि। किमर्थं जैत्रा यजेतवे जेतव्यस्य जयार्थं स इन्द्रः अस्माकं केवलोऽस्तु अस्मास्वेव पक्षपातवान् भवतु॥

अथ षष्ठीमाह। "अर्वाञ्चमिन्द्रममुतो हवामहे। यो गोजिद्धनजिदश्वजिद्यः [२]। इमं नो यज्ञं विहवे जुषस्व। अस्य कुर्म्मो हरिवो मेदिनं त्वा" इति। अर्वाञ्चमस्मदभिमुखमिन्द्रं अमुतः स्वर्गादाह्वयामः। य इन्द्रः गोजित् शत्रुसम्बन्धिनीर्गाः जयेन सम्पादयति,यश्च तथैव धनजित् अश्वजिच्च,तमिन्द्रं हवामहे इति पूर्व्वत्रैवान्वयः। हे हरिवः हे हरिनामकाभ्यामश्वाभ्यां युक्तेन्द्र विहवे विविधाह्वाने सति अस्मदीयमिमं यज्ञं जुषस्व सेवस्व। अस्यानेन यज्ञेन त्वां मेदिनं स्निग्धशरीरं कुर्म्मः। एते ऋचौ कस्मिंश्चित् जयहेताविन्द्रे हविषि याज्यानुवाक्ये द्रष्टव्ये॥

अथ सप्तमीमाह। "असम्मृष्टो जायसे मात्रोः शुचिः। मन्द्रः कविरुदतिष्ठो विवस्वतः। घृतेन त्वा वर्द्धयन्नग्न आहुत। धूमस्ते केतुरभवद्दिवि श्रितः" इति। हे अग्ने त्वं असम्मार्ज्जन एव सन् मात्रोः मात्रोररण्योः शुचिरेव जायसे। स्रुगादयो हि सम्मार्ज्जनतः शुध्यन्ति त्वं पुनरसम्मृष्ट एव शुचिर्भवसि। मन्द्रः हर्षयुक्तः कविर्विद्वान् त्वं विवस्वतः परिचरतो यजमानान् प्रति उदतिष्ठ उत्थितोऽभूः आहुतिभिराहुत हे अग्ने यजमानास्त्वां घृतेनावर्द्धयन् ते तव धूमः दिविश्रितः आकाशे व्याप्तः सन् केतुरभवत् अग्निमान् अयं

प्रदेश इति ज्ञानस्य हेतुरभवत्। अयञ्च मन्त्रो मथनजन्याग्निमन्त्रणे क्वचित् विनियोक्तव्यः॥

अथाष्टमीमाह। "अग्निरग्रे प्रथमो देवतानाम्। संयातानामुत्तमो विष्णुरासीत्। यजमानाय परिगृह्य देवान्। दीक्षयेदꣳ हविरागच्छ तन्नः" [२] इति। यजमानं प्रति संयातानां पौर्व्वापर्य्येण आगच्छन्तीनां देवतानामग्निः प्रथमः अग्रे पुरतो मार्गप्रदर्शको गच्छति, विष्णुरुत्तमः पश्चादागच्छति। एतदुक्तं भवति, अनपक्रमणार्थं पङ्क्तिरूपेण आगच्छतां देवानामग्निः प्रथमो विष्णुरुत्तमः चरम इति। तावुभौ सर्व्वान् देवान् मुखतः पृष्ठतश्च यजमानार्थं परिगृह्य दीक्षादेवतया सह तावग्निविष्णू युवां नोऽस्मदीयमिदं हविरुद्दिश्य आगच्छतम्॥

अथ नवमीमाह। "अग्निश्च विष्णो तप उत्तमं महः। दीक्षापालेभ्योऽवनतꣳ हि शक्रा। विश्वैर्देवैर्यज्ञियैः संविदानौ। दीक्षामस्मै यजमानाय धत्तम्" इति। हे विष्णो त्वञ्च अग्निश्चोभौ युवां दीक्षाख्यव्रतपालकेभ्यः देवेभ्यः सकाशात् यजमानार्थमहः उत्तमं तपो अवनतं याचतम्। हे शक्रा इन्द्रसमानौ युवां हि प्रसिद्धौ यज्ञयोग्यैः सर्व्वैर्देवैः सह संविदानौ ऐकमत्यङ्गतौ अस्मै यजमानाय दीक्षाख्यं संस्कारं सम्पादयतम्। एतच्चोभयं दीक्षणीयायामिष्टौ याज्यानुवाक्यारूपेण विनियोज्यम्॥

अथ दशमीमाह। "प्र तद्विष्णुस्तवते वीर्य्याय। मृगोन

भीमः कुचरोगिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु। अधि-क्षियन्ति भुवनानि विश्वा'' इति। तत् तस्मिन् कर्म्मणि यज-मानानां वीर्य्यार्थं विष्णुः प्रस्तवते प्रकर्षेण स्तूयते। कुचरो भूमौ वर्त्तमानः भीमो भयङ्करः मृगोन सिंहो यथा उर्द्ध-मुत्प्लुत्य गिरिष्ठाः पर्व्वतस्थो भवति। तथा यस्य विष्णोः पूर्व्वं वामनस्य पश्चात्त्रिविक्रमं गच्छतः, ऊरुषु विस्तीर्णेषु त्रिषु विक्र-मणेषु विश्वा भुवनानि सर्व्वे लोका अधिक्षियन्ति आधिक्येन निवसन्ति। स विष्णुः स्तूयत इति पूर्व्वत्रान्वयः॥

अथैकादशीमाह। ''नू मर्त्तो दयते सनिष्यन् यः। विष्णव उरुगाया यदाशत् [४]। प्र यः स वाचा मनसा यजाते। एतावन्तं नर्य्यमाविवासात्'' इति। यो यजमानः हविर्दास्यत् उरुगाय महाकीर्त्तये विष्णवे दाशद्दास्यति यश्च सत्रा च सत्यगामिना मनसा प्रयजाते प्रकर्षेण यजते। एतावन्तं पूर्व्वोक्तविक्रमत्रयसामर्थ्योपेतं नर्य्यं नरेभ्यो हितं विष्णुं आ-विवासात् स्तुत्यादिना सर्व्वतः परिचरति समर्थो मनुष्यो नु क्षिप्रं दयते स्वात्मानं जगच्च रक्षति॥

अथ द्वादशीमाह। ''विचक्रमे पृथिवीमेष एताम्। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरु-क्षितिꣳ सुजनिमा चकार'' इति। एष विष्णुः पृथिवीमेतां पृथिव्युपलक्षितमिदं लोकत्रयं विचक्रमे, विशेषेण पादैः क्रा-न्तवान्। किं कुर्व्वन् मनुषे मनुष्याणां क्षेत्राय निवासार्थं दशस्यन् प्रदातुमिच्छन्। अस्य विष्णोः कीरयो जनासः कीर्त्ति

परा जनाः ध्रुवासः स्थिरा भवन्ति। स विष्णुः पुनः सुजनिमा शोभनेन वामनरूपेण जन्मना युक्तः, उरुक्षितिं प्राणिनां निवासाय विस्तीर्णं स्थानञ्चकार॥

अथ त्रयोदशीमाह। "त्रिर्देवः पृथिवीमेष एताम्। विचक्रमे शतर्चसं महित्वा। प्र विष्णुरस्तु तवसः स्तवीयान्। त्वेषꣳ ह्यस्य स्थविरस्य नाम" [५] इति। एष विष्णुर्देवः शतर्चसं शतविधगतियुक्तामेतां पृथिवीं पृथिव्युपलक्षितलोकत्रयं महित्वा स्वमहिम्ना त्रिर्विचक्रमे त्रिवारं पादेनाक्रान्तवान्। तवसस्तवीयान् महतो महीयान् विष्णुः प्रास्तु प्रकृष्टो भवतु। स्थविरस्य वृद्धस्य अस्य विष्णोर्नाम त्रिविक्रमादिरूपं त्वेषं हि प्रदीप्तं प्रसिद्धमित्यर्थः। उक्तानां मन्त्राणां वैष्णवं वामनमालभेतेत्येतस्य पशोः सूक्ते प्रतीकान्याम्नातानि, प्र तद्विष्णुर्विचक्रमे त्रिर्देव इति, नूमर्त इति, मन्त्रस्तु प्र तद्विष्णुरित्यनेन सह विकल्पते॥

अथ चतुर्दशीमाह। "होतारं चित्ररथमध्वरस्य। यज्ञस्य यज्ञस्य केतुꣳ रुशन्तम्। प्रत्यर्द्धिं देवस्य देवस्य मह्ना। श्रिया त्वग्निमतिथिं जनानाम्" इति। स्वश्रिया स्वकीयया सम्पदा युक्तमग्निं तु इममग्निमेव यजामहे इति शेषः। कीदृशमग्निं, होतारं देवानामाह्वातारं चित्ररथं विचित्रेण रथेन युक्तं अध्वरं हिंसारहितं यज्ञस्य यज्ञस्य केतुं सर्व्वस्यापि यज्ञस्य ज्ञापकं रुशन्तं दीप्तिमन्तमह्ना स्वकीयेन महिम्ना देवस्य सर्व्वस्यापि देवस्य प्रत्यर्द्धिं प्रत्येकं अर्द्धेन हविषा युक्तम्। अतएव सूत्रकार आह, सर्व्वेषाꣳ हविषामुत्तरार्द्धात् सकृत् सकृत्

स्विष्टकृते वक्ष्यतीति। जनानां यजमानानामतिथिमतिथिवत् पूजनीयम्। अयं मन्त्र आदित्येष्टौ स्विष्टकृतः पुरोऽनुवाक्या। तथा चाश्वलायन आह, होतारं चित्ररथमध्वरस्य प्राग्नाय-मग्निर्भरतस्य शृण्व इति संयाज्ये इति॥

अथ पञ्चदशीमाह। "आ नो विश्वाभिरूतिभिः सजोषा। ब्रह्म जुषाणो हर्य्यश्व याहि। वरीवृजत् स्थविरेभिः सुशिप्र। अस्मेदधद्वृषणꣳ शुष्ममिन्द्र" इति। हे हर्य्यश्व हरिनामका-भ्यामश्वाभ्यामुपेतेन्द्र ब्रह्म जुषाणः अस्मदीयस्तोत्रं सेवमानः स जोषाः अस्माभिः समानप्रीतिः सन् विश्वाभिरूतिभिः सर्व्वै-रपि रक्षणप्रकारैः सह नः अस्मान् प्रत्यायाहि आगच्छ। किं कुर्व्वन् हे सुशिप्र शोभनहविर्युक्त स्थविरेभिर्वृद्धैर्देवैः सह वरीवृजत् सर्व्वमशुभमत्यन्तं वर्ज्जयन् हे इन्द्र वृषणं काम-वर्षणक्षमं शुष्मं बलं अस्मे दधत् अस्मासु सम्पादयन् वर्त्तस्व॥

अथ षोडशीमाह। "इन्द्रः सुवर्षा जनयन्नहानि। जिगा-योशिग्भिः पृतना अभिश्रीः [६]। प्रारोचयन्मनवे केतु-मह्ना। अविन्दज्ज्योतिर्बृहते रणाय" इति। अयमिन्द्रः उशि-ग्भिर्विजयं कामयमानैर्देवैः सह पृतनाः वैरिसेना जिगाय जयं प्राप्तवान्। कीदृशः इन्द्रः, सुवर्षाः स्वर्गप्रदः अभिश्रीः अभिमतश्रीकः किंकुर्व्वन् अहानि जनयन् स्वर्भानुसञ्ज्ञिना असुरेण सूर्य्ये तमसाविद्धे सति तदसुरविनाशनेन प्रकाश-भूतान्यहान्युत्पादयन् मनवे मनुष्यार्थम् अह्नां केतुं सूर्य्यं प्रारोचयन् प्रकर्षेण दीपितवान्। ततो बृहते रणाय महते

रमणाय क्रीडार्थं ज्योतिरविन्दन् सूर्यरश्मिरूपं प्रकाशं लब्ध-वान्। एते ऋचौ कस्मिंश्चिदैन्द्रे कर्म्मणि याज्यानुवाक्ये॥

सप्तदशीमाह। "अश्विनाववमेनि ह्वये वाम्। आ नूनं यातꣳ सुकृताय विप्रा। प्रातर्युक्तेन सुवृता रथेन। उपागच्छतमव-सागतं नः" इति। हे अश्विनौ वां युवां अवसेऽस्मद्रक्षणार्थं निह्वये नितरामाह्वयामि। हे विप्रा मेधाविनावश्विनौ सुकृ-ताय शोभनकर्म्मसिद्ध्यर्थं नूनमायातमवश्यमागच्छतम्। प्रात-र्युक्तेन प्रातःकाले अश्विभ्यां संयुक्तेन सुवृता शोभनवर्त्तनेन रथेन उपागच्छतं समीपे समागच्छतम्। समागमने कारण-मुच्यते, अस्माकमवसा रक्षणेन आगतम् आगच्छतम्॥

अथाष्टादशीमाह। "अविष्टं धीष्वश्विना न आसु। प्रजा-वद्रेतो अह्रयन्नो अस्तु। आवान्तोके तनये तूतुजानाः। सु-रत्नासो देववीतिं गमेम" [७] इति। हे अश्विनौ आसुधीषु कर्म्मानुष्ठानबुद्धिषु नोऽस्मान् अविष्टं अवतं रक्षतं नोऽस्माकं रेतः प्रजावदपत्ययुक्तं सत् अह्रयं अलज्जाकरमस्तु। अप-त्याभावे निषिक्तं रेतः लज्जाकरमेव स्यात्। आवां वयं तोके तनये पुत्रे पौत्रे च तूतुजानाः क्षिप्रं यतमानाः सुरत्नासः शोभनरत्नोपेताः देववीतिं देवैः काम्यमानं यज्ञं गमेम प्राप्नुयाम। एते ऋचौ आश्विने कर्म्मणि याज्यानुवाक्ये॥

अथैकोनविंशीमाह। "त्वꣳ सोम क्रतुभिः सुक्रतुर्भूः। त्वं दक्षैः सुदक्षो विश्ववेदाः। त्वं वृषा वृषत्वेभिर्महित्वा। द्युम्नेभि-र्द्युम्न्यभवो नृचक्षाः" इति। हे सोम त्वं क्रतुभिरस्मदनुष्ठितैः

कर्म्मभिः सुक्रतुर्भूः शोभनकर्म्मा भव। त्वं दक्षैः अस्मदीयैर्बलैः सुदक्षः शोभनबलोपेतः विश्ववेदाः सर्व्वज्ञश्च भव। तथा त्वं वृषत्वेभिः सेचनयुक्तैरस्माभिः वृषा सेचनयुक्तो महित्वा महिमोपेतश्च भव। द्युम्नेभिरस्मदीयैर्धनैः द्युम्नी धनवान् भूत्वा नृचक्षा अभवः मनुष्येषु ख्यातः सम्पन्नः। अस्मदीयोत्कर्षमेव त्वदीयोत्कर्षत्वेन भावयेत्यर्थः॥

अथ विंशीमाह। "अषाढं* युत्सु पृतनासु पप्रिम्। स्वर्षामप्सां वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसम्। जयन्तं त्वामनु मदेम सोम" इति। हे सोम त्वामनु वयं मदेम हृष्यास्म। कीदृशं युत्सु अषाढं युद्धेषु केनापि अतिरस्कार्य्यं पृत्सु† स्वकीयसेनासु पप्रिं पालकं पूरकं वा। स्वर्षां स्वर्गप्रदम् अप्सां जलप्रदं वृजनस्य गोपां बलस्य रक्षकं भरेषुजां सङ्ग्रामेषु रक्षणाय प्रादुर्भवन्तं सुक्षितिं शोभननिवासं सुश्रवसं शोभनकीर्त्तिं जयन्तं जयोपेतम्। एतयोर्ऋचोः सौम्यं बभ्रुं ज्योगामयावीत्यस्य पशोः सूक्ते प्रतीकद्वयमाम्नातम्, आषाढं युत्सु त्वꣳ सोम क्रतुभिरिति॥

अथैकविंशीमाह। "भवामित्रो न शेव्यो घृतासुतिः। विभूतद्युम्न एवया उ सप्रथाः [८]। अधा ते विष्णो विदुषा-चिदृध्यः। स्तोमो यज्ञस्य राध्यो हविष्मतः" इति। हे विष्णो

---

* आषाढमिति वा पाठः। अयमपि भाष्यसम्मतः।

† अत्र भाष्ये "पृत्सु" इति प्रतीकमुद्धृतमतो मूलेऽपि तादृश एव पाठो भवेदित्यनुमीयते।

त्वं मित्रेन मित्र इव शेभ्यः सुखहेतुर्भव। कीदृशस्त्वं घृतासुतिः घृतदानः विभूतद्युम्नः प्रभूतधनयुक्तः एवयाः एवो एतव्यः गन्तव्यदेशः तत्र गन्ता सप्रथाः उ कीर्त्तिसहितोऽपि अधेत्यथ शब्दार्थः। अनन्तरं हे विष्णो विदुषाचित् यष्टुमशक्तेन केवल-विद्यायुक्तेनापि ते स्तोमो स्तुत्यः त्वदीयं स्तोत्रं सम्पादनीयम्। हविष्मतः हविर्युक्तस्य यष्टुं शक्तस्य यज्ञस्य राध्यः यज्ञेन त्वमाराधनीयः। द्रव्याभावादनुष्ठातुमशक्तस्य तज्जपेन एवानु-ष्ठानसम्पूर्त्तिः। अतएवान्यत्राम्नायते, यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति। स्मृतिरपि,

जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।

कुर्य्यादन्यन्न वा कुर्य्यान् मैत्रो ब्राह्मण उच्यते। इति॥

अथ द्वाविंशीमाह। "यः पूर्व्याय वेधसे नवीयसे। सुम-ज्जानये विष्णवे ददाशति। यो जातमस्य महतो महिब्रवात्। सेदुश्रवोभिर्युज्यं चिदभ्यसत्" इति। यः पुमान् विष्णवे ददा-शति हविर्ददाति। कीदृशाय विष्णवे, पूर्व्याय जगतः पूर्व्वमेव भवाय वेधसे जगतो विधात्रे नवीयसे रामकृष्णाद्यवतारैर-त्यन्तं नूतनाय सुमज्जानये सुष्टुमाद्यन्ती हृष्यन्ती लक्ष्म्याख्या जाया यस्यासौ सुमज्जानिस्तस्मै यस्मान्यः पुरुषः अस्य महतो विष्णोर्जातं रामकृष्णादिजन्मविशेषं महिब्रवात् महत्त्वेन सर्व्वदा ब्रवीति सेदुः सएवोभयविधः पुमान् श्रवोभिः श्रव-णीयैर्हविर्दानशब्दैः स्तोत्रविशेषैश्च युज्यं चित् सर्व्वदा स्वेन युक्त-मपि काम-क्रोध-लोभरूपं शत्रुम् अभ्यसत् अभितो निरस्यति।

अतएव स्मर्य्यते;

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदिति॥

अथ त्रयोविंशीमाह। "तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य। गर्भꣳ हविषा पिपर्त्तन। आस्य जानन्तो नाम चिद्विवक्तन। बृहत्ते विष्णो सुमतिम्भजामहे" [८] इति। हे स्तोतारः पुरुषाः पूर्व्यं जगतः पूर्व्वमेवावस्थितं तमु तमेव विष्णुं यथाविद यथावज्जानीत ज्ञात्वा च ऋतस्य सत्यस्य देवस्य गर्भं गर्भवदन्तस्थितं वेदप्रतिपाद्यमित्यर्थः। तादृशं विष्णुं हविषा पिपर्त्तन पालयत पूरयत वा। तत्राशक्ता यूयमस्य विष्णोर्नामचित् केशवनारायणादीनि नामानि जानतः शास्त्राचार्य्यमुखात् अवगच्छन्तः आविवक्तन समन्तात् विशेषेण सूत निरन्तरं जपतेत्यर्थः। हे विष्णो ते सुमतिं त्वदीयमनुग्रहबुद्धिं बृहद् भजामहे निरन्तरं सेवामह इत्यर्थः। एतास्तिस्र ऋचो वैष्णवे कर्म्मण्युपहोमार्थाः॥

अथ चतुर्व्विंशीमाह। "इमा धाना घृतस्नुवः। हरी इहोपवक्षतः। इन्द्रꣳ सुखतमे रथे" इति। घृतस्नुवः घृतस्रवन्त्यः इमा धाना भर्ज्जितयवरूपाः अस्माभिरुपक्लृप्ता इति शेषः। सुखतमे अतिशयेन सुखप्रदे रथे समारूढमिन्द्रं हरी तदीयावश्वौ इह धानायुक्ते कर्म्मणि उपवक्षतः समीपं प्रापयतः। अयं मन्त्रः प्रातःसवन उन्नीयमानसूक्तेऽन्तर्भावनीयः। अतएव वक्तृचैरालावहन्त्विति सूक्ते अन्तर्भाव्याम्नातः॥

अथ पञ्चविंशीमाह। "एष ब्रह्मा प्र ते महे। विदथे शᳪं- सिषᳪं हरी। य ऋत्विय: प्रते वन्वे। वनुषो हर्य्यतं मदम्। इन्द्रो नाम घृतन्नय:। हरिभिश्चारु सेचते। श्रुतो गण आ त्वा विशन्तु [१०]। हरिवर्पसङ्गिर:" इति। द्वयोर्ऋचोर्व्यतिषक्त- रूपोऽयं मन्त्रः। प्रयोगकाले हि तदुभयं व्यतिषज्य शंसनीयम्। अतएवात्र व्यतिषज्याम्नात:, अर्थस्तु विभज्यैवावबोद्धव्य:। तत्रै- का द्विपदाऽनुष्टुप् इतरा चतुष्पदा जगती। तत्र द्विपदाया: पाठस्तु, एष ब्रह्मा य ऋत्विय:। इन्द्रो नाम श्रुतो गण इति। तस्यायमर्थ:, इन्द्रो नाम यो देवतागणे श्रुत: प्रसिद्ध: ऋत्विय: ऋतावृतौ तत्तत्कर्म्मकाले तत्तकर्म्मकर्त्तुमाविर्भवति। एष एव- म्भूत इन्द्र: सदा ब्रह्मा प्रजापतिरेवेति। अयं द्विपदो मन्त्र एवमेवाच्छिद्रकाण्डे समाम्नात:। जगत्या: पाठस्तु, प्र ते महे विदथे शᳪंसिषᳪं हरी। प्र ते वन्वे वनुषो हर्य्यतं मदम्। घृतं नयो हरिभिश्चारु सेचते। आ त्वा विशन्तु हरिवर्पसङ्गिर इति। हे इन्द्र महे विदथे महति यज्ञे हे हरी त्वदीयावश्वौ प्रशंसिषं प्रकर्षेण स्तुतवानस्मि। हर्य्यतं हरणीयं मदं मदहेतुं सोमं वनुष: प्रार्थितवन्त:। ते तव प्रवन्वे प्रकर्षेण ददामि, चारु घृतं न समीचीनं घृतमिव मद्दत्तं सोमं हरिभिरश्वैर्युक्तोऽयमिन्द्र: सेचते समवैति सम्बध्यानुभवतीत्यर्थ:। हरिवर्पसं हरितवर्णवपुर्यु- क्तञ्च पूर्व्वोक्तगणयुक्तं त्वा त्वां मदीया स्तुति: गिर: आविशन्त्विति। एतयोर्ऋचोर्व्यतिषक्तपाठ: केवलमदृष्टार्थ एवोपहोमेष्वाम्नात:। अयञ्च व्यतिषक्तो मन्त्र:, विंहतषोडशस्तोत्रेऽन्तर्भावनीय: ॥

अथ षड्विंशीमाह। "आचर्षणि प्रावृषभो जनानाम्। राजा कृष्टीनां पुरुहूत इन्द्रः। स्तुतश्रवस्यन्नवसोपमद्रिक्। युक्त्वा हरी वृषणाऽऽयाह्यर्वाङ्" इति। हे इन्द्र त्वं वृषणा सेचनसमर्थौ हरी अश्वौ युक्त्वा रथे संयोज्य अर्वाङ् अस्मदभिमुखं आयाहि आगच्छ। कीदृशः त्वं आसमन्तात् चर्षणि चर्षणीनां मनुष्याणां यजमानरूपाणां फलैः पूरयिता जनानां देवलोकस्थानां मध्ये वृषभः श्रेष्ठः कृष्टीनां मनुष्याणां सर्व्वेषां स्वामी पुरुहूतः पुरुषु बहुषु यज्ञेष्वाहूतः इन्द्रः परमैश्वर्य्ययुक्तः स्तुतो यागकाले स्तोत्रैः स्तुतः श्रवस्यन् श्रवोऽन्नं हविस्तदिच्छन् अवसा अस्मदीयरक्षणेन निमित्तेन उपमद्रिक् मत्समीपं अद्रिवन् प्राप्नुवन्। अयञ्च मन्त्रः सौत्रामण्यामैन्द्रस्य पशोर्व्वपायाः पुरोऽनुवाक्या। अतएव तत्र प्रतीकमाम्नातम्, आचर्षणि प्राविवेषयन्निति॥

अथ सप्तविंशीमाह। "प्र यत्सिन्धवः प्रसवं यदायन्। आपः समुद्रꣳ रथ्येव जग्मुः। अतश्चिदिन्द्रः सदसो वरीयान्। यदीꣳ सोमः पृणति दुग्धो अꣳशुः" इति। यत् यदा सिन्धवो नद्यः प्रसवं इन्द्रस्यानुज्ञां प्रकर्षेणायन् प्राप्नुवन्। द्वितीयो यच्छब्दः तच्छब्दार्थे वर्त्तमानः उत्तरत्रान्वेति। तत्तदा रथ्येव रथपङ्क्तिरिव नदीप्रवाहगता आपः समुद्रं जग्मुः। यथा राजमार्गे रथपङ्क्तिः शीघ्रं ग्रामान्तरं प्राप्नोति तद्वन्नदीगता जलप्रवाहः सहसा समुद्रं प्राप्नोति। यद्यस्मात् कारणात् इन्द्रमिन्द्रं दुग्धः अभिषुतः सोमांशुः सोमरसभागः पृणति

पूरयति। अतश्चित् अतएव कारणात् अयमिन्द्रः सदसः सभागताद्देवसमूहाद् वरीयान् अतिशयेन श्रेष्ठः॥

अथाष्टाविंशीमाह। "कृयामसि त्वेन्द्र याह्यर्वाङ् [११]। अरन्ते सोमः स्तनुवे भवाति। शतक्रतो मादयस्वासुतेषु। अस्माँ अव पृतनासु प्रयुत्सु" इति। हे इन्द्र त्वां कृयामसि अस्मिन् कर्म्मण्याक्कयामः। अर्वाङ् अभिमुखो याहि कर्म्मभूमिं गच्छ। तनुवे त्वदीयाय शरीराय सोमोऽस्माभिर्दीयमान अरं भवाति सम्पूर्णं भवति। हे शतक्रतो सुतेषु सोमेषु मादयस्व तं पीत्वा हृष्टो भव। पृतनासु परकीयसेनासु प्रकर्षेणास्मानव रक्ष। युत्सु युद्धेषु च प्रकर्षेण रक्ष॥

अथैकोनत्रिंशीमाह। "इन्द्राय सोमाः प्रदिवो विदानाः। ऋभुर्येभिर्वृषपर्व्वा विहायाः। प्रयम्यमाणान् प्रतिषूगृभाय। इन्द्र पिब वृषधूतस्य वृष्णः" इति। प्रदिव इति, पुरातननामसु पठितः प्रदिवः सोमाः पुरातनाः सोमाः इन्द्राय विदानाः इन्द्रार्थत्वेनैव विज्ञाता विभुरिन्द्रः येभिर्यैः सोमैर्वृषपर्व्वा वृषभवत् पीवराङ्गो विहायाः विशेषेण कार्य्यं हित्वा अवस्थितः प्रति प्रत्येकं प्रयम्यमाणान् प्रकर्षेणास्माभिर्दीयमानान् सोमान् सुष्ठु गृभाय गृहाण। हे इन्द्र वृषधूतस्य वृषभवद् वीर्य्यवद्भिर्ग्रावभिः अभिषुतस्य वृष्णो वीर्य्यवतः सोमस्य रसं पिब॥

अथ त्रिंशीमाह। "अहेडमान उपयाहि यज्ञम्। तुभ्यं पवन्त इन्दवः सुतासः। गावो न वज्रिन्त्स्वमोको अच्छ [१२]। इन्द्रागहि प्रथमो यज्ञियानाम्" इति। हे इन्द्र अहेडमानोऽ-

कुर्वन्नस्मदीययज्ञमुपयाहि सुतासो अभिषुताः इन्दवः सोमाः तुभ्यं त्वदर्थं पवन्ते दशापवित्रेण शोधिता भवन्ति। हे वज्रिन् इन्द्र यज्ञियानां यज्ञार्हाणां देवानां मध्ये प्रथमः सन् स्वमोकः अच्छ स्वकीयं स्थानमभिलक्ष्य आगहि आगच्छ। तत्र दृष्टान्तः, गावो न यथा गावः स्वकीयां गोशालां प्रति आगच्छन्ति तद्वत्॥

अथ एकत्रिंशीमाह। "या ते काकुत्सुकृताया वरिष्ठा। यया शश्वत् पिबसि मध्व ऊर्म्मिम्। तया पाहि प्र ते अध्वर्य्युरस्थात्। सन्ते वज्रो वर्त्ततामिन्द्र गव्युः" इति। हे इन्द्र या ते काकुत् जिह्वा सुकृता प्रजापतिना सुष्ठु निर्म्मिता। अतएव या जिह्वा वरिष्ठा अतिशयेन श्रेष्ठा, यया जिह्वया मध्वो मधुरस्य सोमस्य ऊर्म्मिं तरङ्गं तरङ्गाकारं रसं शश्वत् निरन्तरं पिबसि, तया जिह्वया पाहि। अध्वर्य्युरयन्ते तव यागार्थं प्रास्थात् प्रस्थितः। हे इन्द्र ते वज्रः गव्युः गा इच्छन् संवर्त्ततां सम्यक् प्रवर्त्तताम्। प्रयत् मिन्श्व इत्यादयः पञ्च इन्द्रलिङ्गका मन्त्रा माध्यन्दिनसवने शुक्रामन्थिप्रचारात् पूर्व्वं प्रस्थितयाज्या द्रष्टव्याः॥

अथ द्वात्रिंशीमाह। "प्रातर्युजा विबोधय। अश्विना वेह गच्छतम्। अस्य सोमस्य पीतये" इति। हे होतः प्रातर्युजा प्रातःकालभोजनीयावश्विनौ विबोधय मन्त्रविशेषेण प्रबुद्धौ कुरु। हे अश्विनौ इह कर्म्मण्यस्य सोमस्य पानाय युवां गच्छतम्। अयं मन्त्र आश्विनग्रहस्य पुरोऽनुवाक्या॥

अथ त्रयस्त्रिंशीमाह। "प्रातर्यावाणा प्रथमा यजध्वम्। पुरा गृध्रादररुषः पिबाथः। प्रातर्हि यज्ञमश्विना दधाते। प्रशंसन्ति कवयः पूर्व्वभाजः" इति। हे ऋत्विजः प्रातर्यावाणा प्रातःसवनं गच्छन्तावश्विनौ प्रथमा प्रथममेव यजध्वम्। हे अश्विनौ गृध्रात् सोमयुक्तात् अररुषः अररुर्नामकादसुरात् पुरा पिबाथः इमं सोमरसं पिबतम्। हि यस्मात् कारणात् एतावश्विनौ प्रातःकाले यज्ञं दधाते आश्विने शस्त्रे चमसगणे यज्ञमश्विनौ धारयत तत्तस्मात् कारणात् पूर्व्वभाजः पूर्व्वमेव देवात् यजमानः कवयो विद्वांस ऋत्विज एतावश्विनौ प्रशंसन्ति॥

अथ चतुस्त्रिंशीमाह। "प्रातर्यजध्वमश्विना हिनोत। न सायमस्ति देवया अजुष्टम्। उतान्यो अस्मद्यजते विचायः। पूर्व्वः पूर्व्वो यजमानो वनीयान्" [१३] इति। हे ऋत्विजः प्रातःकाले यजध्वं एतावश्विनौ हिनोत प्रीणयत सायंकाले देवयाः देवार्थं यागो नास्ति। यस्मात् सायंकाले हुतं अजुष्टमप्रियं अपि चास्मदन्यः कश्चिद्यजमानः विचायो विशेषेण पूजायुक्तः, यद्यपि यजति तथापि पूर्व्वः पूर्व्वो यजमानो वनीयान् अत्यन्तं सम्भजनीयः, तस्मात् अहमेव सर्व्वेभ्यः पूर्व्वो यजामीत्यभिप्रायः। एते ऋचौ आश्विने कर्म्मणि विकल्पिते याज्ये॥

इति तृतीयोऽनुवाकः॥ ३॥

अथ चतुर्थोऽनुवाकः।

चतुर्थानुवाके प्रथमामृचमाह। "नक्तं जातास्योषधे। रामे कृष्णे असिक्नि च। इदꣳ रजनि रजय। किलासं पलितञ्च यत्" इति। अत्र पञ्चभिर्मन्त्रैः श्वेतकुष्ठरोगं विनाश्य शरीरं रमणीयं करोतीति, रामा स्वयं कृष्णवर्णा श्वैत्यविनाशनेन असितं कृष्णवर्णं तस्मिन् प्रदेशे सम्पादयति इत्यसिक्नि। तथाविध हे नील्याख्योषधे त्वं नक्तं जातासि। अतएव अन्धकारवन्नीलवर्णा दृश्यसे। हे रजनि स्वकीयेन वर्णेन रञ्जनक्षमे ओषधे इदं श्वेतं शरीरं रजय स्वकीयवर्णेन रञ्जितं कुरु। यत् किलासं श्वेतरोगग्रस्तमङ्गं यच्च पलितं रोमादिकं तदिदं रजयेति पूर्वत्रान्वयः। अत्र हरिद्रा रजनीति केचित्॥

अथ द्वितीया। "किलासञ्च पलितञ्च। निरितो नाशया पृषत्। आ न स्वो अश्नुतां वर्णः। परा श्वेतानि पातय" इति। किलासं श्वित्ररोगाङ्गं पलितञ्चेत्येवं पृषद्विचित्ररूपं तदितः शरीरात् निःशेषेण नाशय स्वो वर्णः देहस्य स्वकीयः पूर्व्वसिद्धो वर्णः नोऽस्मान् आसमन्तादश्नुतां व्याप्नोतु श्वेतानि रोगरूपाणि परा पातय विनाशय॥

अथ तृतीया। "असितं ते निलयनम्। आस्थानमसितं तव [१]। असिक्न्यस्योषधे। निरितो नाशया पृषत्" इति। हे ओषधे ते तव निलयनं निःशेषेण लयनं लयप्राप्तस्थानम् अङ्गं असितं कृष्णं भवति। न केवलं देहावयवः किन्तु तव

यदा स्थानं वसतिरूपं तदसितं कृष्णं भवति आसमन्तात्तिष्ठ-त्यत्रेत्यास्थानं नीलिप्रक्षेपेण वस्त्रं कृष्णं भवतीति प्रसिद्धमेतत्। अतः हे ओषधे त्वमसिक्नि असि तद्वत् प्रापिकासि अस्मत्पृषन्तं बहुविधं रूपम् इतः अस्मदीयशरीरान्निःशेषेण नाशय॥

अथ चतुर्थी। "अस्थिजस्य किलासस्य। तनूजस्य च यत्त्वचि। कृत्यया कृतस्य ब्रह्मणा। लक्ष्म श्वेतमनीनशम्" इति। अस्थिजन्यं यत् किलासं श्वित्रं तनूजं मांसजन्यं यत्किलासं त्वचि यत् किलासं वर्त्तते यच्च कृत्यया परकीयाभिचारेण कृतं सम्पादितं किलासं तस्य सर्व्वस्य सम्बन्धि श्वेतं लक्ष्म श्वेतवर्ण-लाञ्छनं ब्रह्मणा परमेश्वरेणानुगृहीतोऽहम्। अनीनशं नाशित-वानस्मि॥

अथ पञ्चमी। "सरूपा नाम ते माता। सरूपो नाम ते पिता। सरूपास्योषधे सा। सरूपमिदं कृधि" [२]। हे ओषधे ते माता तव मातृस्थानीया भूमिः सरूपा नाम त्वया समानरूपैव कृष्णभूमिरित्यर्थः। ते पिता तव पितृस्थानीयो बीजविशेषः सरूपो नाम कृष्णवर्णतया समानरूपः। एताभ्या-मुत्पन्ना सा त्वमपि सरूपासि कृष्णवर्णतया तयोर्मातापित्रोः समानरूपासि। तस्मादिदं श्वेतरूपरोगग्रस्तं शरीरं सरूपं कृधि त्वया समानरूपं कृष्णवर्णं कुरु। एतेषां पञ्चानां मन्त्राणां श्वेतरोगनिवारणौषध्यभिमन्त्रणे विनियोगो द्रष्टव्यः॥

अथ षष्ठी। "शुनꣳ हुवेम मघवानमिन्द्रम्। अस्मिन् भरेऽनृतमं वाजसातौ। शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं

वृत्राणि सञ्जितं धनानाम्'' इति। वाजसातावन्नप्रदेऽस्मिन् भरे भरणीयसङ्ग्रामे इन्द्रं हुवेम आह्वयाम। कीदृशं शुनं सुखरूपं मघवानं धनयुक्तं नृतमं पुरुषश्रेष्ठं शृण्वन्तम् अस्मदाह्वानस्य श्रोतारं समत्सु युद्धेषु ऊतयेऽस्मद्रक्षार्थं उग्रं कोपयुक्तं वृत्राणि घ्नन्तं शत्रून् मारयन्तं धनानां सञ्जितं सम्यक् सम्पादकम्। अयं मन्त्रो विजयार्थेन्द्रकर्म्मणि उपहोमार्थः॥

अथ सप्तमी। "धूनुथ द्यां पर्व्वतान् दाशुषे वसु। नि वो वना जिहते या मनो भिया। कोपयथ पृथिवीं पृश्निमातरः। युधे यदुग्राः पृषतीरयुग्ध्वम्'' इति। हे पृश्निमातरः पृश्नेरुत्पन्ना मरुतः। तथा च ब्राह्मणम्, पृश्न्यै वै पयसो मरुतो जाता इति। तादृशा यूयं यत् यदा युधे युद्धार्थम् आगताः सन्तः पृषतीः भवदीया अश्वा अयुग्ध्वं रथे योजितवन्तः, तदानीमेव द्यां द्युं धूनुथ कम्पयथ, तथा पर्व्वतान् धूनुथ, दाशुषे हविर्द्दत्तवते यजमानाय वसु धनं धूनुथ प्रयच्छतेत्यर्थः। वो युष्माकं या मनः गमनवेगात् वनानि सर्व्वाणि भिया भीत्येव निजिहते न्यग्भूतानि पतन्ति तथा पृथिवीं कोपयथ भूमिं क्षोभयथ॥

अथाष्टमी। "प्रवेपयन्ति पर्व्वतान्। विविञ्चन्ति वनस्पतीन्[२]। प्रोऽवारत मरुतो दुर्मदा इव। देवासः सर्व्वया विशा'' इति। हे मरुतः भवन्तः पर्व्वतान् प्रवेपयन्ति कम्पयन्ति तथा वनस्पतीन् विविञ्चन्ति विविधमुन्मीलयन्ति। प्रो प्रकर्षेण

अवारत धावत ईदृशो भवन्तः सर्व्वया विशा प्रजया सह देवासः दीप्यमानाः। एते ऋचौ पृश्निये दुग्धे प्रैय्यङ्गवञ्चरुं निर्वपेदित्येतस्मिन् कर्म्मणि याज्यानुवाक्ये द्रष्टव्ये॥

अथ नवमी। "पुरुत्रा हि सदृङ्ङसि। विशो विश्वा अनुप्रभु। समत्सु त्वा हवामहे" इति। हे अग्ने त्वं पुरुत्रा बहुषु स्थानेषु सदृङ् असि समानोऽसि स्थित्वापि अलिप्तोऽसीत्यर्थः। तथा चाहुः, स्मशानेष्वपि तेजस्वी पावकोऽस्मिन्नलिप्यते इति। विशो विश्वा अनु सर्व्वाः प्रजा अनुसृत्य प्रभु प्रकर्षेण दाहपाकादिनोपकारको भवसि समत्सु युद्धेषु त्वां हवामहे आह्वयामः॥

अथ दशमी। "समत्स्वग्निमवसे। वाजयन्तो हवामहे। वाजेषु चित्रराधसम्" इति। वाजयन्तः अन्नमिच्छन्तो वयं समत्सु युद्धेषु अवसेऽस्माकं रक्षणायाग्निं हवामहे आह्वयामः। कीदृशं वाजेष्वन्नेषु विषयेषु चित्रराधसमाश्चर्य्यं यथा भवति तथा साधकम्। एतच्च मन्त्रद्वयं विजयार्थाग्नेये कर्म्मणि द्रष्टव्यम्॥

अथैकादशी। "सङ्गच्छध्वꣳ संवदध्वम्। सं वो मनाꣳसि जानताम् [४]। देवा भागं यथा पूर्व्वे। सञ्जानाना उपासत" इति। समानैः सह विप्रिया हे पुरुषाः यूयं सङ्गच्छध्वं परस्परं सङ्गता भवथ। संवदध्वं सम्वादं कुरुत। एको भोक्तुं कार्य्यमिव वो युष्माकं मनांसि सञ्जानतां परस्परं सम्मतिं जानन्तु यथा पूर्व्वे देवाः सञ्जानानाः परस्परसङ्गतिं जानन्तो भागमुपासत स्वस्वभागमविघ्नेन अनुभूतवन्तस्तद्वत्॥

अथ द्वादशी। "समानो मन्त्रः समितिः समानी। समानं मनः सह चित्तमेषाम्। समानं केतो अभि सꣳरभध्वम्। सञ्ज्ञानेन वो हविषा यजामः" इति। मन्त्रो मन्त्रालोचनं कार्य्यविचारः समान एकरूपोऽस्तु, तथा समितिः समानी अन्योऽन्यसङ्गमोऽपि एकरूपोऽस्तु, मनः समानमेकविषयमस्तु, एषां चित्तं सह तिष्ठतु, ऊहापोहक्षममन्तःकरणं मनः, वस्तुज्ञानावस्थितमन्तःकरणं चित्तम्, समानं केता अभि सहवासस्थानमभिलक्ष्य संरभध्वं प्रयतध्वम्। वो युष्माकं विप्रतिपन्नानां देवानां सञ्ज्ञानेन सम्प्रतिपत्तिनिमित्तेन हविषा यजामः॥

अथ त्रयोदशी। "समानी व आकूतिः। समाना हृदयानि वः। समानमस्तु वो मनः। यथा वः सुसहा सति" [५] इति। वो युष्माकं आकूतिः समानी सङ्कल्प एकरूपोऽस्तु, वो युष्माकं हृदयानि कार्य्यनिश्चायकानि अन्तःकरणानि समाना एकरूपाणि भवन्तु, वो युष्माकं मनः ऊहापोहरूपसामर्थ्यञ्च समानमेकरूपमस्तु, किं बहुना वो युष्माकं सर्व्वं कार्य्यं सुसहा सुखेन सहावस्थितं यथा सति अतिशयेन प्रकारेण भवति तथास्तु॥

अथ चतुर्द्दशीमाह। "सञ्ज्ञानं नः स्वैः। सञ्ज्ञानमरणैः सञ्ज्ञानमश्विना युवम्। इहास्मासु नियच्छतम्" इति। नोऽस्माकं स्वैः स्वकीयैः पुरुषैः सह सञ्ज्ञानमैकमत्यमस्तु। अरणैः गमनैः व्यवहारविशेषैः सञ्ज्ञानमैकमत्यमस्तु। हे अश्विनौ युवां इहलोके अस्मासु सर्व्वेष्वपि सञ्ज्ञानम् ऐकमत्यं नियच्छतं नियतं कुरुतम्॥

अथ पञ्चदशी। "सञ्ज्ञानं मे बृहस्पतिः। सञ्ज्ञानꣳ सविताकरत्। सञ्ज्ञानमश्विना युवम्। इह मह्यं नियच्छतम्" इति। बृहस्पतिर्देवः मे मदीयं सङ्घस्य सञ्ज्ञानम् ऐकमत्यं करोतु। सविता च सञ्ज्ञानम् ऐकमत्यं करोतु। हे अश्विनौ युवां मह्यं मदर्थं इह मदीये जने सञ्ज्ञानं नियच्छतम्। सङ्गच्छध्वमित्यादयः पञ्च मन्त्रा यः सामनैर्मिथो विप्रियः स्यात्त-मेतया सञ्ज्ञान्या याजयेदित्यस्मिन् कर्म्मणि द्रष्टव्याः॥

अथ षोडशीमाह। "उपच्छायामिव घृणेः। अगन्म शर्म्म ते वयम् [६]। अग्ने हिरण्यसन्दृशः" इति। हे अग्ने हिरण्य-सन्दृशः सुवर्णवत्सम्यग् दृश्यमानस्य ते तव शरणं गृहमुप समीपे वयमगन्म प्राप्तास्मः। तत्र दृष्टान्तः, घृणेः छायामिव यथा लोके आदित्यस्य रश्मेः छायाभूतां शालां प्राप्नुवन्ति तद्वत्। अयं मन्त्र आग्नेयकर्म्मणि द्रष्टव्यः॥

अथ सप्तदशी। "अदब्धेभिः सवितः पायुभिष्ट्वम्। शिवे-भिरद्य परिपाहि नो गयम्। हिरण्यजिह्वः सुविताय नव्यसे। रक्षामाकिर्नो अघशꣳस ईशतः" इति। हे सवितः त्वं अद-ब्धेभिः अहिंसितैः शिवेभिः शान्तैः पायुभिः पालनोपायैः अद्यास्मिन् कर्म्मणि नो गयम् अस्मदीयं गृहं परिपाहि सर्व्वतः पालय। हिरण्यजिह्वः स्वर्णसदृशजिह्वायुक्तः सन् नव्यसे अत्यन्तं नूतनाय सुविताय शोभनगमनाय सम्यगनुष्ठानाय रक्ष विघ्नान् परिहर। अघशꣳसः सोऽस्मदीयमघं शंसन् निन्दां कुर्व्वन् यो वैरी वर्त्तते स नोऽस्माकं माकिरीशत

वाधितुं समर्थो माभूत् । अयं मन्त्रः सावित्रे कर्म्मणि द्रष्टव्यः ॥

अथाष्टादशी । "मदे मदे हि नो ददः । यूथा गवामृजुक्रतुः । सङ्गृभाय पुरू शता । उभया हस्त्यावसु । शिशीहि राय आभर" [७] इति । ऋजुक्रतुः अकुटिलकर्म्माऽयमिन्द्रः नोऽस्माकं मदे मदे तदा तदा हर्षनिमित्तं गवां यूथाः ददः, गोसमूहान् प्रयच्छति । हे इन्द्र उभया हस्त्या उभयोर्हस्तयोः पुरू शता बहूनि शतानि सङ्गृभाय सम्यग् गृहीत्वा यद्वसु धनं शिशीहि अस्मभ्यं प्रयच्छ । पुनरपि रायो धनान्याभर सम्पादय ॥

अथैकोनविंशी । "शिप्रिन् वाजानां पते । शचीवस्तव दंसना । आतु न इन्द्र भाजय । गोष्वश्वेषु शुभ्रेषु । सहस्रेषु तुवीमघ" इति । शिप्रशब्दो हनुवाचकः शोभनहनुयुक्तः शिप्री वाजानां पतिरन्नपालकः शचीवान् शक्तिमान् तुवीमघो बहुलधनः । तादृश हे इन्द्र तव दंसना त्वत्सम्बन्धिनि दंसनशब्दाभिधेयेऽस्मिन् कर्म्मण्यनुष्ठिते सति शुभ्रेषु निर्म्मलेषु सहस्रेषु सहस्रसङ्ख्याकेषु गोष्वश्वेषु च नोऽस्मानातु भाजय समन्तात् मदा भागिन् कुरु । एतच्च मन्त्रद्वयं ऐन्द्रे कर्म्मणि द्रष्टव्यम् ॥

अथ विंशी । "यद्देवा देव हेलनम् । देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा यूयम् । ऋतस्यर्त्तेन मुञ्चत" इति । हे देवासः दीप्यमाना आदित्या देवाः देवहेलनं देवावज्ञारूपं पापं यद्वयं चकृम यूयमादित्याः ऋतस्य यज्ञस्य ऋतेन सत्येन शास्त्रीयेणास्मदनुष्ठानेन मां तस्मात् पापात् मुक्तं कुरुत ॥

अथैकविंशी। "ऋतस्यर्त्तेनादित्याः [८]। यजत्रा मुञ्चतेह मा। यज्ञैर्वो यज्ञवाहसः। आशिचन्तो न शेकिम" इति। हे आदित्याः यजत्रा यष्टव्याः यूयं इहास्मिन् लोके ऋतस्यर्त्तेन सम्यगनुष्ठानेन मां पापादस्मान् मुञ्चत। हे यज्ञवाहसः यज्ञनिर्वाहका देवाः वो यज्ञैः युष्मत्सम्बन्धिभिर्यज्ञैः शकेम पापं नाशयितुं शक्ता भवेम। तत्र दृष्टान्तः, आशिचन्तो न यथा यज्ञसम्बन्धि सर्वतः शिचां कुर्वन्त आचार्य्याः शक्ताः तद्वत्॥

अथ द्वाविंशी। "मेदस्वता यजमानाः। स्रुचाज्येन जुह्वत। अकामा वो विश्वेदेवाः। शिचन्तो नोपशेकिम" इति। हे विश्वेदेवाः मेदस्वता सारयुक्तेनाज्येन पूर्णया स्रुचा जुह्वतः होमं कुर्व्वन्तः अकामाः फलकामनारहिताः यजमानाः वयं वो युष्माकं प्रसादात् उपशेकिम पापं नाशयितुं सर्व्वथा शक्ता स्मः। शिचन्तो नेति दृष्टान्तः पूर्व्ववत्॥

अथ त्रयोविंशी। "यदि दिवा यदि नक्तम्। एन एनस्योऽकरत्। भूतं मा तस्माद्भव्यञ्च। द्रुपदादिव मुञ्चतु" इति। एन इच्छतीत्येनस्यः पूर्व्वमपापप्रवृत्तोऽहं रात्रौ दिवसे वा एनोऽकरत् पापं कृतवानस्मि। कीदृशमेनः भूतं भव्यञ्च किञ्चिदेनः पूर्व्वमेव निष्पन्नम्। अन्यत्तु कर्त्तुमुद्युक्तं तस्मात् सर्व्वस्मात् पापात् मामादित्यो मुञ्चतु। तत्र दृष्टान्तः, द्रुपदादिव अपराधिनां पादे प्रतिमोचितं काष्ठं द्रुपदं यथा कृपालुः स्वामी अस्माद् बन्धनादपराधिनं मोचयति॥

अथ चतुर्विंशी । "द्रुपदादिव मुमुचानः । स्विन्नः स्नात्वा मलादिव । पूतं पवित्रेणेवाज्यम् । विश्वे मुञ्चन्तु । मैनसः" इति । विश्वे सर्व्वे देवा मामेनसः पापात् मुञ्चन्तु मुक्तं कुर्व्वन्तु । तत्र दृष्टान्तत्रयं द्रुपदात् पादबन्धनरूपात् काष्ठात् मुमुचान इवेत् यथा तथेत्यर्थः । स्विन्नः स्वेदव्याप्तगात्रः स्नात्वा स्नानं कृत्वा यथा मलात् मुच्यते तद्वत् । पवित्रेण उत्पवनसाधनेन आज्यं यथा पूतं तद्वत् ॥

अथ पञ्चविंशी । "उद्वयं तमसस्परि । पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्य्यम् । अगन्म ज्योतिरुत्तरम्" [८] इति । तमसस्परि तमसोऽन्धकारात् परि ऊर्द्ध्वमुत्तरमुत्कृष्टं ज्योतिरुत्पश्यन्तः उत्कर्षेण पश्यन्तो वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्य्यरूपमुत्तमं ज्योतिरगन्म प्राप्ताः स्मः । यद्देवा देवहेडनमित्येताः षडृचः पापक्षयार्थे कर्म्मणि द्रष्टव्याः ॥

इति चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

पञ्चमानुवाके प्रथमामृचमाह । "वृषा सो अꣳशुः पवते हविष्मान्त्सोमः । इन्द्रस्य भाग ऋतयुः शतायुः । स मा वृषाणं वृषभं कृणोतु । प्रियं विशाꣳ सर्व्ववीरꣳ सुवीरम्" इति । सोमो बल्यात्मकः पवते शुद्धो भवति । कीदृशः सोमः वृषा कामानां वर्षयिता सः प्रसिद्धः अंशुर्बहुभिरंशुभिर्युक्तः

हविष्मान् हविषो निष्पादकः इन्द्रस्य भागो भक्षणीयः ऋतयुः यज्ञहेतुः शतायुः शतसंवत्सरस्यायुषः प्रदाता। तादृशः सोमः मां यजमानं वक्ष्यमाणविशेषणोपेतं कृणोतु करोतु। कैर्विशेषणैरुपेतं वृषाणं सेचकं वृषभं श्रेष्ठं विशां प्रजानां प्रियं प्रीतिहेतुं सर्व्ववीरं सर्व्वेषां मध्ये वीर्य्योपेतं सुवीरं शोभनैः वीरैः पुत्रैर्युक्तम्॥

अथ द्वितीयामाह। "कस्य वृषा सुते सचा। नियुत्वान् वृषभो रणत्। वृत्रहा सोमपीतये" इति। कस्य उदकस्य वृषा वर्षिता सुतेऽभिषुते सोमे सचा समवेतः नियुत्वान् नियुद्भिरश्वविशेषैर्युक्तः वृषभः श्रेष्ठः वृत्रहा वैरिघातकः इन्द्रः सोमपीतये सोमपानाय रणद्रमते॥

अथ तृतीयामाह। "यस्ते शृङ्गवृषो नपात्। प्रणपात् कुण्डपाय्यः। न्यस्मिन्दध्र आ मनः" [१] इति। "शृङ्गादिशब्दैस्त्रिभिः सोमः सम्बोध्यते। अथवा इन्द्रस्य सम्बोधनानि शृङ्गवत् श्रेष्ठकामाभिवर्षकः नपात् नपातयिता अस्माकमविनाशहेतोरीदृश इन्द्रः योऽयं कुण्डपाय्यः, एतन्नामकः सोमयागविशेषः प्रणपात् प्रकर्षेण पातयिता तृप्तिहेतुरित्यर्थः। अस्मिन् क्रतौ ते मनः नितरां आसमन्तात् दध्रे धारितमसि॥

अथ चतुर्थीमाह। "तꣳ सध्रीची रूतयो वृष्ण्यानि। पौꣳस्यानि नियुतः सश्चुरिन्द्रम्। समुद्रं न सिन्धव उक्थशुष्माः। उरुव्यचसङ्गिर आविशन्ति" इति। सध्रीचीः सह प्रवर्त्तमाना ऊतयः रक्षाहेतवः कर्म्मविशेषाः पौंस्यानि पुंसम्बन्धीनि

वृष्ण्यानि सेचनानि कामवर्षणानि वा नियुतः। अस्मास्तमिन्द्रं सखुः संवसन्ति। तत्र दृष्टान्तः, समुद्रं न सिन्धवः यथा समुद्रं नद्यः प्राप्नुवन्ति तद्वत्। अथवा वक्ष्यमाणार्थेयं दृष्टान्तः। उक्थशुष्मा उक्थैः शस्त्रैः प्रबलाः गिरः, अस्मदीया स्तुतिरूपा वाचः उरुव्यचसं अत्यन्तव्याप्तियुक्तमिन्द्रम् आविशन्ति॥

अथ पञ्चमीमाह। "इन्द्राय गिरो अनिशितसर्गाः। अपः प्रैरयन्त्सगरस्य बुध्नात्। यो अक्षेणेव चक्रिया शचीभिः। विष्वक्तस्तम्भ पृथिवीमुत द्याम्" इति। य इन्द्रः शचीभिः शक्तिभिः पृथिवीं विष्वक्तस्तम्भ सर्वतस्तम्भितवान् उत अपि च द्यां द्युलोकमपि विष्वक्तस्तम्भ। तत्र दृष्टान्तः, अक्षेणेव चक्रिया, यथा रथस्य अक्षेण चक्रिया चक्रद्वयं स्तम्भितं तद्वत्। तादृशाय इन्द्राय अस्माभिः प्रयुज्यमाना स्तुतिरूपा गिरः अनिशितसर्गाः अतीक्ष्णस्वभावाः अपः सगरस्य समुद्रसमानस्य मेघस्य बुध्नात् मूलात् प्रैरयन् अस्मदीयाभिः स्तुतिभिः स्तूयमान इन्द्रः वृष्टिं प्रयच्छतीत्यर्थः। आपो वै शान्ता इति श्रुतेरनुभावाच्च। अपामतीक्ष्णस्वभावत्वम्॥

अथ षष्ठीमाह। "अक्षोदयच्छवसा क्षाम बुध्नम्। वार्णवातस्तविषीभिरिन्द्रः [२]। दृढान्यौभ्नादुशमान ओजः। अवाभिनत्ककुभः पर्वतानाम्" इति। अयमिन्द्रः शवसा स्वकीयेन बलेन क्षाम क्षीणं बुध्नं मेघमूलम् अक्षोदयत् उदकपूर्णं कृत्वा प्रेरितवान्। तत्र दृष्टान्तः, वार्णवातः वार्णवायुः जलं यथा

प्रेरयति तद्वत्। ओजः बलं उशमानः कामयमानः दृढानि मेघरूपाणि औम्नात् हतवान् वज्रेण भिन्नवान् पर्व्वतानां ककुभः शिखराणि महावृष्ट्या वज्रेण वा अभिनत् भिन्नान्यकरोत्। वृषाम इत्यादयः षण्मन्त्राः ऐन्द्रे सौमिके कर्म्मणि द्रष्टव्याः। तꣳ सध्रीचीरित्यस्य तु सौत्रामण्यामैन्द्रे पशावपयसि विनियोगः। अतएव तत्र प्रतीकमाम्नातम्, तꣳ सध्रीचीरिति॥

अथ सप्तमीमाह। "आ नो अग्ने सुकेतुना। रयिं विश्वायुपोषसम्। मार्डीकं धेहि जीवसे" इति। हे अग्ने सुकेतुना शोभनेन ज्ञानेन युक्तस्त्वं विश्वायुपोषसं विश्वस्यायुषः पोषणे क्षमं रयिं धनं मार्डीकम् अतिशयेन सुखसाधनभूतं जीवसे अस्माकं जीवनाय आ धेहि सर्व्वतः सम्पादय॥

अथाष्टमीमाह। "त्वꣳ सोम महे भगम्। त्वं यून ऋतायते। दक्षं दधासि जीवसे" इति। हे सोम त्वं महे महते वृद्धाय भगं सौभाग्यं दधासि सम्पादयसि। तथा त्वम् ऋतायते यज्ञमिच्छते यूने यौवनोपेताय यजमानाय जीवसे जीवनार्थं दक्षं समर्थं धनं दधासि सम्पादयसि। एते उभे ऋचौ चातुर्मास्यन्तर्गतमहापितृयज्ञे आज्यभागयोः पुरोऽनुवाक्ये। तथा च सूत्रकार आह, जीववन्तावाज्यभागौ यजति आनो अग्ने सुकेतुना इति॥

अथ नवमीमाह। "रथं युञ्जते मरुतः शुभे सुगम्। सूरो न मित्रावरुणा गविष्टिषु [३]। रजाꣳसि चित्रा वि रचन्ति तन्यवः। दिवः सम्राजा पयसा न उक्षतम्" इति। मरुतो

देवाः शुभे कर्म्मणि सुगं शोभनं गमनसाधनं रथं युञ्जते अश्वैर्योजयति। तत्र दृष्टान्तः, सूरो न यथा सूर्य्येण रथं युनक्ति तद्वत्। हे मित्रावरुणौ गविष्टिषु भूमाविष्यमाणाः क्षेत्रादिसम्पत्तयः गविष्टयः तासु निमित्तभूतासु चित्राः विचित्राणि रजांसि रञ्जनीयानि वितन्यवः विस्तारयन्तः मरुतः विविधं चरन्ति, तद्वद्युवामपि दिवः सकाशात् सम्राजा पयसा सम्यक् राजमानेन क्षेत्रोपकारिणा जलेन नोऽस्मान् उक्षतं सिञ्चतः॥

अथ दशमीमाह। "वाचꣳसु मित्रावरुणाविरावतीम्। पर्ज्जन्यश्चित्रां वदति त्विषीमतीम्। अभ्रा वसत मरुतः सु मायया। द्यां वर्षयत मरुणामरेपसम्" इति। हे मित्रावरुणौ अयं पर्ज्जन्य इरावतीम् अन्नसाधनभूतां चित्रां बहुविधां त्विषीमतीं त्विषिभिर्विद्युद्भिर्युक्तां वाचं गर्जनध्वनिरूपां वदति करोतीत्यर्थः। अरुणां विद्युद्भिर्युक्तत्वेनारुणवर्णाम् अरपसं रेपसा वृष्टिप्रतिबन्धकेन पापादिना रहितां द्यां मेघयुक्तां दिवं वर्षयन्तम्। हे मित्रावरुणौ युवां वृष्टियुक्तां कुरुतम्। हे मरुतः यूयमपि मायया धूमज्योतिरादिभिः मेघनिष्पादिकया भवदीयया मायाशक्त्या अभ्राः विचित्राण्यभ्राणि सुवसत सुष्ठु वासयत सम्पादयतेत्यर्थः। एतच्च मन्त्रत्रयं वृष्टिहेतौ मैत्रावरुणकर्म्मणि विनियोक्तव्यम्॥

अथैकादशीमाह। "अयुक्त सप्त शुन्ध्युवः। सूरो रथस्य नप्त्रियः। ताभिर्याति स्वयुक्तिभिः" इति। सूरः सूर्य्यः रथस्य

स्वकीयस्य नप्त्रियः अपातनहेतून् कथमविनाशयितॄन् शुन्ध्युवः शुद्धान् सप्तसङ्ख्याकान् अयुक्त रथे योजितवान्। स्वयुक्तिभिः स्वेन योजिताभिः शस्ताभिः सह याति प्रतिदिशं गच्छति ॥

अथ द्वादशीमाह। "वहिष्ठेभिर्विहरन् यासि तन्तुम् [४]। अवव्ययन्नसितं देव वस्वः। दविध्वतो रश्मयः सूर्य्यस्य। चर्म्मेवावाधुस्तमो अप्स्वन्तः" इति। हे देव सूर्य्य वहिष्ठेभिः अतिशयेन वहनक्षमैरश्वैर्विहरन् तत्र क्रीडन् तन्तुं रश्मिविस्तारं यासि प्राप्नोषि। किं कुर्व्वन् असितम् अन्धकारम् अवव्ययन् विनाशयन्। वस्वः वासयितारम् आच्छादकमन्धकारं दविध्वतः दोधूयमानाः विनाशनसमर्थाः सूर्य्यस्य रश्मयः अप्स्वन्तः अन्तरिक्षमध्ये तमोऽन्धकारम् अवाधुः विनाशितवन्तः। अप्शब्दोऽपि अन्तरिक्षनामसु पठितः। तमो विनाशने दृष्टान्तः, चर्म्मेव, यथा दृष्टेरावरकं पटलरूपं चर्म्म अपनयति तद्वत्। एतच्चोभयं सौर्य्यं कर्म्मणि द्रष्टव्यम् ॥

अथ त्रयोदशीमाह। "पर्ज्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु" इति। हे ऋत्विजः पर्ज्जन्याय पर्ज्जन्यदेवनार्थं प्रगायत प्रकर्षेण गानं कुरुत। कीदृशाय दिवस्पुत्राय स्वर्गलोकस्य पुत्रस्थानीयाय मीढुषे सेचनसमर्थाय स च पर्ज्जन्यः नोऽस्मदर्थं यवसं तृणसस्यादिकमिच्छतु वृष्टिद्वारेण सम्पादयतु इत्यर्थः ॥

अथ चतुर्द्दशीमाह। "अच्छा वद तव सङ्गीर्भिराभिः। स्तुहि

पर्ज्जन्यं नमसा विवास। कनिक्रदद्वृषभो जीरदानुः। रेतो दधात्वोषधीषु गर्भम्" [५] इति। हे पर्ज्जन्यदेव तव मम च अस्मद्धितं बलमभिलक्ष्य वद गर्ज्जनरूपं शब्दं कुरु। येन गर्ज्जनेन वृष्टिद्वारास्माकं बलं सम्पद्यते तथा गर्ज्जनं कुरु। हे ऋत्विक्समूह आभिर्गीर्भिः वैदिकीभिः स्तुतिभिः पर्ज्जन्यदेवं स्तुहि नमसा विवास सर्व्वो जनो नमस्कारेण परिचर्य्याञ्चकार। कनिक्रदत् पुनः पुनः गर्ज्जन्, वृषभो वर्षणकामः, जीरदानुः अस्मज्जीवनहेतुरयं पर्ज्जन्यः ओषधीषु गर्भं रेतः गर्भकारणबीजं दधातु स्थापयतु ॥

अथ पञ्चदशीमाह। "यो गर्भमोषधीनाम्। गवां कृणोत्यर्व्वताम्। पर्ज्जन्यः पुरुषीणाम्" इति। यः पर्ज्जन्यः ओषधीनां गवां अर्व्वताम् अश्वानां पुरुषीणां मनुष्यस्त्रीणाञ्च गर्भं कृणोति करोति स पर्ज्जन्यः अभीष्टं साधयत्विति शेषः ॥

अथ षोडशीमाह। तस्मा इदास्ये हविः। जुहोता मधुमत्तमम्। इडां नः संयतं करत्" इति। यः पर्ज्जन्यदेवः गर्भप्रदः, तस्मा इत् तस्यैव पर्ज्जन्यस्य देवस्य आस्ये मुखे हे ऋत्विजः हविर्जुहोत। कीदृशं हविः, मधुमत्तमम् अतिशयेन मधुरं, स च पर्ज्जन्यः अस्माकं संयतं सम्यक् नियतं इडाम् अन्नं करत् करोतु। पर्ज्जन्यायेत्यादिमन्त्रचतुष्टयं पर्ज्जन्यदेवताके कर्म्मणि द्रष्टव्यम्। अतएव सूत्रकारश्चातुर्म्मास्येष्वारम्भणीयेष्टौ पर्ज्जन्यचरुं विधाय तत्र पर्ज्जन्यायेति मन्त्रद्वयं विनियुक्तवान् ॥

अथ सप्तदशीमाह। "तिस्रो यदग्ने शरदस्त्वामित्। शुचिं घृतेन शुचयः सपर्यान्। नामानि चिद्दधिरे यज्ञियानि। असूदयन्त तनुवः सुजाताः" [६] इति। हे अग्ने यद् यस्मात् कारणात् तिस्रः शरदः त्रीन् संवत्सरान् शुचयः शुद्धाः मरुतः शुचिं त्वामित् शुद्धात्मानं त्वामेव घृतेन सपर्यान् पर्यचरन्। तस्मात् कारणात् यज्ञियानि यज्ञयोग्यानि नामानि चिद्दधिरे नामान्यपि धृतवन्तः। तानि च मरुतां नामान्यन्यत्राम्नातानि, ईदृङ् चान्यादृङ् चेत्यादीनि। ते च मरुतः सुजातास्तनुवः सुष्ठु समुत्पन्नाः स्वकीयास्तनूः असूदयन्त अन्तरिक्षे प्रेरितवन्तः। अयं मन्त्र आग्नेये कर्म्मणि द्रष्टव्यः॥

अथाष्टादशीमाह। "इन्द्रस्य नः शुनासीरौ। इमं यज्ञं मिमिक्षतम्। गर्भं धत्तꣳ स्वस्तये" इति। शुनो वायुः सीर आदित्यः, हे शुनासीरौ नोऽस्मदीयमिमं यज्ञं मिमिक्षतं घृतादिद्रव्येण सेक्तुमिच्छतं भवत्स्वामी योऽयमिन्द्रः सोऽपि सेक्तुमिच्छतु। तथा शुनासीरौ युवां स्वस्तये क्षेमाय गर्भं धत्तं सम्पादयतम्॥

अथैकोनविंशीमाह। "ययोरिदं विश्वं भुवनमाविवेश। ययोरानन्दो निहितो महश्च। शुनासीरावृतुभिः संविदानौ। इन्द्रवन्तौ हविरिदं जुषेथाम्" इति। ययोः शुनासीरयोः इदं विश्वं भुवनमाविवेश प्रविष्टम्, आश्रितमित्यर्थः। तथा ययोः शुनासीरयोः आनन्दो निहितोऽवस्थितः महश्च तेजोऽप्याश्रितम्। तौ शुनासीरौ ऋतुभिर्वसन्तादिदेवैः सह संविदानौ

ऐकमत्यं गताविन्द्रवन्तौ इन्द्रेण युक्तौ युवां इदं हविर्जुषेथाम्। एतच्चोभयं शुनासीर्य्ये कर्म्मणि द्रष्टव्यम्॥

अथ विंशीमाह। "आ घा ये अग्निमिन्धते। स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा" इति। ये यजमाना ऋत्विजः आसमन्तात् अग्निं इन्धते प्रज्वालयन्ति। घशब्दः पादपूरणार्थः प्रसिद्ध्यर्थो वा, प्रसिद्धा ऋत्विज इत्यर्थः। तथा आनुषक् अनुषक्तं बर्हिर्ये स्तृणन्ति तथा एषां यजमानादीनां युवा नित्यतरुण इन्द्रसखा सखिवत् सुलभो भवति, ते यजमानादयः कर्म्मानुतिष्ठन्त्विति शेषः। अनेन मन्त्रेण सुत्यादिने महारात्रे बुध्वा सदोऽभिमृशेत्। तथाच सूत्रकारेणोक्तम्, आ घा ये अग्निमिन्धत इति सद इति॥

अथैकविंशीमाह। "अग्न इन्द्रश्च मेदिना। हथो वृत्राण्यप्रति। युव२ हि वृत्रहन्तमा" इति। हे अग्ने त्वञ्च इन्द्रश्च मेदिना मेदस्वन्तौ बलवन्तौ वृत्राणि शत्रून् प्रति प्रतिकूलत्वं यथा भवति तथा हथः मारयथः। हि यस्मात् कारणात् युवं युवामुभौ वृत्रहन्तमा अतिशयेन शत्रुघातिनौ॥

अथ द्वाविंशीमाह। "याभ्या२ सुवरजयन्नग्र एव। यावातस्थतुर्भुवनस्य मध्ये। प्रचर्षणी वृषणा वज्रबाहू। अग्नी इन्द्रा वृत्रहणा हुवे वाम्" [७] इति। याभ्यामिन्द्राग्निभ्याम् अग्र एव इतः पूर्व्वमेव अनुगृहीता यजमानाः सुवरजयन् स्वर्गं जितवन्तः। यौ चेन्द्राग्नी भुवनस्य मध्ये सर्व्वत्रातस्थतुः, आगत्य स्थितौ ताविन्द्राग्नी वां युवां हुवे अस्मिन् कर्म्मण्याह्व-

यामि। कीदृशौ प्रचर्षणी प्रकृष्टैश्चर्षणीभिः मनुष्यैः यागकर्त्तृ-भिर्युक्तौ वृषणा कामानां वर्षयितारौ। वज्रबाहू हस्ते वज्रं धारयन्तौ वृत्रहणा वैरिघातिनौ। एतच्चोभयं ऐन्द्राग्ने कर्म्मणि द्रष्टव्यम्॥

इति पञ्चमोऽनुवाकः॥ ११॥

---

अथ षष्ठोऽनुवाकः॥

षष्ठेऽनुवाके प्रथमामृचमाह। "उत नः प्रिया प्रियासु। सप्तस्वसासु जुष्टा। सरस्वती स्तोम्याऽभूत्" इति। इयं सरस्वती स्तोम्या स्तोत्रयोग्याऽभूत्। कीदृशी प्रियासु देवतासु मध्ये अत्यन्तं प्रिया उत अपि च नोऽस्माकं विशेषतः प्रिया, सप्त-सङ्ख्याका ब्राह्मीमाहेश्वरीत्याद्या देवता स्वसारः भगिन्यः यस्याः सा सप्तस्वसासु जुष्टा सुष्ठु सेविता॥

अथ द्वितीयामाह।"इमा जुह्वाना युष्मदा नमोभिः। प्रति-स्तोमꣳ सरस्वति जुषस्व। तव शर्म्मन् प्रियतमे दधानाः। उपस्थेयाम शरणं न वृक्षम्" इति। हे सरस्वति युष्मत् युष्मान् त्वामित्यर्थः। इमे यजमानाः नमोभिः नमस्कारैः सह आजु-ह्वानाः सर्व्वतो होममाह्वानं वा कुर्व्वतो वर्त्तन्ते। स्तोमं तदीयं साम तदीयं स्तोत्रं प्रति प्रातिस्विकम् असाधारणं जुषस्व सेवस्व। तव प्रियतमे अतिप्रिये शर्म्मन् वृक्षवदुपकारके शरणे गृहे दधानाः हविर्द्धारयन्तो वयं उपस्थेयाम उपस्थानं करवाम। एतदुभयं सारस्वते कर्म्मणि द्रष्टव्यम्। तथा सारस्वतीं मेषी-

मालभेतेत्यस्य पशोः सूत्रे प्रतीकमाम्नातम्, इमा जुह्वाना युष्मे स्तन इति॥

अथ तृतीयामाह। "त्रीणि पदा विचक्रमे। विष्णुर्गोपा अदाभ्यः। ततो धर्म्माणि धारयन्" [१] इति। गोपाः सर्व्वस्य जगतो रक्षकः अदाभ्यः केनाप्यतिरस्कार्य्यः विष्णुः कृत्स्नेऽपि जगति त्रीणि पदा विचक्रमे पदत्रयं निदधौ। किं कुर्व्वन्, ततस्तस्मात् पदत्रयात् धर्म्माणि धारयितव्यानि सर्व्वाणि वस्तूनि धारयन्॥

अथ चतुर्थीमाह। "तदस्य प्रियमभि पाथो अश्याम्। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था। विष्णोः पदे परमे मध्व उत्सः" इति। देवयवः देवानिच्छन्तो नरः यजमानाः यत्र भागीरथीजले मदन्ति हृष्यन्ति अस्य विष्णोः प्रियं तत्पाथः भागीरथीजलम् अभ्यश्याम् अभितो व्याप्तवान् उरुक्रमस्य विस्तीर्णपादस्य विष्णोः परमे पदे तृतीये पादे बन्धुः सम्बन्धः मध्वः मधुरः उत्सः भागीरथीप्रवाहः इत्था एवंविधः हि शब्दः सर्व्वलोकप्रसिद्धिद्योतनार्थः॥

अथ पञ्चमीमाह। "कृत्वादा अस्तु श्रेष्ठः। अद्य त्वा वन्वन्त्सु-रेक्णाः। मर्त्त आनाश सुवृक्तिम्" इति। कृत्वा कृतौ कर्म्मणि वा हविषो दाता श्रेष्ठः सर्व्वेषां मध्ये प्रशस्तोऽस्तु भवतु। हे अग्ने अद्य अस्मिन् कर्म्मणि त्वां वन्वन् याचमानः सुरेक्णाः शोभनधनः मर्त्तः मनुष्यः सुवृक्तिं सुष्टु दारिद्र्यवर्ज्जनम् आनाश आनाशे व्याप्नोति। अयं मन्त्रः आग्नेये कर्म्मणि द्रष्टव्यः॥

अथ षष्ठीमाह। "इमा ब्रह्म ब्रह्मवाह। प्रिया त आ बर्हिः सीद। वीहि सूर पुरोडाशम्"[२] इति। ब्रह्माणि वेदान् वहतीति ब्रह्मवाह वेदैरविनाभूतः सूर्य्यः। अतएवान्यत्राम्नातम्, वेदैरशून्यस्त्रिभिरेति सूर्य्य इति। तादृशः सूरः सूर्य्यः इमा ब्रह्म इमानि ब्रह्माणि वेदवाक्यानि कर्म्मण्यस्मिन्नुच्चार्य्यमाणानि ते प्रिया तव प्रियाणि। अतस्त्वं बर्हिरासीद यज्ञमागच्छ पुरोडाशं वीहि भक्षय। अयं मन्त्रः सौर्य्ये कर्म्मणि द्रष्टव्यः॥

अथ सप्तमीमाह। "उप नः सूनवो गिरः। शृण्वन्त्वमृतस्य ये। सुमृडीका भवन्तु नः" इति। अमृतस्य सूनवः चोरस्य पुत्राः ये मरुतः सन्ति। तथाच ब्राह्मणसमाम्नातम्, पृश्नियै वै पयसो मरुतो जाता इति। हे मरुतः नः अस्मदीयाः गिरः स्तुतिरूपा वाचः उपशृण्वन्तु, ततो नोऽस्माकं सुमृडीकाः सुख-हेतवो भवन्तु। अयं मन्त्रो मारुते कर्म्मणि द्रष्टव्यः॥

अथाष्टमीमाह। "अद्या नो देव सवितः। प्रजावत् सावीः सौभगम्। परा दुष्वप्नियं सुव" इति। हे सवितर्देव अद्य अस्मिन् कर्म्मणि नोऽस्माकं प्रजावत् पुत्रपौत्राद्युपेतं सौभगं सौभाग्यं सावीः अनुजानीहि। दुष्वप्नियं दुस्वप्ननिमित्तं दोषं परासुव विनाशय॥

अथ नवमीमाह। "विश्वानि देव सवितः। दुरितानि परासुव। यद्भद्रं तन्म आसुव" इति। हे सवितर्देव विश्वानि दुरितानि परासुव विनाशय। यद्भद्रं कल्याणमस्ति तन्मे मम आसुव सर्व्वतोऽनुजानीहि। एतदुभयं सावित्रे कर्म्मणि द्रष्टव्यम्॥

अथ दशमीमाह। "शुचिमर्कैर्बृहस्पतिम् [२]। अध्वरेषु नमस्यत। अनाम्योज आचके" इति। हे ऋत्विजः शुचिं शुद्धं बृहस्पतिम् अध्वरेषु यागेष्वर्कैः अर्चनैः सह नमस्यत नमस्कुरुत। तस्य बृहस्पतेः प्रसादात् अहम् अनामिकस्माण्यवश्यं ओजो बलम् आचके सर्व्वतः प्राप्नवानि। अयं मन्त्रः बार्हस्पत्ये कर्म्मणि द्रष्टव्यः॥

अथैकादशीमाह।"या धारयन्त देवा सुदक्षा दक्षपितारा। असुर्य्याय प्रमहसा" इति। देवाः सर्व्वेऽपीन्द्रादयो देवाः सुदक्षा सुष्ठु दक्षौ कुशलौ दक्षपितारा दक्षस्य कर्म्मणः पालकौ यौ मित्रावरुणौ प्रमहसा प्रकृष्टेन तेजसा असुर्य्याय असुरसम्बन्धिने विनाशाय धारयन्त चित्ते धृतवन्तः मित्रावरुणावेव असुरान् विनाशयत इत्येवं निश्चितवन्तः। अयं मन्त्रो मित्रावरुणशस्ते अन्तर्भावनीयः॥

अथ द्वादशीमाह। "स इत्क्षेति सुधित ओकसि स्वे। तस्मा इडा पिन्वते विश्वदानीं। तस्मै विशः स्वयमेवानमन्ति। यस्मिन् ब्रह्मा राजनि पूर्व्व एति" इति। यस्मिन् राजनि इन्द्रे ब्रह्मा बृहस्पतिः पूर्व्व एति पुरतो गच्छति। स इत् स एव इन्द्रो राजा स्वे स्वकीये ओकसि स्थाने सुधितः सुखं प्राप्तः सन् क्षेति सीदति। तस्मै राज्ञे इडा धेनुः विश्वदानी सर्व्वदा प्रीतिं जनयति तस्मै राज्ञे विशः प्रजाः स्वयमेवानमन्ति वशी भवन्ति। अत्र राजशब्देनेन्द्रो मनुष्यो वा विवक्षितव्यः। अयं मन्त्रो बार्हस्पत्ये कर्म्मणि द्रष्टव्यः॥

अथ त्रयोदशीमाह। "सकूतीमिन्द्र सच्युतिम्। सच्युतिं जघनच्युतिम् [४]। कनात्काभान्न आभर। प्रयस्यन्निव सक्थ्यौ" इति। हे इन्द्र कनात्काभां कनकवत् भासमानां रूपवतीं कन्यां नोऽस्मदर्थमाभर आनय। कीदृशीं सकूतिं कूतिः आकूतिः सङ्कल्पः तेन सहिताम् अस्मास्वनुरक्तामित्यर्थः। सच्युतिं च्युतिः क्षरणं वीर्य्यस्यन्दनं तेनसहिताम् अनुरागातिशयेन हि सहसा वीर्य्यं स्यन्दति। एतदेव पुनः सच्युतिमित्यनूद्य जघनच्युतिमित्यनेन व्याख्यायते। आहरणे दृष्टान्तः, सक्थ्यौ प्रयस्यन्निव यथा अत्यन्तं कामुकः ऊरुद्वयं प्रति यत्नमुद्युक्तः अत्यन्तसादरेण स्त्रियमाहरति तद्वत्॥

अथ चतुर्द्दशीमाह। "वि न इन्द्र मृधो जहि। कनीखुनदिवसापयन्। अभि नः सुष्टुतिं नय" इति। हे इन्द्र मृधः अस्मद्विवाहप्रतिबन्धकान् शत्रून् विजहि विविधं मारय। कनीखुनदिवसापयन्, यथा पूर्व्वं भूमौ विक्षिप्तं द्रव्यम् अतिशयेन खनित्वा स पुरुषः स्वपुत्रं प्रत्यानीय संयोजयति, तद्वत् त्वमपि कन्यारत्नमस्मासु संयोजयन् नोऽस्मदीयां सुष्टुतिं शोभनां कीर्त्तिम् अभि सर्व्वतो नय प्रापय। एतच्च मन्त्रद्वयं कन्यालाभार्थे कर्म्मणि विनियोज्यम्॥

अथ पञ्चदशीमाह। "प्रजाततिः स्त्रियां यशः। मुष्कयोरदधात्सपम्। कामस्य तृप्तिमानन्दम्। तस्याग्ने भाजयेह मा" इति। योऽयं प्रजापतिः जगतः स्रष्टा स्त्रियां यशः भार्य्यायां गर्भरूपेण यशसः कारणं यद्वीर्य्यं तन्मुष्कयोः रण्डयोः सपं

सम्बन्धम् अदधात् स्थापितवान् । तस्यैव स्थापितस्य विशेषणानि, कामस्य तृप्तिं तृप्तिकारणं तस्मिन् गलिते सति योषित् मे भूयादिति कामो निवर्त्तते तस्मिन्निवृत्तिरेव तृप्तिः । अत एवानन्दं सुखकारणम् । हे अग्ने इह विवाहे कर्मणि मान्तस्य वीर्य्यस्य सुखं भाजय प्रापय ॥

अथ षोडशीमाह । "मोदः प्रमोद आनन्दः [५] । मुष्कयोर्निहितः सपः । सृत्वेव कामस्य तृप्याणि । दक्षिणानां प्रतिग्रहे" इति । मोदादयः त्रयः तारतम्येन अवस्थिताः सुखावान्तरविशेषाः । वार्त्ताजन्यसुखविशेषो मोदः, दर्शनजन्यः प्रमोदः, भोगजन्य आनन्दः । तेषां सर्व्वेषां सपः समवायहेतुः मुष्कयोर्निहितः स्थापितः, दक्षिणानां प्रतिग्रहे सति कामस्य सृत्वेव कामितार्थं प्राप्यैव तृप्याणि तृप्तो भवानि अयमर्थः । ऋत्विजां दक्षिणाकाले कन्या दीयते । अतएवापस्तम्बधर्म्मेषु स्मर्य्यते, दैवयज्ञतन्त्र ऋत्विजे प्रतिपादयेदिति । दैवे विवाहे चिकिर्षिते सति यज्ञप्रयोगमध्ये ऋत्विजे कन्यां समर्पयेदिति । आश्वलायनोऽपि । दक्षिणारूपायाः कन्यायाः अभिमर्शनं विधत्ते, अभिमृशेद्प्राणिकन्याश्चेति । तस्माद्दक्षिणानां प्रतिग्रहे सति कन्यां प्राप्तस्य यादृशी तृप्तिस्तादृशी तृप्तिर्भवतीति ॥

अथ सप्तदशीमाह । "मनसश्चित्तमाकूतिम् । वाचः सत्यमशीमहि । पशूनाꣳ रूपमन्नस्य । यशः श्रीः श्रयतां मयि" इति । मनसः सम्बन्धि चित्तं विज्ञातम् आकूतिं सङ्कल्पं वाचः-सम्बन्धि सत्यवदनञ्चाशीमहि प्राप्नुयाम । तथा पशूनां गवा-

दीनां रूपमनेकविधं स्वरूपम् अन्नस्य सम्बन्धि यशः कीर्त्तिं चाशीमहि, मयि श्रीर्धनसमृद्धिः श्रयतां सेवताम्॥

अथाष्टादशीमाह। "यथाहमस्या अतृपꣳ स्त्रियै पुमान्। यथा स्त्री तृप्यति पुꣳसि प्रिये प्रिया। एवं भगस्य तृप्याणि [६]। यज्ञस्य काम्यः प्रियः" इति। असै स्त्रियै अस्यां विवाहेन लब्धायां स्त्रियां पुमानहं यथा अतृपं येन प्रकारेण तृप्तोऽस्मि। यथा च प्रिया स्त्री प्रिये पुंसि तृप्यति, एवमहं भगस्य तृप्याणि सौभाग्येन तृप्तो भवानि। कीदृशोऽहं यज्ञस्य काम्यः यज्ञो हि स्वानुष्ठानाय कामयते। अतएव यज्ञस्याहं प्रियः॥

अथैकोनविंशीमाह। "ददामीत्यग्निर्वदति। तथेति वायुराह तत्। हन्तेति सत्यं चन्द्रमाः। आदित्यः सत्यमोमिति" इति। एतां कन्याम् अहं ददामीत्येवमग्निः ब्रूते। तत्तथास्त्विति वायुरप्याह। चन्द्रमास्तु तत्सत्यं हन्त ममायं हर्ष इत्याह। आदित्यः सत्यमोमिति अवश्यमङ्गीकरोमीति ब्रूते॥

अथ विंशीमाह॥ "आपस्तत् सत्यमारभन्। यशो यज्ञस्य दक्षिणाम्। असौ मे कामः समृद्ध्यताम्" इति। यज्ञदक्षिणां यज्ञसम्बन्धिदक्षिणारूपं यशो यशसः कारणं तत् कन्यारूपं वस्तु आपः सत्यमारभन् अब्देवता अवश्यमानयन्। तस्मादसौ पुत्रोत्पादनरूपो मे कामः समृद्ध्यतां समृद्धोभवत। प्रजापतिरित्यादिमन्त्रषट्कस्य कन्याप्रतिग्रहे विनियोगमाह बौधायनः। अथ यदि दक्षिणाभिः सह दत्ता स्यात् नात्र वरान्

प्रदिशणयात् तां प्रतिगृह्णीयात्। प्रजापतिः स्त्रियां यश इत्ये-ताभिः षड्भिरनुच्छन्दसमिति, आपस्तम्बमतानुसारिणस्तु बध्वाः शिरसि तण्डुलप्रक्षेपे विनियोगमाहुः॥

अथैकविंशीमाह। "नहि स्पशमविदन्नन्यमस्मात्। वैश्वा-नरात् पुर एतारमग्नेः [७]। अथेमेऽमन्यन्नमृतमसुराः। वै-श्वानरं क्षेत्रजित्याय देवाः" इति। वैश्वानरनामकादस्मादग्ने-रन्यं देवं स्पशं रक्षसां साधकं पुर एतारं देवानां पुरतो गन्तारं नह्यविदन् देवाः सर्व्वथा नालभन्त। अथानन्तरम-सुराः असूढा देवाः क्षेत्रजित्याय कर्म्मानुष्ठानाङ्गक्षेत्रजयाय तन्मार्गजयाय वा अमृतं केनाप्यतिरस्कृतं वैश्वानरमिमं वैश्वा-नराख्यमग्निममन्यन् अरण्योर्मथितवन्तः॥

अथ द्वाविंशीमाह। "येषामिमे पूर्व्वे अर्म्मास आसन्। अयूपाः सद्म विभृता पुरूणि। वैश्वानर त्वया ते नुत्ताः। पृथिवीमन्यामभितस्थुर्जनासः" इति। येषां जनानां यजमा-नानाम् अयूपा विमाहरहिता इमे वैश्वानरस्य मन्यितारो देवाः पूर्व्वे अर्म्मास पूर्व्वभाविनो गन्तार आयन् पुरूणि सद्म बहूनि यज्ञगृहाणि येषां यजमानानां विभृतानि विशेषेण सम्पादितानि ते जनासः जनाः यजमानाः हे वैश्वानर त्वया नुत्ताः प्रेरिताः सन्तः अन्यत्-किञ्चित्-यज्ञयोग्यां पृथिवीम् अभितस्थुः अतिक्रम्यावस्थिताः। एतच्चोभयं वैश्वानरदैवत्ये क-र्म्मणि द्रष्टव्यम्॥

अथ त्रयोविंशीमाह। "पृथिवीं मातरं महीम्। अन्तरि-

वमुपब्रुवे। बृहतीमूतये दिवम्" इति। इमां पृथिवीं मह्वीं महतीं मातरं मातृसमानाम् अहमुपब्रुवे। यथा माता पालयति तथा त्वं पालयेति ब्रुवे प्रार्थये। अन्तरिक्षमप्यवकाशप्रदानाय प्रार्थये। बृहतीं प्रौढां दिवम् ऊतये वृष्टिप्रदानेन रक्षणाय प्रार्थये॥

अथ चतुर्विंशीमाह। "विश्वं विभर्त्ति पृथिवी [८]। अन्तरिक्षं विपप्रथे। दुहे द्यौर्बृहती पयः" इति। इयं पृथिवी विश्वं सर्व्वं जगत् विभर्त्ति धारयति पोषयति च। अन्तरिक्षमपि अवकाशप्रदानाय विपप्रथे विस्तीर्णमभूत्। बृहती द्यौः पयो दुहे जलं दोग्धि। एतच्च मन्त्रद्वयं लोकेष्टौ द्रष्टव्यम्। तथा च आश्वलायन आह, लोकेष्टिः पृथिव्यन्तरिक्षं द्यौरिति देवताः पृथिवीं मातरमिति॥

अथ पञ्चविंशीमाह। "न ता नशन्ति न दभाति तस्करः। नैना अमित्रो व्यथिरादधर्षति। देवाꣳश्च याभिर्यजते ददाति च। ज्योगित्ताभिः सचते गोपतिः सह" इति। याभिर्गोभिः देवानुद्दिश्य यजते च यागमपि करोति ददाति च गवां दानमपि करोति। ताः गावो नशन्ति नैव नाशं प्राप्नुवन्ति। तस्करश्चोरोऽपि ताः न दभाति न हिनस्ति। व्यथिः व्यथाहेतुरमित्रः शत्रुरपि एनाः गाः आदधर्षति नैव धृष्टो भवति ताडयितुं प्रगल्भो न भवति। ताभिर्गोभिः सह गोपतिर्गवां स्वामी ज्योगित् चिरमेव सचते स्वर्गे समवेतो भवति॥

अथ षड्विंशीमाह। "न ता अर्व्वा रेणुककाटो अश्नुते। न सꣳस्कृतत्रमुपयन्ति ता अभि। उरुगायमभयं तस्य ता अनु।

गावो मर्त्यस्य विचरन्ति यज्वनः” [८] इति। रेणुककाटः रेणोर्भूधूलेः ककाटः उत्थापकः तीव्रगतियुक्त इत्यर्थः। अर्व्वा तादृशोऽश्वः ताः गाः नाश्नुते न व्याप्नोति। अश्वादपि शीघ्रगतय इत्यर्थः। अतः ता अभि एतादृशीर्गा अभिलक्ष्य संस्कृतत्रं संस्कारेण युक्तं रक्षार्थं दण्डं नोपयन्ति गोपालाः हस्ते दण्डं न स्वीकुर्व्वन्ति। शक्त्याधिक्येन अश्वादपि शीघ्रं गच्छन्तीनां गवां ताडनार्थो दण्डो नापेक्षितः। यज्वनः यागशीलस्य मर्त्यस्य मनुष्यस्य ताः गावः उरुगायं विस्तीर्णगतियोग्यं भयरहितं स्थानं प्राप्य विचरन्ति विस्रम्भेण चरन्ति। एतच्च मन्त्रद्वयं ब्राह्मण ऋषभमिति विहितस्य पशोरुपहोमार्थे गोसूक्तेऽन्तर्भूतम्। अतएव तत्र प्रतीकद्वयमाम्नातम्, न ता नशन्ति न ता अर्व्वेति॥

अथ सप्तविंशीमाह। “रात्री व्यख्यदायती। पुरुत्रा देव्यक्षभिः। विश्वा अधिश्रियोऽधित” इति। पुरुत्रा पुरु बहुषु दिवसेषु आयती पुनः पुनरागच्छती रात्री देवी रात्र्यभिमानिनी देवता अक्षभिः सर्व्वेषां प्राणिनां चक्षुर्भिः व्यख्यत् विख्याता अभूत्। अन्धकारं ज्योत्स्नां वा दृष्ट्वा रात्रिरियमिति निश्चीयते। सा च देवी विश्वाः श्रियः सर्व्वाः सम्पदः अधिष्ठाय अधित धारितवती॥

अथाष्टाविंशीमाह। “उप ते गा इवाकरम्। वृणीष्व दुहितर्द्दिवः। रात्री स्तोमन्न जिग्युषे” इति। दिवो दुहितः द्युलोकदेवतायाः पुत्रि हे रात्रि गा इव गोभिरुपलक्षितान् गोमहिषादीन् सर्व्वानपि पशून् ते उपकरं तवसमीपे कृतवा-

नस्मि। अतो वृणीष्व रक्षार्थं सर्व्वानपि गवादीन् स्वीकुरु। रात्रौ हि पशवः शालासु रक्ष्यन्ते इयं रात्री देवी स्तोमं न अस्माभिः कृतं स्तोत्रमपि जिगुषी जितवती। एतच्च मन्त्रद्वयम् अरिष्टदर्शनेषु होमेषु विनियोक्तव्यं, तथा च बह्वृच, आरण्य-काण्डे संहितोपनिषदि प्रत्यक्षाणि स्वप्नगतानि चारिष्टान्युपन्यस्य अनन्तरमिदमामनन्ति, स यद्येतेषां किञ्चित् पश्येत्। उपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं जुहोतीति॥

अथैकोनत्रिंशीमाह। "देवीं वाचमजनयन्त देवाः। तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्ज्जं दुहाना। धेनुर्वागस्मानुपसुष्टुतैतु" [१०] इति। देवाः सर्व्वे वाचं देवी-मजनयन्त तां वाचं विश्वरूपाः द्विपाच्चतुष्पात् तदवान्तरभेदेन पशवः स्वस्वभाषारूपेण वदन्ति सा वाग्रूपा धेनुः नोऽस्मदर्थं इषमन्नं ऊर्ज्जं क्षीरादिरसं दुहाना सम्पादयन्ती सुष्टुता अस्माभिः सुष्ठु वैदिकैः स्तोत्रैः स्तुता मन्द्रा हृष्टा सती अस्मान् प्रत्यागच्छतु॥

अथ त्रिंशीमाह। "यद्वाग्वदन्त्यविचेतनानि। राष्ट्री देवानां निषसाद मन्द्रा। चतस्र ऊर्ज्जं दुदुहे पयाꣳसि। क्व स्विदस्याः परमं जगाम" इति। यद्वाक् या वाग्देवता अविचेतनानि अचेतनसदृशान् मूकान् प्राणिनः वदन्ती वदनक्षमान् कुर्व्वन्ती। देवानां सर्व्वेषां राष्ट्री राष्ट्रप्रदा मन्द्रा हृष्टा सती निषसाद अस्मदीये कर्म्मण्युपविष्टा। यस्याः वाग्देव्याः प्रसादात् चतस्रो दिग्देवताः ऊर्ज्जं क्षीरादिरसद्रव्यं पयांसि जलानि च दुदुहे दुहन्ति सम्पादयन्ति। अस्या वाग्देव्याः परमं पदं मनुष्यः

क्व खिल्वगाम कुत्र वा प्राप्तवान् तदीयस्थानं प्राप्तुं न कोऽपि क्षम इत्यर्थः। इदञ्च मन्त्रद्वयं वाचे वेहतमिति विहिते पशौ विनियोक्तव्यम्। अतएव तदीये स्तोत्रे प्रतीकद्वयमाम्नातम्, देवीं वाचमजनयन्त यद्वाग् वदन्तीति॥

अथैकत्रिंशीमाह। "गौरी मिमाय सलिलानि तक्षती। एकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी। सहस्राक्षरा परमे व्योमन्" इति। परमे व्योम्नि ब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सूक्ष्मपरमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत्। कथम्, प्रथमं प्रणवात्मना एकपदी ब्रह्मणो मुखान्निर्गता। अनन्तरं व्याहृतिरूपेण साविचीरूपेण च द्विपदी। ततो वेदचतुष्टयरूपेण चतुष्पदी। ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यां चाष्टापदी। ततो मीमांसान्यायसांख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्वैर्नवपदी। ततोऽनन्तैर्वाक्सन्दर्भैः सहस्राक्षरा अनन्तविधा बभूवुषी सम्पन्ना॥

अथ द्वात्रिंशीमाह। "तस्याः समुद्रा अधिविक्षरन्ति। तेन जीवन्ति प्रदिशश्चतस्रः [११]। ततः क्षरत्यक्षरम्। तद्विश्वमुपजीवति" इति। तस्यां वाग्देवतायां अधिश्रिताः समुद्राः समुद्रसमाना वेदाः विक्षरन्ति विविधं प्रवर्त्तन्ते तेन प्रवर्त्तनेन प्रदिशः चतुर्व्विधा प्राच्यादिदिगवस्थिताः प्राणिनः जीवन्ति, वेदोक्तमनुष्ठायैहिकमामुष्मिकञ्च प्राप्नुवन्ति। ततो वेदा देवाक्षरं प्रणवात्मकं प्रवर्त्तते तदेतदक्षरं विश्वमुपजीवति सर्व्वो

जनः प्रणवानुष्ठानेन स्वापेक्षितं फलं प्राप्नोति। एतच्च मन्त्रद्वयं वाचेवेहतमित्यत्रोपहोमार्थं द्रष्टव्यम्॥

अथ त्रयस्त्रिंशीमाह। "इन्द्रा सूरा जनयन् विश्वकर्म्मा। मरुत्वां अस्तु गणवान्त्सजातवान्। अस्य स्नुषा श्वशुरस्य प्रशिष्टिम्। सपत्ना वाचं मनसा उपासताम्" इति। इन्द्रः परमैश्वर्य्ययुक्तः सूरः सूर्य्यः सर्व्वव्यापारयुक्तः विश्वं जनयन्। मरुत्वान् मरुद्भिर्युक्तः गणवान् वसुरुद्रादित्यगणैः सहितः सजातवान् सजातैः स्वेनसमानजन्मभिः सर्व्वैः सहितस्सन् यजमानस्य अनुग्राहकोऽस्तु। ततश्च अस्य यजमानस्य श्वशुरस्थानीयस्य सपत्नाः शत्रवः स्नुषा स्नुषावन्निलीयमानाः सन्तः प्रशिष्टिं प्रशासनरूपं वाचं मनसा उपासतां मनःपूर्व्वं सेवताम्॥

अथ चतुस्त्रिंशीमाह। "इन्द्रः सूरो अतरद्रजाꣳसि। स्नुषा सपत्ना श्वशुरोऽयमस्तु। अयꣳ शत्रूञ्जयतु जर्हृषाणः। अयं वाजं जयतु वाजसातौ" इति। इन्द्रः सूरः परमैश्वर्य्ययुक्तः सूर्य्यः रजांसि रञ्जकानि प्राणिजातानि अतरत् तीर्णवान् वशीकृतवानित्यर्थः। तत्प्रसादात् यजमानस्य सपत्नाः शत्रवः स्नुषावत् स्वाधीनाः सन्तु। अयन्तु यजमानः श्वशुरोऽस्तु श्वशुरवत् स्वामी भवतु। अयं यजमानः जर्हृषाणः अत्यन्तं हृष्यन् शत्रून् जयतु। पुनरप्ययं यजमानः वाजसातौ स्वकीयेभ्यो अन्नदाननिमित्ते सति वाजं जयतु वैरिसम्बन्ध्यन्नं वशं करोतु। एते ऋचौ स्नुषासपत्नीयायामिष्टौ याज्यानुवाक्ये॥

अथ पञ्चत्रिंशीमाह। "अग्निः क्षत्रभृदनिभृष्टमोजः। सह-

स्त्रियो दीप्यतामप्रयुच्छन्। विभ्राजमानः समिधान उग्रः। आन्तरिक्षमरुहदगन् द्याम्'' [१९]। अयमग्निः क्षत्रभृत् बलं धारयन् अनिभृष्टमोजः केनाप्यतिरस्कृतं बलम् अस्मभ्यं प्रयच्छतीति शेषः। सहस्रेण सम्मितः अप्रयुच्छन् प्रमादमकुर्व्वन् दीप्यतां विभ्राजमानो विशेषेण दीप्यमानः समिधानः समिद्भिर्युक्तः उग्रस्तीव्रः सन् अन्तरिक्षम् अरुहत् आरोढुमर्हति। ततो द्यामगन् दिवं गच्छतु। अयं मन्त्र आग्नेये कर्म्मणि द्रष्टव्यः॥

इति षष्ठोऽनुवाकः॥ ६ ॥

---

अथ सप्तमोऽनुवाकः।

सप्तमे प्रथमामृचमाह। ''वृषास्यंशुर्वृषभाय गृह्यसे। वृषायमुग्रो नृचक्षसे। दिव्यः कर्म्मण्यो हितो बृहन्नाम। वृषभस्य या ककुत्'' इति। अंशुलतात्मकः सोमः त्वं वृषा असि वीर्य्यवानसि। स त्वं वृषभाय श्रेष्ठायेन्द्राय अभिषवार्थं गृह्यसे। अयमुपांशुसवनाख्य उग्रः कठिनः ग्रावा वृषा वीर्य्यवान् भूत्वा नृचक्षसे नृणां द्रष्ट्रे तस्मै इन्द्राय कर्म्मण्यः अभिषवकर्म्मणि कुशलः हितः अभिषवाख्य उपरे निहितः। स च दिव्यो द्योतनात्मकः बृहच्छब्दस्य पाषाणस्य नाम। अतएवान्यत्राम्नातः, बृहन्नसि ग्रावेति, वृषभस्य श्रेष्ठस्य हिमवदादिपर्व्वतस्य या ककुत्तदृशं शृङ्गं यदस्ति तद्रूपोऽयं पाषाणः। अतएव सर्व्वानां ग्राव्णामभिमन्त्रणमन्त्र एवमाम्नातः, पर्व्वतानां ककुभः प्रयुत इति॥

अथ द्वितीया। "विषूवान् विष्णो भवतु। अयं यो मामको वृषा। अथो इन्द्र इव देवेभ्यः। वि ब्रवीतु जनेभ्यः" इति। हे विष्णो व्याप्तसोम अयं यजमानः विषूवान् श्रेष्ठो भवतु। यो यजमानः मामको मदीयो वृषा यागद्वारेण भवताम् अभिवर्षणहेतुः सोऽयमिति पूर्व्वत्रान्वयः। अपि च यथैवेन्द्रो देवेभ्यः कार्य्याणि विविच्य ब्रवीति तथायं यजमानः जनेभ्यो विविच्य ब्रवीतु। अयं मन्त्रः क्वचित् कर्म्मणि यजमानाभिमन्त्रणार्थः॥

अथ तृतीया। "आयुष्मन्तं वर्चस्वन्तम्। अथो अधिपतिं विशाम् [१]। अस्याः पृथिव्या अध्यक्षम्। इममिन्द्रवृषभं कृणु" इति। हे इन्द्र इमं यजमानं वृषभं कृणु श्रेष्ठं कुरु। वृषभत्वमेव प्रपञ्च्यते, आयुष्मन्तं दीर्घेणायुषा युक्तम्, वर्चस्वन्तम् अधिकेन बलेन युक्तम्, अपि च विशां प्रजानामधिपतिम् अस्याः पृथिव्या अध्यक्षं स्वामिनम्, अयं मन्त्र आशीर्व्वादरूपे कर्म्मणि द्रष्टव्यः॥

अथ चतुर्थी। "यः सुशृङ्गः सुवृषभः। कल्याणो द्रोण आहितः। कार्षीवलप्रशाणेन। वृषभेण यजामहे" इति। योऽयमिन्द्रार्थमालभ्यमानः पशुः सोऽयं सुशृङ्गः शोभनशृङ्गोपेतः, सुवृषभः सुष्ठुसेचनसमर्थः। कल्याणो रमणीयः, द्रोणो मुद्गमाषादिभक्षः परिपूर्णे काष्ठपात्रे आहितः भक्षणाय नित्यं स्थापितः। कार्षीवलप्रशाणेन कृषीवलैः कृतं कार्षीवलं तादृशं प्रशाणं प्रशंसनं यस्यासौ कार्षीवलप्रशाणस्तादृशेन तेन वृषभेण यजामहे इन्द्रं पूजयामः॥

अथ पञ्चमी। "वृषभेण यजमानाः। अक्रूरेणेव सर्पिषा। मृधश्च सर्व्वा इन्द्रेण। पृतनाश्च यजामसि" इति। अथ अक्रूरेण खादुतमेन सर्पिषा यागः क्रियते तथैव वृषभेणानेन यजमानाः वयं इन्द्रेणानुगृहीताः सन्तः मृधश्च शत्रूनपि सर्व्वान् पृतनाश्च परकीयसेना अपि जयामसि वशीकुर्म्मः॥

अथ षष्ठी। "यस्यायमृषभो हविः। इन्द्राय परिणीयते। जयाति शत्रुमायन्तम्। अथो हन्ति पृतन्यतः" इति। यस्य यजमानस्यायमृषभः हविर्भूत्वा इन्द्रार्थं परितो नीयते। स यजमान आयन्तमागच्छन्तं शत्रुं जयति। अपि च पृतन्यतः अस्मद्विरोधिनीं सेनामिच्छतः पुरुषान् सर्व्वानपि हन्ति॥

अथ सप्तमी। "नृणामहं प्रणीरसत्। अग्र उद्भिन्दतामसत्" इति। अयं वृषभयाजी नृणां मनुष्याणां प्रणीरसत् प्रकर्षेण नेता भवतु। अहमपि च उद्भिन्दतां विरोधिजनाङ्गदनं कुर्व्वतां पुरुषाणां मध्ये अयमग्रे असत् प्रथमप्रवृत्तो अभवम्। यस्य शृङ्ग इत्यादयश्चत्वारो मन्त्रा ऐन्द्रमृषभमालभत इत्यतस्मिन् पशावुपहोमार्थाः॥

अथाष्टमी। "इन्द्र शुष्मन्तनुवा सेरयस्व। नीचा विश्वा अभितिष्ठाभिमातीः। निष्टणीह्याबाधं यो नो अस्ति। उरुं नो लोकं कृणुहि जीरदानो" [२] इति। हे इन्द्र तनुवा अस्मच्छरीरेषु शुष्मं बलं सेरयस्व प्रेरय। विश्वाः अभिमातीः पाप्मनो नीचैः कृत्वा अभितिष्ठ अभितोऽवस्थितं कुरु। योऽयं नोऽस्माकं अपरैः सम्पादित आबाधोऽस्ति तमाबाधं निष्टणीहि

नितरां शीर्णं कुरु। हे जीरदानो जीवनहेतो इन्द्र नोऽस्माकं उरुं विस्तीर्णलोकं कृणुहि कुरुष्व॥

अथ नवमीमाह। "प्रेह्यभिप्रेहि प्रभरा सहस्व। मा विवेनो वि शृणुष्वा जनेषु। उदीडितो वृषभ तिष्ठ शुष्मैः। इन्द्रशत्रून् पुरो अस्माक युध्य" इति। हे इन्द्र प्रेहि विजयार्थं गच्छ, गमनकालेऽप्यभिप्रेहि शत्रोरभिमुखो गच्छ, गत्वा च प्रभरणं मुख्यानां प्रहारं कुरु, सहस्व इतरानभिभव किञ्चिदपि शत्रुं मा विवेनः अयमेको रक्षणीयविशेषेणादरं मा कुरु। ततो जनेषु महतीं मदीयां स्तुतिं शृणुष्व। हे वृषभ ईडितः स्तुतः सन् पुनरपि शुष्मैर्बलैः सह शत्रून् हन्तुमुत्तिष्ठ। हे इन्द्र अस्माकं शत्रून् पुरत एव युध्य सम्प्रहर। एतच्चोभयं विजयार्थ ऐन्द्रे कर्म्मणि द्रष्टव्यम्॥

अथ दशमी। "अग्ने जेता त्वं जय। शत्रून्त्सहस ओजसा। वि शत्रून् वि मृधो नुद" इति। हे अग्ने जेता जयशीलस्त्वं शत्रून् जय तथा ओजसा बलेन सहसे अभिभव शत्रून् विनुद विशेषेण निराकुरु। मृधोऽन्यानपि बाधकान् विनुद॥

अथैकादशी। "एतं ते स्तोमन्तु विजात विप्रः। रथन्न धीरः स्वपा अतक्षम्। यदीदग्ने प्रति त्वं देवहर्य्याः [३]। सुवर्वतीरप एना जयेम" इति। विजात प्रभूतजन्म हे अग्ने ते तव एतं स्तोमं स्तोत्रं विप्रः यजमानोऽहमतक्षम् तक्षणवत्सम्पादनमकार्षम्। तत्र दृष्टान्तः, धीरो बुद्धिमान् स्वपाः शोभनकर्म्मा शिल्पी रथं न यथा रथं तक्षति तद्वत्। यदीत् हे

अग्ने देव यदिदं स्तोत्रं त्वं प्रतिहर्य्य आद्रियेथाः तर्हि वयं सुवर्वतीः सुवः कामयिता अपः एना एतेन स्तोत्रेण जयेम। एतदुभयमाग्नेये कर्म्मणि द्रष्टव्यम्॥

अथ द्वादशीमाह। "यो घृतेनाभिमानितः। इन्द्र जैत्राय जज्ञिषे। स नः सङ्कासु पारय। पृतना-साह्येषु च" इति। हे इन्द्र यस्त्वं घृतेनाभिमानितः अभितः पूजितः सन् जैत्राय शत्रुजयाय जज्ञिषे जायसे समर्थमित्यर्थः। स त्वं सङ्कासु पर-कीयसेनासु नोऽस्मान् पारय पालय। तथा पृतना-साह्येषु च सेनानामभिभवेष्वपि समर्थान् कुर्व्विति शेषः॥

अथ त्रयोदशी। "इन्द्रो जिगाय पृथिवीम्। अन्तरिक्षꣳ सुवर्महत्। वृत्रहा पुरुचेतनः" इति। पुरुचेतनः बहुविध-ज्ञानयुक्तः वृत्रहा शत्रुघातक इन्द्रः पृथिवीम् अन्तरिक्षं महान्तं स्वर्गञ्च जिगाय वशीकृतवान्॥

अथ चतुर्द्दशी। "इन्द्रो जिगाय सहसा सहाꣳसि। इन्द्रो जिगाय पृतनानि विश्वा [५]। इन्द्रो जातो वि पुरो रुरोज। स नः परस्पावरिवः कृणोतु" इति। अयमिन्द्रः सहसा स्वकीय-बलेन सहांसि परकीयबलानि जितवान्। अयमिन्द्रः विश्वा पृतनानि सर्व्वाणि सैन्यानि जिगाय। अयमिन्द्रः जातमात्र एव पुरः परकीयाणि पुराणि विरुरोज विशेषेण भग्नानि कृतवान्। स इन्द्रः नोऽस्माकं परस्पापर्य्यायेण पालयिता सन् वरिवः कृणोतु धनं करोतु। इदं मन्त्रद्वयं ऐन्द्रे कर्म्मणि द्रष्टव्यम्॥

अथ पञ्चदशी। "अयं कृत्नुरगृभीतः। विश्वजिदुद्भिदित्-

सोमः। ऋषिर्विप्रः काव्येन" इति। क्रतुर्नाम कश्चित् ऋषि-र्विप्रो ब्राह्मणः, कावनाम्ना साम्ना निष्पन्नं स्तोत्रं काव्यं तेन स्तोत्रेण अयम् ऋषिः सविश्वजित् सर्व्वस्य विश्वस्य जेता उद्भिदित् सर्व्वस्य विरोधिनः उद्भेदक एव सन् सोमः सोमसदृशः सर्व्व-स्योपकारकः स चागृभीतः केनाप्यनभिभूतः। अस्य मन्त्रस्य क्वचित्कल्पे विनियोगो द्रष्टव्यः॥

अथ षोडशी। "वायुरग्रेगा यज्ञप्रीः। साकङ्गन्मनसा यज्ञम्। शिवो नियुद्भिः शिवाभिः" इति। अयं वायुरग्रेगाः प्रथमगामी यज्ञप्रीः यज्ञेन प्रीयमाणः। शिवाभिः शान्ताभिः नियुद्भिः नियुन्नामिकाभिः स्वकीयाभिर्वडवाभिः साकं शिवः स्वयमपि शान्तः सन् मनसागन् ज्ञानमात्रेण यज्ञं गच्छतु॥

अथ सप्तदशीमाह। वायो शुक्रो अयामि ते। मध्वो अग्रं दिविष्टिषु [६]। आयाहि सोमपीतये। स्वारुहो देव नियु-त्वता" इति। हे वायो शुक्रो निर्मलो मध्वः मधुरः सोमरसो योऽस्ति तम् अग्रं श्रेष्ठं दिविष्टिषु दिविविवासेच्छा येषां देवानां ते दिविष्टयः तेषु मध्ये ते त्वदर्थम् अयामि रथं प्राप्नोमि। ततः हे देव नियुत्वता त्वदीयया अश्वजात्या सह स्वारुहः सुष्ठु रथमारूढः सोमपीतये सोमपानार्थमायाहि। एतदुभयं वायव्ये कर्म्मणि द्रष्टव्यम्। वायुरग्रेगा इत्येतत् प्र उगशस्त्रेप्यन्तर्भूतः॥

अथाष्टादशीमाह। "इममिन्द्र वर्द्धय क्षत्रियाणाम्। अयं विशां विश्पतिरस्तु राजा। अस्मा इन्द्र महिवर्चांꣳसि धेहि। अवर्चसं कृणुहि शत्रुमस्य" इति। हे इन्द्र क्षत्रियाणां मध्ये

इमं पुरोवर्त्तिनं राजानं वर्द्धय। अयं राजा विशां प्रजानां मध्ये विश्पतिः अतिशयेन प्रजापालकोऽस्तु। विशां मध्ये या उत्तमा विशः तासामपि पालकोऽस्त्वित्यर्थः। हे इन्द्र अस्मै राज्ञे महिवर्चांसि महान्ति बलानि धेहि सम्पादय। अस्य शत्रुम् अवर्चसं कृणुहि बलहीनं कुरु॥

अथैकोनविंशी। "इममाभज ग्रामे अश्वेषु* गोषु। निरमुं भज योऽमित्रो अस्य। वर्ष्मन् चत्रस्य ककुभिः श्रयस्व। ततो न उग्रो विभजा वसूनि" [७] इति। हे इन्द्र इमं राजानं सर्व्वस्मिन् ग्रामे अश्वेषु गोषु च आभज सर्व्वतो भागिनं कुरु। अस्यामित्रः शत्रुः योऽस्ति अमुं निर्भज भागरहितं कुरु। चत्रस्य चत्रियजातेः वर्ष्मन् शरीरे ककुभिः उत्तमाङ्गे श्रयस्व इन्द्रस्य प्रसादाश्रितो भव। सर्व्वोऽपि चत्रियजातिस्त्वां नमस्करोत्वित्यर्थः। अथवा एनं राजानं श्रयस्व स्थापय। तत ऊर्द्धं नोऽस्माकमुग्रस्त्वं वसूनि परकीयाणि धनानि विभज विशेषेण सम्पादय। परेषु कुपितः तदीयं धनमस्मभ्यं प्रयच्छेत्यर्थः॥

अथ विंशी। "अस्मे द्यावापृथिवी भूरि वामम्। मन्दुहाथां घर्म्मदुघेव धेनुः। अयꣳ राजा प्रिय इन्द्रस्य भूयात्। प्रियो गवामोषधीनामुतापाम्" इति। प्रवर्ग्यार्थं या पयो दुग्धे सा घर्म्मदुघा, तादृशी धेनुरिव हे द्यावापृथिव्यौ अस्मै अस्मदर्थं सन्दुहाथाम् अपेक्षितस्य कामस्य युवां दोहनं कुरु

* अत्र अश्वेषु पुरुषेषु गोषु इत्यपि पुस्तकान्तरे पाठः। पुनः श्रयस्व इत्यस्य स्थाने प्रिश्रियाय इति। परन्तु नैतयोर्भाष्ये व्याख्या दृश्यते।

तम्। अयञ्च राजा युवयोः प्रसादात् इन्द्रस्य प्रियो भूयात् तथा गवामोषधीनामपाञ्च प्रियो भूयात्। ताः सर्व्वाः अस्मिन् रमतामित्यर्थः ॥

अथैकविंशी। "युनज्मि त उत्तरावन्तमिन्द्रम्। येन जयासि न पराजयासै। सत्वाकरेकवृषभꣳ स्वानाम्। अथो राजन्नुत्तमं मानवानाम्" इति। उत्तरा उत्कृष्टा ज्ञानैश्वर्य्यादिः यस्येन्द्रस्य सोऽयमुत्तरावान्। तादृशमिन्द्रं हे राजन् ते त्वदर्थं युनज्मि त्वया सह संयोजयामि। येनेन्द्रेण जयासि सर्व्वदा त्वं जेष्यसि न पराजयासै कदाचिदपि पराजयं न प्राप्स्यसि। इन्द्रः त्वां स्वानां ज्ञातीनां मध्ये एकवृषभं एकमेव श्रेष्ठम् अकः करोतु। अपि च हे राजन् मानवानां त्वां उत्तमं करोतु॥

अथ द्वाविंशीमाह। "उत्तरस्त्वमधरे ते सपत्नाः। एकवृषा इन्द्रसखा जिगीवान् [८]। विश्वा आशाः पृतनाः सञ्जयं जयन्। अभितिष्ठ शत्रूयतः सहस्व" इति। हे राजन् त्वमुत्तरः उत्कृष्टो भव ते सपत्नाः शत्रवः अधरे निकृष्टाः सन्तु त्वमेकवृषा एक एव श्रेष्ठः इन्द्रसखा इन्द्रस्य सख्यं प्राप्तः। जिगीवान् सर्व्वदा जयं प्राप्तः, विश्वा आशाः सर्व्वा अपि दिशः संजयन् सम्यक् वशीकुर्व्वन् विश्वा पृतनाः जयन् अभितिष्ठ अभिक्रम्य स्थिरो भव। शत्रूयतः शात्रवं इच्छतो मनुष्यान् सहस्व अभिभव। इममिन्द्र वर्द्धयेत्यादिमन्त्रपञ्चकम् आशीर्व्वादरूपं राजनि पुरोहितेन प्रयोक्तव्यम्॥

अथ त्रयोविंशी। "तुभ्यं भरन्ति चितयो यविष्ठ। बलिमग्ने अन्तित ओत दूरात्। आ भन्दिष्ठस्य सुमतिं चिकिड्ढि। बृहते अग्ने महि शर्म्म भद्रम्" इति। हे यविष्ठ युवतमाग्ने चितयः भूमिष्ठाः सर्व्वे मनुष्याः अन्तितः समीपदेशात् उत दूरदेशाच्च बलिं पूजाम् आभरन्ति आनीय प्रयच्छन्ति। भन्दिष्ठस्य अतिशयेन स्तोतुर्मम सुमतिं शोभनमतिम् आचिकिड्ढि सर्व्वतोऽनुगृहाण। हे अग्ने ते तव शर्म्म शरणं बृहत् महि अधिककर्म्मभिः पूज्यं भद्रं कल्याणम्॥

अथ चतुर्व्विंशी। "यो देह्यो अनमयद्वधस्नैः। यो अर्य्यपत्नीरुषसश्चकार। स निरुध्यानहुषो यह्वो अग्निः। विशश्चक्रे बलिहृतः सहोभिः" [८] इति। योऽग्निर्देह्यः देहिनीः प्रजाः बधस्नैः बधैर्बन्धनैश्च, स्नावेष्टने इति धातोरुत्पन्नत्वात् बन्धनमुच्यते, अनमयत् स्ववशीकृतवान्। यश्चाग्निः उषसो देवीरर्य्यपत्नीः सूर्य्यभार्य्याश्चकार। सोऽग्निः यह्वः महान् नहुषः बन्धको भूत्वा विशः प्रजा निरुध्य बलिहृतश्चक्रे बलिहरणं नाम देवेभ्यो हविर्दानं सहोभिः स्वकीयैर्बलैः तथा चक्रे। एतस्मादभयं दिवश्येनीष्टिषु अग्नये बलिमते चरुमित्यत्र याज्यानुवाक्ये। तथा च तत्र प्रतीकद्वयमाम्नातम्, तुभ्यं भरन्ति यो देह्य इति॥

अथ पञ्चविंशी। "प्र सद्यो अग्ने अत्येष्यन्यान्। आविर्य्यस्मै चारुतरो बभूथ। ईडेऽन्यो वपुष्यो विभावा। प्रियो विशामतिथिर्मानुषीणाम्" इति। हे अग्ने यस्मै यजमानाय त्वं चारुप्रियतरः आविर्बभूव प्रत्यक्षदृष्टोऽभूः तस्य यजमानस्यार्थे

मद्यस्त्वदानीमेव अन्यान् सर्व्वान् यजमानान् प्रकर्षेण अत्येषि अतिक्रमिष्यसि। चारुतरत्वमेव स्पष्टीक्रियते, ईडेऽन्यः सर्व्वैः स्तुत्यः वपुष्यः उज्ज्वलरूपः विभावा दीप्यमानः मानुषीणां विशां प्रजानां प्रियः अतिथिः। सोऽयं मन्त्र आग्नेये कर्म्मणि द्रष्टव्यः॥

अथ षड्विंशी। "ब्रह्मज्येष्ठा वीर्य्या सम्भृतानि। ब्रह्माग्रे ज्येष्ठं दिवमाततान। ऋतस्य ब्रह्म प्रथमोत जज्ञे। तेनार्हति ब्रह्मणा स्पर्द्धितुं कः" इति। हे ब्रह्मज्येष्ठा वृद्धतमाः प्रजापतिप्रभृतयः शृणुत, यानि वीर्य्याणि ज्ञानैश्वर्य्यादीनि युष्मासु सम्भृतानि सम्पादितानि सर्व्वाणि ब्रह्मैव। अतएव स्मर्य्यते,

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्ज्जितमेव वा।

तत्तदेवावगच्छत्वं मम तेजोंऽशसम्भवम्॥ इति।

किञ्च ज्येष्ठं लोके वृद्धतमं ब्रह्म। अग्र प्रथमं आदिकाले दिवम् आततान द्युलोकं विस्तारयति स्म। किं बहुना, यदृतं सत्यं सर्व्वकारणकारणं वस्तु तस्यापि ब्रह्म प्रथमं जज्ञे प्रादुरभूत् स्वस्य स्वयमेवाविर्बभूव स्वप्रकाशत्वेन भासत इत्यर्थः। तेनैवम्भूतेन ब्रह्मणा कोऽन्यः पुमान् स्पर्द्धितुं शक्नोति॥

अथ सप्तविंशी। "ब्रह्मस्रुचो घृतवतीः। ब्रह्मणा स्वरवोमिताः [१०]। ब्रह्मयज्ञस्य तन्तवः। ऋत्विजो ये हविष्कृतः" इति। घृतवती घृतसम्पूर्णस्रुचोऽपि ब्रह्मैव मिता यूपे प्रक्षिप्ताः स्वरवः शकलविशेषा अपि ब्रह्मैव यज्ञस्य तन्तवः विस्तारा अपि ब्रह्मैव हविष्कृतो हविःसम्पादका ये ऋत्विजः सन्ति तेऽपि ब्रह्मैव। एतच्चोभयं ब्रह्मण ऋषभमिति विहिते पशौ द्रष्टव्यम्॥

अथाष्टाविंशी। "शृङ्गाणीवेच्छृङ्गिणाꣳ सन्ददृश्रिरे। च-षालवन्तः स्वरवः पृथिव्याम्। ते देवासः स्वरवस्तस्थिवाꣳसः। नमः सखिभ्यः सन्नान्मावगात" इति। चषाला: यूपाग्रवर्त्तिनः कटकाः स्वरवः यूपरशनासु आसञ्जिताः शकलाः चषालैः स्वरुभिश्च युक्ताः यूपाः पृथिव्यां वेद्यां सन्ददृश्रिरे सम्यक् दृष्टाः। तत्र दृष्टान्तः, शृङ्गिणां वृषभाणां शृङ्गाणीव‍त् शृङ्गाणि यथा दृश्यन्ते तथैवेत्यर्थः। स्वरुमन्तः ते यूपाः तस्थिवांसः देवास स्वैर्वर्णैरवस्थिता देवा एव। अत एव स वा एष सर्व्व-देवत्यो यद्यूप इत्याम्नातम्, अतो यजमानसखिभ्यो देवरूपेभ्यो यूपेभ्यो नमोऽस्तु। हे यूपाः सन्नात् अस्मात्सदनात् मावगात-मागच्छत। एतस्य मन्त्रस्य विनियोगं सूत्रकार आह, यूपं यजमान उपतिष्ठते नमः सखिभ्य इति॥

अथैकोनत्रिंशी। "अभिभूरग्निरतरद्रजाꣳसि। स्पृधो वि-हत्य पृतना अभिश्रीः। जुषाणो म आहुतिं मा महिष्ठ। हत्वा सपत्नान् वरिवस्करन्नः" इति। अभिभूः अभिभवनशीलोऽयमग्निः रजांसि रञ्जनात्मकान् लोकान् अतरत् अत्यक्रामत्। स्पृधो बाधिकाः पृतनाः शत्रुसेनाः विहत्य तत एवाभिगतश्रीः सोऽयं जुषाणः प्रियमाणः ममाहुतिं मा महिष्ठ अदधातु। अस्मत्सपत्नान् हत्वा वरिवस्तदीयं धनं नोऽस्माकं करोतु॥

अथ त्रिंशी। "ईशानं त्वा भुवनानामभिश्रियम्। स्तौम्यग्न उरुकृतꣳ सुवीरम्। हविर्जुषाणः सपत्नां अभिभूरसि। जहि शत्रूꣳ अपमृधो नुदस्व"[२१] इति। हे अग्ने त्वां स्तौमि कीदृशं

भुवनानामीशानम् अभिगतश्रियं उत्कृतं प्रभूतकर्म्मकारिणं सुवीरं शोभनापत्यहेतुम्। हे अग्ने त्वं हविर्जुषाणः सपत्नान् शत्रूनभिभवितुं समर्थोऽसि। अतः शत्रून् जहि स्पृधो बाधकामयनुदस्व। एतदुभयं आग्नेये कर्म्मणि द्रष्टव्यम्॥

इति सप्तमोऽनुवाकः॥ ७॥

---

अथाष्टमोऽनुवाकः।

सर्व्वोऽप्याग्रयणस्तत्कृतदिनियोगं सूत्रकार आह, सपत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोः दश हविषां द्वे स्विष्टकृत इति। तत्र प्रथमामृचमाह, "सप्रत्नवन्नवीयसा। अग्ने द्युम्नेन संयता। बृहत्ततन्थ भानुना" इति। हे अग्ने स त्वं प्रत्नवत् प्रत्नेन पुराणेन भानुमिव नवीयसा अत्यन्तं नवतरेण द्युम्नेन दीप्तेन संयता सम्यूह्य गृहीतेन भानुना तेजसा इदानीं बृहन् महत् अन्तरिक्षं ततन्थ तव यागानुरूपनवतरं तेजः प्रसारयेत्यर्थः॥

अथ द्वितीया। "नवन्नु स्तोममग्नये। दिवः श्येनाय जीजनम्। वसोः कुचिद्वनाति नः" इति। दिवः द्युलोकात् श्येनाय श्येनवत् चिप्रमागच्छ हे अग्ने अग्नये नवं स्तोमं अभिनवं स्तोत्रं नु चिप्रम् अजीजनम् उत्पादितवानस्मि वसोर्धनस्य कुचित् प्रभूतं भागं नोऽस्माकं वनाति ददाति एते उभे धाय्ये॥

अथ तृतीया। "स्वारुहा यस्य श्रियो दृशे। रयिर्वीरवतो

यथा। अग्ने यज्ञस्य चेततः" इति। यज्ञस्याग्रे उपक्रमे सर्वं कर्त्तव्यं चेततः चेतयमानस्य यस्याग्नेः श्रियः स्वारूढाः स्वस्मादेव प्ररूढाः अपराधिनादित्यर्थः। दृशे दर्शनाय नाश्रियो भवन्ति वीरवतः पुत्रवतः पुरुषस्य रयिर्धनं दर्शनीयं यथा भवति तद्वत् सोऽग्निः श्रीमानिति भावः॥

अथ चतुर्थी। "अदाभ्यः पुर एता [१]। अग्निर्विशां मानुषीणाम्। तूर्णी रथो सदानवः" इति। मानुषीणां विशां देवपरिचरभूतानाम् अग्निः पुरत एता। केनचिदप्यदाभ्यः हिंसितुमशक्यः तूर्णिः तरणहेतुः, सर्वं ह्येष तरतीति ब्राह्मणम्। रथी रथवान्। अतएव रथीरध्वराणामिति आम्नातम्। सदा सर्व्वदा नवः अभिनवः॥

अथ पञ्चमी। "नवꣳ सोमाय वाजिने। आज्यं पयसोऽजनि। जुष्टꣳ शुचितमं वसु" इति। वाजिने अन्नवते सोमाय नवं नूतनमाज्यं पयसोऽजनि उत्पन्नं तच्च जुष्टं प्रियं शुचितमम् अत्यन्तं शुद्धं वसु श्रेष्ठं॥

अथ षष्ठी। "नवꣳ सोम जुषस्व नः। पीयूषस्येह तृप्णुहि। यस्ते भाग ऋतावयम्" इति। हे सोम नवमिदमाज्यं जुषस्व नोऽस्मदीयस्य पीयूषस्य अमृतसमानस्याज्यस्य भागेन इह कर्म्मणि तृप्णुहि तृप्तो भव। यस्तवास्मिन् ऋतौ कालविशेषे देवैः कल्पितो भागः सोऽयमाज्यरूपः। एतावुतस्य आज्यभागयोः॥

अथ सप्तमी। "नवस्य सोम ते वयम्। आ सुमतिं वृणीमहे [२]। स नो रास्व सहस्रिणः" इति। हे सोम नवस्य

नूतनमूर्त्तियुक्तस्य ते तव सुमतिम् अनुग्रहबुद्धिं वयम् आमसन्नात् वृणीमहे। स त्वमस्मभ्यं महस्विणः सहस्रसङ्ख्यस्य धनस्य भोगं रास्व देहि॥

अथाष्टमी। "नवꣳ हविर्जुषस्व नः। ऋतुभिः सोम भूतमम्। तदङ्ग प्रतिहर्य्य नः। राजन्त्सोम स्वस्तये" इति। हे सोम ऋतुभिः कालैः भूतमम् अतिशयेन निष्पन्नं सुपक्वं नवं नूतनं श्यामाकरूपं नोऽस्मदीयं हविर्जुषस्व, अङ्गशब्दः प्रियसम्बोधनवाची अङ्ग सोमराजन् नोऽस्माकं स्वस्तये तद्धविः प्रतिहर्य्य अद्धस्व। एते उभे सौम्यस्य श्यामाकहविषो याज्यापुरोऽनुवाक्ये॥

अथ नवमी। "नवꣳ स्तोमं नवꣳ हविः। इन्द्राग्निभ्यां निवेदय। तज्जुषेताꣳ सचेतसा" इति। नवं स्तोत्रं नवं हविश्च इन्द्राग्निभ्यां अध्वर्य्यो निवेदय। तद्धविः सचेतसा समानचेतसाविन्द्राग्नी जुषेतां सेवताम्॥

अथ दशमी। "शुचिन्नु स्तोमं नव जातमद्य। इन्द्राग्नी वृत्रहणा जुषेथाम्[३]। उभा हि वाꣳ सुहवा जोहवीमि। ता वाजꣳ सद्य उशते धेष्ठा" इति। वृत्रहणौ शत्रुघातिनौ हे इन्द्राग्नी अद्यास्मिन् कर्म्मणि नवजातम् अभिनवत्वेनोत्पन्नं शुचिं नु स्तोमं शुद्धमेव स्तोत्रं जुषेथां ह्यस्माद् अहं सुहवाः सुखेनाह्वातुं शक्यौ उभौ वामुभौ युवामुभौ जोहवीमि पुनः पुनराह्वयामि। तथाविधौ उशते कामयमानाय यजमानाय वाजमन्नं सद्यो धेष्ठाः अस्मिन्नेव क्षणे सम्पादयतम्। एते उभे ऐन्द्राग्नस्य द्वादशकपालस्य याज्यानुवाक्ये॥

अथैकादशी। "अग्निरिन्द्रो नवस्य नः। अस्य हव्यस्य तृप्यताम्। इह देवौ सहस्रिणौ" इति। अग्निरिन्द्रश्च नोऽस्मदीयस्य नवस्य नूतनस्यास्य हव्यस्य भोगेन तृप्यताम्, इह कर्म्मणि तौ देवौ सहस्रिणौ सहस्रसङ्ख्याकधनप्रदौ स्ताम्॥

अथ द्वादशी। "यज्ञं न आहि गच्छताम्। वसुमन्तꣳ सुवर्विदम्। अस्य हव्यस्य तृप्यताम्। अग्निरिन्द्रो नवस्य नः" इति। अग्निरिन्द्रश्चोभौ नोऽस्मदीयस्य नवस्यास्य तृप्यतां तदर्थं नोऽस्मदीयं यज्ञम् आहि गच्छतां सर्व्वदैवागच्छताम्। कीदृशं यज्ञं वसुमन्तं बहुधनप्रदं सुवर्विदं स्वर्गलाभसाधनम् अत्र यद्विकल्पितं हविः ऐन्द्राग्नं द्वादशकपालं अग्नीन्द्रं वेति। तत्र ऐन्द्राग्नस्य पूर्व्वे ऋचौ अग्नीन्द्रत्वे ते उभे याज्यानुवाक्ये॥

अथ त्रयोदशी। "विश्वान्देवाꣳस्तर्पयत [४]। हविषोऽस्य नवस्य नः। सुवर्विदो हि जज्ञिरे" इति। हे ऋत्विजः नोऽस्मदीयस्य नवस्यास्य हविषः भागेन विश्वान् देवान् तर्पयत। यस्मात्ते विश्वे देवाः सुवर्व्विदो जज्ञिरे स्वर्गलाभहेतवो जाताः॥

अथ चतुर्द्दशी। "एदं बर्हिः सुष्टरीमानवेन। अयं यज्ञो यजमानस्य भागः। अयं बभूव भुवनस्य गर्भः। विश्वे देवा इदमद्यागमिष्ठाः" इति। इदं बर्हिः सुष्टरीम सुष्ठु स्तीर्णं सर्व्वतो अभूत् नवेन हविषा युक्तः यजमानस्य अयं यज्ञः भागः विश्वैर्देवैर्भजनीयः। सोऽयं यज्ञः भुवनस्य भूतजातस्य गर्भो रक्षकत्वेन अन्तरवस्थितो बभूव। हे विश्वे देवाः अद्यास्मिन्

कर्म्मणि इदमास्तीर्णं बर्हिः प्रति आगमिष्ठाः आगच्छत। एत उभे वैश्वदेवस्य हविषो याज्यानुवाक्ये॥

अथ पञ्चदशी। "इमेऽनु द्यावापृथिवी समीची। तन्वाने यज्ञं पुरुपेशसं धिया। आस्मै पृणीतां भुवनानि विश्वा। प्रजां पुष्टिममृतं नवेन" [५] इति। इमेऽनु इमे एव द्यावापृथिव्यौ समीची परस्परेण सङ्गते सत्यौ पुरुपेशसं बहुरूपं यज्ञं धिया स्वबुद्ध्या तन्वाने विस्तारयन्त्यौ अस्मै यजमानाय विश्वा भुवनानि सर्व्वाणि भूतजातानि आपृणीतां सर्व्वतः पालयेतां तथा प्रजां पुष्टिम् अमृतमन्नञ्च नवेन हविषा स्वीकृतेन तत् सर्व्वं सम्पादयेताम्॥

अथ षोडशी। "इमे धेनू अमृतं ये दुहाते। पयस्वत्युत्तरामेतु पुष्टिः। इमं यज्ञं जुषमाणे नवेन। समीची द्यावापृथिवी घृताची" इति। ये द्यावापृथिव्यौ अमृतं वृष्ट्यन्नरूपं दुहाते इमे द्यावापृथिव्यौ सर्व्वेषां प्राणिनां धेनुस्थानीये पुष्टिर्धनसमृद्धिः उत्तराम् उत्तरोत्तरामतिशयावस्थामेतु आगच्छतु। कीदृशी पुष्टिः पयस्वती प्रभूतवृष्ट्युदकयुक्ता नवेन नूतनेन हविषा इमं यज्ञं जुषमाणे सेवमाने समीची परस्परानुकूले द्यावापृथिव्यौ घृताची घृतमुदकं चरन्त्यौ भवेताम्। एते उभे ऋचौ द्यावापृथिव्यमेककपालमित्यस्य याज्यानुवाक्ये॥

अथ सप्तदशी। "यविष्ठो हव्यवाहनः। चित्रभानुर्घृतासुतिः। नवजातो विरोचसे। अग्ने तत्ते महित्वनम्" इति। हे अग्ने त्वं

यविष्ठः युवतमः हव्यवाहनः हविषो वोढा चित्रभानुर्विचित्र-दीप्तिः घृतासुतिः घृताशनः नवजातः प्रतिक्षणं नूतनज्वाला-रूपेणोत्पन्नो विरोचसे विशेषेण दीप्यसे। तन्महित्वनं तदेत-न्माहात्म्यं ते तवैव न त्वन्यस्यास्ति॥

अथाष्टादशी। "त्वमग्ने देवताभ्यः। भागे देव न मीयसे [६]। स एना विद्वान् यक्ष्यसि। नवꣳ स्तोमं जुषस्व नः" इति। हे अग्ने देव त्वं देवताभ्यः सर्व्वाभ्यः भागे त्वया उह्यमानेऽपि न मीयसे न हिंस्यसे यथा तव भ्रातरः देवेभ्यो हव्यं वहन्तः मृताः, न तथा त्वमित्यर्थः। स त्वं एनाः देवताः विद्वान् यजानः अस्मदीयं नवं स्तोमं स्तोत्रं जुषस्व। एते उभे स्विष्ट-कृत्संयाज्ये॥

एकोनविंशी। "अग्निः प्रथमः प्राश्नातु। स हि वेद यथा हविः। शिवा अस्मभ्यमोषधीः। कृणोतु विश्वचर्षणिः" इति। अयमग्निः इमं हविःशेषं मन्त्रः प्रथमभावी सन् प्राश्नातु। सह्यग्निः यथेदं हविः सम्भूतं यथा चोपभोज्यं तथा वेद जानाति। अस्मभ्यं विश्वचर्षणिः विश्वस्य द्रष्टाऽग्निः ओषधीः शिवाः सुखकराः कृणोतु करोतु। अयं मन्त्रः श्यामाकहविषः प्राशने विनियुक्तः॥

अथ विंशी। "भद्रान्न श्रेयः समनैष्ट देवाः। त्वया वसेन समशीमहि त्वा। स नो मयोभूः पितो आविशस्व। शन्तोकाय तनुवे स्योनः" इति। हे देवाः नोऽस्माकं भद्रात् वर्त्तमा-नाच्छ्रेयसोऽपि अधिकं श्रेयः समनैष्ट सम्यगानयत। हे पितो

अन्न त्वया वसेन त्वद्रूपेण रत्नकेन पाथेयेन त्वां समशीमहि अश्नुहीमहि संवत्सरपर्य्यन्तं त्वयैव जीवाम इत्यर्थः। स त्वं नोऽस्माकं मयोऽभूः सुखं भावयन् अविशस्व उदरं प्रविशन्तोकाय पुत्राय तनुवे शरीराय च शम्भव शान्तो भव। स्योनः सुखकरश्च भव। अयं मन्त्रो व्रीह्याग्रयणस्य शेषभक्षणे विनियोज्यः॥

अथैकविंशी। "एतमुत्यं मधुना संयुतं यवम्। सरस्वत्या अधिमनावचर्कृषुः। इन्द्र आसीत् सीरपतिः शतक्रतुः। कीनाशा आसन्मरुतः सुदानवः" [७] इति। अधिमनौ युगादिभूते मनौ प्रजापतौ राजनि सति तस्मिन् काले कृषिकाः सरस्वत्या नद्याः मधुरेण जलेन संयुतं एतमु इदानीं पुरतो दृश्यमानमेव यवन्त्यं यवधान्यविशेषम् अचर्कृषुः चेत्रेषु उप्तवन्तः योऽयं यवः इदानीं दृश्यते तस्य यवस्य कृषिमादिकाले प्रारब्धवन्तः इत्यर्थः। के कर्षकाः कश्च तत् स्वामीति तदुभयमुच्यते, इन्द्रः शतक्रतुः शतसङ्ख्याकैरश्वमेधैर्लब्धपदो यः सोऽयं सीरपतिः हलस्वाम्यासीत् सुदानवः सुष्ठु दातारो मरुतः कीनाशाः कृषौ कर्म्मकरा आसन्। अयं मन्त्रो यवाग्रयणस्य शेषभक्षणे विनियोज्यः॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवर्त्तयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

समाप्तश्च चतुर्थप्रपाठकः॥

# अथ तैत्तिरीय-ब्राह्मणभाष्ये

## द्वितीयकाण्डे पञ्चमप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
चतुर्थ उपहोमार्था मन्त्रा बहव ईरिताः ।
प्रपाठके पञ्चमेऽस्मिंस्तच्छेष उपवर्ण्यते ॥ २ ॥

तत्र प्रथमानुवाके प्रथमामृचमाह । "प्राणो रक्षति विश्व-मेजत् । इर्यो भूत्वा बहुधा बहूनि । स इत्सर्वं व्यानशे" इति । योऽयं मुखनासिकावर्त्ती प्राणवायुः सोऽयं बहुधा भूत्वा प्राणापानादिवृत्तिभेदेनानेकप्रकारो भूत्वा बहूनि जीवजातानि प्रति इर्य्यः प्रेरकः सन् एजत् कम्पमानं जङ्गमरूपं जगत् रक्षति । स इत् स एव प्राणः सर्वं जगत् व्यानशे व्याप्तवान् ॥

अथ द्वितीयामाह । "यो देवो देवेषु विभूरन्तः । आ-वृदूदात् क्षेत्रध्यगद्वृषा । तमित् प्राणं मनसोपशिक्षत । अग्रं देवानामिदमत्तु नो हविः" इति । दीव्यन्तीति देवाः प्राण-चक्षुःश्रोत्रादयः । तेषु देवेषु मध्ये यो मुख्यो देवः प्राणः श्वासकर्त्ता सोऽयमन्तरावृदूदात् पुनः पुनरन्तर्बहिश्चावर्त्तमा-

मत्वात्, विभुः कृत्स्नदेहव्यापी क्षेत्री क्षेत्रं शरीरं तस्य स्वामी। वृषा श्रेष्ठः तस्य दृष्टान्तः, अध्वगत् यथा लोके अध्वगो मार्गस्य गमनं करोति, एवमयं प्राणः प्रतिक्षणं उच्छ्वासनिश्वासौ करोति। तमित् तमेव प्राणं मनसोपशिक्षितभक्ति-पुरःसरमुपचरन् स प्राणो देवानां मध्ये अग्रं प्रथमं नोऽस्म-दीयं इदं हविरत्तु भक्षयतु। यदुक्तमैतरेयब्राह्मणे, चक्षुः श्रोत्रं मनो वाक् प्राणाः, ता एताः पञ्चदेवताः इमं विश्लिष्टाः पुरुषमिति। तदेतन्मन्त्रद्वयं प्राणदेवताविषयं द्रष्टव्यम्॥

अथ तृतीयामाह। "मनसश्चित्तेदम्। भूतं भव्यञ्च गुप्यते। तद्धि देवेष्वग्रियम्" [१]। यदिदं मनसोऽन्तःकरण-मस्ति तस्य चित्ता चित्तेन वृत्तिविशेषेण इदं दृश्यमानं भूतं भव्यञ्च अतीतमनागतञ्च सर्व्वं गुप्यते रक्ष्यते। यत् पूर्व्वं निष्पन्नं पुत्रभृत्यादिचेतनं धनधान्याद्यचेतनं यच्चेतःपरं सम्पादनीयं चेतनमचेतनञ्च तत्सर्व्वं मनसैव परिरक्ष्यते तद्रक्षोपायानां मनसा चिन्त्यमानत्वात् हि यस्मात् कारणात् तं मनो देवेषु दीप्यमानेषु इन्द्रियेषु अग्रियं श्रेष्ठं तस्मात्तेन रक्षणमुचितम्॥

अथ चतुर्थीमाह। "आ न एतु पुरश्चरम्। सह देवैरिमꣳ हवम्। मनः श्रेयसि श्रेयसि। कर्म्मन् यज्ञपतिं दधत्" इति। तन्मनो देवैर्दीप्यमानैरन्यैरिन्द्रियैः सह पुरश्चरं स्वयमग्रगामी भूत्वा नोऽस्मदीयं इमं हवम् आह्वानं प्रति एतु आभि-मुख्यं प्राप्नोतु। किं कुर्व्वन् श्रेयसि श्रेयसि कर्म्मन् तस्मिंस्त-स्मिन् प्रशस्ते कर्म्मणि यज्ञपतिं दधत् यजमानं स्थापयतु सर्व्वेषु

पुण्यकर्मसु प्रवर्त्तयत्वित्यर्थः। तदेतन्मन्त्रद्वयं मनोदेवताविषयं द्रष्टव्यम् ॥

अथ पञ्चमीमाह। "जुषतां मे वागिदꣳ हविः। विराड्देवी पुरोहिता। हव्यवाडनपायिनी" इति। इदं पुरोवर्त्ति मे हविः वाग्देवी सेवताम्। कीदृशी विराड्देवी देवताविग्रहात् पुरोहिता प्रथमतः प्रवृत्ता यद्यपि पुरस्सरत्वं मनस उक्तं तथापि कायव्यापारापेक्षया पूर्व्वभावित्वं प्रथमप्रवृत्तिः वचसो युक्ता। अतएव व्यवहारक्रमोऽन्यत्राम्नातः, कर्म्मणा करोतीति हव्यवाट् वाचा हि मन्त्रमुच्चार्य्य हविर्दीयते, तस्माद्वागियं हविर्वहतीत्युपचर्य्यते। अनपायिनी सर्व्वेष्वपि व्यवहारेष्वनुगता नहि वागिन्द्रियमन्तरेण अतीतानागतविषयो व्यवहारः सम्भवति ॥

अथ षष्ठीमाह। "यया रूपाणि बहुधा वदन्ति। पेशाꣳसि देवाः परमे जनित्रे। सा नो विराडनपस्फुरन्ती [२]। वाग्देवी जुषतामिदꣳ हविः" इति। यान्येतानि देवतिर्य्यङ्मनुष्यादिरूपाणि यानि च नील-पीत-शुक्ल-कृष्णादिरूपाणि तानि सर्व्वाणि यया वाचा मनुष्या बहुधा वदन्ति। इदं समीचीनमिदमसमीचीनमिति एतादृशं बहुधा वदन्ति। तथा परमे जनित्रे उत्तमे जन्मनि वर्त्तमाना देवाश्च यानि रमणीयानि रूपाणि यया वाचा वदन्ति सा वाग्देवी नोऽस्मदीयमिदं हविर्जुषताम्। कीदृशी वाक् अर्थप्रकाशकत्वेन विविधं राजमान इति विराट् अपस्फुरणम् अर्थापिधाने कुण्ठीभावः

तद्राहित्यादनपस्फुरन्ती। तदिदं मन्त्रद्वयं वाग्देवताविषयं द्रष्टव्यम्॥

अथ सप्तमीमाह। "चक्षुर्देवानां ज्योतिरमृते न्यक्तम्। अस्य विज्ञानाय बहुधा निधीयते। तस्य सुम्नमशीमहि। मा नो हासीद्विचक्षणम्" इति। देवानां दीव्यमानानां इन्द्रियाणां मध्ये चक्षुरिन्द्रियं ज्योतिर्विस्पष्टभासकं तच्चामृते मरणरहिते आदित्यस्वरूपे न्यक्तं निलीनम्। अतएव बह्वृचा आमनन्ति, आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशदिति। तदिदञ्चक्षुरस्य सर्व्वस्य नीलपीतादिरूपजातस्य बहुधा विज्ञानाय नानाविधज्ञान-सिद्धये निधीयते प्रजापतिना व्यवस्थाप्यते। तस्य चक्षुरिन्द्रियस्य सुम्नं सुखं तेन चक्षुरिन्द्रियेण रूपप्रकाशने सति यत् सुखं जायते तत्सर्व्वमशीमहि अश्नुवीमहि प्राप्नुयाम् विचक्षणं वि-शेषेण प्रकाशकं तच्चक्षुरिन्द्रियन्नोऽस्मान् माहासीत् कदाचि-दपि मा परित्यजतु॥

अथाष्टमीमाह। "आयुरिन्नः प्रतीर्य्यताम्। अनन्धाश्चक्षुषा वयम्। जीवा ज्योतिरशीमहि। सुवर्ज्योतिरुतामृतम्" इति। चक्षुर्देवताप्रसादेन नोऽस्मदीयमायुः इत् प्रतीयतां सर्व्वथा वर्द्धताम्, अनेन चक्षुषा युक्ता वयं जीवाः कथमनन्धाः सन्तः रूपाभिव्यक्तवृत्तिलक्षणज्योतिरशीमहि प्राप्नुयाम। उत अपि च सुवः स्वर्गस्थितममृतं ज्योतिर्विनाशरहितमादित्यप्रकाशमशीमहि चक्षुषा पश्येम। तदिदं मन्त्रद्वयं चक्षुर्देवताविषयं द्रष्टव्यम्॥

अथ नवमीमाह। "श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम्।

श्रोत्रेण वाचं बहुधोद्यमानाम्। श्रोत्रेण मोदश्च महश्च श्रूयते। श्रोत्रेण सर्व्वा दिश आशृणोमि" इति। यद्भद्रं कल्याणं यच्च सत्यं वचनं तत्सर्व्वं श्रोत्रेणैव सर्व्वे शृण्वन्ति। येयं वाक् प्राणिभिर्बहुधोच्यते तां सर्व्वां वाचम् अनेन श्रोत्रेन्द्रियेण सर्व्वो जनः शृणोति। किञ्च योऽयं मोदो हर्षविषयो वृत्तान्तः, यच्च महः पूजाविषयो वृत्तान्तः, स सर्व्वोऽपि श्रोत्रेणैव श्रूयते। किञ्च सर्व्वा दिशः योऽयं सर्व्वदिग्विषयो वृत्तान्तस्तमप्यहं श्रोत्रेण सर्व्वतः आशृणोमि॥

अथ दशमीमाह। "येन प्राच्या उत दक्षिणा। प्रतीच्यै दिशः शृण्वन्त्युत्तरात्। तदिच्छ्रोत्रं बहुधोद्यमानम्। अरान्न नेमिः परि सर्व्वं बभूव" [७] इति। एवं श्रोत्रेण प्राच्यादिदिग्भ्य आगतं शब्दं शृण्वन्ति तदेव श्रोत्रं बहुधोद्यमानम् उच्यमानं शब्दजातं सर्व्वं परिबभूव परिगृह्य वर्त्तते। रथनेमिरिव सर्व्वान् अरान्। चक्रस्य वहिर्वर्त्तमाना नेमिः, तदन्तर्व्वर्त्तिनोऽवयवाः कान्तसञ्ज्ञाः अराः। एतच्च मन्त्रद्वयं श्रोत्रविषयं द्रष्टव्यम्। एतेषां दशानां मन्त्राणां जातकर्म्मणि विनियोगं बौधायन आह। अथैनं दधिमधुघृतमिति समुदाहृत्य हिरण्येन प्राशयति। प्राणो रक्षति विश्वमेजदित्यनुवाकेन प्रत्यृचमिति॥

इति प्रथमोऽनुवाकः॥ १॥

## अथ द्वितीयोऽनुवाकः।

द्वितीयेऽनुवाके प्रथमामृचमाह। "उदेहि वाजिन्यो अप्स्वन्तः। इदꣳ राष्ट्रमाविश सूनृतावत्। यो रोहितो विश्वमिदं जजान। स नो राष्ट्रेषु सुधितान्दधातु" इति। हे वाजिन् अश्वमेधे कर्म्मणि प्रयुज्यमाने हे अश्व उदेहि जलमध्यादुद्गच्छ। अत्राश्वमेधे भारद्वाजसूत्रम्, अश्वमपोऽवगाह्य स्नापयित्वा समूह्य ततो ह्यस्तारमनुदकमुदानयति उदेहि वाजिन्नित्यष्टाभिरिति। अतोऽत्राश्वमेधगतमश्वं सम्बोध्योच्यते, योऽयमश्वो अप्स्वन्तर्वर्त्तते स त्वमुदेहि उद्गत्या च सूनृतावत् प्रीतियुक्तं इदं राष्ट्रमाविश। इहास्यतामिह भुज्यतामित्येवंरूपा वाणी सूनृता। अस्य चाश्वस्य प्रजापतिजन्यत्वमेव न तद्रूपत्वमुपचर्य्यं प्रशस्यते। योऽश्वः स्वकारणभूतप्रजापतिरूपेण रजोगुणयुक्ताद्रोहितः सन् इदं विश्वं जजान उत्पादयामास स प्रजापतिरूपोऽश्वो नोऽस्मान् तेषु राष्ट्रेषु सुधितान् सुखयुक्तान् कृत्वा स्थापयतु॥

अथ द्वितीयामाह। "रोहꣳ रोहꣳ रोहित आरुरोह। प्रजाभिर्वृद्धिं जनुषामुपस्थम्। ताभिः सꣳरब्धो अविदत् षडुर्व्वीः। गातुं प्रपश्यन्निह राष्ट्रमाहाः" इति। हे रोहित रोहिद्वर्णप्रजापतिस्वरूप अश्व रोहं रोहं भौमं भोगं स्वर्गभोगम् आरुरोह आरोहणं कुरु। काभिः, प्रजाभिः सह। कमिव, वृद्धिमिच्छतां प्रजानां सम्बन्धि उपस्थं प्रत्यारोहणमिव। ताभिः प्रजाभिः सह संरब्धः उत्साहयुक्तः सन् षडुर्व्वीरवि-

न्दत् ज्ञातवानसि। उर्व्वीः गातुं गन्तुं प्रपद्यसि॰ राष्ट्रम् आशाः आहृतवानसि, तव प्रेक्षणवशाद्राष्ट्रस्था जनाः सम्भिहिता इत्यर्थः॥

अथ तृतीयामाह। "आहार्षीद्राष्ट्रमिह रोहितः। मृधो व्यास्यदभयं नो अस्तु [१]। अस्मभ्यं द्यावापृथिवी शक्करीभिः। राष्ट्रं दुहाथामिह रेवतीभिः" इति। रोहितः त्वं राष्ट्रमिह आहार्षीत् आहृतवानसि। व्यास्यात् विरोधिनिष्यासयात् मृधः युद्धात् अस्याभिन्नप्रजापते तव प्रसादास्मो अभयमस्तु। अस्याभिन्नप्रजापते तव प्रसादात् द्यावापृथिवी द्यावापृथिव्यौ शक्करीभिः शक्करीच्छन्दोयुक्ताभिः रेवतीभिः सामाभिमानिनीभिर्देवताभिः सह अस्मभ्यम् अस्मदर्थं राष्ट्रं दुहाथां पूरितवत्यौ॥

अथ चतुर्थीमाह। "विमसर्श रोहितो विश्वरूपः। समाचक्राणः प्ररुहो रुहश्च। दिवं गत्वा य महता महिम्ना। वि नो राष्ट्रमुनत्तु पयसा स्वेन" इति। स रोहितः प्रजापतिः विमसर्श परामर्शं कृतवान्। अनेनेदं कर्म कृतम् अयमस्य फलस्य योग्य इति परामर्शः। कीदृशः प्रजापतिः, विश्वरूपः सर्व्वजगदाधारेण वर्त्तमानः। तथा समाचक्राणः,'सम्यगस्य-मानान् फलविशेषान् कुर्व्वाणः। ते च फलविशेषाः प्ररुहो रुहश्चेति शब्दद्वयेन निर्द्दिश्यन्ते। प्रकर्षेण रुह्यन्ते प्राप्यन्त इति प्ररुहः स्वर्गभोगाः, रुहो मानुषा भोगाः, तदुभयं कुर्व्वाणः। स प्रजापतिर्दिवं गत्वा यः स्वर्गं प्राप्य महता महिम्ना स्वकी-

येनात्याधिक्येन माहात्म्येन सोऽस्मदर्थमिदं राष्ट्रं स्वेन पयसा स्वकीयेन वृष्टिजलेन व्युनक्तु विशेषेण क्लेदयतु ॥

अथ पञ्चमीमाह। “यास्ते विशस्तपसा सम्बभूवुः। गायत्रं वत्समनु तास्त आगुः। तास्त्वाविशन्तु महसा स्वेन। सम्माता पुत्रो अभ्येतु रोहितः” [२] इति। हे रोहित प्रजापते त्वदीयेन तपसा या विशः प्रजाः सम्बभूवुः। तथा ह्यन्यत्राम्नायते, स तपोऽतप्यत। स तपस्तप्त्वा इदꣳ सर्व्वमसृजतेति। ते त्वदीयास्ताः प्रजा गायत्रं वत्समन्वागुः। एष वै गायत्रो वत्सो यदाग्रयण इति श्रुत्यन्तरादाग्रयणग्रहो गायत्र्याख्यधेनोर्वत्सस्थानीयः। तमाग्रयणाख्यं वत्सं अश्वमेधस्य मध्यमेऽहनि अनुष्ठितवन्तः। ताः प्रजाः स्वेन महसा स्वकीयेनानुष्ठितेन महिमाख्यग्रहेण त्वां विशन्तु। किं बहुना माता सर्व्वभूतानां सम्यङ्निर्माता पुत्रवद्रक्षकः रोहितोऽश्वरूपः प्रजापतिः अभ्येतु अस्मानभि-लक्ष्यागच्छतु ॥

अथ षष्ठीमाह। “यूयमुग्रा मरुतः पृश्निमातरः। इन्द्रेण सयुजा प्रमृणीथ शत्रून्। आ वो रोहितो अशृणोदभिद्यवः। त्रिसप्तासो मरुतः स्वादुसम्मुदः” इति। हे मरुतो यूयं सयुजः युष्माभिः सहावस्थितेनेन्द्रेण साकमस्मदीयान् शत्रून् प्रमृणीथ निराकुरुत। रोहितः प्रजापतिरूपोऽयमश्वः वो युष्मान् य आशृणोत् शत्रुक्षयकारिण एत इति भवदीयां कीर्त्तिं सर्व्वदा शृणोति। कीदृशा मरुतः उग्राः शत्रुविषये कोपयुक्ताः पृश्नि-मातरः एषान्ते पृश्निमातरः पृश्नेः पुत्राः उपमास इति हि

मन्त्रान्तरम् । पृश्नेर्वै पयसो मरुतो जाताः इति च हि ब्राह्मणम् । अभिद्यवः अभितो द्योतमानाः त्रिसप्तासः त्रिविधाः सप्तसङ्ख्या येषां ते त्रिसप्तासः, सप्तगणा वै मरुत इति ब्राह्मणाम्नानात्, मरुद्गणाः सप्तसङ्ख्याकाः, तत्र धूनिश्च ध्वान्तश्चेत्यारण्यकोऽनुवाकोक्तो गणो मध्यमः । तस्मात् पूर्व्ववर्त्तिनः ईदृङ् चेत्यादिनोक्तास्त्रयो गणाः, ततस्स सत्यश्चेत्यादिनोक्ता उत्तरभाविनस्त्रयो गणाः, तत्रैकस्मिन् गणत्रयेऽपि सप्तसङ्ख्याका विद्यन्ते । तस्मात्ते त्रिसप्तासः इत्युच्यन्ते । स्वादुना हविषा सम्यक्मोदन्त इति स्वादुः सम्मुदः । अत्र मरुत इति सम्बन्धं पदं द्विराम्नातम्, तच्च वाक्यद्वये योजनीयम् । हे मरुतः वसून् प्रणीय, हे मरुतो युष्मान् रोहितो प्टणोदिति योजना ॥

अथ सप्तमीमाह । "रोहितो द्यावापृथिवी जजान । तस्मिंस्तन्तुं परमेष्ठी ततान । तस्मिञ्छिश्रिये अज एकपात् । अदृंहद्द्यावापृथिवी बलेन" इति । योऽयं रोहितोऽग्निरूपः प्रजापतिः स एव पुरा द्यावापृथिव्यावुत्पादितवान् । तस्मिन् रोहितेऽग्नौ परमेष्ठी प्रजापतिस्तन्तुमश्वमेधतन्तुपरम्परां ततान विस्तारितवान् । एक एव पद्यते गच्छतीत्येकपात् । तथा च मन्त्रान्तरम्, सूर्य्य एकाकी चरतीति । स च मनुष्यवत् सृष्टिमध्ये पुनः पुनर्जन्मरहितत्वादजः । तादृशः सूर्य्योऽपि तस्मिन् रोहितेऽग्नौ शिश्रिये आश्रितवान् । रोहिताग्नेश्च प्रजापतिद्वारा जगत्सृष्टिकर्त्तृकत्वात् सूर्य्यस्य तदाश्रितत्वं युक्तम् । स च रोहितः स्वकीयेन बलेन द्यावापृथिव्यावदृंहत् दृढीचकार ॥

अथाष्टमीमाह। "रोहितो द्यावापृथिवी अदृꣳहत्। तेन सुवः स्तभितं तेन नाकः [३]। सो अन्तरिक्षे रजसो विमानः। तेन देवाः सुवरन्वविन्दन्" इति। रोहितः प्रजापतिः द्यावापृथिव्यौ दृढीकृतवान्। तेन रोहितेन सुवः स्तभितं स्वर्गलोकं यथा अधो न पतति तथा स्तम्भितम्, तथा नाकः स्वर्गविशेषोऽपि तेन स्तम्भितः। स एव रोहितः अन्तरिक्षे रजसो रञ्जकस्य ज्योतिर्गणस्य उदकस्य वा विमानः विशेषेण निर्म्माता, तेन रोहितेन देवाः इन्द्रादयोऽपि सुवः अन्वविन्दन् स्वर्गं लब्धवन्तः। एवमेतैरष्टभिर्मन्त्रैरश्वमेधगतस्याश्वस्य जलमध्यादुद्गमनं कुर्य्यात्॥

अथ नवमीमाह। "सुसेवन्त्वा भानवो दीदिवाꣳसम्। समग्रासो जुह्वो जातवेदः। उक्षन्ति त्वा वाजिनमाघृतेन। सꣳसमग्ने युवसे भोजनानि" इति। हे जातवेदः जुह्वः जुह्वाद्याः स्रुचः समग्रा घृतपूर्णाः सत्यः स्वनिष्ठेन घृतेन त्वामुक्षन्ति। कीदृशा जुह्वाद्याः भानवः घृतपूर्णत्वात् भासमानाः, कीदृशं त्वां सुसेवं सुखेन सेवितुं शक्यम् दीदिवांसम् अत्यन्तदीप्यमानं वाजिनं वेगवन्तम्। अत्र त्वेति पदं द्वितीयान्तं द्विराम्नातम्, तत्रैकं प्रथमान्तत्वेनोपरि नेतव्यम्। हे अग्ने त्वं भोजनानि भोक्तुं योग्यानि अस्मदीयहवींषि संसम् अत्यन्तसम्यक्त्वेन युवसे मिश्रयसि स्वीकरोषीत्यर्थः॥

अथ दशमीमाह। "अग्ने शर्द्ध महते सौभगाय। तव द्युम्नान्युत्तमानि सन्तु। सञ्जास्पत्यꣳ सुयममाकृणुष्व। शत्रूयता-

सभितिष्ठा सहांऽसि" इति। हे अग्ने अस्माकं महते सौभगाय शर्द्धं उत्सहस्व तव सम्बन्धीनि द्युम्नानि उत्तमानि मणि-मुक्तादीनि धनानि अस्माकं सन्तु। जास्पत्यं जायापतिभावं सुयमं सुष्ठुनियतं समाकृणुष्व सम्यक् सम्पादय। शत्रूयतां शात्रवमिच्छतां पुरुषाणां सहांसि तेजांसि अभितिष्ठ अभित आक्रमस्व। इमं मन्त्रद्वयमाग्नेये कर्म्मणि द्रष्टव्यम्। तत्रोत्त-रस्य विवाहकर्म्मण्यपि बौधायन आह, अथ तथोपविश्याऽन्वा-रब्धायामुपयमनीर्जुहोत्यग्ने शर्द्धं महते सौभगायेति ॥

इति द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

तृतीयानुवाके प्रथमामृचमाह। "पुनर्न इन्द्रो मघवा ददातु। धनानि शक्रो धन्यः सुराधाः। अर्व्वाचीनं कृणुतां याचितो मनः। श्रुष्टी नो अस्य हविषो जुषाणः" इति। अस्म-दीयानि धनानि यानि नष्टानि तानि सर्व्वाणि पुनरपि नः अस्माकं इन्द्रो ददातु। कीदृश इन्द्रः, मघवा धनवान् शक्रः शक्तियुक्त इत्यर्थः। धन्यः धनदानार्हः सुराधाः शोभनान्न-युक्तः। तादृशोऽयमिन्द्रः याचितोऽस्माभिः प्रार्थितः सन् स्वकीयं मनः अर्व्वाचीनं कृणुताम् अस्मदभिमुखं करोतु। नोऽस्मदीयस्यास्य हविषः भागं श्रुष्टी जुषाणः शीघ्रं सेव्यमानः स इन्द्रः अस्मदभीष्टं करोतु ॥

अथ द्वितीयामाह। "यानि नो जिनं धनानि। जहर्थ शूर मन्युना। इन्द्रानुविन्द नस्तानि। अनेन हविषा पुनः" इति। हे शूर इन्द्र त्वं विहितस्याननुष्ठानात् निषिद्धसेवनाद्वा पापयुक्तान् नः अस्मान् जिनन् शिक्षार्थं हिंसन् मन्युना अस्माकं क्रोधेन यान्यस्मदीयानि धनानि जहर्थ अपहृतवानसि। अनेनास्मदीयेन हविषा तुष्टः सन् पुनरपि नोऽस्माकं तानि धनानि अनुविन्द अनुग्रहेण लभस्व देहीत्यर्थः। एतदुभयं नष्टधनस्य पुनःप्राप्त्यर्थे कस्मिंश्चित्कर्मविशेषे ऐन्द्रे द्रष्टव्यम्॥

अथ तृतीयामाह। "इन्द्र आशाभ्यः परि। सर्वाभ्योऽभयं करत् [१]। जेता शत्रून् विचर्षणिः" इति। विचर्षणिः विविच्य द्रष्टा शत्रूणां जेतेन्द्रः सर्वाभ्यो दिग्भ्यः परितो वर्त्तमानाभ्यः अस्माकम् अभयं करत् करोतु। अयं मन्त्रः पूर्व्वत्रैव उपहोमार्थः॥

अथ चतुर्थीमाह। "आकूत्यै त्वा कामाय त्वा समृधे त्वा। पुरोदधे अमृतत्वाय जीवसे" इति। हे इन्द्र आकूत्यादिसिद्ध्यर्थं त्वां पुरोदधे पुरस्कृत्य सेवे, आकूतिः सङ्कल्पः कामो भोगः समृत् समृद्धिः अमृतत्वमपमृत्युराहित्यं जीवनमनादिसम्पत्तिः॥

अथ पञ्चमीमाह। "आकूतिमस्यावसे। काममस्य समृद्ध्यै। इन्द्रस्य युञ्जते धियः" इति। लोके बुद्धिमन्तः कर्त्तारः अवसे स्वरक्षणार्थं समृद्ध्यै धनादिसमृद्ध्यर्थञ्च अस्येन्द्रस्याकूतिं सङ्कल्पं काममिच्छां धियो बुद्धिविशेषांश्च युञ्जते आश्रयन्ति। न त्विन्द्रनैरपेक्ष्येण स्वतन्त्रानाकूत्यादीन् लभन्ते॥

अथ षष्ठीमाह। "आकूतिं देवीं मनसः पुरोदधे। यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामः। विदेयमेनद्धृदये निविष्टम्" [२] इति। अहमाकूतिं सङ्कल्पाभिमानिनीं देवीं कार्य्येषु कुर्व्वाणस्य मनसः पुरोदधे सङ्कल्पपूर्व्वमेव सर्व्वं कार्य्यं मदीयेन मनसा क्रियत इत्यर्थः। सेयमाकूतिः यज्ञस्य मातृस्थानीया सती मे मम सुहवा सुखेन आह्वातुं शक्यास्तु, सकामः कामसहितोऽहं मदीयेन मनसा यत् कार्य्यं कर्त्तुमिच्छामि मदीये हृदये निविष्टमेनत् तत्कार्य्यं विदेयं लभेयम्। अस्य मन्त्रत्रयस्य कर्म्मणामादौ सङ्कल्पे विनियोगं बौधायन आह, आकूत्या वेदनं करोति। आकूत्यै त्वा कामाय त्वा समृधे त्वेति॥

अथ सप्तमीमाह। "सेदग्निरग्नीꣳ रत्येत्यन्यान्। यत्र वाजी तनयो वीडुपाणिः। सहस्रपाथा अक्षरा समेति" इति। यत्र यस्मिन्नग्नौ यजमानेनोपचरिते सति तनयः पुत्रः वाजी अन्नवान् वीडुपाणिर्य्यागदानादिषु दृढहस्तः सहस्रपाथाः सहस्रसङ्ख्याकेनान्नेन युक्तः सन् अक्षरा अक्षरेणापि अविनाशेन जीवनेन समेति सङ्गच्छते। सेदग्निः स एव उपचरितोऽग्निः अन्यानितरयजमानसम्बन्धीनग्नीन् अत्येति अतिक्रामति। सोऽयं मन्त्रः प्रायणीयेष्टौ स्विष्टकृतः पुरोऽनुवाक्या॥

अथाष्टमीमाह। "आशानां त्वाशापालेभ्यः। चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यः। विधेम हविषा वयम्" इति। हे पशो त्वाम् आशानां दिशां मध्ये आशापालेभ्यः विशि-

ष्टानां दिशां पालेभ्यः चतुर्भ्यः इन्द्र-यम-वरुण-सोमेभ्यः अग्र-तेभ्यः देवेभ्यः समर्पयामीति शेषः। भूतस्य अस्मिन् कर्म्मणि प्राप्तस्य पशोः अध्यक्षेभ्यः स्वामिभ्यः देवेभ्यो वयं हविषा इदं विधेम शीघ्रमेव परिचरेम ॥

अथ नवमीमाह। "विश्वा आशा मधुना सꣳसृजामि। अनमीवा आप ओषधयो भवन्तु। अयं यजमानो मृधो व्यस्यताम्। अगृभीताः पशवः सन्तु सर्व्वे" इति। विश्वा आशाः सर्व्वा दिशः अहं मधुना मधुरेण वृष्ट्युदकेन संसृ-जामि संयोजयामि। के च आप ओषधयश्च अनमीवा रोग-रहिताः भवन्तु सन्तु। अयञ्च यजमानः मृधः शत्रून् व्यस्यतां निरस्यतु। सर्व्वे पशवः अगृभीताः व्याघ्र-तस्करादिभिरस्वी-कृताः सन्तु। इमं मन्त्रद्वयं पशौ सञ्ज्ञप्यमाने यजमानेन जप्यम्। तथा दिवः श्येनीसञ्ज्ञिकास्विष्टिषु आशायै चरुमि-त्यस्य याज्यानुवाक्ये। तथा च तयोः प्रतीकद्वयमाम्नातम्, आ-शानां त्वा विश्वा आशा इति ॥

अथ दशमीमाह। "अग्निः सोमो वरुणो मित्र इन्द्रः। बृहस्पतिः सविता यः सहस्री। पूषा नो गोभिरवसा सरस्वती। त्वष्टा रूपाणि समनक्तु यज्ञैः" इति। अग्न्यादयस्त्वष्टृपर्य्यन्ता ये दश देवाः सन्ति तेषां मध्ये एकैक एव सोऽस्माकम् अवसा रक्ष-णाय गोभिः समनक्तु संयोजयतु। यज्ञैश्च समनक्तु, त्वष्टा देवो रूपाणि पुत्रपौत्रादिशरीराण्यपि समनक्तु। यः सहस्रीति सवितृ-विशेषणं यः सहस्रसङ्ख्याकरश्मियुक्तः सोऽयं सवितेति योज्यम् ॥

अथैकादशीमाह। "त्वष्टा रूपाणि दधती सरस्वती। पूषा भगꣳ सविता नो ददातु। बृहस्पतिर्दददिन्द्रः सहस्रम्। मित्रो दाता वरुणः सोमो अग्निः" [३] इति। अयं त्वष्टा रूपाणि पुत्रादिशरीराणि ददातु। सरस्वती दधती धारयित्री भूयात्। पूषा सविता बृहस्पतिश्च प्रत्येकं नः अस्मभ्यं भगं सौभाग्यं ददातु। इन्द्रः सहस्रं सहस्रसङ्ख्याकं गोधनादिकं ददत् ददातु। मित्रवरुणसोमाग्निष्वेकैकः सहस्रस्य दाता भवतु। एतच्च मन्त्रद्वयं मित्रविन्दायामिष्टौ याज्यानुवाक्ये। तथा चाश्वलायनो मित्रविन्दामाह, वैराजीत्यादिनोदाजहार॥

इति तृतीयोऽनुवाकः॥ ३॥

अथ चतुर्थोऽनुवाकः।

प्रथमामृचमाह। "आ नो भर भगमिन्द्र द्युमन्तम्। नि ते देष्णस्य धीमहि प्ररेके। उर्व्व इव पप्रथे कामो अस्मे। तमापृणा वसुपते वसूनाम्" इति। हे इन्द्र द्युमन्तं दीप्यमानं भगं धनादिसौभाग्यं नः अस्मभ्यम् आभर सम्पादय। ते तव देष्णस्य दानशीलस्य प्ररेके अतिशये सति अतिरिक्तं धनं यागार्थं तुभ्यं निधीमहि। उर्व्व इव वाडवाग्निरिव अस्माकं कामः पप्रथे प्रार्थितोऽभूत्। वसूनां वसुपते बहुधनस्वामिन् तं काममापृणाः सर्व्वतः पूरय॥

अथ द्वितीयामाह। "इमं कामं मन्दया गोभिरश्वैः। चन्द्रवता राधसा पप्रथश्च। सुवर्य्यवो मतिभिः स्तुभ्यं विप्राः। इन्द्राय वाहः कुशिकासो अक्रन्" इति। हे इन्द्र इममस्माकं कामं गोभिरश्वैः त्वया दत्तैः मन्दय हर्षहेतुं कुरु। चन्द्रवता हिरण्यवता राधसा रत्नादिधनेन च कामं पप्रथः प्रथय, सुवर्य्यवः स्वर्गमिच्छन्तो विप्राः ये मेधाविनः कुशिकासः कुशिकास्तु विश्वामित्रस्य पुत्राः मतिभिः स्तोत्रैः तुभ्यमिन्द्राय वाहः अक्रन् वाहमकुर्व्वन् त्वदीया स्तुतिरेव त्वदागमनहेतुत्वात् वाहनमित्यर्थः। एतच्चोभयं ऐन्द्रे कर्म्मणि द्रष्टव्यम्॥

अथ तृतीयामाह। "इन्द्रस्य नु वीर्य्याणि प्रवोचम्। यानि चकार प्रथमानि वज्री [१]। अहन्नहिमन्वपस्ततर्द। प्र वक्षणा अभिनत् पर्व्वतानाम्" इति। वज्री वज्रहस्त इन्द्रः प्रथमानि मणिमुख्यानि यानि वीर्य्याणि शौर्य्याणि चकार, इन्द्रस्य सम्बन्धीनि तानि वीर्य्याणि नु क्षिप्रं प्रवोचं प्रवक्ष्यामि, प्रथमं तावत् अहिं वृत्राख्यम् असुरं अहन् हतवान्। अनु तदनन्तरम् अपस्ततर्द मेघस्थितं जलं मेघभेदेन पृथिव्यां व्यापितवान्। अथ पर्व्वतानां वक्षणा पक्षान् प्राभिनत् प्रकर्षेण भिन्नवान्॥

अथ चतुर्थीमाह। "अहन्नहिं पर्व्वते शिश्रियाणम्। त्वष्टास्मै वज्रꣳ स्वर्य्यं ततक्ष। वाश्रा इव धेनवः स्यन्दमानाः। अञ्जः समुद्रमवजग्मुरापः" इति। पर्व्वते पर्व्वतसमाने मेघे शिश्रियाणम् आश्रितम् अहिं जलनिरोधकम् अहिनामानमसुरम्

अहन् हतवान्। त्वष्टा देवः अस्मै इन्द्राय स्वर्य्यं स्वर्गाय हितं वज्रं ततच तीक्ष्णीकृतवान्। ततो वज्रेण वृष्टिनिरोधके शत्रौ हते सति स्यन्दमाना आपः समुद्रं समुद्रसमानं भूप्रदेशम् अञ्जः समञ्जसं यथा भवति तथा अवजग्मुः प्राप्ताः। अपां दृष्टान्तः, वाश्राः धेनव इव, यथा वत्समाकारयितुं शब्दं कुर्व्वन्त्यः धेनवो दुहन्ति, तद्वत्॥

अथ पञ्चमीमाह। "वृषायमाणो वृणीत सोमम्। त्रिकद्रुकेष्वपिबत्सुतस्य। आ सायकं मघवादत्त वज्रम्। अहन्नेनं प्रथमजामहीनाम्" [१] इति। वृषायमाणः घासं जिघत्सुः वृषभ इव बलवान् देवानां पानार्थं इन्द्रः सोममवृणीत। ततः त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतेषु त्रिकद्रुकनामकेषु यज्ञेषु सुतस्याभिषुतस्य सोमस्य रसमर्यमिन्द्रोऽपिबत्, तथा मघवेन्द्रः सायकं बाणवत्तीक्ष्णं वज्रमादत्त स्वीकृतवान्। आदाय च अहीनामसुराणां मध्ये प्रथमजां प्रथमोत्पन्नमेनं वृत्रं अहन् हतवान्॥

अथ षष्ठीमाह। "यदिन्द्राहन् प्रथमजामहीनाम्। आन्मायिनाममिनाः प्रोत मायाः। आत्सूर्य्यं जनयन्द्यामुषासम्। तादीत्ना शत्रून्न किल विवित्से" इति। हे इन्द्र यद्यदा त्वम् अहीनां प्रथमजां हतवानसि। आत् अनन्तरं मायिनां मायायुक्तानामसुराणां माया उत सर्व्वा अपि मायाः प्रामिनाः प्रकर्षेण विनाशितवानसि। आत् अनन्तरं सूर्य्यं जनयन् स्वर्भानुसञ्ज्ञकेन असुरेण प्रयुक्ते तमसि मग्नं सूर्य्यं प्रादुर्भावयन्,

तथोषामं द्यां जनयन् उषःकालं दीप्तं कुर्व्वन् वर्त्तसे। तादीत्ना तादृशान् शत्रून् कदाचिदपि त्वं नाविवत्से किल सर्व्वथा न लभसे॥

अथ सप्तमीमाह। "अहन् वृत्रं वृत्रतरं व्यꣳसम्। इन्द्रो वज्रेण महता वधेन। स्कन्धाꣳसीव कुलिशेनाविवृक्णा। अहिः शयत उपपृक् पृथिव्याम्" इति। अयमिन्द्रो महता प्रौढेन वधेन वधसाधनभूतेनानेन वज्रेण वृत्रमहन् वृत्रनामकमसुरं हतवान्। कीदृशं, वृत्रतरम् अतिशयेन लोकत्रयावरकम्, स इमांल्लोकान् वृणोदिति ब्राह्मणम्; व्यंसं छेदनेनांसरहितम्। ततोऽयमहिः वृत्राख्योऽसुरः इन्द्रेण हतः सन् पृथिव्यामुपपृक् उपसम्पृक्तः पतितोऽशयिष्ट। तत्र दृष्टान्तः, कुलिशेन कुठारेण विवृक्णः विशेषतः छिन्नः स्कन्धांसीव वृक्षस्य स्कन्धा यथा भूमौ निपतन्ति तद्वत्॥

अथाष्टमीमाह। अयोध्येव दुर्म्मद आ हि जुह्वे। महावीरन्तु विबाधमृजीषम् [३]। नातारीरस्य समृतिं वधानाम्। सꣳरुजानाः पिपिष इन्द्रशत्रुः" इति। दुर्म्मदो मदान्धो वृत्रः इन्द्रम् आजुह्वे हि युद्धार्थम् आहूतवान् किल। तत्र दृष्टान्तः, अयोध्येव यथा लोके योद्धुमशक्तः वृथैव वाचा युद्धार्थं गर्ज्जनं करोति तद्वत्। कीदृशमिन्द्रं, महावीरं शूरेषु मध्ये अत्यन्तमेव शूरं विबाधं बाधरहितं ऋजीषं सोमसम्बन्धिनम्। ऋजीषस्यापि भत्त्रकत्वात् ऋजीषरूपं तादृशस्यैवेन्द्रस्य शत्रुः वृत्रः अस्य इन्द्रस्य वधानां समृतिं सङ्गमं नातारीः न प्राप्तवान्। इन्द्रं हन्तुं न शक्तोदित्यर्थः। प्रत्युत रुजानाः भङ्गं प्राप्नुवन्तीः

स्वकीया एव सेनाः सम्पिपिषे सम्यक् पिष्टवान् वज्रेण हता भूमौ पतन् सन् समीपवर्त्तिन, सर्व्वान् शूरान् चूर्णीकृतवानित्यर्थः। इन्द्रस्य नु वीर्य्याणीत्यारभ्य पञ्चमन्त्राः निष्केवल्यशस्त्रे अन्तर्भावनीयाः॥

अथ नवमीमाह। "विशां विहाया अरतिः। वसुर्दधे हस्ते दक्षिणे। तरणिर्न शिश्रथत। श्रवस्यया न शिश्रथत्। विश्वस्मा इदिषुध्यसे। देवत्रा हव्यमूहिषे। विश्वस्मा इत्सुकृते वारमृण्वति। अग्निर्द्वारा व्यृण्वति" ।४। इति। अयमग्निः विशां विशात्मकः, विहायाः विशिष्टगतियुक्तः, अरतिः उपरतिरहितः हविर्वहनाय पुनः पुनरागमने नास्यस्थोपरतिः, वसुः निवासहेतुः, तादृशोऽयमग्निः ब्राह्मणस्य दक्षिणे हस्ते दधे धृत आसीत्। अतएव तत्र होम आम्नातः, ब्राह्मणस्य दक्षिणे हस्ते होतव्यमिति। तरणिः दुःखभ्यस्तारयिता न शिश्रथत् अयः शिथिलो न भवति। तत्र हेतुः, श्रवस्यया हविर्लक्षणाऽन्नेच्छया न शिश्रथत् पुनः पुनरभिवृद्धं चाभूत् न तु शिथिलः विश्वस्मा इत् सर्व्वस्मै जगत् एव सर्व्वजगद्रक्षणार्थं इषुध्यसे ईश्वरो भवसि। इषु ऐश्वर्य्ये इति धातुः। देवत्रा सर्व्वेषु देवेषु हव्यमूहिषे अस्मदीयं हव्यं वहसि विश्वस्मा इत् सुकृते सर्व्वस्मा अपि पुण्यकृते तदर्थं वारमृण्वति वार्य्यन्ते प्रवेशार्थिनः प्राणिनः यत्र तत्सुवर्गस्य द्वारं वारमित्युच्यते, तदपावृणोति, स्पष्टीक्रियते, अयमग्निर्द्वारं स्वर्गद्वारम्। तदेव विवृणोति विवृतं करोति। अन्त्येष्टिरित्यादियमष्टपदी॥

अथ दशमीमाह । "उदुज्जिहानो अभिकाममीरयन्। प्रपृञ्चन् विश्वा भुवनानि पूर्व्वथा। आ केतुना सुषमिद्धो यजिष्ठः। कामन्नो अग्ने अभिहर्य्य दिग्भ्यः" इति। हे अग्ने दिग्भ्यः सकाशात् नोऽस्मदीयं काममभीष्टमर्थम् अभिहर्य्य सम्पादय। किं कुर्व्वन् उदुज्जिहानः अत्यन्तमूर्द्धमुद्गच्छन् काममभीष्टमर्थम् अभिमतं ईरयन् प्रेरयन्। विश्वा भुवनानि यथा पूर्व्वथा यथा पूर्व्वं केतुना स्वकीयेन धूमेन प्रपृञ्चन् प्रकर्षेण संयोजयन्। कीदृशोऽग्निः सुषमिद्धः अत्यन्तदीप्तः, यजिष्ठः अतिशयेन यष्टा ॥

अथैकादशीमाह। "जुषाणो हव्यममृतेषु दूढ्यः। आ नो रयिं बहुलां गोमतीमिषम्। निधेहि यक्षदमृतेषु भूषन्" इति। हे अग्ने हव्यं जुषाणः अस्मदीयं हविः सेवमानः त्वममृतेषु देवेषु दूढ्यः यागरहितात् पुरुषादानीय नोऽस्माकं रयिं धनं बहुलामतिप्रभूतां गोमतीं गोभिर्युक्तां इषमन्नं निधेहि नितरां सम्पादय। दुर्बुद्धिः पुमान् देवेषु भक्तिं न करोति तदीयं धनमाहृत्य अस्मभ्यं देहीत्यर्थः। अस्मदीयस्तु यजमानः अमृतेषु देवेषु मध्ये भूषन् स्वात्मानमलं कुर्व्वन् देवत्वमात्मन इच्छन्नित्यर्थः। स यजमानस्त्वद्दत्तेन धनादिना यक्षत् यागं करिष्यति। तदेतन् मन्त्रत्रयमाग्नेये कर्म्मणि द्रष्टव्यम्॥

अथ द्वादशीमाह। "अश्विना यज्ञमागतम्। दाशुषः पुरुदंससा। पूषा रक्षतु नो रयिम्" [५] इति। हे अश्विनौ युवां पुरुदंससा भूरिकर्म्माणौ सन्तौ दाशुषो हविर्दत्तवतो

यजमानस्य यज्ञमागतम् आगच्छतम्। पूषा च नोऽस्मदर्थं रयिं रक्षतु ॥

अथ त्रयोदशीमाह। "इमं यज्ञमश्विना वर्द्धयन्ता। इमौ रयिं यजमानाय धत्तम्। इमौ पशून् रक्षतां विश्वतो नः। पूषा नः पातु सदमप्रयुच्छन्" इति। हे अश्विनौ इमम् अस्मदीयं यज्ञं वर्द्धयन्ता वृद्धिं प्रापयन्तौ। इमौ युवां यजमानाय रयिं धनं धत्तं सम्पादयतम्। इमौ युवां नोऽस्मदीयान् पशून् विश्वतो रक्षतां सर्व्वतो भयात् पालयतम्। अयं पूषा अप्रयुच्छन् प्रमादमकुर्व्वन् नोऽस्मदीयं सदं सदस्थानं पातु। एतच्चोभयमश्विभ्यां पूष्णः पुरोडाशं द्वादशकपालं निर्व्वपतीत्यस्य याज्यानुवाक्ये ॥

अथ चतुर्दशीमाह। "प्र ते महे सरस्वति। सुभगे वाजिनीवति। सत्यवाचे भरे मतिम्" इति। हे सुभगे सौभाग्ययुक्ते, हे वाजिनीवति अन्नयुक्ते, हे महे महति, हे सरस्वति, सत्यवाचे अनृतवाक्यरहितायै ते तुभ्यं मतिं मदीयां स्तुतिं प्रभरे सम्पादयामि ॥

अथ पञ्चदशीमाह। "इदन्ते हव्यं घृतवत्सरस्वति। सत्यवाचे प्र भरेमा हवीꣳषि। इमानि ते दुरिता सौभगानि। तेभिर्वयꣳ सुभगासः स्याम" [६] इति। हे सरस्वति ते तुभ्यं घृतवत् घृतयुक्तमिदं हव्यम् अस्माभिः सम्पादितमिति शेषः। सत्यवाचे तस्यै सरस्वत्यै इमानि सम्पादितानि हवींषि प्रभरेम प्रकर्षेण समर्पयामः। दुरिता यानि दुरितानि यानि अस्माभिः

कृतानि तानि सर्व्वाणि हे सरस्वति ते प्रसादात् सुभगानि सुकृतानि सम्पन्नानि। तेभिः तैः सुकृतैर्वयं शुभगासः सौभाग्ययुक्ताः स्याम। एते ऋचौ सरस्वते सत्यवाचे चरुमित्यस्य याज्यानुवाक्ये॥

इति चतुर्थोऽनुवाकः॥ ४॥

---

अथ पञ्चमोऽनुवाकः।

अथ पञ्चमानुवाके प्रथमामृचमाह। "यज्ञो रायो यज्ञ ईशे वसूनाम्। यज्ञः सस्यानामुत सुचितानाम्। यज्ञ इष्टः पूर्व्वचित्तिं दधातु। यज्ञो ब्रह्म एवाँ अप्येतु देवान्" इति। यज्ञो यज्ञस्वामी यो देवः सः रायो धनस्य मणिमुक्तादिरूपस्य ईशे स्वामी भवति, तथा यज्ञो वसूनां निवासहेतूनां गृहाणामीशे स्वामी भवति। तथायं यज्ञः सस्यानां ब्रीह्याद्योषधीनां स्वामी, उत अपि च सुचितीनां शोभनभूमीनां ईशे स्वामी। इष्टो यज्ञः पूर्व्वचित्तिं दधातु। पूर्व्वचित्तिं स्वर्गं दधातु। तथान्यत्राम्नातम्, द्यौरासीत् पूर्व्वचित्तिरिति। ब्रह्म वेदाः ब्रह्म एवान् मन्त्रयुक्तो यज्ञः देवानप्येतु देवान् प्राप्नोतु॥

द्वितीयामाह। "अयं यज्ञो वर्द्धतां गोभिरश्वैः। इयं वेदिः स्वपत्या सुवीरा। इदं बर्हिरतिबर्हीꣳष्यन्या। इमं यज्ञं विश्वे अवन्तु देवाः" इति। अयमस्माभिरनुष्ठीयमानो यज्ञः गोभिरश्वैश्च सह वर्द्धतां वृद्धिं प्राप्नोतु। इयं वेदिर्यज्ञसम्बन्धिनी स्वपत्या शोभनपुत्रप्रदा, सुवीरा शोभनभृत्यप्रदा

चास्तु। इदञ्च वेद्यामास्तीर्णं बर्हिः अन्या बर्हींषि इतरयजमानसम्बन्धीनि बर्हींषि अतिक्रामतु, इमं चास्मदीयं यज्ञं विश्वेदेवा अवन्तु रक्षन्तु। एते ऋचौ दिवः श्येनिनामकास्विष्टिषु यज्ञाय चरुमित्यस्य याज्यानुवाक्ये॥

तृतीयामाह। "भग एव भगवाँ अस्तु देवाः। तेन वयं भगवन्तः स्याम [१]। तं त्वा भग सर्व्व इज्जोहवीमि। स नो भग पुर एता भवेह" इति। हे देवा यो भगाख्यो देवः स एव भगवान् सौभाग्यवानस्तु, तेन देवेन वयं सर्व्वे भगवन्तः सौभाग्ययुक्ताः स्याम। हे भग तादृशं त्वां सर्व्व इत् सर्व्व एव जोहवीमि आह्वयामीत्यर्थः। हे भगदेव इह कर्म्मणि नोऽस्माकं पुर एता पुरतो गन्ता भव॥

अथ चतुर्थीमाह। "भग प्रणेतर्भग सत्यराधः। भगेमां धियमुदवददन्नः। भग प्रणो जनय गोभिरश्वैः। भग प्र नृभिर्नृवन्तः स्याम" इति। हे प्रणेतः प्रकर्षेण नेतुं कुशल हे भगदेव अस्मान् कर्म्मणि प्रणयेति शेषः। हे सत्यराधः सत्यधन भगदेव अस्मभ्यं धनं देहीति शेषः। हे भग नः अस्मभ्यं इमां धियं ददत् कर्म्मानुष्ठानबुद्धिं प्रयच्छन् उदवदुत्कर्षेण रक्षन्। हे भगदेव नः अस्मान् गोभिरश्वैः प्रजनय तद्युक्तान् कुर्व्वित्यर्थः। हे भग त्वत्प्रसादात् वयं नृभिः पुत्रपौत्रादिभिः पुरुषैर्नृवन्तः पुरुषवन्तः स्याम। एतद्द्वयं भगाय चरुं वातायै गृह इत्यस्मिन् कर्म्मणि द्रष्टव्यम्॥

पञ्चमीमाह। "शश्वतीः समा उपयन्ति लोकाः। शश्वतीः

समा उपयन्त्यापः। इष्टं पूर्त्तं शश्वतीनां समानाꣳ शाश्वतेन। हविषेष्ट्वानन्तं लोकं परमारुरोह" [२] इति। लोकाः सर्व्वे प्राणिनः शश्वतीः शाश्वतीः समाः निरन्तरवर्त्तिनः संवत्सरा-नुपयन्ति प्राप्नुवन्ति। एकस्मिन् संवत्सरेऽतीतेऽपि पुनरन्यं संवत्सरं प्राप्नुवन्ति। तथैव अपः शाश्वतीः समा उपयन्ति निरन्तरं प्रवहन्ति, यथैतावुभौ दृष्टान्तौ तथा शाश्वतीनां समानां निरन्तरवर्त्तिनां संवत्सराणां सम्बन्धि इष्टं पूर्त्तं श्रौतं स्मार्त्तञ्च कर्म्म प्रवर्त्ततां कर्म्मानुष्ठानमनवच्छिन्नमस्त्वित्यर्थः। तेन शाश्वतेन निरन्तरानुष्ठितेन हविषा देवमिष्ट्वा अनन्तं विनाशरहितं परमुत्कृष्टं लोकमारुरोह पुरुष आरोहति। कृष्यादिफलवत् श्रौतस्मार्त्तकर्म्मफलं सहसा न विनश्यति किन्तु चिरमनुभवितव्यमित्यर्थः। अस्यामृचि देवताभिव्यक्त्यभावात् अनिरुक्तः प्रजापतिरित्यनुसारेण प्राजापत्ये कर्म्मण्येषा द्रष्टव्या॥

षष्ठीमाह। "इयमेव सा या प्रथमा व्यौच्छत्। सा रूपाणि कुरुते पञ्च देवी" इति। या सृष्ट्युपक्रमे प्रथमा उषा व्यौच्छत् व्युष्टासीत्। इयमेव सा इदानीम् अस्मान् प्रति सूर्य्योदयात् पूर्व्वकालरूपा उषा प्रादुर्भवति सैव रूपाणि पुनः पुनरावर्त्तत इत्यर्थः। सा देव्येकैव सती पञ्चरूपाणि पञ्चर्त्तून् तल्लिङ्गानि वा कुरुते॥

सप्तमीमाह। "द्वे स्वसारौ वयतस्तन्त्रमेतत्। सनातनं वि-ततꣳ षण्मयूखम्। अवान्याꣳस्तन्तून् किरतो धत्तो अन्यान्। नावपृज्याते न गमाते अन्तम्" इति। अहश्च रात्रिश्च एते द्वे

देवते स्वसारौ परस्परभगिन्यौ ते एतत् संवत्सरात्मकं तन्त्रं तन्तुनिष्पन्नं वस्त्रं वयतः, यथा कुविन्दस्तन्तुभिः वस्त्रं वयति निष्पादयति एवमेते संवत्सरं निष्पादयत इत्यर्थः। तच्च संवत्सरात्मकं कीदृशं, सनातनम् अनादिकालसिद्धम्। नहि संवत्सरप्रवाहस्यास्माभिर्दृश्यमान आदिः कश्चिदस्ति। अतएव विततं वस्त्रगतदीर्घतन्तुवत् विस्तीर्णषण्मयूखं षट्सङ्ख्याका ऋतवः मयूखाः शङ्कुस्थानीया यस्य तादृशं कुविन्देन हि तन्तुप्रसरणाय शङ्कवो निखन्यन्ते तद्वदृतव इत्यर्थः। कुविन्दो हि वस्त्रनिर्माणकाले कांश्चित् दीर्घतन्तून् अधः कृत्वा मध्ये तिर्य्यक्तन्तून् धारयति एवमेते अपहोरात्रदेवते अन्यान् कांश्चिदहर्विशेषान् तन्तून् अस्तमयकालेषु अवकिरतः अधोगतान् कुरुतः, अन्यांश्च रात्रिरूपान् तन्तून् अस्तमयादूर्द्धं धत्तो धारयतः। एते अहोरात्रदेवते कदाचिदपि नावप्रज्याते। तस्यैव व्याख्यानम्, अन्तं न गमाते संवत्सरात्मकवस्त्रनिर्माणस्य समाप्तिं न गच्छतः निरन्तरं संवत्सरपरम्परां निष्पादयत इत्यर्थः। एतच्च मन्त्रद्वयं क्रमात् उषोदेवताके अहोरात्रदेवताके च कर्मविशेषे द्रष्टव्यम्॥

अथाष्टमीमाह। "आ वो यन्तूदवाहासो अद्य। वृष्टिं ये विश्वे मरुतो जुनन्ति। अयं यो अग्निर्मरुतः समिद्धः। एतं जुषध्वं कवयो युवानः" [३] इति। हे मरुतः ये विश्वे सर्व्वे मेघाः वृष्टिं जुनन्ति जवेन त्वरया प्रेरयन्ति वो युष्मत्सम्बन्धिनः उदवाहासः उदकवाहिनो मेघाः अद्यास्मिन् कर्म्मणि

आयन्तु आगच्छन्तु। कवयः सर्व्वज्ञाः युवानो नित्यतरुणाः मरुतोऽयं यो अग्निरिह समिद्धः तमेतं जुषध्वं वृष्ट्यर्थं सेवध्वम्। अग्निर्वा इतो वृष्टिमुदीरयति। मरुतः सृष्टान्नयन्तीति ब्राह्मणम्॥

नवमीमाह। "धारावरा मरुतो धृष्णुवोजसः। मृगा न भीमास्तविषेभिरूर्म्मिभिः। अग्नयो न शुशुचाना ऋजीषिणः। भृमिन्धमन्त उप गा अवृण्वत" इति। एते मरुतः गाः गोवद्दुहाना वृष्टीः उपावृण्वत समीपे वृतवन्तः वृष्टिं सम्पादितवन्त इत्यर्थः। कीदृशा मरुतः वृष्टिधारया भूमिं वृण्वन्ति व्याप्नुवन्तीति धारावराः। धृष्णु धर्षणक्षमम् ओजोबलं येषां ते धृष्णुवोजसः। अतएव मृगा न सिंहव्याघ्रादिमृगा इव तविषेभिः बलवद्भिः ऊर्म्मिभिर्गमनैः भीमा भयङ्कराः अग्नयो न शुशुचानाः अग्नय इव दीप्यमानाः, ऋजीषिणः ऋजीषोपलक्षितसोमपानयुक्ताः भृमिं भ्राम्यतीति, भ्रमिः तं मेघं धमन्तश्चालयन्तः। एतच्चोभयं मारुते कर्म्मणि द्रष्टव्यम्॥

दशम्या एकादश्याश्च प्रतीके दर्शयति।"विचक्रमे त्रिर्देवः" इति। विचक्रम इत्येका त्रिर्देव इत्यपरा एते जुष्टो नर इत्यत्र व्याख्याते, एतच्चोभयं वैष्णवे कर्म्मणि द्रष्टव्ये॥

द्वादशीमाह। "आवेधसं नीलपृष्ठं बृहन्तम्। बृहस्पतिꣳ सदने सादयध्वम्। सादद्योनिं दम आदीदिवाꣳसम्। हिरण्यवर्णमरुषꣳ सपेम" इति। हे ऋत्विग्यजमानाः बृहस्पतिं देवं सदने यज्ञस्थाने सादयध्वम्। कीदृशम् आवेधसं सर्व्वतः

स्पष्टारं, नीलपृष्ठं पृष्ठभागे नीलं, बृहन्तं गुणैर्महान्तम्, सादद्योनिं योनौ स्वर्गस्थाने यजमानान् सादयन्तं, दमे गृहे आदीदिवांसं सर्व्वतो दीप्यमानं, हिरण्यवर्णं स्वर्णसमानकान्तिम्, अरुषं रोषरहितं तादृशं बृहस्पतिं सपेम सम्भजामः ॥

चयोदशीमाह। "स हि शुचिः शतपत्रः स शुन्ध्युः [४]। हिरण्यवाशीरिषिरः सुवर्षाः। बृहस्पतिः स स्वावेश ऋष्वाः। पुरू सखिभ्य आ सुतिं करिष्ठः" इति। स हि प्रसिद्धः बृहस्पतिः शुचित्वादिगुणोपेतः शुचिः शुद्धः शतपत्रः शतसङ्ख्याकवाहनोपेतः बृहस्पतिः शुन्ध्युः अन्येषामपि शोधकः हिरण्यवाशीः हिरण्यवाक्यं शतमस्मै देहि सहस्रमस्मै देहीत्यादिरूपं तेन वाक्येनोपेतः इषिरः सर्व्वैरेषणोयः, सुवर्षाः स्वर्गप्रदः। सः बृहस्पतिः स्वावेशः सुष्ठु आवेष्टुं समाश्रावयितुं शक्यः, ऋष्वाः ऋषिः अतीन्द्रियद्रष्टा, तादृशः बृहस्पतिः सखिभ्यः सखिसदृशेभ्यः यजमानेभ्यः पुरु प्रभूतम् आसुतिम् अन्नं करिष्ठः अतिशयेन कर्त्ता। एतच्च मन्त्रद्वयं स्वेतां बार्हस्पत्यामित्यस्य पशोः सूक्ते द्रष्टव्यम्। तथा च प्रतीकद्वयमाम्नातम्, आविधसꣳ सꣳशुचिरिति ॥

चतुर्द्दशीमाह। "पूषꣳस्तव व्रते वयम्। न रिष्येम कदाचन। स्तोतारस्त इह स्मसि" इति। हे पूषन् तव व्रते त्वदीये कर्म्मणि कदाचन न रिष्येम मा विनश्येम। इह कर्म्मणि ते तव स्तोतारः स्मसि भवामः ॥

पञ्चदशीमाह। "यास्ते पूषन्नावो अन्तः समुद्रे। हिरण्मयीरन्तरिक्षे चरन्ति। याभिर्यासि दूत्याꣳ सूर्यस्य। कामेन कृतः श्रव इच्छमानः" [५] इति। हे पूषन् समुद्रे समुद्रवद्विस्तीर्णे अन्तरिक्षे अन्तर्मध्ये हिरण्मयीः सुवर्णवर्णाः ते तव सम्बन्धिन्यः नावो नौनाम्न्यः दीप्तयः यास्चरन्ति याभिश्च रश्मिभिस्त्वं सूर्यस्य दूत्यां यासि दूतत्वं प्राप्नोसि। सूर्या हि स्वर्भानुसञ्ज्ञकेनासुरेण तमसावृतः सन् दुःखितायाः सूर्यायाः समीपे पूषणं रश्मियुक्तं दूतत्वेन प्रेषितवान्। तदिदमाख्यानं शाखान्तरे द्रष्टव्यम्। तथा च सूक्तेऽप्याम्नायते, तं देवासो अददुः सूर्याया इति। स त्वं ताभिर्दीप्तिभिर्युक्तः सन् श्रव इच्छमानः कीर्त्तिमाकाङ्क्षन् कामेन कृतः स्वेच्छयैव दूतकर्म्मणि प्रेरितः। एतदुभयं पूष्णो कर्म्माणि द्रष्टव्यम्। सूक्तेऽप्येकस्य प्रतीकमाम्नातम्, यास्ते पूषन्नावो अन्तरिति॥

षोडशीमाह। "अरण्यान्यरण्यान्यसौ। या प्रेव नश्यसि। कथा ग्रामं न पृच्छसि। न त्वाभीरिव विन्दती" इति। अरण्यानीशब्देन महारण्यमुच्यते दिगुक्तिरादरार्था। हे अरण्यानि या त्वं प्र नश्यतीव जनरहितत्वात् नष्टेव प्रतीयसे असौ त्वं कथा कथं ग्रामं न पृच्छसि। सर्व्वो हि जनो मार्गे गच्छन् स्वनिवासाय ग्रामः कुत्रेत्येवं पृच्छति त्वन्तु तथा न पृच्छसि। तथा ग्रामात् वहिष्ठं पुरुषं रात्रौ भिया प्रविशति त्वां न विन्दति भियं न लभन्त एव श्रुतिर्विस्मयार्था। तदेवमरण्याभिमानी देवता स्तूयते॥

सप्तदशीमाह। "वृषारवाय वदते। यदुपावति चिच्चिकः। आघाटीभिरिव धावयन्। अरण्यानिर्महीयते" इति। वृष्टिकाले रवः शब्दविशेषो यस्य पक्षिविशेषस्य सोऽयं वृषारवः स हि निर्जनादरण्यान्या उपरि निर्गत्य निरन्तरं चिदित्यादिशब्दं वदति तथावदते वृषारवाय पक्षिणे प्रत्युत्तरवादी चिच्चिकाख्योऽन्यः पक्षी यत् यदा उपावति समीपमागत्य तदीयमभिवदनं प्रत्युत्तरदानेन परिपालयति। एकस्मिन् पक्षिणि चिचिशब्दं कुर्व्वति सति अन्येऽपि तज्जातीयाः पक्षिणः तदानीमेव चिचिशब्दान् कुर्व्वते। तदानीं इयमरण्यानिः महीयते पूज्यते। तत्र दृष्टान्तः, आघाटीभिरिव काण्डवीणादिभिः धावयन्निव शोधयन्निव यथा गानकाले गायकः पुरुषः स्वरविशेषान् वीणादिभिः शोधयति तादृशकुशलैर्गायकैः सेव्यमानः राजा यथा लोके पूज्यते, एवमुक्तिप्रत्युक्तिरूपचिचिशब्दसहस्राणि कुर्व्वद्भिः सूक्ष्मैः पक्षिविशेषैः युक्तेयमरण्यानिः शोभत इत्यर्थः॥

अष्टादशीमाह। "उत गाव इवादन्। उतो वेश्मेव दृश्यते [६]। उतो अरण्यानिः सायम्। शकटीरिव सर्ज्जति" इति। उत अपि च गाव इव, यथा ग्रामे गावो गृहे वर्त्तन्ते तथा अरण्ये गवयाद्याः मृगविशेषाः तृणान् भक्षयन्तो वर्त्तन्ते। उत अपि च लतागुल्मादिकं तत्र तत्र वेश्मेव गृह इव दृश्यते। उत अपि च इयमरण्यानिः सायंकाले वृक्षान्तरालेषु तमसाच्छन्नेषु शकटीः सर्ज्जतीव लक्ष्यते, यथा कृपिकाः सायंकाले

धान्यविशेषैः शकटानि पूरयित्वा स्वगृहे समागच्छन्ति एव-मत्रापि अहनि वृक्षाग्रेषु दृश्यमानानि फलानि रात्रौ न दृश्यन्ते। तथा सति सर्व्वाणि फलानि लुत्वा शकटे पूरयित्वा गृहेषु नीतानीति मुग्धानां बालानां प्रतिभासो भवति सो-ऽयं प्रतिभासोऽत्र अरण्यवर्णनार्थमुच्यते॥

एकोनविंशीमाह। "गामङ्गैष आह्वयति। दार्वङ्गैष उपा-वधीत्। वसन्नरण्यान्याᳪ सायम्। अक्रुक्षदिति मन्यते" इति। अपि च अरण्यान्यामहनि गाश्चारयन् गोपालः अङ्गशब्देन प्रियसम्बोधनवाचिना गामाह्वयति। यस्मिन्नाह्वानार्थे शब्दे गवां सङ्केतः क्लृप्तः तादृशस्य शब्दस्य उपलक्षकोऽयमङ्गशब्दः गोपालस्य शब्दं श्रुत्वा यतः कुतश्चिदपि गावः समागच्छन्त्येव तदिदमाश्चर्य्यम्। अपि च चित्रस्य निर्म्माता यस्तक्षा स एषः स्वापेक्षितं दारुकाष्ठमरण्यान्यामुपावधीत् छिनत्तीत्यर्थः। यस्य यादृशं काष्ठमपेक्षितं तस्य तादृशमस्ति इत्यपरमिद-माश्चर्य्यम्। तस्याश्चर्य्यस्य द्योतकोऽयमङ्गशब्दः; अङ्ग, हन्तेत्यर्थः। अपि च दीर्घयात्रासु मार्गे गच्छन्नरण्यान्यां सायंकाले यः पुमान् वसति सोऽयं महतो वृक्षस्याधस्तादृसन् बहून् बहून् पक्षिशब्दान् श्रुत्वा सेयमरण्यान्याक्रोशतीति मन्यते तदिद-मन्यदाश्चर्य्यम्॥

अथ विंशीमाह। "न वा अरण्यानिर्हन्ति। अन्यश्चेन्ना-भिगच्छति। स्वादोः फलस्य जग्ध्वा। यत्र कामं निपद्यते" इति। ये पुरुषास्तपश्चरितुमरण्यान्यां निवसन्ति तान् प्रति

अन्यो व्याघ्रादिर्नाभिगच्छति चेत् तदानीमियमरण्यानिर्म्न वै निहन्ति सर्व्वथा न मारयति अयमर्थः। अरण्यप्रयुक्तः कश्चिदपि बाधो नास्ति, व्याघ्रादिप्रयुक्तस्तु उपायेन परिहर्त्तुं शक्यत इति। यस्यामरण्यान्यां स्वादोः फलस्य जग्ध्वा स्वादुफलं भक्षयित्वा कामं निपद्यते स्वेच्छया निवसितुं शक्यते। न खलु तत्रान्नसम्पादनाय प्रयासोऽस्ति नापि निवासस्थानसङ्कोचः। तादृशीयमरण्यानीति गुणस्तुतिः॥

एकत्रिंशीमाह। "आञ्जनगन्धीꣳ सुरभीम्। बह्वन्नामकृषीवलाम्। प्राहं मृगाणां मातरम्। अरण्यानीमशꣳसिषम्" [७] इति। अहमनुष्ठाता इमामरण्यानीं प्राशंसिषं प्रकर्षेण शंसनं कृतवानस्मि। कीदृशीमाञ्जनगन्धीम्, अञ्जनेषु कर्पूरादिसुगन्धिद्रव्यप्रक्षेपेण यादृशं गन्धं सम्पादयन्ति, तादृशगन्धोपेतां विचित्रैः पुष्पैः फलैश्चानुकूलो गन्धः समुत्पाद्यते। अतएव सुरभीं सुगन्धोञ्चम्पकपुष्पादिजन्यो हि सुगन्धः वर्त्तते। भक्षितुं योग्यानां फलविशेषाणाम् अनेकत्वात् बह्वन्नां तादृशानां वृक्षाणां स्वत एवोत्पन्नत्वेन कृषेरनपेक्षणादकृषीवलां तत्रोत्पन्नानां मृगाणां पालकत्वान्मातृसदृशीम्। तदेतदरण्यानीत्यादिकमरण्यवासिभिस्तपस्विभिः स्वरक्षार्थं देवतां प्रार्थयितुं जपितव्यम्॥

इति पञ्चमोऽनुवाकः॥ ५॥

---

अथ षष्ठोऽनुवाकः ॥

षष्ठानुवाके प्रथमामृचमाह। "वार्त्रहत्याय शवसे। पृतना षाह्याय च। इन्द्र त्वावर्त्तयामसि" इति। हे इन्द्र वार्त्रहत्याय शत्रुबधाय शवसे अस्मदीयाय बलाय पृतना-षाह्याय वैरिसेनाभिभवाय च त्वामावर्त्तयामसि पुनः पुनः भजाम ॥

द्वितीयामाह। "सुब्रह्माणं वीरवन्तं बृहन्तम्। उरुं गभीरं पृथुबुध्नमिन्द्र। श्रुतर्षिमुग्रमभिमातिषाहम्। अस्मभ्यं चित्रं वृषणं रयिन्दाः" इति। हे इन्द्र अस्मभ्यं रयिन्दाः धनं देहि, वयन्तु त्वां भजाम इत्यध्याहारः। कीदृशं त्वां सुब्रह्माणं शोभनब्राह्मणोपेतम् ऋत्विग्भिस्तुत्यमित्यर्थः। वीरवन्तं वीरैः पुत्रैः भृत्यैश्चोपेतं बृहन्तं ऐश्वर्य्येण महान्तम्। उरुं गभीरम् अत्यन्तं गभीरम् अतिप्रबुद्धमित्यर्थः। पृथुबुध्नं विस्तीर्णमूलं प्रजापतिसृष्टमित्यर्थः। प्रजापतिरिन्द्रमसृजतेति श्रुतेः। श्रुतर्षिं ऋषिषु मन्त्रेषु ऐन्द्रसूक्तादिषु श्रूयमाणम् उग्रं वैरिषु क्रोधिनम् अभिमातिषाहं पाप्मनो विनाशकम्। कीदृशं चित्रं मणि-मुक्तादिरूपेण बहुविधं वृषणं कामाभिवर्षणक्षमम्। एतच्चो-भयं ऐन्द्रे कर्म्मणि द्रष्टव्यम् ॥

तृतीयामाह। "क्षेत्रियै त्वा निर्ऋत्यै त्वा। द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि [१]। शिवे ते द्यावापृथिवी उभे इमे" इति। एतस्य मन्त्रजातस्य जातकर्म्म-विषयत्वात् कुमारोऽत्र सम्बोध्यते। हे कुमार त्वां क्षेत्रीनामिकाया रक्षोजातेः द्रुहः द्रोहात् वो मुञ्चामि मुक्तं करोमि।

बालोपद्रवकारिणी काचित् रक्षोजातिः क्षेत्री, तथान्या रक्षो-जातिः निर्ऋतिः, तस्या अपि द्रोहात् त्वां मुञ्चामि। तथा वरुणस्य पाशो रोगविशेषः तस्मादपि त्वां मुञ्चामि। ब्राह्मणे परिवृढाय जातकर्मादिसंस्काराय त्वामनागसं दोषरहितं करोमि। ते त्वदर्थं इमे द्यावापृथिवी उभे अपि शिवे शान्ते भवेताम्॥

चतुर्थीमाह। "शन्ते अग्निः सहाद्भिरस्तु। शं द्यावापृथिवी सहौषधीभिः। शमन्तरिक्षꣳ सह वातेन ते। शन्ते चतस्रः प्रदिशो भवन्तु" इति। हे कुमार त्वदर्थमयमग्निः अद्भिः सह शं सुखहेतुरस्तु। द्यावापृथिव्यौ चौषधीभिः सह शं सुख-हेतु स्ताम्। अन्तरिक्षञ्च वातेन सह ते शमस्तु। प्राच्याद्याः प्रकृष्टदिशश्चतस्रोऽपि ते शं भवन्तु॥

पञ्चमीमाह। "या दैवीश्चतस्रः प्रदिशः। वातपत्नीरभि-सूर्यो विचष्टे*। तासां त्वा जरस आदधामि। प्र यक्ष्म एतु निर्ऋतिं पराचैः" इति। वातपत्नीः वायोः पालयित्रीः दैवीः देवतारूपाः याश्चतस्रः प्रदिशः अभिलक्ष्य सूर्यो विचष्टे विशे-षेण ख्यापयति, तासां दिशां जरसे जरार्थं त्वां दधामि स्थापयामि। यावद्दिशो न जीर्य्यन्ति तावत्त्वां जीवयामीत्यर्थः। योऽयं यक्ष्मो व्याधिः सः पराचैः त्वत्तः पराङ्मुखो भूत्वा नि-र्ऋतिं रक्षोजातिं प्रैतु प्राप्नोतु॥

षष्ठीमाह। "अमोचि यक्ष्माद्दुरितादवर्त्यै [२]। द्रुहः

---

* अभिचष्टे इति वा पाठः।

पाशान्निर्ऋत्यै चोदमोचि। अहा अवर्त्तिमविदत्स्योनम्। अप्य-भूद्भद्रे सुकृतस्य लोके" इति। अयं कुमारो यस्मात् व्याधेः दुरितादिहेतोः पापात् अवर्त्यै वर्त्तिः वर्त्तनं जीवनहेतुः सम्पत् तद्विपरीतं दारिद्र्यम् अवर्त्ति तस्या अपि अमोचि मुक्तोऽभूत्। तथा निर्ऋत्यै राक्षसजातेः द्रुहो द्रोहरूपात् पाशाच्च अयं कुमार उदमोचि उत्कर्षेण मुक्तोऽभूत्। अवर्त्तिं दारिद्र्यमहाः अहासीः परित्यक्तवान्। स्योनं सुखम् अविदत् लब्धवान्। भद्रे कल्याणे सुकृतस्य लोके पुण्यकर्म्मणः फलभूते स्थानेऽपि अभूत् अवस्थितवान्॥

सप्तमीमाह। "सूर्य्यमृतं तमसो ग्राह्या यत्। देवा अमु-ञ्चन्नसृजन् व्येनसः। एवमिमं क्षेत्रियाज्जामिशꣳसात्। द्रुहो मुञ्चामि वरुणस्य पाशात्" इति। तमोविद्धस्य सूर्य्यस्य प्रती-कारं देवाश्चक्रुः। तथाच ब्राह्मणम्, सुवर्भानुरासुरः सूर्य्यं तमसा विध्यत्तस्मै देवाः प्रायश्चित्तिमैच्छन्निति। सोऽयं वृत्ता-न्तोऽत्र दृष्टान्तत्वेन अभिधीयते, यत् यथा देवा ऋतम् अन्धकारप्राप्तं सूर्य्यं ग्राह्या ग्राहका आवरकं तमस अमुञ्चन् मुक्तमकुर्व्वन्। तथा तद्धेतोरेनसः पापात् व्यसृजन् वियोजित-वन्तः। एवमहं जनकः इमं कुमारं वरुणस्य पाशात् मुञ्चामि मुक्तं करोमि। कीदृशात् पाशात् क्षेत्रियात् क्षेत्रं गर्भस्थानं तत्रोत्पन्नत्वात् जामिशंसात् आलस्यप्रख्यापकात्, द्रुहो बाध-कात्। क्षेत्रियै त्वेत्यादिमन्त्राणां जातकर्म्मणि विनियोगं बौधायन आह, अथैनं स्नापयति क्षेत्रियै त्वा निर्ऋत्यैवेति॥

अथाष्टमीमाह। "बृहस्पते युवमिन्द्रश्च वस्वः। दिव्यस्येशाथे उत पार्थिवस्य। धत्तꣳ रयिꣳ स्तुवते कीरयेचित् [२]। यूयं पात स्वस्तिभिः सदा नः" इति। हे बृहस्पते त्वं इन्द्रश्चेत्येतौ युवां दिव्यस्य वस्वः दिवि भवस्य वसुनः धनस्य ईशाथे स्वामिनौ भवथः। उत अपि च पार्थिवस्य पृथिव्यां भवस्य धनस्य ईशाथे। स्तुवते स्तोत्रं कुर्वते कीरयेचित् कर्त्रे यागं बृहस्पतिसवाख्यं कुर्वते, रयिं धनं सम्पादयतम्। हे इन्द्राबृहस्पती सपरिवारा यूयं नः अस्मान् स्वस्तिभिः क्षेमैः सदा पात रक्षत। एतस्य मन्त्रस्य बृहस्पतिसवयागे यजमानाभिषेके विनियोगमापस्तम्ब आह, आज्येन माध्यन्दिने सवने कृष्णाजिन आसीनमभिषिञ्चति शुक्रामन्थिनो व्यासंस्रावेण बृहस्पते युवमिति॥

नवमीमाह। "देवायुधमिन्द्रमाजोहुवानाः। विश्वावृधमभि ये रक्षमाणाः। येन हताः दीर्घमध्वानमायन्। अनन्तमर्थमनिवर्त्स्यमानाः" इति। येनेन्द्रेण हताः वृत्रादयः दीर्घमध्वानमायन् मरणं प्राप्ता इत्यर्थः। तमिन्द्रमभिलक्ष्य ये यजमानाः रक्षमाणाः प्रतीचां कुर्वन्तः आजोहुवानाः सर्व्वत आह्वानं कुर्व्वन्तो वर्त्तन्ते, कीदृशमिन्द्रं देवायुधं देवार्थं योद्धारम्, विश्वावृधं विश्वस्य वर्द्धयितारम्, ते यजमानाः इन्द्रसेविनः अनिवर्त्स्यमानाः इतः परं मनुष्यलोके पुनरावृत्तिरहिताः सन्तः अनन्तं विनाशरहितम् अर्थं सर्व्वैरर्थनीयं लोकमायन् प्राप्ताः। सोऽयं मन्त्र ऐन्द्रे कर्म्मणि द्रष्टव्यः॥

दशमीमाह। "यत्ते सुजाते हिमवत्सु भेषजम्। मयोभूः शन्तमा यद्धृदोऽसि। ततो नो देहि सीबले" इति। सीबला-शब्दः काञ्चिदोषधिं वल्लीरूपामाचष्टे। सा च हिमवत्सानुषू-त्पद्यते। हिमवत्सु पर्व्वतविशेषेषु सुजाते सुष्ठूत्पन्ने हे ओषधे ते त्वदीयं यद्भेषजं रोगविनाशं औषधमस्ति यद्यतः त्वं हृदो हृदयस्य शन्तमा सर्व्वोपद्रवशमनहेतुः मयोभूः सुखस्य भाव-यित्री चासि। हे सीबले एतत्-सञ्ज्ञके ओषधे ततस्तादृश्या-त्वत्सकाशात् तदौषधं नो देहि॥

एकादशीमाह। "अदो गिरिभ्यो अधि यत् प्रधावसि। सꣳ-शोभमाना कन्येव शुभ्रे [४]। तां त्वा मुद्गला हविषा वर्द्ध-यन्ति। सा नः सीबले रयिमाभाजयेह" इति। हे ओषधे यद्यदा त्वं गिरिभ्यः पर्व्वतेभ्यः सकाशात् अदः प्रत्यक्षं यथा भवति तथा अधिप्रधावसि अधिकं वल्लीरूपा सर्व्वतः प्रसरसि। तत्र दृष्टान्तः, संशोभमाना कन्येव, यथा सर्व्वैराभरणैः सम्यक् शोभमाना कन्या स्वयंवरार्थम् आगतानां वराणां पुरतः सञ्चरति, तद्वत्। हे शुभ्रे निर्म्मले ओषधिदेवते तां त्वा ता-दृशीं शुभ्रां त्वां मुद्गलाः मुद्गलगोत्रोत्पन्नाः महर्षयो हविषा वर्द्धयन्ति। हे सीबलाख्ये ओषधिदेवते सा त्वमिह कर्म्मणि अस्मभ्यं रयिमाभाजय धनं सम्पादय। रोगनिवर्त्तकमौषध-मेवात्र धनम्। एते उभे ऋचौ एतदोषधिदेवताके शाखा-न्तरगते कर्म्मणि याज्यानुवाक्ये॥

अथ द्वादशीमाह। "पूर्व्वं देवा अपरेणानुपश्यञ्जन्मभिः।

जन्मान्यवरैः पराणि। वेदानि देवा अयमस्मीति माम्। अह५ हित्वा शरीरं जरसः परस्तात्'' इति। हे देवाः अहम् अपरेणाधमेनानेन जन्मना पूर्व्वं जन्मानुपश्यन् इदानीं वर्त्ते, तथैव अपरैः निकृष्टैः मनुष्यजन्मभिः पराणि उत्कृष्टानि देवजन्मानि वेदानि लभेय। इदानीन्तने जन्मनि प्रयत्नमन्तरेण स्वतः प्रवृत्तां वेदशास्त्रादिवासनां दृष्ट्वा पूर्व्वमप्येतादृशजन्मसम्पन्नमिति निश्चीयते। अतएव अभिज्ञा आहुः, प्रपेदिरे प्राक्तनजन्मविद्या इति। सोऽयं दृष्टान्तः, वथं यथा पूर्व्वजन्मादिवासितमिहजन्मनि फलितम्, एवमत्रापि अनुष्ठितम्, उत्तरत्र फलीष्यतीति जानमोः अतो नु विलाम्याया देवतायाः प्रसादात् अहं हेदेवाः जरसः परस्तात् स्वशरीरं हित्वा लोकान्तरे अयमीदृशो देवोऽस्मीति मां वेदानि ज्ञातुं शक्नुयाम्॥

त्रयोदशीमाह। ''प्राणापानौ चक्षुः श्रोत्रम्। वाचं मनसि सम्भृताम्। हित्वा शरीरं जरसः परस्तात्। आ भूतिं भूतिं वयमश्नवामहै'' इति। द्वावेतौ प्राणापानौ उच्छ्वासनिश्वासरूपौ वायू यदपि चक्षुःश्रोत्रमित्यादिकं ज्ञानेन्द्रियं या वागपि मनसि सम्भृता सम्बद्धा, वाक् बुद्धिमनसा ध्यायति तद्वाचा वदतीति श्रुतेर्वाचो मनसि सम्बद्धत्वम्। इयञ्च वाक्कर्म्मेन्द्रियाणां सर्व्वेषामुपलक्षणम्। तदिदं प्राणापानादिकं सर्व्वं गृहीत्वा वयं जरसः परस्तात् शरीरं हित्वा भूतिं भूतिं तत्तल्लोकस्थितं तत्तदैश्वर्य्यमासमन्तादश्नवामहै प्राप्नुवाम। एते

ऋचौ दिवःश्येनिष्विष्टिषु अनुविन्दे चरुमित्यत्र याज्यानुवाक्ये। अत एव तत्र प्रतीकद्वयमाम्नातम्। पूर्व्वं देवा अपरेण प्राणापानाविति॥

चतुर्द्दशीमाह। "इमा एव ता उषसो याः प्रथमा व्यौच्छन्। ता देव्यः कुर्व्वते पञ्चरूपा। शश्वतीर्नावपृज्यन्ति। न गमन्त्यन्तम् [५] इति। या उषसः प्रथमाः प्रथमभाविन्यः सृष्ट्यादौ वर्त्तमानाः व्यौच्छन् व्युष्टिं प्रभातमकुर्व्वन्। ता उषसः इमा एव इदानीं प्रतिदिनं वर्त्तमाना एव तास्चोषसो देव्यः पञ्चसङ्ख्याकानि रूपाणि कुर्व्वते वसन्तादीनि तत्तल्लिङ्गानि कुर्व्वते। शश्वतीः निरन्तरं वर्त्तमानास्ता उषसः नावपृज्यन्ति कदाचिदपि न समाप्यन्ते। तदेव स्पष्टीक्रियते, अन्तमवसानं न गमन्ति न प्राप्नुवन्ति। सोऽयमत्र उषोदेवताके कर्म्मणि द्रष्टव्यः॥

इति षष्ठोऽनुवाकः॥ ६ ॥

---

अथ सप्तमोऽनुवाकः।

सप्तमानुवाके प्रथमामृचमाह। "वसूनां त्वाधीतेन रुद्राणामूर्म्या। आदित्यानां तेजसा। विश्वेषां देवानां क्रतुना। मरुतां मेम्ना जुहोमि स्वाहा" इति। हे अग्ने त्वां जुहोमि, कीदृशं त्वां वसूनामष्टानां सम्बन्धि यदधीतं मन्त्रजातं तेन सहितम्। रुद्राणामेकादशानां सम्बन्धिनी येयं मूर्म्मिः उत्कर्षः तेन सहितम्। आदित्यानां द्वादशानां सम्बन्धि यत्तेजः तेन

सहितम्। विश्वेषां देवानां सम्बन्धि यः क्रतुः सङ्कल्पः कर्मानुष्ठानं वा तेन सहितम्। मरुतां सम्बन्धि योऽयं मेधा मतिविशेषः तेन सहितम्। एतस्य मन्त्रस्य सावित्रचयने विनियोगमापस्तम्ब आह, अपरं चतुर्गृहीतं वसूनां त्वाधीतेनेति जुहोतीत्यनुवर्त्तते॥

द्वितीयामाह। "अभिभूतिरहमागमम्। इन्द्रसखा स्वायुधः। आस्वाऽऽशासु दुष्यहः" इति। हे अग्ने अहमागमं त्वत्समीपे समागतोऽस्मि त्वमप्याशासु दिक्षु भूतिः भूतित्वादिगुणैर्युक्तः आस्व उपविश। अभिभूतिः वैरितिरस्कारक्षमः इन्द्रसखा इन्द्रस्य प्रियः स्वायुधः शोभनैरायुधैरुपेतः, दुष्यहः केनापि तिरस्कर्त्तुमशक्यः। अयं मन्त्रः कस्मिंश्चिदाग्रयणे कर्मणि उपस्थार्हः॥

तृतीयामाह। "इदं वर्चो अग्निना दत्तमागात्। यशो भर्गः सह ओजो बलञ्च [१]। दीर्घायुत्वाय शतशारदाय। प्रतिगृभ्णामि महते वीर्य्याय" इति। अग्निना दत्तं यदिदं वर्चःप्रभृति गुणजातं तदिदमागात् यजमानं प्रत्यागतम्। वर्चः शरीरकान्तिः, यशः कीर्त्तिः, भर्गः रश्मिरूपं तेजः, सहः अभिभवसामर्थ्यम्, ओजः बलहेतुरष्टमो धातुः, बलं शरीरशक्तिः, शतशारदाय शतसङ्ख्याक-संवत्सरोपेताय दीर्घायुत्वाय दीर्घकालवर्त्त्यायुष्याय महते वीर्य्याय अधिकसामर्थ्याय च प्रतिगृभ्णामि अग्नेरनुग्रहं स्वीकरोमि। अस्य मन्त्रस्य हारियोजनादूर्द्धभाविनि यज्ञपुच्छे विनियोगो द्रष्टव्यः॥

उक्तास्त्रयो मन्त्रा ऋगादिकाः। चतुर्थमन्त्रमारभ्य यजुरात्मकाः। तत्रैतच्चतुर्थमन्त्रमाह। "आयुरसि विश्वायुरसि। सर्व्वायुरसि। सर्व्वमायुरसि। सर्व्वं म आयुर्भूयात्। सर्व्वमायुर्गेषम्" इति। हे प्रवर्त्ताख्यकर्णाभरण त्वम् आयुरसि आयुषः स्वरूपमसि, विश्वायुरसि विश्वस्य जगतः आयुः स्वरूपमसि, सर्व्वायुरसि विशेषतः सर्व्वेषां पुरुषाणाम् आयुः स्वरूपमसि। सर्व्वमायुरसि यच्छतसंवत्सरपरिमितमायुः तत्सर्व्वं त्वमसि। त्वत्प्रसादात् सर्व्वं सम्पूर्णम् आयुर्मे भूयात्। अतोऽहं सर्व्वसम्पूर्णमायुः गेषं गम्या स्म। अस्य मन्त्रस्य आयुष्कामेष्टौ कर्णाभरणधारणे विनियोगमापस्तम्ब आह, तद्यजमान आचम्य प्रतिगृह्य प्रदक्षिणं दक्षिणे कर्णे आवध्रात्यायुरसि विश्वायुरसीति॥

अथ पञ्चमो यजुराह। "भूर्भुवः सुवः" इति। पृथिव्यन्तरिक्षं द्युलोकानि अनुगृह्णन्त्वीति शेषः॥

अथ षष्ठो यजुराह। "अग्निर्धर्म्मणान्नादः। मृत्युर्धर्म्मणान्नपतिः। ब्रह्म क्षत्रꣳ स्वाहा" [२] इति। योऽयमग्निः सोऽयं स्वकीयेन धर्म्मेण अन्नादो भवति। अन्नभक्षकत्वं जाठराग्नौ प्रसिद्धम्। योऽयं मृत्युर्देवः सोऽयं स्वकीयेन धर्म्मेण अन्नपतिः अन्नस्य पालकः, यावन्मृत्युः प्राणिनं न मारयति तावदयमन्नं भुङ्क्ते, तदिदमन्नपालकत्वम्। ब्रह्म ब्राह्मणजातिः, क्षत्रं क्षत्रियजातिः, तान्येतानि अग्नि-मृत्यु-ब्रह्म-क्षत्राण्युद्दिश्य स्वाहा हुतमिदमस्तु॥

अथ सप्तमो यजुराह। "प्रजापतिः प्रणेता। बृहस्पतिः पुर एता। यमः पन्थाः। चन्द्रमाः पुनरसुः स्वाहा" इति। योऽयं प्रजापतिः सोऽयं प्रणेता प्रेरकः, योऽयं बृहस्पतिः सोऽयं पुर एता पुरतो गन्ता, योऽयं यमः सोऽयं पन्थाः मार्गपालकः, यस्तु चन्द्रमाः सोऽयं पुनरसुः पुनर्जायमानः प्राणिरूपः तानेतान् प्रजापत्यादीनुद्दिश्य स्वाहा हुतमिदमस्तु। भूर्भुवःसुवरित्यादिमन्त्रत्रयस्य विनियोगः सूत्रान्तरेषु मृग्यताम्॥

अष्टमो यजुराह। "अग्निरन्नादोऽन्नपतिः। अन्नाद्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। योऽयमग्निः सोऽयमन्नादः जाठराग्निरूपेण अन्नस्य भक्षकः, अन्नपतिः वाह्याग्निरूपेण अन्नस्य पाचकत्वात् पालकः सोऽयमग्निरस्मिन् यज्ञे यजमानाय भक्षणयोग्यमन्नं ददातु तस्मै अग्नये स्वाहा हुतमिदमस्तु॥

नवमो यजुराह। "सोमो राजा राजपतिः। राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। यः सोमः सोऽयं ब्राह्मणानां राजा। सोमोऽस्माकं ब्राह्मणानाꣳ राजेति मन्त्रान्तरात्। स चान्येषां राज्ञां पालकत्वाद्राजपतिः। शेषं पूर्ववत्॥

दशमो यजुराह। "वरुणः सम्राट्सम्राट्पतिः। साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" [३] इति। योऽयं वरुणः सोऽयं समीचीनो राजा भूत्वा सर्व्वेषामन्येषां साम्राज्यानां पालकः॥

एकादशो यजुराह। "मित्रः क्षत्रं क्षत्रपतिः। क्षत्रमस्मिन्

यज्ञे यजमानाय ददातु स्वाहा" इति। मित्रो देवः स्वयं क्षत्रियजातिर्भूत्वा सर्व्वेषामन्येषां क्षत्रियाणां पालकः, स च क्षत्रं क्षत्रियधर्मं ददातु॥

द्वादशो यजुराह। "इन्द्रो बलं बलपतिः। बलमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। अयं इन्द्रः स्वयं बलं प्राप्य परकीयस्य बलस्य पालको भवति॥

त्रयोदशो यजुराह। "बृहस्पतिर्ब्रह्म ब्रह्मपतिः। ब्रह्मास्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। बृहस्पतिः स्वयं देवानां मध्ये ब्राह्मणजातियुक्तः। ब्रह्म वै देवानां बृहस्पतिरिति श्रुत्यन्तरात्। सोऽयमितरजातेः पालकः ब्राह्मणधर्मं ददातु॥

चतुर्द्दशो यजुराह। "सविता राष्ट्रꣳ राष्ट्रपतिः। राष्ट्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। सविता स्वयं राष्ट्रं प्राप्यान्यदीयस्य राष्ट्रस्य पालको भवति॥

पञ्चदशो यजुराह। "पूषा विशां विट्पतिः। विशमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। पूषा स्वयं देवानां विशां स्वामी भूत्वा मनुष्या अपि विशः पालको भवति॥

षोडशो यजुराह। "सरस्वती पुष्टिः पुष्टिपत्नी। पुष्टिमस्मिन् यज्ञे यजमानाय ददातु स्वाहा" इति। सरस्वती स्वयं पुष्टियुक्ता सती परकीयाया अपि पुष्टेः पालयित्री भवति॥

सप्तदशीमाह। "त्वष्टा पशूनां मिथुनानाꣳ रूपकृद्रूपपतिः। रूपेणास्मिन् यज्ञे यजमानाय पशून् ददातु स्वाहा"[४] इति।

मिथुनानां स्त्रीपुरुषरूपाणां पशूनां रूपस्य कर्त्ता त्वष्टा सर्व्वेषां रूपाणां पालकः। अतोऽस्मिन् यज्ञे यजमानाय समीचीनरूपेण युक्तान् पशून् ददातु। तस्मै त्वष्ट्रे स्वाहा हुतमस्तु। अग्निरन्नाद इत्यादयो दश मन्त्राः मित्रविन्दाख्यायामिष्टौ उपहोमार्थाः॥

इति सप्तमोऽनुवाकः॥ ७॥

---

अथाष्टमोऽनुवाकः।

अष्टमेऽनुवाके प्रथमामृचमाह। "स इं पाहि य ऋजीषी तरुत्रः। यः शिप्रवान् वृषभो यो मतीनाम्। यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः। स इन्द्र चित्रां अभितृन्धि वाजान्" इति। हे इन्द्र यस्त्वम् ऋजीषी निष्पीडितरसः सोमवल्लीभागः ऋजीषं तद्वान् ऋजीषी। अतएव ब्राह्मणमाम्नायते, तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्तीति। तरुत्रः दुःखेभ्यस्तारकः तादृशः स त्वं इं पाहि इमं सवनं पालय, यस्त्वं शिप्रवान् शोभनहनुयुक्तः, यश्च त्वं मतीनाम् अस्मद्बुद्धीनां वृषभः वर्षयिता सन्मार्गबुद्धिप्रद इत्यर्थः। यश्च त्वं गोत्रभित् पर्व्वतानां भेत्ता, वज्रभृत् हस्ते वज्रस्य धारकः, यश्च हरिष्ठाः हरिनामकयोरश्वयोः स्वामी हे इन्द्र स त्वं चित्राम् वाजान् विचित्राणि शत्रूणामन्नानि अभितृन्धि अभितो विनाशय। अयं मन्त्रः माध्यन्दिनसवने प्रस्थितयाज्यासु अन्तर्भावनीयः॥

द्वितीयामाह। "आ ते शुष्मो वृषभ एतु पश्चात्। ओत्तरादधरागा पुरस्तात्। आ विश्वतो अभि समेत्वर्वाङ्। इन्द्र द्युम्नꣳ सुवर्वद्धेह्यस्मे" इति। हे इन्द्र वृषभ श्रेष्ठ ते तव शुष्मो बलं पश्चादस्मत्तः पश्चिमभागे आ एतु आगच्छतु। तथैव उत्तरात् उत्तरभागेऽप्यागच्छतु। अधरात् अधरभागेऽप्यागच्छतु। पुरस्तात् पूर्व्वभागेऽप्यागच्छतु। विश्वतः सर्व्वेषु प्रदेशेषु अभि अस्मान् अभिलक्ष्य अर्वाङ् समीपवर्त्ती आसमेतु सम्यगागच्छतु। हे इन्द्र सुवर्वत् स्वर्गयुक्तं द्युम्नं धनम् अस्मे धेहि अस्मासु सम्पादय॥

तृतीयामाह।"प्रोष्वस्मै पुरो रथम्। इन्द्राय शूषमर्चत[१]। अभीकेचिदु लोककृत्। सङ्गे समत्सु वृत्रहा। अस्माकं बोधि चोदिता। नभन्तामन्यकेषाम्। ज्याका अधि धन्वसु" इति। अस्मै इन्द्राय अस्येन्द्रस्य पुरो रथं रथस्य पुरोभागे शूषं बलं प्रोष्वर्चत प्रकर्षेण सुष्ठु पूजयत। कथं बलस्य पूजेति उच्यते। अयमिन्द्रो वृत्रहा वैरिघाती समत्सु सङ्ग्रामेषु सङ्गे योद्धृभिर्वैरिभटैः सङ्गे सति संयोगे सति अभीकेचित् हन्तुं कामयमानेऽपि वैरिणि लोककृत् स्थितिं करोत्येव न तु पालयते। इत्थं बलस्य पूजा, तथा पूजित इन्द्रः। इन्द्रोऽस्माकम् इतरव्यावृत्तये चोदिता प्रेरयिता सम्बोधि बुध्यतां सावधानो भवतु। अन्यकेषां कुत्सितानां वैरिणां धन्वसु अधिश्रित्य वर्त्तमाना ज्याकाः कुत्सितज्याः नभन्तां हिंसन्ताम् आदृष्यन्त्वित्यर्थः। एतच्चोभयं कस्मिंश्चिदैन्द्रे कर्म्मणि विनियोज्यम्॥

चतुर्थीमाह। "इन्द्रं वयꣳ शुनासीरम्। अस्मिन् यज्ञे हवामहे। आ वाजैरुप नो गमत्" इति। शुनो वायुः सीरः आदित्यः ताभ्यां युक्तमिन्द्रम् अस्मिन् यज्ञे वयमाह्वयामः। स चेन्द्रः वाजैरन्नैः सह नः अस्मान् प्रत्युपागमत् उपागच्छतु॥

पञ्चमीमाह। "इन्द्राय शुनासीराय। स्रुचा जुहुत नो हविः [२]। जुषतां प्रति मे धिरः" इति। शुनासीराय वाय्वादित्ययुक्ताय इन्द्राय स्रुचा जुह्वा नः अस्मदीयं हविः हे ऋत्विजः जुहुत। मेधिरः मेधावान् इन्द्रः प्रतिजुषतां प्रातिस्विकं तद्धविः सेवताम्॥

षष्ठीमाह। "प्र हव्यानि घृतवन्त्यस्मै। हर्यश्वाय भरता सजोषाः। इन्द्रर्त्तुभिर्ब्रह्मणा वावृधानः। शुनासीरी हविरिदं जुषस्व" इति। हर्यश्वाय हरितनामकाभ्यामश्वाभ्यां युक्ताय अस्मै इन्द्राय घृतवन्ति हव्यानि हे ऋत्विजः प्रभरत प्रकर्षेण सम्पादयत। हे इन्द्र त्वं सजोषाः वसन्ताद्यृतुदेवताभिः समानप्रीतः सन् ब्रह्मणा मन्त्रेण वावृधानः वर्द्धमानः शुनासीरी वाय्वादित्ययुक्त इदं हविर्जुषस्व। अत्रापस्तम्बः, इन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः इत्यस्मिन् कर्मणि मन्त्रद्वयं विनियुक्तवान्, इन्द्राय शुनासीरायेत्यारभ्य हविरिदं जुषस्वेति याज्यानुवाक्ये इत्यन्तेन वाक्येन। यस्त्वेताभ्यां पूर्व्वो मन्त्र इन्द्रं वयमित्यादि सोऽयं पुरोऽनुवाक्यया विकल्प्यते॥

सप्तमीमाह। "वयः सुपर्णा उपसेदुरिन्द्रम्। प्रियमेधा ऋषयो नाधमानाः। अपध्वान्तमूर्णुहि पूर्द्धि चक्षुः। मुमु-

न्यस्मान्निधयेव बद्धान्" इति। केचिदृषयः इन्द्रमुपसेदुः कार्य्यप्रार्थ्यर्थमुपासन्ते। कीदृशाः ऋषयः वयः पक्षिमूर्त्तिधारिणः अतएव सुपर्णाः शोभनपक्षोपेताः प्रियमेधाः अधीतस्य ग्रन्थस्य धारणशक्तिर्मेधा तस्यां प्रीतियुक्ताः नाधमानाः किञ्चित्कार्य्यं याचमानाः। स एव याञ्चाप्रकारः स्पष्टीक्रियते, हे इन्द्र ध्वान्तमज्ञानलक्षणमन्धकारम् अपोर्णुहि अपसारय। चक्षुर्ज्ञानलक्षणां दृष्टिं पूर्द्धि पूरय, निधयेव शृङ्खलेव अज्ञानेन बद्धान् अस्मान् मुमुग्धि तस्मादज्ञानबन्धात् मोचय। अस्य मन्त्रस्य सोमक्रयादूर्द्धम् अंशाच्छादकवस्त्रापनयने विनियोगमापस्तम्ब आह, अत्र यजमानोऽपोर्णुते वयः सुपर्णा इति॥

अष्टमीमाह। "बृहदिन्द्राय गायत [३]। मरुतो वृत्रहन्तमम्। येन ज्योतिरजनयन्नृतावृधः। देवं देवाय जागृवि" इति। हे मरुतः वृत्रहन्तमम् अतिशयेन वैरिबधकारिणं बृहत् साम इन्द्राय इन्द्रार्थं गायत, ऋतावृधः यज्ञवर्द्धकाः ऋत्विजः देवाय इन्द्रार्थं देवं दीप्यमानं जागृवि जागरणस्याप्रमत्तत्वस्य साधनं ज्योतिः ज्ञानरूपं प्रकाशं येन बृहत्साम्ना अजनयन्नुत्पादितवन्तः। तेन बृहता साम्ना गायतेत्यन्वयः। ऋत्विजो हि पृष्ठस्तोत्रे बृहत् साम गायन्ति। अस्य च मन्त्रस्य क्वचित् सोमविकृतौ विनियोगो द्रष्टव्यः॥

नवमीमाह। "का मिहिकाः क इमे पतङ्गाः। मान्थालाः कुलि परि मा पतन्ति। अनावृतैनान् प्रधमन्तु देवाः। सौपर्णं चक्षुस्तनुवा विदेय" इति। मिहिकाशब्दो नीहारवाचकः सन्

वृष्टेरावरकं रोगविशेषमुपलक्षयति। मिहिका एव मिहेका:। पतङ्गशब्दः शलभवाची सन् नेत्ररश्मिजन्यानि केशोण्डुकान्याकाशे भासमानान्युपलक्षयति। तानि चोष्ठे रोगे सति बहूनि भासन्ते, तद्भयं किञ्चित्शब्दाभ्यामाचिख्यते। का मिहेका क इमे पतङ्गाश्च के, तद्भयोपद्रवो मम नास्तीत्यर्थः। मन्थशब्देन दधिमन्थनमुच्यते, तत्सम्बन्धिनः तक्रविन्दवः मान्थाः तद्वदालान्ति आगच्छन्तीति मान्थालाः केशोण्डुकविशेषाः कुलं समूहः तद्रूपतामापन्नाः कुलिशब्देनोच्यन्ते, ते च सङ्घशो मा मां परिपतन्ति। हे देवाः अनावृताः केशोण्डुादिकृतनेत्रावरणापगमेनैनान् केशोण्ड्रादिकान् रोगदोषान् प्रधमन्तु प्रकर्षेण मुखोत्थितवायुमात्रेण विनाशयन्तु। ततोऽहं तनुवा सहितः सौपर्णं चक्षुर्विदेय। सुपर्णः पक्षी यथा दूरस्थं पश्यति तथा दूरदर्शनक्षमं चक्षुःपाटवं लभेयम्। सोऽयं मन्त्रो नेत्ररोगपरिहाराय प्रयोक्तव्यः॥

दशमीमाह। "एतावन्दस्व वरुणं बृहन्तम्। नमस्या धीरममृतस्य गोपाम्। स नः शर्म त्रिवरूथं वियंसत्[४]। यूयं पात स्वस्तिभिः सदा नः" इति। हे यजमान बृहन्तं गुणाधिकं वरुणमेव आवन्दस्व स्तुहि, तथा धीरं बुद्धिमन्तम् अमृतस्य क्रतुफलस्य गोपां रक्षितारं नमस्य नमस्कुरु। स वरुणो नः अस्मभ्यं त्रिवरूथं भूमिकात्रयोपेतं शर्म गृहं वियंसत् विशेषेण यच्छतु। हे वरुण सपरिवारा यूयं स्वस्तिभिः क्षेमैः नः अस्मान् सदा पात रक्षत। अस्य मन्त्रस्य ब्राह्मण उत्तरे

सोमासादने विनियोगमापस्तम्ब आह, एवावन्दस्वेत्युपस्थे राजानं कुरुत इति ॥

एकादशीमाह। "नाके सुपर्णमुप यत्पतन्तम्। हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरुणस्य दूतम्। यमस्य योनौ शकुनं भुरण्युम्" इति। हे प्रवर्ग्यस्वामिन् त्वामृत्विजो हृदा स्वकीयेन मनसा वेनन्तः कामयमानाः यद्यदा अभ्यचक्षत अभितः प्रख्यापितवन्तः। तदा त्वं तुष्टो भवेति शेषः। कीदृशं त्वाम्, नाके स्वर्गे पतन्तं समीपं प्रतिगच्छन्तम्, अतएव सुपर्णं शोभनपक्षोपेतं हिरण्यपक्षं सुवर्णमयपक्षोपेतं वरुणस्य दूतं वरुणेन प्रेर्य्यमाणं यमस्य योनौ स्थानविशेषे भुरण्युं भरणशीलं रोगसम्पादकमित्यर्थः। शकुनं पक्ष्याकारम्। अयं मन्त्रः अभिषवे प्रवर्ग्यस्यान्तर्भावनीयः ॥

द्वादशीमाह। "शन्नो देवीरभिष्टये। आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः" इति। देवीः द्योतमानाः आपः नोऽस्माकमभिष्टये अपेक्षिताय पानाय शं शान्ता भवन्तु, नोऽस्मान् प्रति शं सुखहेतवः योः दुःखवियोजकाश्च सत्यः अभिस्रवन्तु अभितः प्रवहन्तु ॥

त्रयोदशीमाह। "ईशाना वार्य्याणाम्। क्षयन्तीश्चर्षणीनाम् [५]। अपो याचामि भेषजम्" इति। अहमपो देवीः प्रति भेषजं पापविनाशकारणम् औषधं याचामि। कीदृशीरपः वार्य्याणां वरणीयानां कामानामीशानाः दातुं समर्थाः चर्षणीनां मानुषाणां क्षयन्तीः निवासहेतुभूताः ॥

चतुर्दशीमाह। "अप्सु मे सोमो अब्रवीत्। अन्तर्विश्वानि भेषजा। अग्निञ्च विश्वशम्भुवम्। आपश्च विश्वभेषजीः" इति। अप्स्वन्तर्जलेषु मध्ये विश्वानि भेषजा सर्वाण्यौषधानि सन्तीति मे मह्यं सोमोऽब्रवीत्। तथा विश्वशम्भुवं सर्वस्य जगतः सुखस्य भावयितारम् अग्निञ्च मह्यं सोमो अब्रवीत्। तथा विश्वभेषजीः सर्वस्य अनिष्टस्य औषधरूपा आपश्च याः सन्ति ता अपि सोमो अब्रवीत्। तदेतन्मन्त्रत्रयमब्देवताके कर्माणि द्रष्टव्यम्। तृतीयमन्त्रस्यावभृथेष्टौ द्वितीयाज्यभागेऽपि विनियोगमापस्तम्ब आह, अप्सुमन्तावाज्यभागौ यजत्यप्स्वग्न इत्येषाऽप्सु मे सोमो अब्रवीदिति॥

पञ्चदशीमाह। "यदप्सु ते सरस्वति। गोष्वश्वेषु यन्मधु। तेन मे वाजिनीवति। मुखमङ्धि सरस्वति" इति। हे सरस्वति नदीरूपे ते त्वदीयास्वप्सु यन्मधु मधुरं क्षीरं समीचीनं वहनसामर्थ्यं तथा गोष्वश्वेषु मधुरं क्षीरं समीचीनं वहनसामर्थ्यञ्च यद्विद्यते च वाजिनीवति अन्नसमृद्धियुक्ते सरस्वति तेन सर्वेण मे मुखमङ्धि वक्त्रमलङ्कृतं कुरु॥

षोडशीमाह। "या सरस्वती वैशम्भल्या [६]। तस्यां मे रास्व। तस्यास्ते भक्षीय। तस्यास्ते भूयिष्ठभाजो भूयास्म" इति। विशां प्रजानां भरणं पोषणं विशम्भलं तत्कर्तुं क्षमा वैशम्भल्या, तादृशी या सरस्वती तस्यां सरस्वत्यां नदीरूपायां मे रास्व हे सरस्वतिदेवते मह्यं भागं देहि। तस्याः सरस्वत्याः ते तव भक्षीय रसमनुभवामि। तस्यास्ते भूयिष्ठ-

भाजः अतिप्रभूततररससेविनो भूयास्म। एतस्य मन्त्रद्वयस्य दार्श्विके यजमाने विनियोगमापस्तम्ब आह, यद्‌प्सु त इत्यु-पक्रम्य भूयिष्ठभाजो भूयास्मेति मुखं विमृश्य इत्यन्तेन वाक्येन ॥

सप्तदशीमाह। "अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि। ममैव सन् वह हव्यान्यग्ने। पुत्रः पुत्रे लोककृज्जातवेदः" इति। हे अग्ने अहं त्वदस्मि त्वत्तः सका-शाद्यजमानोऽस्मि, त्वमपि एतद्रूपं मदसि मत्तः सकाशादेत-दाहवनीयरूपं प्राप्तोऽसि। मयाह्याधीयमानस्य तवाहवनी-यत्वम्, अतः कारणात् त्वं मम योनिः कारणमसि। अहञ्च तव योनिः कारणमस्मि। हे अग्ने ममैव सन् त्वं मदीय एव भूत्वा हव्यानि वह। हे जातवेदः सर्व्वजगदभिज्ञ यथा लोके पुत्रः पितृलोककृत् स्थान-सम्पादको भवति, अतो यथा मया तव स्थानं सम्पादितम्, तथा त्वयापि मम पुण्यलोकः सम्पाद-नीयः। एतस्य मन्त्रस्य फलचमसे विनियोगमापस्तम्ब आह, अहं त्वदस्मि मदसीत्यङ्गारे हुत्वा तस्मै भक्षं प्रयच्छेदिति ॥

अष्टादशीमाह। "इहैव सन् तत्र सन्तं त्वाऽग्ने। प्राणेन वाचा मनसा बिभर्म्मि। तिरो मा सन्तमायुर्मा प्रहासीत् [७]। ज्योतिषा त्वा वैश्वानरेणोपतिष्ठे" इति। हे अग्ने अहमिहैव दूरदेशे स्थितः सन् तत्र आहवनीयायतने सन्तं वर्त्तमानं त्वां मदीयेन प्राणेन मनसा वाचा बिभर्म्मि धारयामि तिरोव्यव-हितो भूत्वा सन्तं वर्त्तमानम् आयुः मा मां प्रति मा प्रहासीत् मा परित्यजेत्। वैश्वानरेण सर्व्वपुरुषहितेन ज्योतिषा युक्तं त्वाम्

उपतिष्ठे भजामि। अयं मन्त्रः क्वचिदग्न्युपस्थाने विनियोगः ॥

अथैकोनविंशीमाह। "अयं ते योनिर्ऋत्वियः। यतो जातो अरोचथाः। तं जानन्नग्न आरोह। अथा नो वर्द्धया रयिम्" इति। हे अग्ने अयमरणिरूपः काष्ठविशेषः ते तव ऋत्वियो योनिः ऋतुकालसम्बन्धमुत्पत्तिस्थानं यतो योनेर्जातस्त्वम् अरोचथाः दीप्तोऽसि। हे अग्ने जानन् स्वकीयत्वेन अवगच्छन् तं योनिम् अरणिरूपम् आरोह। अथानन्तरं नः अस्माकं रयिं धनं वर्द्धय समृद्धं कुरु। एतस्य मन्त्रस्य विनियोगो ब्राह्मणेनाम्नातः, अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयतीति ॥

विंशीमाह। "या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम्। अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि। यज्ञो भूत्वा यज्ञमासीद स्वां योनिम्। जातवेदो भुव आजायमानः सक्षय एहि" इति। हे अग्ने ते तव यज्ञिया तनूः यज्ञयोग्या या तनूः तया तन्वा सह एहि। आगत्य च आत्मानम् आरोह। त्वं मदीय आत्मा सन् मच्छरीरमारोह। किं कुर्व्वन् अस्मे अस्माकं नर्या नरस्य योग्यानि वसूनि धनानि पुरूणि बहूनि अच्छ अभिमुखानि कृण्वन् त्वं यज्ञस्वरूपो भूत्वा यज्ञं यज्ञनिर्वाहकं मद्देहं स्वां योनिं स्वकीयं स्थानमासीद प्राप्नुहि। हे जातवेदः भुवः सकाशात् आभिमुख्येन जायमानः सक्षयः निवासस्थानसहितः एहि आगच्छ। एतस्यापि मन्त्रस्य विनियोगो ब्राह्मणे दर्शितः, या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन् समारोहयत इति ॥

एकविंशीमाह। "उपावरोह जातवेदः पुनस्त्वम् [८]। देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजाꣳ रयिमस्मासु धेहि। अजस्रो दीदिहि नो दुरोणे" इति। हे जातवेदः पुनरपि त्वम् उपावरोह अरण्योः सकाशात् भूमाववतर। अवतीर्य्य च प्रजानन् अस्य देवस्य इदं हविरिति प्रकर्षेण जानन् नोऽस्मदीयं हव्यं देवेभ्यो वह प्रापय। आयुरादिकमस्मासु सम्पादय। अजस्रो निरन्तरं वर्त्तमानस्त्वं नः दुरोणे अस्मदीये गृहे दीदिहि दीप्यस्व। एतस्य विनियोगमापस्तम्ब आह, उपावरोह जातवेद इति निवर्त्तमानमभिमन्त्रयत इति॥

द्वाविंशीमाह। "तमिन्द्रं जोहवीमि मघवानमुग्रम्। सत्रा-दधानमप्रतिष्कुतꣳ शवाꣳसि। मꣳहिष्ठो गीर्भिरा च यज्ञि-योऽववर्त्तत्। राये नो विश्वा सुपथा कृणोतु वज्री" इति। तं प्रसिद्धमिन्द्रं जोहवीमि आह्वयामि। कीदृशमिन्द्रं मघवानं धनवन्तम् उग्रं शत्रुषु तीव्रं शवांसि सर्व्वाणि बलानि सत्रा-दधानं सदा धारयन्तम् अप्रतिष्कुतं कुतोऽपि प्रतिपक्षरहितम् इदृशम्। इन्द्रः मंहिष्ठः अतिशयेन पूज्यः यज्ञियो यज्ञयोग्यस्य सन् गीर्भिरस्मदीयाभिः स्तुतिभिः आववर्त्तत् पुनः पुनराव-र्त्तमानः सन् वज्री वज्रयुक्तः विश्वा सुपथा सर्व्वान् सुमार्गान् नः राये अस्माकं धनलाभाय कृणोतु करोतु। अयं मन्त्रः ऐन्द्रे कर्म्मणि द्रष्टव्यः॥

त्रयोविंशीमाह। "त्रिकद्रुकेषु महिषो यवाशिरं तु विशु-ष्मस्तृपत्। सोममपिबद्विष्णुना सुतं यथावशत्। स ईं ममाद

महि कर्म्म कर्त्तवे महामुरुम् [८]। सैनᳬं सश्चद्देवं देवः सत्य-मिन्दुᳬं सत्य इन्द्रः" इति। ज्योतिर्गौरायुरिति त्रिकद्रुक इत्यापस्तम्बेन अभिधानात् ज्योतिरादयस्त्रयः सोमयागास्त्रि-कद्रुकशब्दवाच्याः। तेषु यागेष्विन्द्रो विष्णुना सहितः सोम-मपिबत्। कीदृश इन्द्रः महिषः गुणैश्वर्य्यादिभिर्महान् तु विशुष्मः प्रभूतबलः तृपत् तृप्तिं गतः। कीदृशं सोमं यवाशिरं यवसक्तुमिश्रितं सुतमभिषुतं यथावशत् यथावदकामयत सम्यक् कामितवानित्यर्थः। स च सोमः महि कर्म्म कर्त्तवे महत्कर्म्म कर्त्तुं ईं ममाद इममिन्द्रं हर्षयामास। स चेन्द्रः एनं सोमं सश्चत् प्राप्नवान्। कीदृशं सोमं महां स्वादुत्वेन महान्तम् उरुं प्रभूतं देवं दीप्यमानं सत्यमवितथम् अवश्यफलप्रदं इन्दुम् आह्लादहेतुम्। कीदृश इन्द्रः देवो दीप्यमानः सत्यः अवि-तथस्वरूपः केनाप्यबाध्य इत्यर्थः॥

चतुर्विंशीमाह।"विदद्यती सरमा रुग्णमद्रेः। महिपाथः पूर्व्यᳬं सध्रियक्कः। अग्रं नयत्सुपद्यक्षराणाम्। अच्छा रवं प्रथमा जानती गात्" इति। सरमा काचित् शुनी स्वमूर्त्तिधारिणी देवता भूमावन्नसम्पादनार्थम् आयती इन्द्रेण प्रेषिता, अद्रेः इति मेरोः सकाशात् भूमिं गच्छन्ती रुग्णम् अन्नाभावेन क्षुधाग्रस्तं जनं विदत् अलभत। ततो महिपाथः महज्जलं कः करोत्, कीदृशं पूर्व्यं पूर्व्वमुत्पन्नम्, अन्नस्य कारणं सहास्तीति सध्रियक् सर्व्वत्रेत्रसहचारीत्यर्थः। सुष्ठु पद्यते गच्छतीति सुपदी सा शुनी अग्रं नयत् तज्जलं पुरतो नीतवती, अत्र पुरोदेशे

असुराणां चरो विनाशः हिंसा तद्योग्यानां गवां रवं शब्दं जानती अच्छ तदाभिमुख्येन प्रथमा मुख्या सती गात् जगाम। जलोत्पादनेनान्नं सम्पाद्य गोरसं सम्पादयितुं गतवतीत्यर्थः॥

पञ्चविंशीमाह। "विदद्गव्यꣳ सरमा दृढमूर्व्वम्। येना नुकं मानुषी भोजते विट्। आ ये विश्वाः स्वपत्यानि चक्रुः। कृण्वानासो अमृतत्वाय गातुम्" इति। सरमा शुनी गव्यं गोयूथं विदत् अलभत। कीदृशं दृढं कदाचिदपि अनपायिनम् ऊर्व्वम् अतिप्रभूतम्। मानुषी विट् विश्वमनुष्यरूपा प्रजा येन गोयूथेन भोजते क्षीरादिकं भुङ्क्ते। नुकमित्येतदव्ययं सर्व्वयेत्यस्मिन्नर्थे वर्त्तते। अमृतत्वाय स्वर्गरूपाय कर्म्मफलाय गातुं मार्गं कृण्वानासः कुर्व्वाणा ये यजमानाः विश्वा सर्व्वाणि स्वपत्यानि कर्म्माणि आचक्रुः सर्व्वतः कृतवन्तः। तथाविध-यजमानरूपा प्रजा येन गव्येन भुङ्क्ते तं गोयूथमालभतेति पूर्व्वत्रान्वयः॥

षड्विंशीमाह। "त्वं नृभिर्नृपते देवहूतौ [१०]। भूरीणि वृत्रा हर्य्यश्व हꣳसि। त्वं निदस्युञ्चुमुरिम्। धुनिं चास्वापयो दभीतये सुहन्तु" इति। हे हर्य्यश्व हरिनामकाभ्यामश्वाभ्यामुपेत इन्द्र हे नृपते मनुष्याणां पालक नृभिर्मनुष्यैः यजमानैर्त्विग्भिः देवहूतौ देवार्थमाह्वाने कृते सति त्वं भूरीणि बहूनि वृत्रा वृत्राणि शत्रुजातं निहंसि मारयसि। किञ्च त्वं निदस्युं निदस्युप्रभृतीन् राक्षसविशेषान् सुहन्तु सुष्ठु हननसाधनेन वज्रेण दभीतये दम्भनाय हिंसार्थम् अस्वापय सुप्तान् मूर्च्छिताम् अकरोः॥

सप्तविंशीमाह। "एवा पाहि प्रत्नथा मन्दतु त्वा। श्रुधि ब्रह्म वावृधस्वोत गीर्भिः। आविः सूर्यं कृणुहि पीपिहीषः। जहि शत्रूंरभि गा इन्द्र तृन्धि" इति। हे इन्द्र प्रत्नथा पुरातनः पूर्वकल्पावस्थित इन्द्रो यथा सोमं पिबति, एवा पाहि एवमेव त्वमपि सोमं पिब। स च सोमः त्वां मन्दतु हर्षयतु। ब्रह्म अस्माभिः प्रयुज्यमानं मन्त्रं श्रुधि शृणु, उत अपि च गीर्भिः अस्मदीयाभिः वावृधस्व अतिशयेन वर्द्धस्व। सूर्यमाविष्कृणुहि आच्छादकस्य असुरस्य विनाशेन प्रकटीकुरु। इषोऽन्नानि पिपीहि पालय। शत्रून् जहि मारय। गा अभिलक्ष्य, तृन्धि विरोधिनो व्याघ्रतस्करादीन् विनाशय। तमिन्द्रं जोहवीमीत्यादिमन्त्रषट्कमैन्द्रे कर्म्मणि द्रष्टव्यम्। त्रिकद्रुकेष्वितिमन्त्रस्तु षोडशिशस्त्रेऽप्यन्तर्भावनीयः॥

अष्टाविंशीमाह। "अग्ने बाधस्व विमृधो नुदस्व। अपामीवा अप रक्षांसि सेध। अस्मात् समुद्राद्बृहतो दिवो नः[१६]। अपां भूमानमुप नः सृजेह" इति। हे अग्ने मृधः शत्रून् विशेषेण बाधस्व। अमीवा रोगान् अपनुदस्व। रक्षांसि अपसेध अपगमय। अस्मात् दृश्यमानात् समुद्रात् बृहतो समुद्रवदतिप्रौढान् दिवो द्युलोकात् नः अस्मदर्थम् अपां भूमानं वृष्टिजलस्य बाहुल्यं सृज उत्पादय। किञ्च नः अस्मानपि इह कर्म्मणि उपसृज संयोजय॥

एकोनत्रिंशीमाह। "यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा। वसूनि पुरुधा विशन्तु। दीर्घमायुर्यजमानाय कृण्वन्। अथा-

मृतेन जरितारमङ्‌धि" इति। हे यज्ञ यागनिष्पादकवह्ने सुमतौ भक्तियुक्तायामस्मदीयायां बुद्धौ प्रतितिष्ठ प्रतिष्ठितो भव। किं कुर्व्वन् यजमानस्यार्थं दीर्घमायुः कुर्व्वन्, तादृशं त्वां पुरुधा बहुधा वसूनि धनानि आविशन्तु सर्व्वतः प्रविशन्तु। अथानन्तरं जरितारं जरां प्राप्स्यन्तं यजमानम् अमृतेनाङ्‌धि नाशरहितेन स्वर्गलोकेन संयोजय। एतयोर्मन्त्रयोरुत्तरवेद्यामग्निप्रतिष्ठापने विनियोगमापस्तम्ब आह, अग्ने बाधस्वेत्यारभ्य सम्भारेषु प्रतिष्ठाप्येत्यन्तेन वाक्येन॥

अथ त्रिंशीमाह। "इन्द्रः शुनावद्वितनोति सीरम्। संवत्सरस्य प्रतिमाणमेतत्। अर्कस्य ज्योतिस्तदिदास ज्येष्ठम्। संवत्सरꣳ शुनवत्सीरमेतत्" इति। अयमिन्द्रः शुनावत्सीरं वायुवत्सहभूतमादित्यं वितनोति विस्तारयति। एतदादित्यस्य विस्ताररूपं संवत्सरस्य प्रतिमाणं प्रतिनिधिरूपम्। आदित्यगमनावृत्त्या हि संवत्सरो निष्पाद्यते। तदित् तदानीमेव अर्कस्यादित्यस्य ज्योतिः ज्येष्ठम् अतिप्रशस्तं प्रवृद्धं यावत् यज्ज्योतिः संवत्सरनिष्पादकत्वात् संवत्सरस्वरूपं शुनवद्वायुसंयुक्तं सीरम् आदित्यमण्डलरूपं इत्येतत् ज्येष्ठत्वम्॥

एकत्रिंशीमाह। "इन्द्रस्य राधः प्रयतं पुरुत्मना। तदर्करूपं विमिमानमेति। द्वादशारे प्रतितिष्ठतीद्वृषा" इति। इन्द्रस्य राधः सर्व्वकर्मसाधकं यत्सामर्थ्यं तत् पुरु प्रभूतम् आत्मना प्रयतं स्वेनैव सम्पादितं तत्सामर्थ्यम्। अर्कस्वरूपं सूर्य्यस्वरूपं भूत्वा विमिमानमेति सर्व्वैः प्राणिभिर्विशेषेण प्रतीयमानं

सन् एति गच्छति सञ्चरतीत्यर्थः। सोऽयमादित्यरूपो वृषा कामाभिवर्षक इन्द्रः द्वादशारे द्वादशमासरूपैः अरैः युक्ते संवत्सरचक्रे प्रतितिष्ठतीत् प्रतिष्ठित एव वर्त्तते॥

अथ द्वात्रिंशीमाह। "अश्वायन्तो गव्यन्तो वाजयन्तः। हवामहे त्वोपगन्त वा उ। आभूषन्तस्त्वा सुमतौ नवायाम्। वयमिन्द्र त्वा शुनꣳ हुवेम" [१२] इति। हे इन्द्र वयम् अश्वायन्तः अश्वमात्मन इच्छन्तः, गव्यन्तः गाम् आत्मन इच्छन्तः, वाजयन्तः वाजमन्नमात्मन इच्छन्तः, त्वामुपगन्त वा उ उपगन्तुमेव हवामहे आह्वयामः। नवायां नूतनायां मतौ शोभनायां भक्तियुक्तायाम् अस्मद्बुद्धौ त्वामाभूषन्तः सर्व्वतः प्रशंसन्तो वयं हे इन्द्र त्वा शुनं त्वद्रूपं वायुं तदुपलक्षितमादित्यञ्च हुवेम आह्वयामः। तदेतन्मन्त्रद्वयं शुनासीरगणके कर्म्मणि द्रष्टव्यम्॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः॥ ॥ ८॥

समाप्तश्च प्रपाठकः॥ * ॥

## अथ तैत्तिरीय-ब्राह्मणभाष्ये

### द्वितीयकाण्डे षष्ठप्रपाठके

#### प्रथमोऽनुवाकः ।

हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
उपहोमार्थमन्त्राणां पञ्चमे शेष ईरितः ।
षष्ठे प्रपाठके सौत्रामणिः कौकिल ईर्य्यते ॥ २ ॥

तत्र प्रथमानुवाके ग्रहा उच्यन्ते । कल्पः । सुरायाः सन्धानकाले तोक्मैर्मासरेण नग्नहुना च सुरां संसृज्य इति। अङ्कुरिता व्रीहयः तोक्मानि ईषत्तप्तानां यवानां चूर्णं द्विविधं सूक्ष्मं स्थूलञ्च तत्र सूक्ष्मं चूर्णं दध्ना तक्रेण वा मिश्रितं दर्भैः प्रच्छन्नं मासर इत्युच्यते। स्थूलचूर्णन्तु मन्त्रेण मिश्रितं दर्भैः प्रच्छन्नं नग्नहुरित्युच्यते। तैस्तोक्ममासरनग्नहुभिः सुरायाः संसर्ज्जनार्थं स्वाद्वीं त्वेति मन्त्रः। तत्पाठस्तु, "स्वाद्वीं त्वा स्वादुना। तीव्रां तीव्रेण। अमृताममृतेन। मधुमतीं मधुमता। सृजामि सꣳ सोमेन। सोमोऽस्यश्विभ्यां पच्यस्व। सरस्वत्यै पच्यस्व। इन्द्राय सुत्राम्णे पच्यस्व" इति। हे सुरे स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि। अत्र सोमशब्देन पूर्वोक्तं तोक्ममासरनग्नहुशब्दाभिधेयद्रव्यत्रयमुपलक्ष्यते।

सोमस्य ओषधिराजत्वेन तदुपलक्षणं कर्त्तुं शक्यम्। कीदृशीं त्वां तीव्राम् उग्रगन्धाम् अमृताममृतवदाप्यायनकरीम्, अतएव बलीवर्दादीनाप्याययितुं पाययन्ति, मधुमतीं माधुर्य्येणोपेताम्। कीदृशेन सोमेन तीव्रेण वमनाद्युपयुक्तौषधित्वेन सोमस्य तीव्रत्वम्, अमृतेन अपामसोमममृता अभूमेति श्रुतेरमृतत्वप्रापकेण, मधुमता माधुर्य्ययुक्तेन। एवंविधसोमरूपतया भावितोऽस्माभिर्युक्तत्वात् त्वं सोमोऽसि, तस्माद्देवताचयार्थं त्वं पच्यस्व, सुत्राम्णे सुष्ठु रक्षकाय॥

कल्पः। सक्तूनां त्रितयेन परिकीर्य्य परीतो षिञ्चता सुतामित्येकया गोदुग्धेन परिषिञ्चेति। श्यामाकसक्तूंस्त्रेधा विभज्य तृतीयांशं सुरायामुपरि विकीर्य्य तदुपरि दुग्धपरिषेचनार्थोऽयं मन्त्रः। तत्पाठस्तु, "परीतो षिञ्चता सुतम्। सोमो य उत्तमꣳ हविः [१]। दधन्वा यो नर्यो अप्स्वन्तरा। सुषाव सोममद्रिभिः" इति। यः सोमस्तात्मकः तदेवदमुत्तमं हविः। तदत्र सुतमभिसुतं इतोऽस्मात् क्षीरात् परितः सिक्तमभूत् यः सोमः नर्य्यः नराणां यजमानानां हितः सन् अप्स्वन्तरा द्रवद्रव्येषु मध्ये आममन्त्रात् दधन् वा स्वादुत्वं धारयति तं सोमम् अद्रिभिः उपांशुसवनप्रभृतिभिः पाषाणैः सुषाव यजमानोऽभिषुतवान्। यदुक्तं सूत्रकारेण, आज्यमुत्पूय वालेन पय उत्पुनाति, प्राङ्सोमो अतिद्रुत इति, सोमवामिनः, प्रत्यङ्सोमो अतिद्रुत इति सोमातिपवितस्येति, तत्र सोममन्त्रमाह। "पुनातु ते परिस्रुतम्। सोमꣳ सूर्य्यस्य

दुहिता। वारेण शश्वता तना। वायुः पूतः पवित्रेण। प्राङ्-सोमो अतिद्रुतः। इन्द्रस्य युज्यः सखा'' इति। हे इन्द्र ते त्वदर्थं सूर्य्यस्य दुहिता पयःपावयन्ती सूर्य्यस्य सम्बन्धिनी दुहितृस्थानीया दीप्तिः स्रुतं द्रवीभूतं सोमं सोमत्वेन भावितं पयोद्रव्यं वारेण बालजन्येन पवित्रेण पुनातु शोधयतु। कीदृशेन वारेण शश्वता शाश्वतेन दृढेन तना विस्तीर्णेन तादृशेनानेन पवित्रेण पूतः सोमः पयोरूपो वायुः शीघ्र-गामी भूत्वा प्राङ् ऊर्द्धं निर्गतः। कीदृशः सोमः इन्द्रस्य युज्यः योग्यः सखा तादृशोऽयं सोमः शुद्धो भवत्वित्यर्थः। यः पूर्व्वं सोमयागं कृत्वा वान्तीकृतवान् तस्येदानीं सौत्रामण्यां पयःशोधनार्थोऽयं मन्त्रः। यस्य तु पुरा सोमो जीर्णं सोऽयं सोमातिपवितः। यस्य सोमोऽधोद्वारेण निर्गतः सोऽयं सोमा-तिपवितः, तस्य पयःशोधनार्थं मन्त्रमाह। वायुः पूतः पवि-त्रेण। प्रत्यङ्सोमो अतिद्रुतः [२]। इन्द्रस्य युज्यः सखा इति। अत्र पुनातु ते परिस्रुतमिति पूर्व्वभागोऽनुषज्यते। प्रत्यङ्सोमो अतिद्रुतः अधो निर्गतः। अन्यत् पूर्व्ववद्व्याख्येयम्॥

कल्पः। ब्रह्म क्षत्रं पवत इति सुरां प्रतिप्रस्थातेति पुनाती-त्यनुवर्त्तते। पाठस्तु, ''ब्रह्म क्षत्रं पवते तेज इन्द्रियम्। सुराया सोमः सुत आसुतो मदाय। शुक्रेण देव देवताः पिपृग्धि। रसेनान्नं यजमानाय धेहि'' इति। ब्राह्मणजातिः क्षत्रिय-जातिश्च तेजःकारणं इन्द्रियवृद्धिकारणञ्चेदं द्रव्यं पवते पु-नाति, अनया सुरया सोमः सुत उत्पादितः। मदाय देवानां

मदार्थम् आसुतः सर्व्वतोऽभिषुतस्य। हे सोमदेव तव शुक्रेण निर्मन्थेन रसेन देवताः पिपृग्धि सम्पृक्ताः कुरु। यजमानाय चान्नं सम्पादय॥

कल्पः। अध्वर्य्युः पयोग्रहान् गृह्णाति कुविदङ्गेति। सर्व्वेषामेका पुरोरुक् एका पुरोऽनुवाक्या एकः प्रैषः एका याज्या उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामीति गृहीत्वा यवसक्तुभिः श्रित्वा पवित्रेण परिमृज्यैष ते योनिस्तेजसे त्वेति सादयित्वोपयामगृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामीति गृहीत्वा गोधूमशक्तुभिः श्रित्वा पवित्रेण परिमृज्यैष ते योनिर्वीर्य्याय त्वेति सादयित्वोपयामगृहीतोऽसीन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वोपवाकसक्तुभिः श्रित्वा पवित्रेण परिमृज्यैष ते योनिर्बलाय त्वेति सादयित्वेति। तत्र पुरोरुचमाह। "कुविदङ्ग यवमन्तो यवञ्चित्। यथा दान्त्यनुपूर्व्वं वियूय। इहेहैषां कृणुत भोजनानि। ये बर्हिषो नमो वृक्तिं न जग्मुः" इति। अङ्गशब्दः प्रियसम्बोधनवाचकः। हे प्रिय अश्विसरस्वती सुत्रामेन्द्र ये यज्वानः बर्हिषो यागस्य नमो वृक्तिं नमस्कारविनाशनं न जग्मुर्न प्रापुः। किन्तु अत्यन्तश्रद्धालवो न तिष्ठन्ति तेषामेषां यजतां हविर्विषयाणि भोजनानि इहेह कृणुत। ग्रहणपात्राणामनेकत्वात् वीप्सा। तत्रोपमानमुच्यते, कुविच्छब्दो बह्वर्थवाची चिच्छब्दः समुच्चये, यथा लोके यवमन्तो यवादिधान्योपेताः कृषीवलाः कुविद्यवञ्चित् बहुलं यवम् अन्यानि च गोधूमप्रियङ्ग्वादिधान्यान्यनुपूर्व्वं तत्तत्-

परिपाकानुक्रमेण वियूय विधूय विशेषेण इदं पक्वमिदमपक्वमिति पृथक् कृत्य दान्ति लुनन्ति, तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम्॥

अथ ग्रहणमन्त्रानाह। "उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि [३]। सरस्वत्या इन्द्राय सुत्राम्णे" इति। उपयामशब्दः पृथिवीकार्य्यदारुपात्रवाची। इयं वा उपयाम इति श्रुतेः। पयोरूपद्रव्यविशेष त्वं उपयामेन गृहीतोऽसि, अश्विदेवार्थं त्वामिह पात्रे गृह्णामि। सरस्वतीमन्त्रे पूर्व्वोत्तरभागावनुषञ्जनीयौ। तथा सुत्राममन्त्रेऽपि॥

अथ सादनमन्त्रानाह। "एष ते योनिस्तेजसे त्वा। वीर्य्याय त्वा बलाय त्वा" इति। हे आश्विनग्रह एषः खरप्रदेशः ते तव स्थानम्। अस्मिन् स्थाने तेजःसिद्ध्यर्थं त्वां सादयामीति शेषः। वीर्य्यबलमन्त्रयोरप्येष ते योनिरित्यनुवर्त्तते। हे सारस्वतग्रह वीर्य्यवृद्धये त्वामिह सादयामि। हे सुत्रामग्रह बलवृद्धये त्वामिह सादयामि॥

कल्पः। उत्तरैर्यथालिङ्गमुपतिष्ठत इति। पाठस्तु, "तेजोऽसि तेजो मयि धेहि। वीर्य्यमसि वीर्य्यं मयि धेहि। बलमसि बलं मयि धेहि" इति ग्रहत्रयं क्रमेण सम्बोध्य योजनीयम्॥

कल्पः। सुरायां बाल आनीयमानायां धारायाः प्रतिप्रस्थाता सुरां गृह्णन् गृह्णाति। नाना हि वां देवहितं सदः

कृतमिति सर्व्वेषामेका पुरोरुगेका पुरोऽनुवाक्यैकः प्रैष एका याज्योपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णा-मीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिस्तेजसे त्वेति साद-यत्युपयामगृहीतोऽसि सारस्वतं वीर्य्यं सरस्वत्यै त्वा जुष्टं गृह्णा-मीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिरानन्दाय त्वेति सादयत्युपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामीति गृहीत्वा पवित्रेण परिमृज्यैष ते योनिर्महसे त्वेति सादयतीति। तत्र पुरोरुचमाह। "नाना हि वां देवहितꣳ सदः कृतम्। मा सꣳसृक्षाथां परमे व्योमन्। सुरा त्वमसि शुष्मिणी सोम एषः। मा मा हिꣳसीः स्वां योनिमाविशन्" [४] इति। हे सुरे हे सोम वां युवयोः नाना पृथग्भूतं सदः स्थानं देवेभ्यो हितं कृतं सम्पादितम्, तस्माद्धे युवां मा संसृक्षाथां परमे व्योमन् उत्कृष्टे मदीयरक्षणे निमित्तभूते सति परस्परसंसृष्टौ माभूतम्। हे गृह्यमाणद्रव्यविशेष त्वं शुष्मिणि बलवति सुरासि। एष तु सोमः शान्तात्मा ततश्च युवयोः संसर्गो न युज्यते। हे सोम स्वां योनिं मृदूदररूपं स्वस्थानमाविशन्। मां सोमस्य पातारं मा हिंसीः॥

अथ ग्रहणमन्त्रानाह। "उपयामगृहीतोऽस्याश्विनं तेजः। सारस्वतं वीर्य्यम्। ऐन्द्रं बलम्" इति। हे द्रव्यविशेष त्वदीय-रक्षणे निमित्तभूते सति परस्परसंसृष्टौ माभूतं, हे गृह्यमाण-द्रव्य उपयामेन गृहीतोऽसि। तदिदं तव स्वरूपम् अश्वि-सम्बन्धि तेजः अतोऽश्विभ्यां त्वा जुष्टं गृह्णामीति शेषः। एवं

सारस्वतमन्त्रः ऐन्द्रमन्त्रश्च सूत्रोक्तक्रमेण अनुषङ्गशेषपूरणाभ्यां योजनीयः ॥

अथ सादनमन्त्रानाह। "एष ते योनिर्मोदाय त्वा। आनन्दाय त्वा महसे त्वा" इति। सूत्रोक्तक्रमेण ग्रहत्रयं सादने योजनीयम् ॥

कल्पः। षष्ठामनुवाकशेषेण अध्वर्य्युर्यजमानश्चोपतिष्ठते, उत्तरेण चानुवाकेनेति। तत्रानुवाके शेषे चत्वारि यजूंष्याह, "ओजोऽस्योजो मयि धेहि। मन्युरसि मन्युं मयि धेहि। महोऽसि महो मयि धेहि। सहोऽसि सहो मयि धेहि" इति। ओजो बलं, मन्युः दीप्तिः, महः पूजा, सहोऽभिभवितृत्वम्। हे द्रव्यविशेष त्वमुक्तैर्गुणैर्युक्तोऽसि, अतोऽपि मय्येव तान् सम्पादय॥

अथैकामृचमाह। "या व्याघ्रं विषूचिका। उभौ वृकञ्च रक्षति। श्येनं पतत्रिणꣳ सिꣳहम्। सेमं पात्वꣳहसः" इति। भुक्तान्नं जरणविरोधिव्याधिविशेषो विषूचिका, तादृशी या व्याघ्रं वृकस्यैव रक्षति। वृकोऽरण्यश्वा, व्याघ्रवृकयोः दीपनपाटवात् कदाचिदपि अजरणदोषो नास्ति, तथा सा विषूचिका श्येनाख्यं पक्षिणञ्च सिंहञ्च रक्षति। तयोरपि नास्ति या व्याधिः सा व्याघ्रादिरक्षिका विषूचिका इमं यजमानम् अंहसः पापफलाद्व्याधेः पातु॥

अथ यजुर्द्वयमाह। "सम्पृचस्थ सम्मा भद्रेण पृङ्क्त। विपृचस्थ वि मा पाप्मना पृङ्क्त" [५] इति। हे इन्द्रपात्रस्थद्रव्यविशेषाः यूयं द्रवत्वेन स्वभावतः सम्पर्कशीलाः स्थ, अतो मां

भद्रेण श्रेयसा संयोजयत। इह तु पृथक्पात्रे धृतत्वात् विपृचः विमुक्तरूपाः स्थ, अतो मां पाप्मना विपृक्त वियोजयत॥

अत्र विनियोगसङ्ग्रहः।

स्वाद्वीं तोक्मादिभिर्योज्यं सुरा चीरं पुनत्यतः।
स्वचां त्र्यादृत्पुनीयात् सुरां ब्रह्मेति शोधयेत्॥
कुवित् पुरोरुचं ब्रूयादुपयामादिभिस्त्रिभिः।
पयः पात्रत्रये ग्राह्यमेषामादयते त्रिभिः॥
तेजस्त्रिभिरुपस्थेयं नानेत्येतां पुरोरुचम्।
सुराग्रहे पठेन्मन्त्रैरुपयामादिभिस्त्रिभिः॥
सुरां गृह्णात्ययैषाद्यैर्मन्त्रैः सम्पादयेत्त्रिभिः॥
ओजोऽसीत्यादिभिः सप्तमन्त्रैस्तामुपतिष्ठते।
प्रथमे ह्यनुवाकेऽस्मिन्नेकोनत्रिंशदीरिताः॥

इति प्रथमोऽनुवाकः॥ १ ॥

---

अथ द्वितीयोऽनुवाकः।

प्रथमे ग्रहा उक्ताः। द्वितीये तदुपस्थानमुच्यते। तत्र प्रथमामृचमाह। "सोमो राजाऽमृतꣳ सुतः। ऋजीषेणाजहान् मृत्युम्। ऋतेन सत्यमिन्द्रियम्। विपानꣳ शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु" इति। अयमभिषुतः सोमो राजा स्वयममृतं पीयूषसमानः यथा पीयूषं पिबतोऽपमृत्युर्नास्ति एवं सोमपस्यापि नापमृत्युरित्यर्थः। तत्रायं हेतुः,

ऋजीषेण कीदृक्स्थानीयेन नीरसेन मृत्युमजहात्। ऋजीषे ह्यपमृत्युमजहात्। ऋजीषे अपमृत्युप्रापकरसनिःसरणेन तस्य परित्यागादपमृत्युहेतुः परित्यक्तः। अतोऽयं ऋतेन यज्ञनिष्पादनेन इन्द्रियम् इन्द्रियवृद्धिहेतुः, तदेतत् सत्यं शपथं करोमीत्यर्थः। अन्धसोऽन्नरसादपि विपानं विशेषेण पानयोग्यं सोमरसरूपममृतम्, अतः शुक्रं शुद्धं, योऽयमिन्द्रः तस्यापीन्द्रियवृद्धिकारणमिदम्। किञ्च इदं द्रव्यं मधु पयः मधुरं चीररूपम् अत एवामृतरूपम् ॥

अथ द्वितीयामाह। "सोममद्भ्यो व्यपिबत्। छन्दसा हꣳसः शुचिषत्। ऋतेन सत्यमिन्द्रियम्। अद्भ्यः चीरं व्यपिबत् [१]। क्रुङाङ्गीरसो धिया। ऋतेन सत्यमिन्द्रियम्। अन्नात् परिस्रुतो रसम्। ब्रह्मणा व्यपिबत् चत्रम्। ऋतेन सत्यमिन्द्रियम्" इति। शुचौ शुद्धप्रदेशे स्वर्गे सीदतीति शुचिषत् हंसः सर्व्वप्राणिहृदिस्थितः जीवात्मा तद्रूपधारीन्द्रः छन्दसां साचितया तमिमं सोमम् अद्भ्यः सकाशाद्विभज्यापिबत्। ऋतेन यज्ञद्वारेण इन्द्रियवृद्धिहेतुः सोमः, तदेतत् सत्यम्। तत्र दृष्टान्तः, यथा लोके क्रुङ् क्रौञ्चपची आङ्गीरसः सर्व्वाङ्गसम्बन्धी सारयुक्तः पुष्टशरीर इत्यर्थः। तादृशो धिया स्वबुद्ध्या चीरमद्भ्यो विविच्यापिबत्, चीरपात्रे स्वमुखे प्रचिप्ते सति मुखगतरससम्पर्कात् चीरांशो जलांशश्चोभौ विविच्येते, तत्र जलभागं परित्यज्य चीरभागमेव पिबति तद्वदयमिन्द्रोऽपि सोमरसं जलभागाद्विविच्य पिबति, अतो यज्ञद्वारेण इन्द्रियवृद्धि-

हेतुः सोमः, तदेतत् सत्यम्। तत्रैवान्यो दृष्टान्त उच्यते, यथा क्षत्रं क्षत्रियजातिः ब्रह्मणा प्रौढेन क्षीराज्यादिना योगात् परितः स्रवन्तीति परिस्रुत् अन्नं, तस्मादस्मात् सम्पन्नं रसं पिबति। राजादयो हि भोजनकाले प्रभूते क्षीरे वा भोज्याद्यन्नं प्रक्षिप्य तदन्नं रसोपेतं क्षीरादिकं पिबति, एवमिन्द्रोऽयमपि सारभूतं रसं पिबति ऋतेनेति पूर्ववत्॥

तृतीयामाह। "रेतो मूत्रं विजहाति। योनिं प्रविशदिन्द्रियम्। गर्भो जरायुणा वृतः। उल्बं जहाति जन्मना। ऋतेन सत्यमिन्द्रियम्" [२] इति। यथा लोके स्त्रीयोनिं प्रविशत् पुरुषस्येन्द्रियं रेतो मूत्रञ्च विभज्य परित्यजति, मूत्रस्य बहिस्त्यागः, रेतसो गर्भाशये त्यागः, तद्रेतःपरिणामो जरायुणा वेष्टितो गर्भो भूत्वा स्वकीयेन जन्मना तदावरणरूपमुल्बं जहाति। एवमिन्द्रोऽयमसारं परित्यज्य एकस्मिन्नपि पात्रे सारमेव स्वीकरोति। ऋतेनेति पूर्ववत्। यथा प्रजापतिरेकरूपेण वेदेन पर्य्यालोच्य सत्यमती पृथिव्यादिसद्रूपं शशविषाणाद्यसद्रूपञ्च विभज्याकरोत्। तथा अयमिन्द्रः सारासारविभागं कृतवान्। ऋतेनेति पूर्ववत्॥

अथ चतुर्थीमाह। "सोमेन सोमौ व्यपिबत्। सुतासुतौ प्रजापतिः। ऋतेन सत्यमिन्द्रियम्। दृष्ट्वा रूपे व्याकरोत्। सत्यानृते प्रजापतिः। अश्रद्धामनृतेऽदधात्। श्रद्धाꣳ सत्ये प्रजापतिः। ऋतेन सत्यमिन्द्रियम्" इति। प्रजापतिरेकरूपेण सोमद्रव्येण युक्तो रसात्मकोऽयं सोमोऽभिषुतो वल्ल्यात्मको-

ऽयं सोमो नाभिषुत इति विभज्य तत्र रसात्मकमेवापिबत्
अत्र प्रजापतिशब्देन प्रजापालकत्वादिन्द्रो विवक्षितः। त-
विभागे दृष्टान्त उच्यते, यथा प्रजापतिः सत्यवदनमनृतवद-
चेत्येवं वचनस्य द्वे रूपे विशेषेण सृष्टवान्। ततोऽनृते प्रजाना
मश्रद्धामविश्वासं स्थापितवान्। सत्यवचने तु स प्रजापतिः वि
श्वासं स्थापितवान्। एवमयमिन्द्रोऽपि अभिषुतमेव पिबति।

पञ्चमीमाह। "दृष्ट्वा परिस्रुतो रसम्। शुक्रेण शुक्र
व्यपिबत्। पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियम्
विपानꣳ शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु"
[२] इति। प्रजानां पालकोऽयमिन्द्रः परिस्रुतः आल-
वालस्य परितः अयणं कुर्व्वतो द्रव्यस्य रसं दृष्ट्वा तत्र शुक्रेण
शुद्धेन द्रव्यान्तरेण सहितं शुद्धद्रव्यान्तरं पयः सोमञ्च वि-
शेषेणापिबत्। ऋतेनेत्यादिकं प्रथममन्त्रवद्व्याख्येयम्। तैरेतैः
पञ्चभिर्मन्त्रैरुपस्थानं कुर्य्यात्॥

इति द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

द्वितीये ग्रहोपस्थानमुक्तम्। तृतीये ग्रहहोमोऽभिधीयते।
कल्पः। सुरावन्तमिति पयो ग्रहान् जुहोतीति। पाठस्तु,
सुरावन्तं बर्हिषदꣳ सुवीरम्। यज्ञꣳ हिन्वन्ति महिषा न-
मोभिः। दधानाः सोमं दिवि देवतासु। मदेमेन्द्रं यजमानाः

स्वर्का:" इति। महिषाः महनीयाः पूजनीया यजमानाः नमोभिर्नमस्कारोपेतैर्मन्त्रैर्यज्ञमिमं सौत्रामण्याख्यं हिन्वन्ति प्रीणयन्ति सम्यगनुतिष्ठन्तीत्यर्थः। कीदृशं यज्ञं सुराद्रव्योपेतं बर्हिषदं बर्हिषि दर्भे आसाद्यमानेन हविषा युक्तं, सुवीरं शोभनापत्यप्रदं दिवि द्युलोके देवतासु सोमं दधानाः सम्पादयन्तः। वयं यजमानाः स्वर्काः शोभनेनार्चनेन युक्ताः इन्द्रं मदेम हृष्टं करवाम।

कल्पः। यस्ते रसः सम्भृत इति। सुरा ग्रहानिति जुहोतीत्यनुवर्त्तते। पाठस्तु, "यस्ते रसः सम्भृत ओषधीषु। सोमस्य शुष्मः सुरया सुतस्य। तेन जिन्व यजमानं मदेन। सरस्वतीमश्विनाविन्द्रमग्निम्" इति। हे सुरे योऽयं ते रसः ओषधीषु व्रीह्यादिषु सम्पादितः सुतस्य अभिषुतस्य सोमस्य शुष्मो बलप्रदो रसः सुरया संयोजितः। तेन मदेन मदीयेन हर्षेण यजमानं जिन्व प्रीणयत, तथा सरस्वत्यादिदेवांश्च प्रीणय॥

कल्पः। यमश्विना नमुचेत्याश्विनमध्वर्युर्भक्षयतीति। पाठस्तु, "यमश्विना नमुचेरासुरादधि। सरस्वत्यसनोदिन्द्रियाय [१]। इमं तꣳ शुक्रं मधुमन्तमिन्दुम्। सोमꣳ राजानमिह भक्षयामि" इति। अश्विनौ देवौ यं रसं नमुचिनाम्नः असुराद्ध्याहृतवन्तौ। कीदृशं सोमं शुक्रं शुद्धं मधुमन्तं माधुर्योपेतं परमैश्वर्यप्रदं वा इन्दुमाह्लादकम्। सरस्वती च इन्द्रियार्थम् असनोत्प्रादात् तमिमं सोमं राजानमिह कर्म्मणि भक्षयामि॥

कल्पः। यदत्र रिप्तमिति सारस्वतं प्रतिप्रस्थाताग्नीध्र-श्चेति भक्षयत इति शेषः। पाठस्तु, "यदत्र रिप्तꣳ रसिनः सुतस्य। यदिन्द्रो अपिबच्छचीभिः। अहं तदस्य मनसा शिवेन। सोमꣳ राजानमिह भक्षयामि" इति। रसिनो रसयुक्तस्य सुतस्याभिषुतस्य सोमात्मकस्य पयसो यदवशिष्टं पात्रे रिप्तं लिप्तं यच्चेन्द्रः स्वकीयाभिः शचीभिः शक्तिभिः सहाऽपिबत्। अस्य सोमात्मकस्य पयसः तदवशिष्टं रसरूपं सोमराजत्वेन भाव्यमानं इह कर्म्मणि शिवेन मनसा अहं भक्षयामि॥

कल्पः। दक्षिणेनाहवनीयं पयःशेषं पितृपितामहेभ्यो ददाति पितृभ्य इति। पाठस्तु, "पितृभ्यः स्वधाविभ्यः स्वधा नमः। पितामहेभ्यः स्वधाविभ्यः स्वधा नमः। प्रपितामहेभ्यः स्वधा-विभ्यः स्वधा नमः। अक्षन् पितरः [२]। अमीमदन्त पितरः। अतीतृपन्त पितरः। अमीमृजन्त पितरः। पितरः शुन्धध्वम्" इति। स्वधाकारस्तृप्तिहेतुरेषामस्तीति ते स्वधाविनः, तादृ-शेभ्यः पितृभ्यः स्वधा पयःशेषोऽयं समर्पितः। तथा तेभ्यो नमस्कारोऽस्तु, एवं पितामहप्रपितामहयोर्योजनीयम्। एते पितरः अक्षन् भुक्तवन्तः, भुक्त्वा चास्मानमीमदन्त तुष्टान् कुर्व्वन्तः, अतीतृपन्त तृप्तियुक्तान् कुर्व्वन्तः, अमीमृजन्त शो-धितवन्तः। हे पितरो यूयमपि शुन्धध्वं शुद्धा भवन्तः॥

कल्पः। पुनन्तु मा पितरः सोम्यास इत्युपतिष्ठते। तत्र उपस्थानसाधनभूतासु दशस्वृक्षु प्रथमामाह। "पुनन्तु मा पि-तरः सोम्यासः। पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः।

पवित्रेण शतायुषा" इति। सोम्यासः अनुग्राहकत्वेन सौम्याः पितरः पवित्रेण शुद्धेन शतसङ्ख्याकेन आयुषा मां पुनन्तु शोधयन्तु। एवं पितामहप्रपितामहाश्च॥

अथ द्वितीयामाह। "पुनन्तु मा पितामहाः। पुनन्तु प्रपितामहाः [३]। पवित्रेण शतायुषा। विश्वमायुर्व्यश्नवै" इति। पूर्व्वमन्त्रोक्तानामपि पुनः कथनमादरार्थम्। एतेषां प्रसादेनाहं सर्व्वमप्यायुः प्राप्तवान्॥

अथ तृतीयादीनामष्टानामृचां प्रतीकानि दर्शयति। "अग्न आयूꣳषि पवसे। अग्ने पवस्व। पवमानः सुवर्ज्जनः। पुनन्तु मा देवजनाः। जातवेदः पवित्रवत्। यत्ते पवित्रमर्चिषि। उभाभ्यां देवसवितः। वैश्वदेवी पुनती" इति। अत्र आद्यमृग्द्वयं तु त्वमग्ने रुद्र इत्यनुवाके व्याख्यातम्। अवशिष्टं षट्कं पवमानः सुवर्ज्जन इत्यनुवाके॥

कल्पः। अथाहुतीर्जुहुतो ये समाना इत्यध्वर्य्युर्ये सजाता इति प्रतिप्रस्थातेति। पाठस्तु, "ये समानाः समनसः। पितरो यमराज्ये। तेषां लोकः स्वधा नमः। यज्ञो देवेषु कल्पताम्" [४] इति। यमराज्ये यमलोके वर्त्तमानाः पितरः मया समानस्वभावाः सङ्गतमनस्काश्च ये सन्ति तेषां पितॄणां लोको ममास्त्विति शेषः। तेभ्यः पितृभ्यः स्वधा हविःशेषो दत्तः नमस्कारश्च कृतः। अयं मदीयो यज्ञः देवेषु कल्पतां तृप्तिप्रदो भवतु॥

अथ द्वितीयामाह। "ये सजाताः समनसः। जीवा जीवेषु

मामकाः। तेषाꣳ श्रीर्मयि कल्पताम्। अस्मिँल्लोके शतꣳ समाः" इति। जीवेषु वर्त्तमानेषु मध्ये मामका मदीया ये जीवाः सजाताः भ्रात्रादिरूपेण मया सहोत्पन्नाः सङ्गतमनस्काः मयि प्रीतियुक्ताः, तेषां सर्व्वेषां श्रीः धनादिसम्पत् मयि कल्पतां तिष्ठतु मदधीना भवत्वित्यर्थः। अस्मिँल्लोके मम समाः शतसङ्ख्याकाः सन्तु॥

अथ द्वे स्रुती इत्यादिमन्त्रः वल्मीकवपायां सुरावपनार्थः। स च पूर्व्वकाण्डे युवं सुराममित्यनुवाके राजसूयान्तर्गतसौत्रामण्यर्थमाम्नातः। इह तु कौकिल्यर्थमाम्नायते। तत्पाठस्तु, "द्वे स्रुती अशृणवं पितॄणाम्। अहं देवानामुत मर्त्यानाम्। याभ्यामिदं विश्वमेजत्समेति। यदन्तरा पितरं मातरञ्च" इति। मरणशीलानां श्रौतमार्गवर्त्तिनां कर्म्मानुष्ठायिनामुपासकानाञ्च दक्षिणमार्ग उत्तरमार्गश्चेति द्वौ मार्गौ देवमुखादहं श्रुतवानस्मि। तत्रैकः पितॄणां सम्बन्धी तल्लोकप्राप्तिहेतुत्वात्। अन्यश्च देवानां सम्बन्धी ब्रह्मलोकप्राप्तिहेतुत्वात्। एतौ चोभौ मार्गौ छान्दोग्य-बृहदारण्यकयोः स्पष्टमाम्नातौ। ते धूममभिसम्भवन्ति। धूमाद्रात्रिमिति दक्षिणमार्गः। तेऽर्च्चिषमभिसम्भवन्ति। अर्च्चिषोऽहरित्यादिरुत्तरमार्गः। एजत् कम्पमानं परलोकगतियुक्तमिदं विश्वं प्राणिजातं याभ्यां मार्गाभ्यां तत्तल्लोकं सम्यक् प्राप्नोति। यन्मार्गद्वयं पितरं मातरञ्च अन्तरा द्यावापृथिव्योर्मध्ये वर्त्तते, तादृशमार्गद्वयम् अहं शृणवमित्यन्वयः॥

कल्पः। इदं हविरित्यैन्द्रं ब्रह्मा यजमानश्चेति हविःशेषं

भक्षयत इति शेषः। पाठस्तु, "इदꣳ हविः प्रजननं मे अस्तु। दशवीरꣳ सर्व्वगणꣳ स्वस्तये। आत्मसनि प्रजासनि। पशुसन्य-भयसनि लोकसनि वृष्टिसनि। अग्निः प्रजां बहुलां मे करोतु। अन्नं पयो रेतो अस्मासु धत्त। रायस्पोषमिषमूर्ज्जमस्मासु दीधरत् स्वाहा" [५] इति। इदं भक्ष्यमाणं हविः मे स्वस्त-येऽस्तु मम क्षेमाय भवतु। कीदृशं हविः, प्रजननं प्रजोत्पा-दकं दशवीरं दशसङ्ख्याकैः कर्म्मशूरैः पुत्रैर्युक्तम्, तथा च बन्धुभृत्यादिभिर्बहुभिर्गणैर्युक्तं सर्व्वगणम्, जीवात्मानमस्मिन् शरीरे चिरकालावस्थायिनं सनोति ददातीत्यात्मसनि, प्रजासनि पशुसनि प्रजां पशून् ददातीति पशुसनि, अभयसनि भीति-राहित्यं परलोकान् ददातीति। अयमग्निर्मदीयां प्रजां बहुलां करोतु। देवा अन्नादीनस्मासु सम्पादयत। तथा धनपुष्ट्यन्न-रसानस्मासु धारयत। इदं हविरस्मदुदरे स्वाहा हुतमस्तु।

अत्र विनियोगसङ्ग्रहः।

सुरायास्ते क्रमात्कार्य्या द्वाभ्यां चीरसुराहुतिः।
ग्रमश्विनेत्याश्विनाख्यमध्वर्य्युर्भक्षयेत्तथा॥
सारस्वतं प्रतिप्रस्थाताऽग्नीध्रस्य यदित्यतः।
पितृभ्य इत्यादिकेन पयःशेषान् ददाति हि॥
देश आहवनीयस्य दक्षिणेऽथोपतिष्ठते।
पुनन्तु मेत्यादिकानां मन्त्राणां दशकेन हि॥
अध्वर्य्योस्य प्रतिप्रस्थातुर्यै सदयते हुतिः।
सुराशेषन्तु वल्मीके नयति द्वे सुती इति॥

इदं भक्षयतो ब्रह्मस्वामिनौ ग्रहमैन्द्रकम्।
अनुवाके तृतीयेऽस्मिन् मन्त्रा एकोनविंशतिः॥

इति तृतीयोऽनुवाकः॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः॥

तृतीये ग्रहहोमोऽभिहितः। चतुर्थे उपहोमा उच्यन्ते। कल्पः। मनोतः काले पृथक् पात्रेषु पशूनां यूषाणि निदधाति पुरस्तात् स्विष्टकृतः ग्रहङ्गशफैः उपहोमान् जुहोत्यष्टावष्टावेकैकस्य कुष्ठिकशफ आश्विनस्य यूषेण कुष्ठिकां शफञ्च पूरयित्वा सीसेन तन्त्रमित्यष्टर्चेन प्रतिमन्त्रं द्वाभ्यां द्वाभ्यां कुष्ठिकशफाभ्यां जुहोतीत्युत्तमाया ग्रहङ्गे अनुषजति हुत्वा हुत्वा स्वेष्वभिषेचनपात्रेषु सम्पातानवनीय आहवनीये कुष्ठिकशफान् प्रविध्यत्येवमुत्तरेणाष्टर्चेन सारस्वतस्य सवर्णेनानुवाकेनैन्द्रस्येति। अत्र कुष्ठिकाशब्देन शफसमीपस्थः क्षुद्ररूपशफोऽभिधीयते। एकैकशफमेकैकमुपशफञ्च यूषेण पक्कमांसरसेन पूरयित्वा एकैकामाहुतिं जुहुयात्। एतैश्च मन्त्रैर्यजमानेन प्रायणीयो यज्ञावयवः निष्पाद्यो भविष्यन्निन्द्रदेहो निरूप्यते। तत्र प्रथमामृचमाह। "सीसेन तन्त्रं मनसा मनीषिणः। ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञꣳ सविता सरस्वती। इन्द्रस्य रूपं वरुणोऽभिषज्यन्" इति। मनीषिणो बुद्धिमन्त ऊहापोहकुशलाः कवयो विद्वांसः शास्त्राभिज्ञाः ऋत्विजः स्वमनसा

प्रयोगं सर्व्वं विचार्य्य सोमद्रव्यक्रीतेन सोमाङ्कुरादिना तन्त्रं सौत्रामणि-यज्ञविस्तारम् ऊर्णासूत्रेणेव वयन्ति निष्पादयन्ति। यथा लोके केचिदविपालकाः ऊर्णासूत्रेण कम्बलं वयन्ति। एवमेतेऽप्यृत्विजः सोमक्रीतद्रव्यादिना यज्ञाख्यं दीर्घतन्तुरूपं वयन्ति। अश्विनासरस्वत्याद्या देवता इन्द्रस्य स्वरूपभूतमिमं यज्ञम् ओषधिसदृशैः पश्वङ्गैः भिषज्यन् चिकित्सन्ते॥

अथ द्वितीयामाह। "तदस्य रूपममृतꣳ शचीभिः। तिस्रो दधुर्देवताः सꣳरराणाः। लोमानि शष्पैर्बहुधा न तोक्मभिः। त्वगस्य मांसमभवन्न लाजाः" इति। द्वावश्विनावेका सरस्वतीत्येतास्तिस्रो देवताः शचीभिः स्वकीयशक्तिभिः अस्येन्द्रस्य तद्यज्ञात्मकं रूपम् अमृतं विनाशरहितं यथा भवति तथा दधुः सम्पादयामासुः। कीदृश्यो देवताः संरराणाः सम्भूय परस्परं रममाणाः। तोक्मशब्देन अङ्कुरिता व्रीहय उच्यन्ते, तदङ्कुररूपं बालतृणं शष्पशब्देनोच्यते, नकार उपमार्थः। तोक्मभिः शष्पैः बहुधा लोमानीव निष्पादितवत्यः अङ्कुरप्ररोहाधारभूता वीजविशेषा लाजाशब्देनोच्यन्ते। ते च लाजा अस्य यज्ञरूपस्येन्द्रस्य त्वगिव मांसमिवाभवन्॥

तृतीयामाह। "तदश्विना भिषजा रुद्रवर्त्तनी। सरस्वती वयति पेशो अन्तरः [१]। अस्थि मज्जानं मासरैः। कारोत्तरेण दधतो गवां त्वचि" इति। रुद्रस्येव वर्त्तनिः मार्गो ययोरश्विनोः तौ रुद्रवर्त्तनी, यथा रुद्रः क्रूरो देवो हिंसितुं समर्थः, एवमेतावश्विनौ व्याधिं नाशयितुं समर्थावित्यर्थः।

तादृशावश्विनौ न तत्र यज्ञे भिषजौ चिकित्सकौ। या तु सरस्वती अन्तरः शरीरमध्ये पेशो वयति रूपं निष्पादयति। मासरशब्देन यवनिष्पन्नाः सूक्ष्मसक्तवः दधिमिश्राः दर्भैः परिवेष्टिता उच्यन्ते। कारोत्तरशब्देन अवटस्थानीयस्तत्सदृशो वेणुदलनिर्मितश्चर्मणा सर्वतः परिवेष्टितः सुराश्रवणार्थभाण्डाधारः पदार्थविशेष उच्यते। गवां लच्यवस्थितेन कारोत्तरेण मासरैश्च मज्जानम् अस्थि च दधतो दधाति सरस्वती सम्पादयतीत्यर्थः॥

चतुर्थीमाह। "सरस्वती मनसा पेशलं वसु। नासत्याभ्यां वयति दर्शतं वपुः। रसं परिस्रुता न रोहितम्। नग्नहुर्धीरस्तसरन्न वेम" इति। इयं सरस्वती नासत्याभ्याम् अश्विदेवताभ्यां सहिता वपुः वयति शरीरं मनसा निष्पादयति। कीदृशं वपुः, पेशलं वसुदेवतात्मनो निवासयोग्यं दर्शतं दर्शनीयं दृष्टिप्रियमित्यर्थः। परिस्रुता न परिस्रुतेव धारया स्रवत् सुराद्रव्यं परिस्रुदित्युच्यते, तया परिस्रुतेव शरीरस्थं रसं जलं रोहितं रक्तं वयति सम्पादयति, स्रवन् स एव रक्तस्थानीय इत्यर्थः। नग्नहुशब्देन यवानां स्थूलचूर्णानि संस्रावेणाभिषिक्तानि कथ्यन्ते। सोऽयं नग्नहुः अवयवान्तरस्थानीय इत्यर्थः। धीर इत्यादि दृष्टान्तः, लोके धीरो बुद्धिमान् कुविन्दः तसरं नववस्त्रमिव। वेमशब्देन वस्त्रनिर्माणकाले प्रहारदण्डोऽभिधीयते। यथा कुविन्दः प्रहारदण्डेन वस्त्रं निष्पादयति, तद्वदित्यर्थः॥

अथ पञ्चमीमाह। "पयसा शुक्रममृतं जनित्रम्। सुरया मूत्राज्जनयन्ति रेतः। अपामतिं दुर्मतिं बाधमानाः। ऊवध्यं वातꣳ सब्वं तदारात्" [२] इति। यदेतदच पयोद्रव्यं यच्च सुराद्रव्यं तेन द्रव्यद्वयेन मूत्रात् मूत्रद्वारात् सकाशात् निर्गमनयोग्यं रेतो देवता जनयन्ति। कीदृशं रेतः, शुक्रं दीप्तिमच्छ्वेतवर्णम् अमृतं विनाशरहितम् अतएव जनित्रम् अपत्योत्पादकम्। या देवता रेतो जनयन्ति ताः कीदृश्यः, अमतिं दुर्मतिञ्च अपबाधमानाः, अमतिः कर्त्तव्यविषयज्ञानाभावः, दुर्मतिः विपरीतज्ञानम्। किञ्च ता देवतास्तस्मिन् सम्पादयितव्ये शरीरे आरात् समीपे उदरमध्ये ऊवध्यं जनयति। अर्द्धं जीर्णमन्नमपरिपक्वं पुरीषमूवध्यशब्दवाच्यम्। पयःसुराभ्यामेव तज्जनयति, तथा सब्वं वातं जनयति। वातः प्राणवायुः। बुवंशब्दो श्वासकालीनं शब्दमनुकरोति, तेन शब्देन सहितमित्यर्थः॥

षष्ठीमाह। "इन्द्रः सुत्रामा हृदयेन सत्यम्। पुरोडाशेन सविता जजान। यकृत् क्लोमानं वरुणोऽभिषज्यन्। मतस्ने वायव्यैर्नमिनाति पित्तम्" इति। शोभनं यथा भवति तथा त्रायत इति सुत्रामा, तादृश इन्द्रः पशोः हृदयेन सत्यं यथाशक्तिज्ञानं जजान। सविता च पुरोडाशेन यकृज्जजान। वरुणश्च पुरोडाशेन क्लोमानं भिषज्यन् वर्त्तते। यकृत्क्लोमशब्दाभ्यां हृदयस्य पार्श्वद्वयवर्त्तिनौ मांसखण्डौ उच्येते। यकृत्क्लोम्नोः समीपवर्त्तिनी द्वे मांसे मतस्ने वायव्यैर्न वायव्यैरिव

वायव्यानि गृहपात्राणि तैर्मतस्ने इव पित्तमिव मिनाति अवयवजातं सम्पादयति ॥

सप्तमीमाह। "आन्त्राणि स्थाली मधु पिन्वमाना। गुदा पात्राणि सुदुघा न धेनुः। श्येनस्य पत्रं न प्लीहा शचीभिः। आसन्दीनाभिरुदरं न माता" इति। मधु मधुरं क्षीरादिरसं पिन्वमाना प्रीणयन्ति धारयन्तीत्यर्थः। तादृशी स्थाली या वर्त्तते, सेयमान्त्राणि आन्त्रस्थानीयान्यन्यानि पिष्टादिद्रव्य-स्थापनार्थानि पात्राणि तानि गुदा गुदस्थानीयानि। स्थाल्याः पात्राणाञ्च दृष्टान्तः, सुदुघा न धेनुः, शोभनं क्षीरं दोग्धीति सुदुघा, तादृशी धेनुरिव स्थाल्यादिकं वर्त्तते। प्लीहशब्दो मांसविशेषवाची, स च मांसविशेषः श्येनाख्यस्य पक्षिणः पत्रं न पक्ष इव, तादृशः स मांसविशेषः शचीभिः स्वव्यवहारशक्तिभिः सह पात्रैः सम्पादित इति शेषः। येयमभिषेकार्था आसन्दी सेयं नाभिस्थानीया, या तु माता सा भूम्यात्मिका वेदिः, सेयमुदरं न उदरमिव ॥

अष्टमीमाह। "कुम्भो वनिष्ठुर्जनिता शचीभिः। यस्मिन्नग्रे योन्यां गर्भो अन्तः [२]। प्लाशीर्व्यक्तः शतधार उत्सः। दुहेन कुम्भीᳶ स्वधां पितृभ्यः" इति। उलूकपक्षिसदृशो मांसविशेषो वनिष्ठुः, योऽयमत्र द्रवद्रव्यस्थापनार्थः कुम्भः स वनिष्ठुस्थानीयः। स च शचीभिः स्वशक्तिभिः जनिता उत्पादयिता। यस्मिन् वनिष्ठौ अग्रे पुरोभागे योन्यामन्तर्यो गर्भो वर्त्तते, अत्र सुराऽऽवनयनार्थं शतछिद्रप्रयुक्तः कुम्भो योऽस्ति सोऽयं व्यक्तः स्पष्टः।

बहुछिद्रोपेतत्वात् शतधारसुरास्रवणयुक्तत्वात् उत्सः। तादृशः कुम्भः स्त्रीणां नाभिकाछिद्रस्थानीयः, येयं द्रवद्रव्यधारणार्था कुम्भी तां कुम्भीं पितृभ्यः पित्रर्थं स्वधां दुहे न अमृतं दोग्धीव अध्वर्युरिति शेषः॥

नवमीमाह। "मुखꣳ सदस्य शिर इत्सदेन। जिह्वा पवित्रमश्विना सꣳ सरस्वती। चप्यन्नपायुर्भिषगस्य वालः। वस्तिर्न शेपो हरसा तरस्वी" इति। सीदत्यत्रेति सदः देवयजनस्थानं, तेन सदेनास्य निरूप्यमाणशरीरस्य सम्मुखं समीचीनं मुखं शिर इच्छिरस्य सम्पन्नमिति शेषः। पवित्रं द्रव्यशोधनार्थं यद्वस्त्रं तज्जिह्वा, एतत् सर्व्वमश्विनौ सरस्वती च तिस्रः सम्पादितवत्यः। चप्यं पिष्टपात्रं तत् पायुर्न अपानस्थानमिव वर्त्तते। योऽयं वालो द्रव्यशोधनार्थं सोऽयमस्य शरीरस्य भिषक् चिकित्सकस्थानीयः, तेन हि व्याधिस्थानीयो द्रव्यदोषोऽपनीयते। योऽयं पशोः शेपः सोऽयं वस्तिर्न मूत्रस्थानमिव हरसा वह्निज्वालारूपेण तेजसा तरस्वी निरूप्यमाणो देहो वेगवानिव लक्ष्यते॥

अथ दशमीमाह। "अश्विभ्यां चक्षुरमृतं ग्रहाभ्याम्। छागेन तेजो हविषा शृतेन। पक्ष्माणि गोधूमैः कुवलैरुतानि। पेशो न शुक्लमसितं वसाते" [४] इति। अश्विभ्यां ग्रहाभ्याम् अश्विनोः सम्बन्धिनौ यौ ग्रहावयवौ ताभ्याममृतं विनाशरहितं चक्षुः सम्पादितम्। शृतेन पक्वेन हविःस्वरूपेण छागेन चक्षुर्गतं तेजः सम्पादितम्। सक्तुनिष्पादनार्थं ये गोधूमाः ये च

क्काला: वदरफलविशेषा: तैरुभयैः परस्परमृतानि सम्बन्धानि पक्ष्माणि रोमाणि सम्पाद्यन्ते पेशो न रूपमिव यत्पशो दृश्यते तच्चक्षुर्गतशुक्लमसितञ्च शुक्लमण्डलं कृष्णमण्डलञ्च तदुभयं वसाते अश्विनौ देवौ पक्ष्मभिराच्छादयतः ॥

एकादशीमाह। "अविर्न मेषो नसि वीर्य्याय। प्राणस्य पन्था अमृतो ग्रहाभ्याम्। सरस्वत्युपवाकैर्व्यानम्। नस्यानि बर्हिर्बदरैर्जजान" इति। अविर्न अविरिव वर्त्तमानो यः सारस्वतो मेषः सोऽयं नसि नासिकायां वीर्य्याय श्वासप्रवृत्तिसामर्थ्याय प्रवर्त्तते। इयञ्च नासिका प्राणाख्यस्य वायोरमृतः कदाचिदपि विनाशरहितः पन्थाः गमनागमनहेतुः ग्रहाभ्यां पयःसुराभ्यां निष्पादितः। अथेयं सरस्वती उपवाकैः हरितयवसक्तुभिः व्यानवायुं जनयति। नस्यानि नासिकायां भवानि बर्हिर्बर्हींषि लोमानि बदरैः सक्तुनिष्पादनाय सम्पादितैः बदरफलैः जजान सम्पादयामास॥

अथ द्वादशीमाह। "इन्द्रस्य रूपमृषभो बलाय। कर्णाभ्याꣳ श्रोत्रममृतं ग्रहाभ्याम्। यवा न बर्हिर्भ्रुवि केसराणि। कर्कन्धु जज्ञे मधु सारघं मुखात्" इति। योऽयमृषभ इन्द्रस्य रूपः इन्द्रदेवताकत्वेन तत्स्वरूपसदृशः, सोऽयमस्य शरीरस्य बलार्थं सम्पाद्यते। पशुसम्बन्धिभ्यां कर्णाभ्यां पयःसुरारूपग्रहाभ्यां चामृतं श्रोत्रं बाधिर्य्यरहितं श्रोत्रेन्द्रियं सम्पाद्यते। भ्रुवि यवा न भ्रूमादुत्पन्ना यवा इव बर्हिर्वैयामासादितानि बर्हींषि केसराणि प्रवृद्धतमानि लोमानि सरघा मधुमक्षिका-

स्ताभिः सम्पादितं सारघं मधु तद्रूपं कर्कन्धु जज्ञे। कर्कन्धुशब्देनातिस्थूलबदरफलपिष्टमुच्यते। तच्च मधुसदृशं मुखात् जज्ञे, यज्ञप्रारम्भे समुत्पन्नमित्यर्थः॥

त्रयोदशीमाह। "आत्मन्नुपस्थे न वृकस्य लोम। मुखे श्मश्रूणि न व्याघ्रलोमम् [५]। केशा न शीर्षन् यशसे श्रियै शिखा। सिꣳहस्य लोम त्विषिरिन्द्रियाणि" इति। प्रकृतिभूतायां सौत्रामण्यां त्रयाणि लोमानीतिवाक्येन वृकव्याघ्रसिंहानां लोमानि विहितानि। तान्यत्र चोदकप्राप्तानि ग्रहत्रये प्रक्षिप्यन्ते। तत्र यद्वृकस्य लोम तदात्मन् सम्पाद्यमानशरीरे उपस्थे न गुह्यप्रदेश इव वर्त्तते। यत्तु व्याघ्रलोम तन्मुखे वर्त्तमानानि श्मश्रूणीव। यत्तु सिंहस्य लोम तत् शिरसि केशा इव। केशनिष्पन्नाद्य शिखा यशसे श्रियै च सम्पद्यते। अनुष्ठानकाले सशिखात्वेन यशः लोके व्यवहारे रमणीयत्वेन श्रिया तु लोमगता त्विषिर्दीप्तिः सा तु सम्पाद्यस्य शरीरस्य इन्द्रियस्थानीया॥

चतुर्द्दशीमाह। "अङ्गान्यात्मन् भिषजा तदश्विना। आत्मानमङ्गैः समधात्सरस्वती। इन्द्रस्य रूपꣳ शतमानमायुः। चन्द्रेण ज्योतिरमृतं दधाना" इति। तत्तदानीं यागावसरे भिषजा चिकित्सकावश्विनौ आत्मन् सम्पाद्ये शरीरे अङ्गानि हस्तपादादीनि सम्पादितवन्तौ। सरस्वती च तैरङ्गैरात्मानं सम्पूर्णदेहं समधात् सम्यगकार्षीत्। कीदृशी सरस्वती इन्द्रस्य वर्त्तमानस्य यद्रूपं तद्दधाना सम्पादयन्ती, तथा शतमानं

शतसंवत्सरप्रमाणम् आयुः सम्पादयन्ती, तथा तच्चन्द्रेण आह्लादकरूपेण अमृतं ज्योतिरनश्वरं तेजः सम्पादन्ती ॥

पञ्चदशीमाह। "सरस्वती योन्यां गर्भमन्तः। अश्विभ्यां पत्नी सुकृतं बिभर्त्ति। अपाꣳ रसेन वरुणो न साम्ना। इन्द्रꣳ श्रियै जनयन्नप्सु राजा" इति। अश्विभ्यां देवाभ्यां सुकृतं सुष्ठु सम्पादितम् उत्पादनीयशरीररूपं गर्भं पत्नी पालयित्री सरस्वती योन्यां गर्भाशये अन्तर्मध्ये बिभर्त्ति पोषयति। अपां रसेन सारभूतेन साम्ना परस्परं साम्येन पयःसुराग्रहेण अप्सु वरुणो न राजा, यथा जलमध्ये वरुणो राजा तस्यामब्देवतायां पुत्रं जनयति, तथेमं यजमानम् इन्द्रं इन्द्रसमानशरीरं श्रियै सम्पदनुभवार्थम् अयमनुष्ठीयमानो यागो जनयन् वर्त्तते ॥

षोडशीमाह। "तेजः पशूनाꣳ हविरिन्द्रियावत्। परिस्रुता पयसा सारघं मधु। अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासुताभ्याम्। अमृतः सोम इन्दुः" [६] इति। पशूनां तेजः सारभूतं हविः भिषजा चिकित्सकाभ्यामश्विभ्यां दुग्धं सम्पादितमित्यर्थः। केन द्रव्येण परिस्रुता पयसा परितः स्रुतमिति परिस्रुत् सुरा तया क्षीरेण च सम्पादितं हविः। कीदृशं हविः इन्द्रियावत् इन्द्रियाभिवृद्धिकरं सारघं मधु सरघाभिः सम्पादितेन मधुना सदृशं यथाऽश्विभ्यां हविः सम्पादितं तथा सरस्वत्या तत्फलभूतो यजमानस्त्रेन्द्रसदृशः सम्पादितः। केन साधनेन सुतासुताभ्याम् अभिषवसदृशव्यापारेण

सम्पादित-सुता सुता, तादृक्प्रयासरहितश्चोरमसुतं, ताभ्यां देहः सम्पादितः। कीदृशो देहः अमृतः देवलोके समुत्पन्नत्वात् मरणरहितः, सोमः सौम्यो दृष्टिप्रियः इन्दुः चन्द्रवदाह्लादकरः परमैश्वर्य्ययुक्तो वा। एवमेतैः षोडशभिर्मन्त्रैर्यजमानस्य भाविदेहसूचनपरैरुपहोमः कर्त्तव्यः ॥

इति चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

चतुर्थे उपहोमा अभिहिताः । पञ्चमेऽभिषेकोऽभिधीयते। कल्पः। औदुम्बर्य्या मन्त्वर्णिमात्रा शीर्षण्यानूच्यानाभिदम्प्रपादामौञ्जविवाना मित्रोऽसि वरुणोऽसीति तां यजमानायतने प्रतिष्ठापयत्यासादनोपवेशनाभिमन्त्रणानि राजसूयवदिति। पाठस्तु,“मित्रोऽसि वरुणोऽसि। समहं विश्वैर्देवैः”इति। हे आसन्दीविशेष त्वं इष्टप्रापकत्वात् मित्रोऽसि, अनिष्टनिवारकत्वाद्वरुणोऽसि, अहं त्वद्बलात् सर्व्वैर्देवैः सङ्गता भूयासम् ॥

कल्पः। क्षत्रस्य नाभिरसीति तस्यां कृत्यधीवाससमास्तीर्य्येति। पाठस्तु, “क्षत्रस्य नाभिरसि। क्षत्रस्य योनिरसि। स्योना मा सीद। सुषदा मा सीद। मा त्वा हिꣳसीत्। मा मा हिꣳसीत्” इति। हे चर्म्म त्वं क्षत्रस्य बलस्य नाभिर्मध्यस्थानमसि, तथा क्षत्रस्य योनिः कारणमसि ॥

कल्पः। स्योना मा सीद सुषदा मा सीदेति तामासाद्य

यजमानो मा त्वाहिंसीर्मा मा हिंसीरित्युपविशतीति। हे आसन्दि त्वं स्योना सुखकरी भूत्वा मां प्रत्यासीद। तथा सुषदा सुष्ठु उपवेशनयोग्या सती मां प्रत्यासीद प्राप्नुहि। मदीयो देहस्त्वां मा हिनस्तु। त्वदीयस्वरूपमपि मां मा हिनस्तु॥

कल्पः। निषसाद धृतव्रत इत्यासीनमनुमन्त्रयत इति। पाठस्तु, "निषसाद धृतव्रतो वरुणः। पस्त्यास्वा [१]। साम्राज्याय सुक्रतुः" इति। अयं यजमानो धृतव्रतः स्वीकृतनियमः वरुणः फलप्रतिबन्धक-पापनिवारको भूत्वा साम्राज्यं कर्त्तुं सुक्रतुः शोभनसङ्कल्पः सन् पस्त्यासु गृहसमानेष्वासन्दीस्थानेषु आनिषसाद सर्व्वत उपविष्टवान्॥

कल्पः। तस्यां प्राङ्मुखमासीनं प्रत्यङ्मुखस्तिष्ठन् अश्विनः सम्पातैरभिषिञ्चति, देवस्य त्वेति। पाठस्तु, "देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। अश्विनोर्भैषज्येन*। तेजसे ब्रह्मवर्चसायाभिषिञ्चामि" इति। सवितुर्देवस्य प्रेरणे सति अश्विसम्बन्धिभ्यां बाहुभ्यां, पूषसम्बन्धिभ्यां हस्ताभ्याम् अश्विनोः सम्बन्धिना सम्पादितेन औषधरूपेण कान्तिब्रह्मवर्चससिद्ध्यर्थं यजमानं त्वामभिषिञ्चामि॥

* एतत्पुस्तकस्थयोरश्विनोर्भैषज्येन, तेजसे ब्रह्मवर्चसायेत्येतयोर्द्दलयोः ऋचोः स्थाने सरस्वत्यै, वीर्यायान्नाद्याय इति, पुनः सरस्वत्यै भैषज्येन, वीर्यायान्नाद्यायेत्येतयोर्दलयोः ऋचोः स्थाने अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायेति विपर्यस्तपाठः क्वापि दृश्यते।

कल्पः। एवमुत्तरेण मन्त्रेण सारस्वतस्तोभमेनेन्द्रस्येति। सम्पातेनाभिषिञ्चतीत्यनुवर्त्तते। पाठस्तु, "देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्याम्। सरस्वत्यै भैषज्येन [२]। वीर्य्यायान्नाद्यायाभिषिञ्चामि" इति। पूर्ववद्व्याख्येयम्॥

कल्पः। कोऽसि कतमोऽसीति पाणिं सम्मृशेति। पाठस्तु, "कोऽसि कतमोऽसि। कस्मै त्वा काय त्वा" इति। हे यजमान त्वं कोऽसि प्रजापतिरूपोऽसि, अत एव कतमोऽसि अविज्ञातविशेषोऽसि, नहि प्रजापतिरीदृश इति केनचिदपि निर्धारयितुं शक्यते। तस्य सर्व्वात्मकत्वेन विशेषस्य दुर्निरूपत्वात्। अतः कस्मै अविज्ञेयस्वरूपसिद्ध्यर्थं त्वां स्पृशामि। काय प्रजापतिरूपसिद्ध्यर्थं त्वां स्पृशामि। अनेन मन्त्रेण यजमानस्य पाणिद्वयमभिसंस्पृशेत्॥

कल्पः। अत्र राजसूयवत्सङ्गल्यनाम्ना आह्वयेति। राजसूयेत्येवमुक्तं सङ्गल्यनाम्ना राजाह्वयति। "सुश्लोकां३ इति सङ्ग्रहीतारम्। सुमङ्गलां३ इति भागदुघम्। सत्यराजा३निति क्षत्तारम्" इति। शोभनः श्लोकः कीर्त्तिर्यस्यासौ सुश्लोकः। आह्वानार्था सानुनासिका प्लुतिः। सुष्ठु मङ्गलाचरणं यस्यासौ सुमङ्गलः। सत्येन स्वामिव्यापारेण राजत इति सत्यराजः। एतैः सङ्ग्रहीत्रादय आह्वातव्याः स्युः। रथस्योपरि अश्वप्रग्रहधारी सङ्ग्रहीता, यद्वा सम्पादितं राजधनं भाण्डागारे सम्यक् सङ्गृह्णातीति सङ्ग्रहीता। ग्रामेषु राजभागकरं दुग्ध स्वीकरोतीति भागदुघः। क्षत्ता सारथिः द्वारपालको वा॥

कल्पः। शिरो मे श्रीरिति यथालिङ्गमङ्गानि संमृशेति। पाठस्तु, "शिरो मे श्रीः [३] यशो मुखम्। त्विषिः केशाश्च श्मश्रूणि। राजा मे प्राणोऽमृतम्। सम्राट् चक्षुः। विराट् श्रोत्रम्। जिह्वा मे भद्रम्। वाङ्महः। मनो मन्युः। स्वराड्भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि [४]। चित्तं मे सहः। बाहू मे बलमिन्द्रियम्। हस्तौ मे कर्म्म वीर्य्यम्। आत्मा क्षत्रमुरो मम। पृष्टीर्मे राष्ट्रमुदरमꣳसौ। ग्रीवाश्च श्रोणी। ऊरू अरत्नी जानुनी। विशो मेऽङ्गानि सर्व्वशः। नाभिर्मे चित्तं विज्ञानम्। पायुर्मेऽपचितिर्भसत् [५]। आनन्दनन्दावाण्डौ मे। भगः सौभाग्यं पसः" इति। मदीयं शिरः श्रियोहेतुत्वेन श्रीरूपमस्तु। मुखं यशोहेतुरस्तु। केशाः श्मश्रूणि च कान्तिहेतवः सन्तु। मदीयः प्राणः सर्व्वेन्द्रियाणां राजा असन् अमृतहेतुरस्तु। चक्षुरिन्द्रियं दूरसूक्ष्मादिदर्शनेन सम्यग्राजमानमस्तु। श्रोत्रेन्द्रियं दूरशब्दमन्दध्वनिश्रवणेन विविधं राजमानमस्तु। मदीया जिह्वा विविधरसज्ञानेन कल्याणभोगहेतुरस्तु। वागिन्द्रियं सभा-रञ्जनेन पूजाहेतुरस्तु। मदीयं मनो धर्म्मकार्य्यमननहेतुरस्तु। मदीयो भामः क्रोधः भ्रातृव्यनिराकरणेन स्वयमेव राजास्तु। अङ्गुलयो मोदा हर्षहेतवः सन्तु। अङ्गान्यनुक्तावयवाः प्रमोदा प्रकृष्ट-हर्षहेतवः सन्तु। मदीयं चित्तं स्तुतिनिन्दादिसहनहेतुः अस्तु। मनश्चित्तयोर्वृत्तिभेदेन भेदः। मदीयौ बाहू मणिबन्धस्य मूलभागौ प्रबलशक्तिहेतू स्ताम्। हस्तौ मणिबन्धस्याग्रभागौ वीर्य्यवद्व्यापारहेतू स्ताम्।

मदीय आत्मा मध्यशरीरम् उरश्च चत्रं बलहेतुरस्तु। पृष्ठ्यादयो जान्वन्ता अवयवाः राष्ट्रहेतवः सन्तु। पृष्ठयः पार्श्वोरुपरिस्थान्यस्थीनि। उदरादयः प्रसिद्धाः। ग्रीवाः गलावयवाः। अरत्नी प्रकोष्ठौ। विशो मनुष्याः। ममाङ्गानीव सर्व्वतो विधेयाः सन्तु। मदीयं नाभिः। चित्तं चैतन्यहेतुरस्तु। पायुर्विज्ञानं विसर्गज्ञानकुशलोऽस्तु। भसत् मे मम उपस्थेन्द्रियम् अपचितिः नियतत्वेन बहुमानहेतुरस्तु। मदीयावाण्डौ वृषणौ आनन्दनन्दयोर्हेतू स्ताम्। पुंसः सुखमानन्दः। स्त्रियाः सुखं नन्दः। पसः प्रजननं भगः सौभाग्यहेतुरस्तु। भगः ऐश्वर्य्यम्। सौभाग्यं देहशोभा॥

कल्पः। जङ्घाभ्यां पद्भ्यामिति प्रत्यवरुह्येति। पाठस्तु, "जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि। विशि राजा प्रतिष्ठितः" इति। जानुभ्यामधोभागौ जङ्घे ताभ्यां पादाभ्यां धर्मः देहस्य धारयितास्मि। विशि प्रजायां प्रतिष्ठितः स्थैर्य्येणावस्थितो राजास्मीति॥

कल्पः। प्रतिचत्रे प्रतितिष्ठामि राष्ट्र इति जपित्वेति। पाठस्तु, "प्रतिचत्रे प्रतितिष्ठामि राष्ट्रे। प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन्। प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे। प्रतिद्यावापृथिव्योः। प्रतितिष्ठामि यज्ञे" [६] इति। चत्रादिषु यज्ञान्तेषु प्रतितिष्ठामि स्थैर्य्येणावस्थितोऽस्मि। चत्रं बलं चत्रियादिर्वा। राष्ट्रं देशः। अश्वादयः प्रसिद्धाः। आत्मा शरीरम्। पुष्टं शरीरस्य पुष्टिः॥

*कल्पः। त्रया देवा एकादशेत्याहुतीर्जुहोति। तत्र प्रथमा-*
मृचमाह। "त्रया देवा एकादश। त्रयस्त्रिꣳशाः सुराधसः। बृहस्पतिपुरोहिताः। देवस्य सवितुः प्रसवे। देवा देवैरवन्तु मा। प्रथमा द्वितीयैः। द्वितीयास्तृतीयैः। तृतीयाः सत्येन। सत्यं यज्ञेन। यज्ञो यजुर्भिः [७]। यजूꣳषि सामभिः। सामान्यृ-ग्भिः। ऋचो याज्याभिः। याज्या वषट्कारैः। वषट्कारा आ-हुतिभिः। आहुतयो मे सर्व्वान् कामान्त्समर्द्धयन्तु" इति। एकादशसङ्ख्याका देवताः त्रयाः त्रिविधाः, लोकत्रयवर्त्तित्वात्। यथा चाम्नातम्, ये देवा दिव्येकादश स्थेत्यादिना ते चैते त्रयस्त्रिंशत्सङ्ख्याका देवाः शोभनस्य कर्म्मणः साधकाः, बृहस्पतिः पुरोहितो मुख्यो येषान्ते बृहस्पतिपुरोहिताः, सवितुर्देवस्य प्रसवे सति ते सर्व्वे मुख्या देवा इतरैः सह मामवन्तु। तत्र प्रथमगणस्थाः द्वितीयगणस्थैः सहिताः। द्वितीयगणस्थास्तृतीय-गणैः सहिताः। तृतीयगणस्थाः सत्येन सहिताः। सत्यञ्च यज्ञेन सहितम्। एवं यज्ञादय आहुतिपर्य्यन्ता उत्तरोत्तरवस्तुभिः सह तिष्ठन्ति। तास्वाहुतयो मदीयान् कामान् समर्द्धयन्तु समृद्धान् कुर्व्वन्तु॥

अथ द्वितीयं मन्त्रमाह। "भूः स्वाहा" इति। येयं भूमि-स्तस्यै स्वाहा हुतमस्तु॥

कल्पः। लोमानि प्रयतिर्ममेति यथा लिङ्गमङ्गानि सम्मृ-शति इति। पाठस्तु, "लोमानि प्रयतिर्मम। त्वङ्म आनति-रागतिः। माꣳसं म उपनतिः। वस्वस्थि। मज्जा म आनतिः"

[८] इति। मदीयानि लोमानि प्रयतिः शुद्धिकराणि सन्तु। मदीया त्वक् आनतिः अन्येषां प्रह्वीभावहेतुरस्तु। आगतिरन्येषां पदार्थानाम् आगमनहेतुरस्तु। मदीयं मांसमुपनतिः अभिप्रेतसम्पत्तिहेतुरस्तु। अस्थि च मदीयं वसु धनहेतुरस्तु। मत्सम्बन्धिमज्जा चानतिः अन्येषां वशीकरणहेतुरस्तु॥

अत्र विनियोगसङ्ग्रहः।

आमन्दीं स्थापयेन्मित्रत्वचस्य चर्मसंस्कृतिः।
स्योनां तस्यामुपविशेन्निषसादेति मन्त्रयेत॥
देवस्येणाभिषिञ्चेत् कोसिपाणी उपस्पृशेत्।
सुश्लोकत्रयेणाह्वयेत् सिरस्यात्माभिमर्शनम्॥
अवरोहति जङ्घाभ्यां प्रतित्रयादिकं जपेत्।
त्रया भूराहुतिर्हुत्वा लोमेत्यङ्गान्युपस्पृशेत्॥
अनुवाके पञ्चमेऽस्मिन् मन्त्राः सप्तदश स्मृताः।

इति पञ्चमोऽनुवाकः॥ ५॥

अथ षष्ठोऽनुवाकः।

पञ्चमे अभिषेक उक्तः। षष्ठे अवभृथ उच्यते। कल्पः। यद्देवा देवहेडनमित्यवभृथे पञ्चाहुतीर्जुहोति। तत्र प्रथमामृचमाह। "यद्देवा देवहेडनम्। देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसः। विश्वान् मुञ्चत्वंहसः" इति। देवासो द्योतनात्मकाः हे देवाः देवहेडनं देवविषयमनादररूपं यत्

पापं वयं मनुष्यपुत्राश्चकृम कृतवन्तः। अंहसोऽभिभवनस्वभा-
वात् विश्वस्मात् सर्व्वस्मात् तस्मादेनसः पापात् अग्निर्मा मां
मुञ्चतु मुक्तं करोतु॥

द्वितीयामाह। "यदि दिवा यदि नक्तम्। एनाꣳसि चकृमा
वयम्। वायुर्मा तस्मादेनसः। विश्वान्मुञ्चत्वꣳहसः" इति।
कालविशेषे कृतात् पाप्मनः वायुर्मोचकोऽस्तु॥

अथ तृतीयामाह। "यदि जाग्रद्यदि स्वप्ने। एनाꣳसि
चकृमा वयम्[१]। सूर्य्यो मा तस्मादेनसः। विश्वान्मुञ्चत्वꣳ-
हसः" इति। अवस्थाविशेषे कृतात् पाप्मनः सूर्य्यो मोचकोऽस्तु॥

चतुर्थीमाह। "यद्ग्रामे यदरण्ये। यत्सभायां यदिन्द्रिये।
यच्छूद्रे यदर्य्ये। एनश्चकृमा वयम्। यदेकस्याधिधर्म्मणि।
तस्यावयजनमसि" इति। अर्य्यः स्वामी वैश्यो वा अरण्यादि-
देशविशेषे चक्षुरादीन्द्रियविशेषे शूद्रादिपुरुषविशेषे च यदेनो
वयञ्चकृम यदप्येकस्यान्यपुरुषस्य धर्म्मणि अग्निहोत्रादिधर्मकार्य्ये
अधिकं पापञ्चकृम तस्य सर्व्वस्य पापस्य हे आहुतिरूप त्वम्
अवयजनं विनाशकमसि॥

पञ्चमीमाह। "यदापो अघ्निया वरुणेति शपामहे। ततो
वरुण नो मुञ्च"[२] इति। हे वरुण या आपः सन्ति याश्चाघ्न्या
गावः, एतद्द्वयं भूम्यादेरुपलक्षणं, तेषु सर्व्वेषु विषयेषु इत्यनेन
प्रकारेण शपामहे सत्यत्वेन तत्त्वेन वा शपथं कुर्म्म इति शेषः।
यत् पापमस्ति हे वरुण ततः शपथकृतात् पापात् नोऽस्मान्
मुञ्च मुक्तान् कुरु॥

कल्पः। अवभृथ निचङ्कुणेत्यवभृथं यजमानोऽभिमन्त्रयति। पाठस्तु, "अवभृथ निचङ्कुण निचेरुरसि निचङ्कुण। अव देवै-र्देवकृतमेनो याट्। अव मर्त्यैर्मर्त्यकृतम्। उरोरा नो देव रि-षस्पाहि" इति। हे अवभृथकर्म्माभिमानिन् वरुण निचङ्कुण राक्षसभर्त्सनार्थं नितरां ध्वनिकारिन् निचेरुरसि अस्मद्र-क्षणार्थं निगूढत्वेन चरणशीलोऽसि, हे निचङ्कुण अस्माभि-र्देवेषु कृतमेनः अपराधं तैर्देवैः सह त्वम् अवायाट् विना-शय। मर्त्येष्वृत्विक्षु कृतं तैर्मर्त्यैः सह तदवायाट् विनाशय। हे देव उरोरधिकारात् रिषः देवमर्त्यकृतात् हिंसनात् नो-ऽस्मानासमन्तात् पाहि॥

कल्पः। सुमित्रा न आपो द्रुपदादिवेन् मुमुचान इत्या-सुत्येति। तत्र प्रथममन्त्रपाठस्तु, "सुमित्रा न आप ओषधयः सन्तु। दुर्मित्रास्तस्मै भूयासुः। योऽस्मान्द्वेष्टि। यञ्च वयं द्विष्म" इति। या एता अब्देवताः याश्चौषधिदेवतास्ताः सर्व्वाः नोऽस्मान् प्रति सुमित्राः अत्यन्तमनुकूलाः सन्तु। योऽस्मानु-दासीनानपि द्वेष्टि, यञ्चान्यमुदासीनमपि वयं द्विष्मः, तस्मै द्विविधाय तादृशपुरुषाय या आपः ओषधयश्च दुर्मित्राः प्रतिकूलाः सन्तु॥

द्वितीयमन्त्रपाठस्तु, "द्रुपदादिवेन्मुमुचानः। स्विन्नः स्नात्वी मलादिव [१]। पूतं पवित्रेणेवाज्यम्। आपः शुन्धन्तु मै-नसः" इति। राजानो ह्यपराधिनस्तस्करस्य पादं सच्छिद्रे काष्ठे कीलयन्ति तद् द्रुपदमित्युच्यते, तस्मान् मुमुचान इव

एतद्बन्धनात् मुक्तः पुरुषश्चौर्याभियोगं परित्यज्य शुद्ध इत्येव व्यवह्रीयते, यथा खिन्नः पुरुषः स्नात्वी स्नानं कृत्वा मलात् मुमुचानः शुद्ध इत्येव व्यवह्रीयते, यथा च कर्म्मण्याज्यमुत्पवनपवित्रेण पूतं भवति तथैमा आपः मामेनमः पापात् शुद्धन्तु शुद्धं कुर्व्वन्तु॥

कल्पः। उद्वयं तमसस्परीत्यादित्यमुपस्थायेति। पाठस्तु, "उद्वयं तमसस्परि। पश्यन्तो ज्योतिरुत्तरम्। देवं देवत्रा सूर्य्यम्। अगन्म ज्योतिरुत्तमम्" इति। तमसस्पर्य्यन्धकारस्योपरि वर्त्तमानमुत्तरं ज्योतिरुत्कृष्टं प्रकाशमुत्पश्यन्तः उत्कर्षेण वीक्षमाणा वयं देवत्रा देवेषु मध्ये देवं द्योतमानं सूर्य्यं सूर्य्यस्वरूपम् उत्तमं ज्योतिरगन्म प्राप्ताः स्म॥

कल्पः। प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यस्यति इति। पाठस्तु, "प्रतियुतो वरुणस्य पाशः। प्रत्यस्तो वरुणस्य पाशः" इति। योऽयं वरुणस्य पाशः जलमध्यवर्त्ती सोऽस्माभिः बहिर्निर्गच्छद्भिः प्रतियुतः परित्यक्तः, तथा वरुणस्य पाशः प्रत्यस्तो विनाशितः॥

कल्पः। पशुवत् समिध उपस्थानञ्चेति पशौ त्वेवमुक्तम् एधोऽस्येधिषीमहीत्याहवनीये समिधमाधायापो अन्वचारिषमित्युपतिष्ठन्त इति। तत्र समिदाधानमन्त्राणां त्रयाणां पाठस्तु, "एधोऽस्येधिषीमहि। समिदसि [४]। तेजोऽसि तेजो मयि धेहि" इति। हे समित् एधोऽसि त्वम् अभिवृद्धिहेतुरसि, अतस्त्वामाधाय वयमधिषीमहि वृद्धिं प्राप्नुमः। हे द्वितीय-

समित् त्वं समिन्धनसाधनमसि। हे हृतीयसमित् त्वं तेजो हेतुरसि, अतो मयि तेजो धेहि सम्पादय ॥

उपस्थानमन्त्रपाठस्तु, "अपो अन्वचारिषम्। रसेन सम-सृक्ष्महि। पयस्वाँ अग्न आगमम्। तं मा सꣳसृज वर्चसा। प्रजया च धनेन च" इति। अहमेता आपो अनुसृत्याचा-रिषं कर्म्मानुष्ठितवानस्मि। रसेन जलगतेन सारेण संसृक्ष्महि संसृष्टा अभूम। हे अग्ने पयस्वान् जलसारयुक्तोऽहम् आगमं त्वत्समीपे समागतोऽस्मि। तमेतादृशं मां वर्चसा बलेन च प्रजया धनेन च संसृज संयोजय ॥

कल्पः। समाववर्त्तीत्युपस्थायेति। पाठस्तु, "समाववर्त्ति पृथिवी। समुषाः। समु सूर्य्यः। समु विश्वमिदं जगत्। वैश्वा-नर ज्योतिर्भूयासम्। विभुं कामं व्यश्नवै। भूः स्वाहा" [५] इति। येयं पृथिवी समाववर्त्ति सम्यगावृत्ता मया सह समागता, एव-मुषःकालः सूर्य्यः सर्व्वमिदं जगच्च समाववर्त्ति। हे वैश्वानर अहं ज्योतिःस्वरूपो भूयासम्। त्वत्प्रसादाद्विभुं कामं व्याप्तं फलं व्यश्नवै प्राप्नवानि ॥

कल्पः। भूःस्वाहेत्याहुतिं जुहोति। येयं भूः पृथिवी सा स्वाहा त्वयि स्वाहुता ॥

अथ विनियोगसङ्ग्रहः ॥

यद्देवाः पञ्चभिर्हुत्वावभृथेति तु मन्त्रयेत्।
सुमित्रा द्रुपदा द्वाभ्यां स्नात्वादेत्युपतिष्ठते ॥
प्रतीत्यापः परित्यज्या एधोऽसिजुहुयात्त्रिभिः।

अपः समेत्युपस्थानं भूः स्वाहेति जुहोति हि॥
अत्र मन्त्राः षोडशोक्ता अध्वर्य्योः कृत्यमीरितम्।

इति षष्ठोऽनुवाकः॥ ६॥

---

अथ सप्तमोऽनुवाकः।

इत्थं षड्भिरनुवाकैरस्यां कौकिल्यां सौत्रामण्यामाध्वर्य्यव-मुक्तम्। अथावशिष्टैश्चतुर्दशभिरनुवाकैर्हौत्रमुच्यते। तत्रास्मिन् सप्तमेऽनुवाके होतारमुद्दिश्य मैत्रावरुणेन पाठनीया एकादश प्रयाजः प्रैषा उच्यन्ते। तत्र समिद्भ्यः प्रेष्य इत्यध्वर्युणा प्रेषितो मैत्रावरुणः प्रैषमन्त्रं पठति। तमिमं मन्त्रमाह। "होता यक्षत्समिधेन्द्रमिडस्पदे। नाभा पृथिव्या अधि। दिवो वर्ष्मन्त्समिध्यते। ओजिष्ठश्चर्षणी सहान्। वेत्वाज्यस्य होतर्यज" इति। योऽयं होता विद्यते सोऽयं समिधेन्द्रं समिन्नामकेनाग्निना युक्तमिन्द्रम् इडस्पदे इडाख्यायाः गोः पदस्थाने अस्मिन्नाहवनीये यक्षत् यजतु पूजयत्वित्यर्थः। या सोमक्रयिणी गौः तस्याः पादपांशोः कियानपि भागः आहवनीये प्रक्षिप्तः तस्मादिडस्पदमित्युच्यते। समिन्नामकः कश्चिदग्निविशेषः प्रथमयाहुत्या हूयते। अतः समिन्नामकाग्निद्वारा तमिन्द्रं होता यक्षदित्युच्यते। तस्येडायाः पदमाहवनीयाख्यं पृथिव्या नाभा नाभिस्थानीया, यामुत्तरवेद्यामध्युपरि वर्त्तते हूयमानोऽयमग्निः दिवो वर्ष्मन् द्युलोकस्य शरीरस्थान इत्यर्थः।

तत्र समिध्यते सम्यक् दीप्यते, चर्षणीसहान् चर्षणयो मनुष्याः तान् सहन्ते अभिभवन्तीति चर्षणीसहाः देवाः तानुद्दिश्य तेषां देवानां मध्ये ओजिष्ठोऽत्यन्तप्रबलः, तादृशोऽग्निः आज्यस्य वेतु इदमाज्यमश्नातु पिबत्वित्यर्थः। हे होतः यज तदर्थं याज्यां पठ॥

अथ द्वितीयं प्रैषमन्त्रमाह। "होता यक्षत्तनूनपातम्। ऊतिभिर्जेतारमपराजितम्। इन्द्रं देवꣳ सुवर्विदम्। पथिभिर्मधुमत्तमैः। नराशꣳसेन तेजसा [१]। वेत्वाज्यस्य होतर्यज" इति। अत्र सर्वत्र प्रथमान्तो होतृशब्दः दैव्यं होतारमाचष्टे सम्बुध्यन्तं मानुषं यथा पूर्वमन्त्रे समिच्छब्दः प्रयाजदेवतारूपमग्निविशेषमाह। एवमत्रापि तनूनपाच्छब्दो द्वितीय प्रयाजदेवतारूपमग्निविशेषमाचष्टे। दैव्या होता तनूनपान्नामकमग्निं यक्षत् यजतु पूजयतु, तदग्निद्वारा इन्द्रं पूजयतु। कीदृशमिन्द्रम् ऊतिभिरस्मद्रक्षणैर्युक्तम्, जेतारं युद्धे जयशीलं केनाप्यन्येनापराजितम्, देवं द्योतमानम्, सुवर्विदं स्वर्गस्य लम्भारम्, मधुमत्तमैः अन्नपानादिपाथेयसम्पत्त्या अत्यन्तं मधुरैः पथिभिर्मार्गैर्युक्तम्, नराशंसेन मनुष्यैः शंसनीयेन तेजसा युक्तम्, तथाविधेन्द्रं पूजार्थं तनूनपादग्निराज्यं पिबतु। तदर्थं हे मानुष होतः याज्यां पठ॥

तृतीयामाह। "होता यक्षदिडाभिरिन्द्रमीडितम्। आजुह्वानममर्त्यम्। देवो देवैः सवीर्यः। वज्रहस्तः पुरन्दरः। वेत्वाज्यस्य होतर्यज" इति। इडाशब्देन प्रयाजदेवतारूपमग्नि-

तीयोऽग्निरुच्यते। बहुवचनं पूजार्थम्। तदग्निद्वारा दैव्यो होतेन्द्रं पूजयतु। कीदृशमिन्द्रम् ईडितम् नानाविधैर्मन्त्रैः स्तुतम्, आह्वानं सर्व्वेषु यज्ञेषु होमभाजम् आह्वानभाजं वा, अमर्त्त्यं मरणरहितम्। स चेन्द्रो देवः देवैः सह सवीर्य्यो बहुसामर्थ्ययुक्तः शत्रूनभिभवितुं वज्रहस्तः आसुरीं पुरीं दारयति विनाशयतीति पुरन्दरः। तथाविधेन्द्रस्य प्रीतये पूर्व्वोक्तो वह्निराज्यं पिबतु। हे मानुष होतः याज्यां पठ॥

चतुर्थमन्त्रमाह। "होता यक्षद्बर्हिषीन्द्रं निषद्वरम्। वृषभं नर्य्यापसम्। वसुभी रुद्रैरादित्यैः। सयुग्भिर्बर्हिरासदत् [२]। वेत्वाज्यस्य होतर्यज" इति। बर्हिःशब्दश्चतुर्थप्रयाजदेवतारूपमग्निमाचष्टे। तस्मिन् बर्हिषि पूजिते सति तद्द्वारेण इन्द्रं दैव्यो होता पूजयतु। कीदृशमिन्द्रं निषद्वरं नितरां यज्ञे सीदन्त्युपविशन्तीति निषदा देवाः, तेषां श्रेष्ठं वृषभं कामानां वर्षयितारं नरेभ्यो हितं नर्य्यं तथाविधं कर्म्म यस्यासौ नर्य्यापाः तथाविधम्। स चेन्द्रो वस्वादिभिः सयुग्भिः स्वेन सह वर्त्तमानैर्युक्तो बर्हिरासदत् यज्ञं प्राप्नोतु। वेत्वित्यादि पूर्व्ववत्॥

अथ पञ्चममन्त्रमाह। "होता यक्षदोजो न वीर्य्यम्। सहो द्वार इन्द्रमवर्द्धयन्। सुप्रायणा विश्रयन्ता ऋतावृधः। द्वार इन्द्राय मीढुषे। वियन्त्वाज्यस्य होतर्यज" इति। द्वारशब्दः पञ्चमप्रयाजदेवतारूपमग्निमाह। पूजार्थं बहुवचनम्। तमग्निं दैव्यो होता पूजयतु। ताश्च द्वारशब्दाभिधेया देवता इन्द्रं वर्द्धयन्तु। ओजसादयो दृष्टान्ताः। यथाष्टमधातोरोजसः

वीर्य्यस्य चक्षुरादीन्द्रियसामर्थ्यस्य च सहसः शरीरबलस्य च वृद्धिः तयेन्द्रियस्याभिवृद्धिरित्यर्थः। ताश्च द्वारदेवताः सुप्रयाणाः शोभनगतयः ऋतावृधः यज्ञस्य वर्द्धयित्र्यः तथाविधा विश्रयन्तां विशेषेण यज्ञमाश्रयन्तु। मीढुषे वृष्ट्यादिना सेचकाय इन्द्राय इन्द्रार्थं द्वारो देवता वियन्तु पिबन्तु॥

षष्ठमन्त्रमाह। "होतायक्षदुषे इन्द्रस्य धेनू। सुदुघे मातरौ मही। सवातरौ न तेजसी। वत्समिन्द्रमवर्द्धताम् [२]। वीतामाज्यस्य होतर्यज" इति। उषाशब्दः षष्ठप्रयाज अग्निमूर्त्तिद्वयमाह। तादृशी उषे द्वे उषे देवौ होता पूजयतु। कीदृशे उषे, इन्द्रस्य धेनू धेनुवत् प्रीणयित्र्यौ सुदुघे सुखेन दोग्धुं शक्ये, मातरौ पयःप्रदानेन मातृसदृश्यौ मही महत्यौ पूज्ये वा। वातशब्दो गमनस्वभावं वत्समाचष्टे। समानो वातो वत्सो ययोस्ते सवातरौ नकार उपमार्थम्। इन्द्रस्य वत्सस्थानीयत्वात् एकवत्से इव ते उभे वर्त्तेते। तेजसी तेजस्विन्यौ, तादृश्यौ मूर्त्ती वत्सस्थानीयमिन्द्रं वर्द्धतां वृद्धिं प्रापयताम्। ते मूर्त्ती आज्यं वीतां पिबताम्॥

सप्तममन्त्रमाह। "होतायक्षद्दैव्या होतारा। भिषजा सखाया। हविषेन्द्रं भिषज्यतः। कवी देवौ प्रचेतसौ। इन्द्राय धत्त इन्द्रियम्। वीतामाज्यस्य होतर्यज" इति। दैव्यहोतृशब्देन सप्तमप्रयाजदेवतारूपस्याग्नेर्द्वौ देहावुच्येते, तावुभौ होता पूजयतु। कीदृशौ, भिषजौ अनिष्टव्याधिचिकित्सकौ सखाया परस्परं स्निग्धौ तावुभावनेन हविषा कवी इन्द्रं भिष-

ज्यतः अनिष्टपरिहारेण चिकित्सां कुरुतः। तावुभौ कवी विद्वांसौ देवौ द्योतमानौ प्रचेतसौ प्रकृष्टज्ञानौ ताविन्द्रायें-मिन्द्रियं धत्तः शक्तिं पोषयतः तावुभावाज्यं पीताम्॥

अष्टममन्त्रमाह। "होतायक्षत्तिस्रो देवीः। त्रयस्त्रिधा-तवोऽपसः। इडा सरस्वती भारती [४]। महीन्द्रपत्नीर्हवि-ष्मतीः। वियन्त्वाज्यस्य होतर्यज" इति। अष्टमप्रयाजदेवता-रूपस्याग्नेस्त्रिमूर्त्तयः तिस्रस्ताः पूजयतु। कीदृश्यस्ताः देवीः द्योतनात्मिकाः, अपसः कर्म्मनिमित्तं त्रिधातवः त्रीणि शरी-राणि धारयित्र्यः, अतएव त्रयः त्रिलोमात्मिकाः इडादीनि तासां नामधेयानि, तास्तु मही महत्यः पूज्याः इन्द्रपत्नीः इन्द्रस्य पालयित्र्यः, हविष्मतीः अस्मद्दत्तेन हविषा युक्ताः। तादृश्य एता आज्यं वियन्तु॥

नवममन्त्रमाह। "होतायक्षत्त्वष्टारमिन्द्रं देवम्। भिषजꣳ सुयजं घृतश्रियम्। पुरुरूपꣳ सुरेतसं मघोनिम्। इन्द्राय त्वष्टा दधदिन्द्रियाणि। वेत्वाज्यस्य होतर्यज" इति। त्वष्टृशब्देन नवमप्रयाजदेवतारूपोऽग्निरुच्यते, तं होता पूजयतु तद्द्वारेण इन्द्रं पूजयति। कीदृशमिन्द्रं देवं द्योतनात्मकं, भिषजमनिष्ट-व्याधिचिकित्सकं, सुयजं सुखेन यष्टुं शक्यं, घृतश्रियं घृत-सेविनं, पुरुरूपं तत्तद्यजमान-गृहागमनाय बहुरूपधारिणं, सुरेतसं शोभनापत्ययुक्तं, मघोनिमन्नवन्तम्। ईदृशायेन्द्राय स त्वष्टा इन्द्रियाणि क्रियासामर्थ्यानि दधत् पोषयतु आज्यं पिबतु॥

दशममन्त्रमाह। "होतायक्षद्वनस्पतिम्। शमितारꣳ शतक्रतुम्। धियोजोष्टारमिन्द्रियम् [५]। मध्वासमञ्जन् पथिभिः सुगेभिः। स्वदाति हव्यं मधुना घृतेन। वेत्वाज्यस्य होतर्यज" इति। वनस्पतिशब्देन दशमप्रयाजदेवतारूपोऽग्निरुच्यते। तं होता यक्षत् तद्द्वारेण इन्द्रं पूजयतु। कीदृशमिन्द्रं शमितारं सर्व्वानिष्टशमनहेतुं, शतक्रतुं शतसङ्ख्याकाश्वमेधयुतं, धियो जोष्टारं, बुद्धेः सेवितारम्, उपासकानां बुद्ध्या ध्यातव्यमित्यर्थः। इन्द्रियं सामर्थ्योपेतम्। तादृश इन्द्रः, सुगेभिः पथिभिः सुखेन गन्तुं शक्यैर्मार्गैरागत्य मध्वा मधुरद्रव्येण समञ्जन् हवींषि स्निग्धीकुर्व्वन् वर्त्तते, स च मधुना मधुरेण घृतेन हव्यं स्वाति स्वादूकरोति। तथाविधेन्द्रप्रीत्यर्थं वनस्पतिर्देव आज्यं पिबतु॥

एकादशमन्त्रमाह। "होतायक्षदिन्द्रꣳ स्वाहाज्यस्य। स्वाहा मेदसः। स्वाहा स्तोकानाम्। स्वाहा स्वाहाकृतीनाम्। स्वाहा हव्यसूक्तीनाम्। स्वाहा देवाꣳ आज्यपान्। स्वाहेन्द्रꣳ होत्राज्जुषाणाः। इन्द्र आज्यस्य वियतु। होतर्यज" [६] इति। उक्तेषु सर्व्वेषु प्रयाजेषु अनुगतमिन्द्रं होता यजतु पूजयतु। तदिन्द्रस्य प्रीत्यर्थं स्वाहुतिरस्तु, मेदसो द्रव्यस्य स्वाहुतिरस्तु, स्तोकानां विदूनां स्वाहुतिरस्तु, स्वाहाकृतीनां स्वाहाकारेण दीयमानानां सर्व्वाहुतिद्रव्याणां स्वाहुतिरस्तु, हव्यसूक्तीनां हविःस्तावकमन्त्राभिमानिदेवतानामर्थे स्वाहुतिरस्तु। ये त्वाज्यं पिबन्तो देवाः तान् सर्व्वान् उद्दिश्य स्वाहुतिरस्तु। होत्राद्धोमनिमित्तभूतात् इन्द्रं जुषाणाः सेवमाना ये देवाः तेषां

स्वाहुतिरस्तु। अयमिन्द्रः अन्ये च सर्व्वे देवाः आज्यं पिवन्तु। हे मानुषहोतस्तदर्थं याज्यां पठ॥

इति सप्तमोऽनुवाकः॥ ७॥

---

अथाष्टमोऽनुवाकः।

सप्तमे प्रयाजानां मैत्रावरुणप्रैषा एकादशाभिहिताः। अष्टमे तेषामेव प्रयाजानामेकादशपुरोरुचोऽभिधीयन्ते। तत्र प्रथमामृचमाह। "समिद्ध इन्द्र उषसामनीके। पुरोरुचा पूर्व्वकृद्वावृधानः। त्रिभिर्देवैस्त्रिꣳशता वज्रबाहुः। जघान वृत्रं वि दुरोऽववार" इति। समिन्नामको योऽयं प्रथमप्रयाजदेवोऽग्निः स एवायमिन्द्रस्वरूपः स च उषसां प्रातःकालानामनीके मुखे वर्त्तते। किं कुर्व्वन्, पुरः पूर्व्वस्यां दिशि रोचत इति पुरोरुक् आहवनीयः तेन पूर्व्वकृत् पूर्व्वाणि कर्म्माण्यग्निहोत्रादीनि कुर्व्वन्, वावृधानः अतिशयेन वर्द्धमानः। स च त्रिसङ्ख्याकैः त्रिंसत्सङ्ख्याकैश्च हविर्भागभिर्देवैः सहितो वज्रबाहुः सन् वृत्रं वैरिणं जघान हतवान्। दुरः स्वर्गस्य द्वाराणि विववार विवृत्तानि चकार॥

द्वितीयामाह। "नराशꣳसः प्रतिशूरो मिमानः। तनूनपात् प्रति यज्ञस्य धाम। गोभिर्वपावान् मधुना समञ्जन्। हिरण्यैश्चन्द्री यजति प्रचेताः" इति। तनूनपात्सञ्ज्ञको द्वितीयप्रयाजदेवः स च नराशंसः ऋत्विग्भिर्नरैराससमन्ताच्छंसनीयः युद्धेषु शूरः सन् प्रति मिमानः वैरिणां बलमियत्तया

परिच्छिन्दन् वर्त्तते, तथा यज्ञस्य धाम फलभूतं स्थानं प्रति मिमानः वर्त्तते, तथा गोभिः स्वकीयैः रश्मिभिः वपावान् शरीरपुष्टिमान् वर्त्तते, तथा मधुना मधुरेण घृतेन समञ्जन् पुरोडाशादीन् हवींषि सत्णीकुर्व्वन् वर्त्तते, तथा भक्तेभ्यो दीयमानैः हिरण्यैश्चन्द्री आह्लादकरो सन् प्रचेताः प्रकृष्ट-ज्ञानयुक्तः यजति देवान् पूजयति॥

तृतीयामाह। "ईडितो देवैर्हरिवाꣳ अभिष्टिः। आजुह्वानो हविषा शर्द्धमानः [१]। पुरन्दरो मघवान् वज्रबाहुः। आ-यातु यज्ञमुप नो जुषाणः" इति। ईडितशब्देन तृतीयप्रया-जदेव उच्यते। स च देवैरीडितः स्तुतः, इन्द्राभिन्नत्वात् हरि-वान् हरिशब्दाभिधेयाभ्याम् अश्वाभ्यां युक्तः, अभिष्टिः अभितः क्रियमाणा इष्टिः यागो यस्य सोऽयमभिष्टिः यागनिष्पादक इत्यर्थः। आजुह्वानः सङ्ग्रामे प्रतिभटानाम् आह्वानकारी, हविषा शर्द्धमानः अस्माभिः हुतेनाधिकं बलं प्राप्नुवन्, वैरिणां पुराणि दारयतीति पुरन्दरः, मघवान् धनवान् वज्रबाहुरिन्द्ररूपेण वज्रस्य धारयिता, तादृशोऽयं जुषाणः प्रियमाणः नः अस्माकं यज्ञमुपयातु समीप एवागच्छतु॥

चतुर्थीमाह। "जुषाणो बर्हिर्हरिवान्न इन्द्रः। प्राचीनꣳ सीदत् प्रदिशा पृथिव्याः। उरुव्यचाः प्रथमानꣳ स्योनम्। आदित्यै रक्तं वसुभिः सजोषाः" इति। बर्हिर्नामकचतुर्थ-प्रयाजदेवः हरिवानश्वयुक्तः, जुषाणः प्रीतियुक्तः सन् पृथिव्याः सम्बन्धिन्या प्रदिशा प्रकृष्टया पूर्व्वया दिशा युक्तं प्राचीनमा-

हवनीयस्थानं सीदत् प्राप्नोतु। उरुव्यचाः अत्यन्तं व्याप्तः सन् प्रथमानं विस्तृतं, स्योनं सुखकरं हविः प्राप्नोत्विति शेषः। कीदृशः सः आदित्यैः वसुभिः सजोषाः समानप्रीतिः। कीदृशं हविः अक्तं स्निग्धं हविः॥

पञ्चमीमाह। "इन्द्रं दुरः कवष्यो धावमानाः। वृषाणं यन्तु जनयः सुपत्नीः। द्वारो देवीरभितो विश्रयन्ताम्। सुवीरा वीरं प्रथमाना महोभिः" [२] इति। द्वारशब्दाभिधेया देव्यः पञ्चमप्रयाजदेवस्य स्त्रीमूर्त्तयः तास्विन्द्रमभितो विश्रयन्तां विशेषेण सेवन्ताम्। कीदृश्यः, द्वारः दुरः छिद्रभूयिष्ठाः महावकाशा इत्यर्थः। कवष्यः कवाटवत्यः धावमाना प्रवेशनिर्गमनरूपगतिमत्यः शब्दमत्यो वा जनयो यज्ञानां जनयित्र्यः, सुपत्नीः सुष्ठु पालयित्र्यः, तादृश्यो देव्यो वृषाणं कामानां वर्षयितारं यन्तु प्राप्नुवन्तु। पुनरपि कीदृश्यः सुवीराः शोभनवीरपुरुषाधिष्ठिताः; महोभिः कीर्त्तिभिः प्रथमानाः लोकेषु प्रख्याताः। कीदृशमिन्द्रं वीरं युद्धेषु शूरम्॥

अथ षष्ठीमाह। "उषासा नक्ता बृहती बृहन्तम्। पयस्वती सुदुघे शूरमिन्द्रम्। पेशस्वती तन्तुना संव्ययन्ती। देवानां देवं यजतः सुरुक्मे" इति। उषःशब्देन नक्तशब्देनाभिधेये षष्ठप्रयाजदेवस्य द्वे मूर्त्ती। ते उभे इन्द्रं यजतः पूजयतः। कीदृश्यौ, महती महत्यौ, पयस्वती चीरवत्यौ, सुदुघे सुखेन दोग्धुं शक्ये, पेशस्वती रूपवत्यौ तन्तुना संव्ययन्त्यौ वस्त्रेणैवालं-

कुर्व्वाणे, सुरुक्मे शोभनाभरणे। कीदृशमिन्द्रं वृहन्तं महान्तं तथा युद्धेषु शूरं देवानामपि देवं स्वामिनम्॥

सप्तमीमाह। "दैव्या मिमाना मनसा पुरुत्रा। होतारा-विन्द्रं प्रथमा सुवाचा। मूर्द्धन्यज्ञस्य मधुना दधाना। प्राचीनं ज्योतिर्हविषा वृधातः" इति। दैव्या होताराविति सप्तमप्र-याजदेवस्य द्वौ पुरुषदेहावुच्येते, तावुभाविन्द्रं हविषा वृधातः वर्द्धयतः। कीदृशौ तौ पुरुत्रा बहुषु स्थानेषु मनसा मिमाना स्वचित्तेनोत्पादयन्तौ श्रद्धया ध्यायन्ताविरयर्थः। प्रथमा मुख्य-भूतौ सुवाचा शोभनवाक्कौ कल्याणस्तुतियुक्तौ यज्ञस्य मूर्द्धन् मूर्द्धस्थानीय आहवनीये प्राचीनं ज्योतिर्दधाना उत्तमां ज्वालामुत्पादयन्तौ। कीदृशेन हविषा मधुना मधुरेण॥

अष्टमीमाह। "तिस्रो देवीर्हविषा वर्द्धमानाः। इन्द्रं जु-षाणा वृषणन्न पत्नीः [३]। अच्छिन्नं तन्तुं पयसा सरस्वती। इडा देवी भारती विश्वमूर्त्तिः" इति। सरस्वती इडा भारती चेत्यष्टमप्रयाजदेवस्य तिस्रो मूर्त्तयः, तास्तु देवीः हविषा वर्द्धमानाः सत्यः इन्द्रं जुषाणाः सेवमाना वर्त्तन्ते। तत्र दृष्टान्तः, वृषणं न पत्नीः यथा पत्न्यः सेक्तारं सेवन्ते तद्वत्। कीदृशमिन्द्रम्, अच्छिन्नं तन्तुम् अविच्छिन्नं पुत्रपौ-त्रादिसन्तं तन्वानम्। कीदृशेन हविषा पयसा क्षीरसदृशेन। कीदृशी भारती, देवी द्योतमाना विश्वमूर्त्ती स्वेच्छागृहीत-बहुशरीरयुक्ता॥

नवमीमाह। "त्वष्टा दधदिन्द्राय शुष्मम्। अपाकोचिष्टु-

यंशसे पुरूणि। वृषा यजन् वृषणं भूरिरेताः। मूर्द्धन् यज्ञस्य समनक्तु देवान्" इति। नवमप्रयाजदेवः त्वष्टृशब्देनोच्यते। सोऽयमिन्द्रार्थं शुष्मं बलं दधत् सम्पादयतु। कीदृशः त्वष्टा, अपाकः बालो न भवतीत्यर्थः। यशसे यशसोऽर्थं, पुरूणि बहूनि कार्य्याणि, अचिष्टुः अवैषीत् सम्पादितवानित्यर्थः। स्वयं वृषा सेचनसमर्थः भूरिरेताः बहुपत्या-वीजयुक्ताः वृषणं सेचनसमर्थं यजन् पूजयतु। यज्ञस्य मूर्द्धन्नाहवनीये देवान् समनक्तु सम्यक् हविः प्रापयतु॥

दशमीमाह। "वनस्पतिरवसृष्टो न पाशैः। आत्मन्यामम-ञ्जञ्छमिता न देवः। इन्द्रस्य हव्यैर्जठरं पृणानः। स्वदाति हव्यं मधुना घृतेन" इति। दशमप्रयाजदेवो वनस्पतिः। स च मधुना मधुरेण घृतेन हव्यं स्वदाति स्वादूकरोति। तत्र दृष्टान्तः, पाशैरवसृष्टो न, यथा कारागृहे बद्धः पुरुषः पाशैः मुक्तः सन् स्वगृहे गत्वा विस्रम्भेण व्यापारं करोति तद्वत्। किं कुर्व्वन् आत्मन्याममञ्जन् आत्मन्येव सम्यगच्छन् स्वतन्त्रः सन्नित्यर्थः। स्वातन्त्र्ये दृष्टान्तः, शमिता न देवः, यथा पशो-र्विशसनकर्त्ता विशसने स्वतन्त्रः, तद्वत्। पुनः किं कुर्व्वन्, हव्यै-रिन्द्रस्य जठरमुदरं पृणानः पूरयन्॥

एकादशीमाह। "लोकानामिन्द्रं प्रतिशूर इन्द्रः। वृषा-यमाणो वृषभस्तुराषाट्। घृतप्रुषा मधुना हव्यमुन्दन्। मूर्द्धन् यज्ञस्य जुषताꣳ स्वाहा" [४] इति। इन्द्रशब्दः सर्व्वप्रयाज-साधारणवाची। सोऽयमिन्द्रः यज्ञस्य मूर्द्धन् आहवनीये स्वाहा

स्वाहुतं हविर्जुषताम्। कीदृश इन्द्रः, स्तोकानामिन्दुं प्रति शूरः, स्तोकानां हविर्लेशानां मध्ये योऽयमिन्दुरिन्दुरिति-स्वन्योंऽशः तं प्रति शूरः आदरवान् अल्पमपि हविर्भागं नावजानातीत्यर्थः। वृषायमाणः वृषवदाचरन्, यथा वृषो गोषु बह्वन् वत्सानुत्पादयति तद्वदयं बहुप्रजोत्पादक इत्यर्थः। वृषभः कामानां वर्षयिता तुराषाट् तूर्णं सहते शत्रून् अभि-भवतीत्यर्थः। किं कुर्व्वन् घृतप्रुषा घृतमकृतेन मधुना मधुरेण रसेन हव्यमुन्दन् पुरोडाशादिरूपं हविः द्रवीकुर्व्वन् ता एताः पुरोरुगाख्या एकादशसङ्ख्याका ऋचः प्रयाजानां याज्या आ-प्रिय इति च उच्यन्ते। हविःप्रक्षेपात् पूर्व्वपाठत्वात् पुरोरुचः। ईज्यन्ते प्रयाजा आभिरिति याज्याः देवताः। सर्व्वतः प्रीण-यन्तीत्याप्रियः॥

इति अष्टमोऽनुवाकः॥ ८॥

अथ नवमोऽनुवाकः॥

अष्टमे प्रयाजयाज्या अभिहिताः। अथ नवमे ऐन्द्रस्य पशोः वपापुरोडाशहविषां द्वे द्वे याज्यापुरोऽनुवाक्ये क्रमेणाच्येते। तत्र वपामन्त्रयोः प्रतीके दर्शयति। "आचर्षणि प्राविशपय-न्मा" इति। आचर्षणि प्रावृषभो जनानामिति पुरोऽनुवाक्या। सा च जुष्टो नर इत्यत्र व्याख्याता। विवेषयन्मा धिषणाति याज्या। सा चेन्द्रं यो विश्वतस्परीत्यत्र व्याख्याता॥

अथ पुरोडाशे पुरोऽनुवाक्यायाः प्रतीकं दर्शयति। "तꣳ सध्रीचिः" इति। तं सध्रीचिरुत्तरयो वृष्णियानीत्येषा वृषासो अꣳशुरित्यत्र व्याख्याता॥

अत्र तत्रैव याज्यामाह। "सत्यमित्तन्न त्वावाꣳ अन्यो अस्ति। इन्द्रदेवो न मर्त्यो ज्यायान्। अहन्नहिं परिशयानमर्णः। अवासृजोऽपो अच्छा समुद्रम्" इति। हे इन्द्र तत् मयोच्यमानं वचः सत्यमित् सत्यमेव। कीदृशं वच इति तदुच्यते, अन्यः कश्चिद्देवो मर्त्यो त्वावान् त्वत्सदृशो नास्तीत्यर्थः। ज्यायानधिको नास्ति। अर्णं उदकमुद्दिश्य त्वं परिशयानं परितो व्याप्य वर्त्तमानम् अहिं मेघम् अहन् हतवानसि मेघं भित्त्वा जलं वर्षयसीत्यर्थः। ततः समुद्रम् अच्छा समुद्राभिमुख्येन अपो जलानि अवासृजः अवाङ्मुखत्वेन सृष्टवानसि॥

अथ हविषःपुरोऽनुवाक्यामाह। "प्रससाहिषे पुरुहूत शत्रून्। ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्राभर दक्षिणेना वसूनि। पतिः सिन्धूनामसि रेवतीनाम्" इति। हे पुरुहूत बहुषु यज्ञेषु आह्वयमान इन्द्र शत्रून् प्रकर्षेण ससाहिषे अभिभूतवानसि। ते शुष्मो बलं ज्येष्ठः अत्यन्तप्रवृद्धः इह अस्मिन् कर्म्मणि रातिः त्वदीयं धनमस्तु। हे इन्द्र दक्षिणेन हस्तेन वसूनि धनान्याभर। त्वन्तु रेवतीनां धनयुक्तानां सम्पदां सिन्धूनां रत्नाधाराणां समुद्राणां पतिः पालकोऽसि॥

तत्रैव याज्यामाह। "स शेवृधमधिधा द्युम्नमस्मे। महि क्षत्रं जनाषाडिन्द्र तव्यम्। रक्षा च नो मघोनः पाहि सूरीन्।

राये च नः स्वपत्या इषे धाः" [१] इति। हे इन्द्र स त्वं श्रेष्ठं सुखवर्द्धकं द्युम्नं धनम् अस्मे अस्मासु अधिधाः अधिकं सम्पादय। जनाषाट् विरोधिजनानामभिभवितव्यं त्वदीयं क्षत्रं बलं महि महत् नो अस्मान् मघोनः धनवतः कृत्वा रक्ष। तथा सूरीन् विदुषश्च कृत्वा पाहि। नः अस्मान् राये धनाय स्वपत्यै शोभनापत्यत्वाय इषे अन्नायच धाः धारय अस्मभ्यं धनादीन् देहीत्यर्थः। अत्र विनियोगसङ्ग्रहः॥

ऐन्द्रे पशौ वपाया द्वे ऋचौ याज्यानुवाक्यके।
आचर्षणिविवेषेति पुरोडाशे पुनर्द्वयम्॥
तं सध्रीचो सत्यमित्त्व हविषस्तु तथा द्वयम्।
प्रससाहि समे मन्त्रानुवाके ते षडीरिताः॥

इति नवमोऽनुवाकः॥ ९ ॥

---

अथ दशमोऽनुवाकः।

नवमे वपादीनां याज्यानुवाक्या उक्ताः। दशमे अनूयाजानामेकादशमैत्रावरुणप्रैषा उच्यन्ते। तत्र प्रथममन्त्रमाह। "देवं बर्हिरिन्द्रꣳ सुदेवं देवैः। वीरवत्स्तीर्णं वेद्यामवर्द्धयत्। वस्तोर्वृतं प्राक्तोर्भृतम्। राया बर्हिष्मतोऽत्यगात्। वसुवने वसुधेयस्य वेतु यज" इति। बर्हिःशब्देन दर्भाभिमानी प्रथमानुयाजदेवस्वरूपमुच्यते, तद्बर्हिः इन्द्रं देवं वर्द्धयत्। कीदृशं बर्हिः, सुदेवं शोभना देवता यस्य तत् सुदेवं सर्व्वैर्बर्हिर्देवैः बर्हिषि निषीदति तथा देवैर्देवसदृशैः ऋत्विग्भिः वेद्यां

स्तीर्णं प्रसारितं तथा वीरः कर्म्मशूरो यजमानोऽस्यास्तीति वीरवत्। वस्तोरक्तोरित्येतदव्ययपदद्वयमहोरात्रिवाचकम्। इदं बर्हिः वस्तोरहनि वृतं सम्पादितम्, अक्तोः रात्रौ प्रस्तृतं प्रकर्षेण उन्नतदेशे स्थापितं, तादृशं बर्हिः राया धनेन बर्हिष्मतः बर्हिर्युक्तान् अत्यगात् अतीत्य गतम् इतरयागेभ्योऽधिकं धनं प्रयच्छतीत्यर्थः। वसुधेयस्य वसु धनमेव धेयं सम्पादनीयं यस्य कुवेरादेः सोऽयं वसुधेयस्तस्य वसुवने धनदाननिमित्तं तदीयं धनम् अस्मभ्यं दातुमित्यर्थः। वेतु बर्हिर्देव आज्यं पिबतु। तदर्थं हे होतर्यज याज्यां पठ॥

अथ द्वितीयामाह। "देवीर्द्वार इन्द्रꣳ सङ्घाते। विड्वीर्यामन्नवर्द्धयन्। आ वत्सेन तरुणेन कुमारेण च मीविता अपार्व्वाणम्। रेणुककाटं नुदन्ताम्। वसुवने वसुधेयस्य वियन्तु यज"[१] इति। द्वारशब्दाभिधेयस्त्रीमूर्त्तयो द्वितीयानुयाजदेवताः। ता देव्य इन्द्रमवर्द्धयन्। कीदृश्यः, सङ्घाते विड्वीर्द्वाराभिमानित्वात् कवाटद्वयमेलने दृढशक्तयः कुत्र वर्द्धितवत्यः यामं नियमरूपयागे वत्सोऽत्यन्तबालः तरुणो युवा तयोर्मध्ये वर्त्तमानः कुमारः, चकारस्तेषां समुच्चये आकारः कार्त्स्न्यवाची, सर्व्वैः अपत्यैः सहितमिन्द्रमित्यर्थः। किञ्चैता द्वार्देवताः मीविताः बलाधिक्येन स्थौल्यमापन्नाः सत्यः रेणुककाटमपनुदन्तां, कर्ष्यां भवं काटं लिङ्गं रेणुकं रमणशीलं काटं यस्य राजसादेः तं स्वैरचारिणं निराकुर्व्वन्तु। दृष्टान्तार्थो अर्व्वन्शब्दः। दुर्दान्तोऽश्वो यथा विषयव्यसनेन यत्र क्वापि

वडवामारोहति तादृशमित्यर्थः। ता देव्यौ वियन्तु आज्यं पिबन्तु। वसुवन इत्यादि पूर्व्ववत्॥

अथ तृतीयमन्त्रमाह। "देवी उषासा नक्ता। इन्द्रं यज्ञे प्रयत्याह्वेताम्। दैवीर्विशः प्रायासिष्टाम्। सुप्रीते सुधिते अभूताम्। वसुवने वसुधेयस्य वीतां यज" इति। उषासा-नक्ताशब्दवाच्ये अहोरात्राभिमानिन्यौ तृतीयानुयाजदेव्यौ। ते उभे प्रयति प्रकर्षेण गच्छति वर्त्तमाने यज्ञे इन्द्रमाह्वेताम् इन्द्रस्याह्वानमकुरुताम्। दैवीर्विशः देवसम्बन्धिनीः प्रजाः प्रायासिष्टां प्रकर्षेण प्रापितवत्यौ। स्वयञ्च सुप्रीते अत्यन्ततुष्टे सुधिते सुखप्राप्तियुक्ते अभूताम्। सुप्रीत-सुधितशब्दौ सुख-प्राप्तिवाचकौ तादृश्यौ देव्यौ वीतां पिबताम्॥

अथ चतुर्थमन्त्रमाह। "देवी जोष्ट्री वसुधिती। देवमिन्द्र-मवर्द्धताम्। अयाव्यन्याघा द्वेषांसि। आन्यावाचीद्वसु वार्य्या-णि। यजमानाय शिक्षिते [२]। वसुवने वसुधेयस्य वीतां यज" इति। यथा तृतीयानुयाजदेवस्य उषासानक्ताशब्दवाच्ये द्वे स्त्रीमूर्त्ती, तथा चतुर्थानुयाजदेवस्य जोष्ट्रीशब्दवाच्ये द्वे स्त्रीमूर्त्ती। ते च वसुधिती सुखप्राप्तियुक्ते, तादृश्यौ उभे इन्द्रं देवमव-र्द्धतां वर्द्धितवत्यौ। तयोरुभयोर्मध्ये अन्या काचिद्देवी अघा द्वेषांसि द्वेष्याणि पापानि अयावि अस्मत्तः पृथक्कृतवती। अन्या इतरा देवता वार्य्याणि वसु वरणीयानि धनानि अवाचीत् सर्व्वतः प्रापितवती। किमर्थं यजमानाय। कीदृश्यौ देव्यौ, शिक्षिते कुशले॥

अथ पञ्चममन्त्रमाह। "देवी ऊर्जाहुती दुघे सुदुघे। पयसेन्द्रमवर्द्धताम्। इषमूर्जमन्यावाक्षीत्। सग्धिꣳ सपीतिमन्या। नवेन पूर्वं दयमाने। पुराणेन नवम्। अधातामूर्जमूर्जाहुती वसु वार्य्याणि। यजमानाय शिक्षिते। वसुवने वसुधेयस्य वीतां यज" [३] इति। ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते स्त्रीमूर्ती। ते च दुघे अपेक्षितस्य फलस्य दोहयित्र्यौ, सुदुघे सुष्ठु दोग्धुं शक्ये। तादृश्यौ उभे पयसा क्षीरविकारेण हविषा इन्द्रमवर्द्धतां वर्द्धितवत्यौ। तयोरन्या काचित् इषमन्नमूर्जं रसञ्च अवाक्षीत् प्रापितवती। इतरा तु सग्धिं सहभोजनं सपीतिं सहपानञ्च उभयोः प्रापितवती। ते च उभे नवेन इदानीं क्रियमाणेन हविषा पुरा कदाचिदनुष्ठितं हविः दयमाने रक्षयित्र्यौ, पुराणेन च हविषा नवं हविः पालयन्त्यौ हविर्द्वयेनात्यन्ततुष्टे इत्यर्थः। ते च ऊर्जाहुती देव्यौ ऊर्जं क्षीरादिरसमधातां सम्पादितवत्यौ। शेषं पूर्ववत्॥

अथ षष्ठमन्त्रमाह। "देवा दैव्या होतारा। देवमिन्द्रमवर्द्धताम्। हताघशꣳसावाभार्ष्टां वसु वार्य्याणि। यजमानाय शिक्षितौ। वसुवने वसुधेयस्य वीतां यज" इति। दैव्याहोतृशब्दवाच्यौ षष्ठानुयाजदेवस्य द्वौ देहौ। तथाविधौ देवौ इन्द्रं देवमवर्द्धतां वर्द्धितवन्तौ। कीदृशौ देवौ, हताघशंसौ अघम् अस्मद्विषयं द्रोहं शंसतीत्यघशंसः वैरी स च हतो याभ्यां तावघशंसौ तादृशौ देवौ यजमानार्थं वरणीयानि वसूनि आभार्ष्टाम् आहृतवन्तौ। शिक्षितौ कुशलौ॥

अथ सप्तममन्त्रमाह। "देवीस्तिस्रस्तिस्रो देवीः। पति-मिन्द्रमवर्द्धयन्। अस्पृक्षद्भारती दिवम्। रुद्रैर्यज्ञꣳ सरस्वती। इडा वसुमती गृहान् [४]। वसुवने वसुधेयस्य वियन्तु यज" इति। इडा सरस्वती भारतीत्येतास्तिस्रो देव्यः सप्तमानुयाजदेवताः। परस्परवियोगः कदाचिदपि नास्तीति विवक्षया पुनरपि तिस्रो देवीरित्युक्तम्। तास्तिस्रः पतिं पालकम् इन्द्र-मवर्द्धयन् वर्द्धितवत्यः। तासां मध्ये भारती देवी दिवं द्युलोकम् अस्पृक्षत् स्पृष्टवती द्युलोके वर्त्तत इत्यर्थः। सरस्वती देवी रुद्रैः देवैः सहिता यज्ञमस्पृक्षत् अपालयदित्यर्थः। इडा देवी वसुमती धनयुक्ता भूत्वा गृहानस्पृक्षत् अपालयत्। तास्तिस्रो देव्यो वियन्तु पिबन्तु॥

अथाष्टममन्त्रमाह। "देव इन्द्रो नराशꣳसः। त्रिवरूथस्त्रिबन्धुरः। देवमिन्द्रमवर्द्धयत्। शतेन शितिपृष्ठानामाहितः। सहस्रेण प्रवर्त्तते। मित्रावरुणेदस्य होत्रमर्हतः। बृहस्पतिः स्तोत्रम्। अश्विनाध्वर्य्यवम्। वसुवने वसुधेयस्य वेतु यज" [५] इति। नराशंसशब्देनाष्टमानुयाजदेव उच्यते। स च परमैश्वर्य्य-योगादिन्द्रः। स च त्रिवरूथः त्रिविधसेनायुक्तः, त्रिबन्धुरः त्रिविधोन्नतः नतबलभावयुक्तः समीपवर्त्तिनी काचित् सेनात्युन्नता, ततो बहिर्भूता मध्यमा काचिदानता, ततोऽपि बहिर्भूता अधमात्यन्तमानता, तादृशो देवः प्रसिद्धमिन्द्रं देवं वर्द्धितवान्। स च नराशंसः शितिपृष्ठानां श्वेतपृष्ठानां गवां शतेन सहस्रेण चाहितः सर्व्वतो व्याप्तः प्रवर्त्तते। मित्रावरुणेत्

मित्रावरुणावेवास्य नराशंसस्य होत्रं होतृत्वमर्हतः। बृहस्पतिः स्तोत्रं स्तोतृत्वम् उद्गातृत्वमर्हति। अश्विनाध्वर्य्यवमध्वर्य्युत्वमर्हतः॥

अथ नवममन्त्रमाह। "देव इन्द्रो वनस्पतिः। हिरण्यपर्णो मधुशाखः सुपिप्पलः। देवमिन्द्रमवर्द्धयत्। दिवमग्रेणाप्रात्। अन्तरिक्षं पृथिवीमदृꣳहीत्। वसुवने वसुधेयस्य वेतु यज" इति। नवमानुयाजदेवो वनस्पतिशब्दवाच्यः। स च परमैश्वर्य्ययोगादिन्द्रः। वृक्षाभिमानित्वेन तदाकारत्वाद्धिरण्यपर्णः सुवर्णमयपत्रयुक्तः, मधुशाखो मधुराभिः कोमलाभिः शाखाभिर्युक्तः, सुपिप्पलः शोभनेन फलेन युक्तः। सोऽयं वनस्पतिर्देवः इन्द्रं देवं वर्द्धितवान्। स्वकीयेन वृक्षाग्रेण दिवं द्युलोकम् आप्रात्पूजितवान्। तथा अन्तरिक्षमाप्रात् मध्यभागेन पूजितवान्। पृथिवीमदृंहीत् मूलैर्दृढीकृतवान्॥

अथ दशममन्त्रमाह। "देवं बर्हिर्वारितीनाम्। देवमिन्द्रमवर्द्धयत्। स्वासस्थमिन्द्रेणासन्नम्। अन्यावर्हीꣳष्यभ्यभूत्। वसुवने वसुधेयस्य वेतु यज" इति। दशमानुयाजदेवो दर्भाभिमानी बर्हिःशब्दवाच्यः। तत्र बर्हिर्वारितीनां वाराञ्जलानामितयः प्राप्तयो वारितयस्तासां वारितीनां देवं द्योतकं दर्भेषु प्ररूढेषु भूमौ जलप्राप्तिर्जातेत्यनुमातुं शक्यते, तादृशं बर्हिरिन्द्रं वर्द्धितवान्। कीदृशं बर्हिः, इन्द्रेण स्वासस्थं शोभनमासनं स्वासनस्तस्मिन् स्थातुं योग्यं स्वासस्थम्। इन्द्रो हि बर्हिषि सुखेनोपविशति। अतएवासनमिन्द्रस्य समीपवर्त्ति भूत्वा अन्यानि

लौकिकानि बर्हींष्यभ्यभृत् तिरस्कृतवान् । न हि लौकिकानि बर्हींषि मन्त्ररहितानि इन्द्रेण स्पातुं योग्यानि ॥

अथैकादशमन्त्रमाह । "देवो अग्निः स्विष्टकृत् । देवमिन्द्रमवर्द्धयत् । स्विष्टं कुर्वन्त्स्विष्टकृत् । स्विष्टमद्य करोतु नः । वसुवने वसुधेयस्य वेतु यज" [६] इति । स्विष्टकृन्नामकोऽग्निरेकादशानुयाजदेवः स इन्द्रं देवं वर्द्धितवान् । सर्व्वत्राग्नांसार्थत्वात् भूतवन्निर्देशः । यत्पूर्व्वमिष्टं तत्सर्व्वं सुष्ठु कुर्व्वन वर्त्तत इति व्युत्पत्त्या स्विष्टकृदिति नाम सम्पन्नम् । तादृशो देवो मोऽस्मदर्थम्, अथास्मिन् यज्ञे स्विष्टं करोतु । वसुधेयस्य धनस्वामिनः वसुवने धनदाननिमित्तं वेतु अयं देव आज्यं पिबतु । हे होतः तदर्थं याज्यां पठ ॥

इति दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

निर्वापकालीनो योऽयमैन्द्रः पशुः सूत्रकारेणोक्तः, निर्व्वपनकाम ऐन्द्रं पशुमालभत इति ; तत्रानुयाजार्थं मैत्रावरुणप्रैषाः दशमेऽनुवाके अभिहिताः । अथैकादशे चोदकप्राप्तपशुत्रये प्रयाजार्था मैत्रावरुणप्रैषा उच्यन्ते । अस्याः कौकिल्याः प्रकृतिभूतायां सौत्रामण्यां पशुत्रयं विहितम्, आश्विनं धूम्रमालभते, सारस्वतं मेषमैन्द्रमृषभमिति । तदेतत्त्रयमत्र चोदकप्राप्तं तदीयेषु प्रयाजप्रैषेषु प्रथममन्त्रमाह, "होता यक्षत्समिधाग्निमिडस्पदे । अश्विनेन्द्रꣳ सरस्वतीम् । अजो धूम्रो

न गोधूमैः कुलैर्भेषजम्। मधुशष्पैर्न तेज इन्द्रियम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। सर्व्वप्रयाजसाधारणो देवोऽग्निः, तस्य विशेषमूर्त्तयः समिदादयः। योऽयं दैव्यो होता सोऽयमिडस्पदे सोमक्रयणीपदपांसु-युक्त आहवनीये समिधा अग्निं यक्षत् समिन्मूर्त्तिरूपेण वर्त्तमानमग्निं यक्षत् पूजयतु। तद्वारेण अश्विनौ द्वाविन्द्रं सरस्वतीञ्च देवतात्रयं पूजयतु। योऽयमजो धूमवर्णः 'आश्विनं धूम्रललाममालभेत' इति विहितः, सोऽयमत्र सक्थैर्गोधूमैः कुलैः वरदफलैश्च सह भेषजमौषधमनिष्टनिवारकमित्यर्थः। अत्राजो धूम्रो न गोधूमैरित्युक्तो नकारः साहित्यार्थः। एवमुत्तरत्रापि यथोचितं साहित्यार्थ उपमार्थो वा योजनीयः। यानि शष्पाणि व्रीह्यङ्कुराणि तैः सहितं मधुरमिदं द्रव्यं तेजसम् इन्द्रियस्य च कारणत्वेन तद्रूपम्। येयं परिस्रुत् धारया स्रवन्ती सुरा यच्च पयः क्षीरं तदुभयमत्र सोमः सोमसदृशं मधुघृतं मधुरघृतसदृशम्, अतस्तदीयं कर्म्म निष्पादयितुं योऽयं समिदाख्योऽग्निः ये अश्वीन्द्रसरस्वत्याख्या देवाः ते सर्व्वेऽपि आज्यस्य वियन्तु इदमाज्यं पिबन्तु। तदर्थं हे मानुष होतः यज याज्यां पठ॥

अथ द्वितीयमन्त्रमाह। "होता यक्षत्तनूनपात् सरस्वती। अविर्मेषो न भेषजम्। पथा मधुमताभरन्। अश्विनेन्द्राय वीर्य्यम् [१]। बदरैरुपवाकाभिर्भेषजं तोक्मभिः। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। यो

द्वितीयप्रयाजस्तनूनपान्नामकः या च सरस्वती यौ च सरस्वत्युपलक्षितावश्विनौ यश्च सरस्वत्युपलक्षित इन्द्रः तान् सर्वान् देवान् अयं दैव्यो होता यक्षत् पूजयतु। योऽयमत्राविजातीयो मेषः 'सारस्वतं मेषम्' इति वाक्यविहितः, सोऽयं मधुमता पथा सह भेषजमनिष्टनिवारककर्मानुष्ठानमवाच मधुरः पन्थाः अत्राश्विना तदुपलक्षिताः सर्वे देवाः इन्द्राय वीर्य्यमाभरन्। कीदृशं वीर्य्यं, बदरैः सक्तुहेतुभिः वरदफलैः उपवाकाभिः हरितयवैः तोक्मभिः अङ्कुरितव्रीहिभिश्च निष्पन्नं भेषजमनिष्टनिवारकम्। पयः सोम इत्यादि पूर्व्ववत्॥

अथ तृतीयमन्त्रमाह। "होता यक्षन्नराशꣳसन्नग्नहुम्। पतिꣳ सुरायै भेषजम्। मेषः सरस्वती भिषक्। रथो न चन्द्र्यश्विनोर्वपा इन्द्रस्य वीर्य्यम्। बदरैरुपवाकाभिर्भेषजं तोक्मभिः। पयः सोमः परिस्रुता घृत मधु। वियन्त्वाज्यस्य होतर्यज"[२] इति। तृतीयप्रयाजदेवो नराशंसः तमन्यादिदेवसंयुक्तं होता पूजयतु। साहित्यवाचिना नकारेण देवतान्तरयोगोऽवगम्यते। नग्नहुः शब्दः स्थूलयवनिष्पन्नसक्तुवाची। स च द्रव्यविशेषसंमेलनेन सुरायाः पतिः पालकः तादृशसुरापतिं नग्नहुं भेषजम् अनिष्टनिवारकं कर्त्तुं दैव्यो होता यक्षत्वित्यन्वयः। योऽयं विहितो मेषरूपः पशुः, या च तद्देवता सरस्वती तदुभयं भिषक् चिकित्सकसदृशं सर्व्वारिष्टनिवारकमित्यर्थः। येयं वपा सेयमश्विनोः देवयोः रथो न चन्द्रवदाह्लादकारी, इन्द्रस्य तु वीर्य्यं सामर्थ्यहेतुम्। बदरैरित्यादि पूर्व्ववत्॥

अथ चतुर्थमन्त्रमाह। "होता यक्षदिडेडितः। आजुह्वानः सरस्वतीम्। इन्द्रं बलेन वर्द्धयन्। ऋषभेण गवेन्द्रियम्। अश्विनेन्द्राय वीर्य्यम्। यवैः कर्कन्धुभिः। मधुलाजैर्न मासरम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। इट्शब्देन चतुर्थप्रयाजदेव उच्यते। इडा देवेन महाश्विसरस्वतीम् इन्द्रदेवान् होता यजतु। कीदृश इन्द्रः ईडितो मन्त्रैः स्तुतः, सरस्वतीमाजुह्वानः इह कर्म्मण्याह्वयन् वर्त्तते। इन्द्रं बलेन वर्द्धयन् वर्त्तते, ऐन्द्रमृषभमितिविहितेन गोजातीयेन ऋषभेण इन्द्रियं वर्द्धयन् वर्त्तते। अश्विसहितायेन्द्राय वीर्य्यं वर्द्धयन् वर्त्तते। ये भक्ष्यार्था यवाः, ये च कर्कन्धवः स्थूलबदरफलविशेषाः, ये च लाजसदृशा ब्रीहिबीजविशेषाः तैः सर्व्वैर्युक्तं मधु मधुरं मासरं मासरद्रव्यं वर्द्धयन् वर्त्तते। मासरं तक्रमिश्रितं सूक्ष्मयवचूर्णम्॥

अथ पञ्चममन्त्रमाह। "होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा। भिषङ्नासत्या [२]। भिषजाऽश्विनाश्वा शिशुमती। भिषग्धेनुः सरस्वती। भिषग्दुह इन्द्राय भेषजम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। दर्भाभिमानी बर्हिःशब्दवाच्यः पञ्चमप्रयाजदेवः तं देवं होता यजतु। कीदृशो देवः, सुष्टरीमा शोभनस्तरीमा वेद्यामास्तरणं यस्यासौ सुष्टरीमम् ऊर्णम्रदाः कम्बलवत् मृदुः इह कर्म्मणि नासत्या भिषक् अश्विदेवौ चिकित्सकौ विघ्नरूपानिष्टनिवारकौ, न केवलमत्रैव किन्तु सर्व्वत्र भिषजाश्विना तौ देवौ चिकि-

त्मको। कीदृशी अश्वा अश्ववन्तौ व्यापिनौ वा, शिशुमती निमितबुद्धिः। येयं सरस्वती सापि धेनुः प्रीणयित्री सती भिषक् चिकित्सकसदृशी। योऽयमश्विरूपा सरस्वतीरूपश्च भिषक् सोऽयमिन्द्रार्थं भेषजम् औषधसदृशम् इदं कर्म दुहे दोग्धी निष्पादयतीत्यर्थः॥

अथ षष्ठमन्त्रमाह। "होता यक्षद्दुरो दिशः। कवष्यो न व्यचस्वतीः। अश्विभ्यां न दुरो दिश। इन्द्रो न रोदसी दुघे। दुहे कामान्त्सरस्वती [४]। अश्विनेन्द्राय भेषजम्। शुक्रन्न ज्योतिरिन्द्रियम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। दुरशब्दाभिधेयाः द्वाराभिमानिन्यः षष्ठप्रयाजदेवताः, ता होता यजतु। ताः कीदृश्यः, दिशो दिगात्मिकाः कवष्यो न कवाटयुक्ता इव वर्त्तन्ते। व्यचस्वतीः व्याप्तिमत्यः। कीदृश्यो दिगात्मिकाः दुराख्या देवताः, अश्विभ्यां न अश्विदेवाभ्यां सह वर्त्तन्ते। इन्द्रो न इन्द्रस्तु रोदसी द्यावापृथिव्यौ दुघे दोग्धी तत्रत्यं सारं सम्पादयतीत्यर्थः। सरस्वती कामं दुहे दोग्धी सम्पादयती। अश्विनेन्द्राय अश्विभ्यां सहिताय इन्द्राय भेषजम् औषधसदृशमिदं कर्म शुक्रं न शुक्रं न शुक्रमिव ज्योतिः प्रकाशक इन्द्रियं सम्पाद्यत इति शेषः॥

अथ सप्तममन्त्रमाह। "होता यक्षत् सुपेशसोषे नक्तं दिवा। अश्विना सञ्जानाने। समञ्जाते सरस्वत्या। त्विषिमिन्द्रे न भेषजम्। श्येनो न रजसा हृदा। पयः सोमः परिस्रुता

घृतं मधु[५]। वियन्त्वाज्यस्य होतर्यज" इति। उषाशब्देन सप्तमप्रयाजदेवस्य मूर्त्तिद्वयमहोरात्राभिमानी रूपमुच्यते। द्वे उषे होता यजतु। कीदृशे उषे, सुपेशसे शोभनरूपयुक्ते नक्तं दिवा अहोरात्ररूपे अश्विना सञ्जानाने अश्विदेवाभ्यां संयुज्य सर्व्वं जानन्त्यौ तथा सरस्वत्या सह समञ्जाते सम्यक् गच्छन्त्यौ तादृश्यौ देव्यौ इन्द्रे भेषजं न औषधमिव। त्विषिं दीप्तिं कृतवत्या विशेषः श्येनो न प्रबलपक्षी इव, रजसा रञ्जकेन हृदा हृदयेन संयुक्ते इति शेषः। यथा श्येनस्तीव्रवेगेन मनुष्याणां हृदयं रञ्जयति तद्वदिमे अह्नि स्वकार्य्यनिष्पादनेन रञ्जयत इत्यर्थः॥

अथाष्टममन्त्रमाह। "होता यक्षद्दैव्या होतारा भिषजाश्विना। इन्द्रं न जागृवी दिवा नक्तं न भेषजैः। शूषꣳ सरस्वती भिषक्। सीसेन दुह इन्द्रियम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। दैव्याहोतृशब्देन अष्टमप्रयाजदेवस्य द्वौ देहावुच्येते, तौ होता यजतु, भिषजाश्विना भिषक्रूपावश्विनावपि यजतु; इन्द्रं न इन्द्रमपि यजतु। नकारः समुच्चयार्थः। कीदृशौ होतारौ, दिवा नक्तं न दिवसे रात्रौ च भेषजैरौषधैः जागृवी जागरूकौ अनिष्टपरिहारेण निरन्तरं सावधानावित्यर्थः। येयं सरस्वती सा भिषक्समाना सती सीसेन सोमक्रीतेन शष्पद्रव्येण शूषं बलम् इन्द्रियं चक्षुरादिपाटवञ्च दुहे दोग्धि सम्पादयतीत्यर्थः॥

अथ नवममन्त्रमाह। "होता यक्षत्तिस्रो देवीर्न भेषजम्।

त्रयस्त्रिधातवोऽपसः। रूपमिन्द्रे हिरण्ययम् [६]। अश्विनेडा न भारती। वाचा सरस्वती। मह इन्द्राय दधुरिन्द्रियम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। इडा सरस्वती भारतीत्येतास्तिस्रो देव्यः नवमप्रयाज-देवताः, तास्तिस्रो देवीर्होता यजतु। तास्व देव्यः ईज्यमानाः त्रयो लोकत्रयात्मिकाः त्रिधातवः तत्तल्लोकप्राप्तिरूपत्रिविध-फलधारिण्यः सत्यः अपसः अस्मात् कर्म्मणः इन्द्रे हिरण्ययं हिरण्मयं रूपं दधुः। किमिव औषधमिव, यथा सर्व्वोपद्रव-शमनहेतुरौषधमेवमिन्द्रे सम्पाद्यमानमिदं रूपमित्यर्थः। यावेतावश्विनौ न यास्वेता इडाद्यास्तिस्रो देव्यः ते सर्व्वे मिलित्वा इन्द्रार्थं मह इन्द्रियम् अति अधिकं बलं दधुः सम्पादितवन्तः॥

दशममन्त्रमाह। "होता यक्षत्त्वष्टारमिन्द्रमश्विना। भिषजं न सरस्वतीम्। ओजो न जूतिरिन्द्रियम्। वृको न रभसो भिषक्। यशः सुरया भेषजम् [७]। श्रिया न मासरम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। दशमप्रयाजदेवस्त्वष्टा तमिन्द्रमश्विनौ सरस्वतीञ्च होता यजतु। देवतानां दृष्टान्तः, भिषजन् यथा भेषजमनिष्ट-निवारकं तद्वदेते देवा इत्यर्थः। एतद्देवप्रसादादोजआदि त्रयं सम्पद्यते। ओजः कर्म्मानुष्ठान उत्साहः, जूतिर्जवो वेगः; तत्रालस्यराहित्यमिन्द्रियं करणपाटवं त्रितयसमुच्चयार्थो नकारः। यो यस्मिन् कर्म्मणि वृकोऽस्ति तल्लोमानामत्र सम्पादितत्वात् लोमोपलक्षको वृकशब्दः। स च वृको रभसो भिषक्

न तीव्रः चिकित्सक इव हितकारीत्यर्थः। यत्तु मासरं यव-सक्तुरूपं द्रव्यं तत् श्रिया न सम्पदा सममित्यर्थः॥

एकादशमन्त्रमाह। "होता यक्षद्वनस्पतिम्। शमितारꣳ शतक्रतुम्। भीमं न मन्युꣳ राजानं व्याघ्रं नमसाश्विना भा-मम्। सरस्वती भिषक्। इन्द्राय दुह इन्द्रियम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" [८] इति। एकादशप्रयाजदेवो वनस्पतिः तं होता यजतु। तीदृशं शमि-तारं सर्व्वोपद्रवशमनहेतुं शतक्रतुं शतसङ्ख्याकक्रतुनिष्पादकं, भीमं भयङ्करं, मन्युं क्रोधवन्तं, राजानं मृगराजं सिंहं भामं क्रोधवन्तं, व्याघ्रं न व्याघ्रमपि यजत्वित्यन्वयः। सिंहलोम्नां व्याघ्रलोम्नाञ्च अत्र हविषि प्रक्षिप्तत्वात्तद्योगोपन्यासः। यावेता-वश्विनौ ताभ्यां सहिता सरस्वती इन्द्रार्थम् इन्द्रियं दुहे दुग्धे॥

द्वादशमन्त्रमाह। "होता यक्षदग्निꣳ स्वाहाज्यस्य स्तोका-नाम्। स्वाहा मेदसां पृथक्। स्वाहा छागमश्विभ्याम्। स्वाहा मेषꣳ सरस्वत्यै। स्वाहार्षभमिन्द्राय सिꣳहाय सहसेन्द्रियम्। स्वाहाग्निं न भेषजम्। स्वाहा सोममिन्द्रियम्। स्वाहेन्द्रꣳ सुत्रामाणꣳ सवितारं वरुणं भिषजाम्पतिम्। स्वाहा वनस्पतिं प्रियं पाथो न भेषजम्। स्वाहा देवाँ आज्यपान् [९]। स्वा-हाग्निꣳ होत्राज्जुषाणो अग्निर्भेषजम्। पयः सोमः परिस्रुता घृतं मधु। वियन्त्वाज्यस्य होतर्यज" इति। स्वाहाशब्देन द्वादश-प्रयाजाभिमानी देवोऽभिधीयते। यद्यप्येकादशैव प्रयाजः अनु-ष्ठेयाः तथापि द्वितीयप्रयाजे तनूनपान्नराशंस-मन्त्रयोरधि-

कारिभेदेन विकल्पितत्वात् द्वादशमन्त्रा अत्राम्नाताः। अतोऽयं द्वादशमन्त्रप्रतिपाद्यो देवः तं स्वाहाशब्देन विवक्षितमग्निं देवं होता यजतु। आज्यस्य स्तोकानां स्तोकान् विन्दून् स्वाहा सुष्ठु जुहुयात्, अजच्छागमेदसां मेदांसि पृथग् विभज्य स्वाहा सुष्ठु जुहुयात्, अश्विभ्यां स्वाहा जुहुयात्, मेषं सरस्वत्यै जुहुयात्, ऋषभमिन्द्राय जुहुयात्, सिंहाय सोमहुतये सहसा बलेन सह इन्द्रियं स्वाहा जुहुयात्, उद्दिश्य त्यजेदित्यर्थः। भेषजं न औषधिमिव वर्त्तमानमग्निं प्रथमाज्यभागसेवं स्वाहा होमेन तर्पयेत्। इन्द्रियं इन्द्रियाभिवृद्धिहेतुं सोमं द्वितीयाज्यभागदेवं होमेन तर्पयेत्। य एतेऽत्र पुरोडाशा विहिताः, ऐन्द्रमेकादशकपालं निर्वपेत् सावित्रं द्वादशकपालं वारुणं दशकपालमिति तानेतानिन्द्रसवितृवरुणान् होमेन तर्पयेत्। तत्र इन्द्रः सुष्ठु रक्षकत्वात् सुत्रामेति विशेष्यते। वरुणोऽनिष्टनिवारकत्वात् भिषजां पतिरित्युच्यते। वनस्पतिं यूपदेवं होमेन तर्पयेत्। स विशेष्यते प्रियं पाथो न भेषजमिति। यथा प्रियमुदकं तृषाया औषधम् एवमयं वनस्पतिरपि अनिष्टनिवारकत्वेन औषधरूपाः ये चाज्यपाः प्रयाजदेवताः ताः होमेन तर्पयेत्। योऽयं स्विष्टकृद्देवोऽग्निः तं होमेन तर्पयेत्। होत्रात् होमं जुषाणः प्रीतः स्विष्टकृदग्निः भेषजं क्रतुवैकल्यनिवारणेनौषधस्वरूपः॥

अथ प्रधानदेवार्थः प्रैषः, तमेतं त्रयोदशमन्त्रमाह। "होता यक्षदश्विना सरस्वतीमिन्द्रꣳ सुत्रामाणम्। इमे सोमाः सुरा-

माणाः। छागैर्न मेषैर्ऋषभैः सुताः। शष्पैर्न तोक्मभिः। लाजै-र्महस्वन्तः। मदा मासरेण परिष्कृताः। शुक्राः पयस्वन्तो-ऽमृताः। प्रस्थिता वो मधुश्चुतः। तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा। जुषन्ताꣳ सौम्यं मधु। पिबन्तु मदन्तु वियन्तु सोमम्। होतर्यज"[१०]। यौ देवावश्विनौ या च सरस्वती यश्च सुत्रामेन्द्रः तानेतान् मुख्यदेवान् दैव्यो होता यजतु। ये चाश्विसारस्वतैन्द्रग्रहास्त इमे सोमाः सोमसदृशाः सुरा-माणाः सुष्ठु रमणीयाः, मेषैः सारस्वतमेषावयवैः, ऋषभैरैन्द्र-ऋषभावयवैः, छागैर्न आश्विनछागावयवैरपि हविर्विशेषैः निमित्तभूतैः सुताः उत्पादिताः यानि व्रीह्यङ्कुरजन्यानि शष्पाणि बालतृणानि, यानि चाङ्कुरावस्थापन्नानि तोक्मानि, ये च वीजावस्था लाजाः तैस्त्रिभिरपि द्रव्यैरेते यागा महस्वन्तः तेजस्विनः भासन्ते। मदा मदहेतुना मासरेण यवसक्तुद्रव्येण परिष्कृताः अलङ्कृताः शुक्रा निर्मलाः पयस्वन्तः पयसा युक्ताः अमृताः स्वादुत्वेन अमृतसमानाः हे अश्विसरस्वतीसुत्रामे-न्द्ररूपा देवाः वो युष्मदर्थं मधुश्चुतः माधुर्य्यरसस्राविणः ग्रहाः प्रस्थिताः सम्पादिताः। तान् ग्रहान् अश्व्यादयः एते देवा जुषन्तां सेवन्ताम्, तत्रत्यं सौम्यं रमणीयं मधु मधुरं रसं पि-बन्तु। ततो मदन्तु हृष्यन्तु, ततः सोमं वियन्तु सोमत्वेन स्वीकुर्व्वन्तु। तदर्थं हे मानुष होतः, यज याज्यां पठ॥

इत्येकादशोऽनुवाकः॥ ११॥

---

## अथ द्वादशोऽनुवाकः।

एकादशे प्रयाजप्रैषा उक्ताः। अथ द्वादशे प्रयाजयाज्या आप्रियोऽभिधीयन्ते। तत्र प्रथमामाह। "समिद्धो अग्निरश्विना। तप्तो घर्म्मो विराट् सुतः। दुहे धेनुः सरस्वती। सोमꣳ शुक्रमिहेन्द्रियम्" इति। हे अश्विनौ समिद्धः सन्दीप्तः समिन्नामकः प्रथमप्रयाजदेवोऽग्निः तप्तो घर्म्मः सन्तप्तप्रवर्ग्य-सदृशः विराट् विशेषेण राजमानः सुत उत्पन्नः तथाविधः सन् प्रीणयित्री सरस्वती शुक्रं शुद्धमिन्द्रियम् इन्द्रियवृद्धि-हेतुं सोमं सोमसदृशं हविः दुहे दोग्धि सम्पादयति॥

द्वितीयामाह। "तनूपा भिषजा सुते। अश्विनोभा सरस्वती। मध्वा रजाꣳसीन्द्रियम्। इन्द्राय पथिभिर्वहान्" इति। तनूपा द्वितीयप्रयाजदेवः भिषजौ चिकित्सकौ अश्विनावुभौ सरस्वतीत्येते देवाः सुते प्रवृत्ते कर्म्मणि मध्वा मधुना रसेन युक्तानि रजांसि रञ्जकानि विविधमिन्द्रियं हविर्जन्यं सामर्थ्यं चेन्द्रार्थं पथिभिरनुष्ठानरूपैः मार्गैः वहान् वहन्तु सम्पादयन्तु॥

तृतीयामाह। "इन्द्रायेन्दुꣳ सरस्वती। नराशꣳसेन नग्नहुः [१]। अधातामश्विना मधु। भेषजं भिषजा सुते" इति। नराशंसो मन्त्रपाठक्रमेण तृतीयप्रयाजदेवः, तेन सहिता सरस्वती इन्द्रार्थमिन्दुम् ऐश्वर्य्यकरं हविःसारं, नग्नहुः एत-च्छब्दवाच्यं स्थूलयवपिष्टमक्तुरूपं सम्पादयतीति शेषः। अश्विना

भिषजा चिकित्सकावश्विना सुते प्रवृत्तेऽस्मिन् कर्म्मणि मधु भेषजं मधुरमौषधरूपं हविरधातां सम्पादितवन्तौ ॥

अथ चतुर्थीमाह। "आ जुह्वाना सरस्वती। इन्द्रायेन्द्रियाणि वीर्य्यम्। इडाभिरश्विना विषम्। समूर्ज्जं सं रयिं दधुः" इति। चतुर्थप्रयाजदेवता इडाः, ताभिः सहिता सरस्वती आजुह्वाना स्वयं कर्म्मण्याहूयमाना इन्द्रार्थमिन्द्रियाणि वीर्य्यञ्च सम्पादयितुं योग्यं हविर्दधात्विति शेषः। अश्विनौ देवौ ताभिरिडाभिः सह इषमन्नं दधुः सम्पादितवन्तः, ऊर्ज्जं चोरादिरसं सम्पादितवन्तः, रयिं धनं सम्पादितवन्तः ॥

पञ्चमीमाह। "अश्विना नमुचेः सुतम्। सोमं शुक्रं परिस्रुता। सरस्वती तमाभरत्। बर्हिषेन्द्राय पातवे" [२] इति। बर्हिःशब्दाभिधेयः पञ्चमप्रयाजदेवः, हे अश्विनौ तेन बर्हिषा युक्ता सरस्वती सुतमभिषुतं शुक्रं निर्मलं सोमं सोमलेन भावितं रसं नमुचेः सकाशात् आभरत् आहरत्, किमर्थमिन्द्राय इन्द्रार्थं पातवे पातुम् ॥

अथ षष्ठीमाह। "कवष्यो न व्यचस्वतीः। अश्विभ्यां न दुरो दिशः। इन्द्रो न रोदसी दुघे। दुहे कामान्त्सरस्वती" इति। दुरःशब्दाभिधेया या द्वाराभिमानिन्यः षष्ठप्रयाजदेवताः, कवष्यो न कवाटवत्य इव व्यचस्वतीः अवकाशवत्यः अश्विभ्यां न अश्विभ्यामपि सह वर्त्तन्त इति शेषः। इन्द्रो न इन्द्रोऽपि रोदसी दुघे द्यावापृथिव्यौ दोग्धि। सरस्वती कामान् दुहे दोग्धि ॥

सप्तमीमाह । "उषासानक्तमश्विना । दिवेन्द्रꣳ सायमिन्द्रियैः । सञ्जानाने सुपेशसा । समञ्जाते सरस्वत्या" इति । हे अश्विनौ उषासानक्तशब्दवाच्ये अहोरात्राभिमानिन्यौ सप्तमप्रयाजदेवते इन्द्रं दिवा इन्द्रियैः सञ्जानाने संयोजयेते । सायं सुपेशसा शोभनरूपेण सञ्जानाने संयोजयेते, तथा सरस्वत्या समञ्जाते संयोजयेते ॥

अथाष्टमीमाह । "पातन्नो अश्विना दिवा । पाहि नक्तꣳ सरस्वति [३] । दैव्या होतारा भिषजा । पातमिन्द्रꣳ सचा सुते" इति । हे अश्विनौ दिवा नो अस्मान् पातम् । हे सरस्वति नक्तमस्मान् पाहि । दैव्यहोतृशब्दवाच्यौ हे अष्टमप्रयाजदेवौ युवां भिषजौ चिकित्सकौ सचा परस्परं सयुक्तौ सुते प्रवृत्तेऽस्मिन् कर्म्मणि इन्द्रं पातम् ॥

नवमीमाह । "तिस्रस्त्रेधा सरस्वती । अश्विना भारतीडा । तीव्रं परिस्रुता सोमम् । इन्द्राय सुषुवुर्मदम्" इति । हे अश्विनौ सरस्वती भारतीडेत्येतास्तिस्रो नवमप्रयाजदेवताः, त्रेधा लोकत्रयरूपेण वर्त्तमानाः परिस्रुता परिस्रवन्त्या सुरया सहितं तीव्रं तीव्रगन्धोपेतं सोमं सोमसदृशं मदं मदकरं हविः इन्द्राय सुषुवुः इन्द्रार्थं सम्पादितवत्यः ॥

दशमीमाह । "अश्विना भेषजं मधु । भेषजन्नः सरस्वती । इन्द्रे त्वष्टा यशः श्रियम् । रूपꣳ रूपमधुः सुते" इति । यावेतावश्विनौ या च सरस्वती योऽपि त्वष्टा दशमप्रयाजदेवः ते सर्व्वे मिलित्वा भेषजं सर्व्वेषामौषधरूपं मधु मधुरं नो

भेषजम् अस्माकं विशेषतः औषधरूपं यशः श्रियं यशःप्रदं श्रीप्रदं रूपं रूपं बहुरूपकरमिदं हविः सुते प्रवृत्तेऽस्मिन् कर्म्मणि इन्द्रेऽस्मिन्नधुः स्थापितवन्तः ॥

*अथैकादशीमाह। "ऋतुथेन्द्रो वनस्पतिः। शशमानः प-रिस्रुता।* कीलालमश्विभ्यां मधु। दुहे धेनुः सरस्वती" इति। योऽयं वनस्पतिरेकादशप्रयाजरूपो देवः, सोऽयं ऋतुथा तस्मिन् तस्मिन्नृतौ इन्द्रः इन्द्रेण अभिन्नः सन् परिस्रुता परित-स्रवन्त्या सुरया सह शशमानः शश्वद्वर्त्तते। अश्विभ्यां युक्ता सरस्वती धेनुः प्रीणयित्री सती कीलालमुदकसदृशं मधु मधुरं हविर्दुहे दोग्धि॥

द्वादशीमाह। "गोभिर्न सोममश्विना। मासरेण परि-ष्कृता। समधाताꣳ सरस्वत्या। स्वाहेन्द्रे सुतं मधु" [४] इति। हे अश्विनौ गोभिर्न गवादिभिर्वृषभच्छागमेषैरपि सहितं मासरेण परिष्कृता यवसक्तुद्रव्येणालङ्कृतं सोमं सोमसदृशं मधु मधुरमिदं हविः सरस्वत्या चरम-प्रयाजदेवेन स्वाहाशब्द-वाच्येन च सहितौ युवाम् इन्द्रे समधातां सम्यक् स्थापित-वन्तौ। तदेवं विकल्पितेन द्वितीयप्रयाजेन सहितानां प्रया-जानां याज्यारूपा द्वादश मन्त्रा अभिहिताः॥

इति द्वादशोऽनुवाकः ॥ १२ ॥

---

## अथ त्रयोदशोऽनुवाकः ।

द्वादशे प्रयाजयाज्या आप्रीयोऽभिहिताः । त्रयोदशे वपादीनां याज्यानुवाक्या उच्यन्ते । तत्र तिसृणां वपानां तिस्र ऋचः तिसृश्चैकैकस्याश्चिद्वपायां पुरोऽनुवाक्या कस्याश्चिद्याज्येत्येवं द्विरूपा । तत्र प्रथमायां पुरोऽनुवाक्यां तृतीयायां याज्यामृचमाह । "अश्विना हविरिन्द्रियम् । नमुचेर्धिया सरस्वती । आ शुक्रमासुराद्वसु । मघमिन्द्राय जभ्रिरे" इति । यावेतावश्विनौ या च सरस्वती ते त्रयो मिलित्वा धिया स्वबुद्ध्या इन्द्रार्थं नमुचिनाम्नः आसुरात् हविराजभ्रिरे आहृतवन्तः । कीदृशं हविः, इन्द्रियं इन्द्रियवर्द्धकं शुक्रं निर्मलं वसु निवासकारणं मघं महनीयम् ॥

अथ प्रथमायां याज्यां द्वितीयस्यां पुरोऽनुवाक्यामृचमाह । "यमश्विना सरस्वती । हविषेन्द्रमवर्द्धयन् । स बिभेद बलं मघम् । नमुचावासुरे सचा" इति । अश्विना उभौ सरस्वती चेत्येते त्रयो हविषा यमिन्द्रमवर्द्धयन्, सोऽयमिन्द्रो नमुचिनामासुरे सचा सम्बन्धं, मघं महनीयं, बलं बलनामानमसुरं बिभेद विदारितवान् ॥

अथ द्वितीयस्यां याज्यां तृतीयस्यां पुरोऽनुवाक्यामाह । "तमिन्द्रं पशवः सचा । अश्विनोभा सरस्वती [१] । दधाना अभ्यनूषत । हविषा यज्ञमिन्द्रियम्" इति । छाग-मेष-ऋषभा य एते पशवः, या उभावश्विनौ, या च सरस्वती ते सर्व्वे सचा

परस्परं सम्बद्धाः, इन्द्रियमिन्द्रियवृद्धिहेतुं यज्ञं हविषा दधानाः तमिन्द्रमभ्यनूषत ॥

अथ त्रिषु पुरोडाशेषु पूर्व्ववत्तिस्र ऋच आम्नाताः। तत्र प्रथमस्य पुरोडाशस्य पुरोऽनुवाक्यां तृतीयस्य याज्यामृचमाह। "य इन्द्र इन्द्रियं दधुः। सविता वरुणो भगः। स सुत्रामा हविष्पतिः। यजमानाय सश्चत" इति। इन्द्रसवितृवरुणाः पुरोडाशदेवताः भगोऽपि तत्सहचारी कश्चित्, ये यस्मिन्निन्द्रे सवितृवरुणभगाः इन्द्रियं दधुः सम्पादितवन्तः, सोऽयमिन्द्रः सुत्रामा सुष्ठु रचकः, हविष्पतिः हविषां पालकः यजमानार्थं सश्चत सम्बद्धोऽभूत् ॥

अथ प्रथमस्य याज्यां द्वितीयस्य पुरोऽनुवाक्यामृचमाह। "सविता वरुणो दधत्। यजमानाय दाशुषे। आदत्त नमुचेर्वसु। सुत्रामा बलमिन्द्रियम्" [२] इति। यः सविता सोऽयं दाशुषे हविर्दत्तवते यजमानाय दधत् अपेचितं सम्पादयतु, तथा च वरुणोऽपि सम्पादयतु। सुत्रामेन्द्रो बलमिन्द्रियं बलेन्द्रिययोः कारणं वसु हविःस्वरूपं धनं नमुचेः सकाशादादत्त ॥

अथ द्वितीयस्य याज्यां तृतीयस्य पुरोऽनुवाक्यामृचमाह। "वरुणः चत्रमिन्द्रियम्। भगेन सविता श्रियम्। सुत्रामा यशसा बलम्। दधाना यज्ञमाशत" इति। योऽयं वरुणः सोऽयं चत्रं बलमिन्द्रियञ्च दधाति, भगेन सह सविता श्रियं दधाति, सुत्रामेन्द्रो यशसा सह बलं दधाति। तत एते

त्रयो देवास्त्रिविदं दधानाः यजमानस्य यज्ञमाशत प्राप्तवन्तः॥

अथ हविषस्त्रिस्र आम्नाताः, तत्र प्रथमस्य पुरोऽनुवाक्यां तृतीयस्य याज्यामाह। "अश्विना गोभिरिन्द्रियम्। अश्वेभिर्वीर्यं बलम्। हविषेन्द्रꣳ सरस्वती। यजमानमवर्द्धयन्" इति। अश्विना उभौ सरस्वती चेत्येते त्रयो देवाः गोभिरिन्द्रियं सम्पाद्य ऐश्वर्य्यं वीर्य्यं बलञ्च सम्पाद्य,अनत्येन हविषा इन्द्रं यजमानं चावर्द्धयन् हविर्भोक्तृत्वमिन्द्रस्य वृद्धिः,हविर्दातृत्वं यजमानस्य वृद्धिः॥

अथ प्रथमस्य याज्यां द्वितीयस्य पुरोऽनुवाक्यामृचमाह। "ता नासत्या सुपेशसा। हिरण्यवर्त्तनी नरा। सरस्वती हविष्मती। इन्द्र कर्म्मसु नोऽवत"* इति। ता नासत्या तावश्विनौ सुपेशसा सुरूपौ हिरण्यवर्त्तनी आभरणैः सह वर्त्तमानौ नरा जगद्व्यवहारस्य नेतारौ सरस्वती चात्र हविष्मती हविर्युक्ता, हे इन्द्र त्वञ्च सरस्वती चाश्विनौ चेत्येते यूयम् अनुष्ठीयमानेष्वेतेषु कर्म्मसु नोऽस्मानवत रक्षत॥

अथ द्वितीयस्य याज्यां तृतीयस्य पुरोऽनुवाक्यामृचमाह।"ता भिषजा सुकर्म्मणा। सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुः। इन्द्राय दधुरिन्द्रियम्" [३] इति। ता भिषजा तौ चिकित्सकावश्विनौ सुकर्म्मणा शोभनकर्म्मयुक्तौ सा सरस्वती सुदुघा सुष्ठु दोहनयुक्ता। स च वृत्रहा इन्द्रः शतक्रतुः शतसङ्ख्याकक्रतुयुक्तः, ते सर्व्वेऽपीन्द्रार्थम् इन्द्रियं सम्पादितवन्तः। इन्द्रोऽपि स्वार्थं प्रवर्त्तत इति भावः॥ इति त्रयोदशोऽनुवाकः॥१३॥

* अत्र इन्द्रः कर्म्मसु नोवतु, इति मुद्रितमूलपुस्तकपाठस्तु न भाष्यसम्मतः।

अथ चतुर्द्दशोऽनुवाकः ।

त्रयोदशे वपापुरोडाशहविषां याज्यानुवाक्या उक्ताः। अथ चतुर्द्दशेऽनुयाज्यानां मैत्रावरुणप्रैषा उच्यन्ते। तत्र प्रथममन्त्रमाह। "देवं बर्हिः सरस्वती। सुदेवमिन्द्रे अश्विना। तेजो न चक्षुरक्ष्योः। बर्हिषा दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" इति। बर्हिःशब्दवाच्यं प्रथमानुयाजदेवतास्वरूपं, तच्च देवं द्योतमानं सुदेवं शोभना देवता यस्य सर्व्वदेवप्रियमित्यर्थः। तादृशं यद्बर्हिः या च सरस्वती यौ चाश्विनौ देवौ ते सर्व्वेऽपि अक्ष्योः अक्षिगोलकयोः तेजस्वचक्षुर्न तेजोरूपं चक्षुरिन्द्रियं यथा स्थापयन्ति तथा बर्हिषा बर्हिर्देवतामुखेन इन्द्रे इन्द्रियं दधुः स्थापितवन्तः। वसुधेयस्य द्रव्याधारकस्य देवस्य वसुवने धनदाननिमित्तं ते बर्हिरादयो देवा वियन्तु आज्यं पिबन्तु। तदर्थं हे होतः यज याज्यां पठ॥

अथ द्वितीयमन्त्रमाह। "देवीर्द्वारो अश्विना। भिषजेन्द्रे सरस्वती। प्राणं न वीर्य्यं नसि। द्वारो दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" [१] इति। द्वारशब्दवाच्या द्वितीयानुयाजदेवताः, ता देवीः द्योतमानाः अश्विनौ भिषजौ चिकित्सकौ सरस्वती चेत्येते देवाः नसि नासिकायां, वीर्य्यं वीर्य्यहेतुं प्राणन्न प्राणमिव यथा प्राणवायुं नासिकायां स्थापयन्ति। तथा द्वारो द्वार्देवताः इतरैः सहिताः इन्द्रे इन्द्रियं दधुः॥

तृतीयमन्त्रमाह। "देवी उषासावश्विना। भिषजेन्द्रे सरस्वती। बलं न वाचमास्ये। उषाभ्यां दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" इति। उषस्शब्दवाच्ये तृतीयानुयाजदेवते देवी द्योतमानात्मके उभे भिषजावश्विनौ सरस्वती च आस्ये मुखे वाचं वागीन्द्रियं बलं न बलमिव, यथा मुखे वागिन्द्रियसामर्थ्यं स्थापितवन्तः तथैव सर्व्वे देवा उषाभ्याम् उषादेवतामुखेन इन्द्रे इन्द्रियं दधुः॥

चतुर्थमन्त्रमाह। "देवी ज्योष्ट्री अश्विना। सुत्रामेन्द्र सरस्वती। श्रोत्रं न कर्णयोर्यशः। ज्योष्ट्रीभ्यां दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" [२] इति। ज्योष्ट्रीशब्दवाच्ये चतुर्थानुयाजदेवते ते च देवी देव्यौ द्योतमानात्मके उभे अश्विनौ द्वौ सुत्रामाख्य इन्द्रः सरस्वती चैता देवताः कर्णयोः कर्णगोलकयोः यशः यशः-कारणं श्रोत्रं न श्रोत्रेन्द्रियमिव, यथा श्रोत्रेन्द्रियं कर्णगोलकयोः स्थापयन्ति तथा ज्योष्ट्रीभ्यां ज्योष्ट्रीदेवतामुखेन तदिन्द्रे इन्द्रियं दधुः॥

पञ्चममन्त्रमाह। देवी ऊर्जाहुती दुघे सुदुघे। पयसेन्द्रं सरस्वत्यश्विना भिषजावत। शुक्रं न ज्योतिस्तनयोराहुती धत्त इन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" इति। ऊर्जाहुतिशब्दवाच्ये पञ्चमानुयाजदेवते देवी द्योतमानात्मके दुघे अभीष्टफलस्य दोग्ध्र्यौ सुदुघे सुष्ठु दोग्धुं शक्ये, तथाविधे उभे देव्यौ सरस्वती भिषजावश्विनौ चैते यूयं पयसा सहविषा इन्द्रम् अवत रक्षत। आहुतिदेव्यौ स्तनयोरुभयोः शुक्रं शुक्लं

ज्योतिर्न ज्योतिरिव, यथा स्त्रीस्तनयोः ज्योतीरूपं चीरं स्थापयन्ति तद्वदिन्द्रियं धत्तः ॥

षष्ठमन्त्रमाह। "देवा देवानां भिषजा। होताराविन्द्रमश्विना। वषट्कारैः सरस्वती। त्विषिं न हृदये मतिम्। होतृभ्यां दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज"[३]इति। होतृशब्दवाच्यौ षष्ठानुयाजदेवौ देवा द्योतमानात्मकौ यौ विद्येते, यौ च देवानां भिषजौ अश्विनौ, या च सरस्वती वषट्कारदेवैः सहिता ते सर्व्वे यूयमिन्द्रम् अवतेति शेषः। पुनरपि ते सर्व्वे हृदये हृदयकमले मतिं बुद्धिरूपां त्विषिं न दीप्तीमिव, यथा बुद्धिरूपां दीप्तिं हृदये स्थापयन्ति तथा होतृभ्यां होतृदेवमुखेन इन्द्रे इन्द्रियं दधुः ॥

अथ सप्तममन्त्रमाह। "देवीस्तिस्रस्तिस्रो देवीः। सरस्वत्यश्विना भारतीडा। शूषं न मध्ये नाभ्याम्। इन्द्राय दधुरिन्द्रियम्। वसुवने वसुधेयस्य वियन्तु यज" इति। सरस्वती भारती इडेत्येताः तिस्रः सप्तमानुयाजदेवताः परस्परं कदाचिदपि अवियुक्ता इति वक्तुं पुनस्तिस्रो देवीरित्युक्तम्। अथवा एकैकस्या देवतायाः मूर्त्तित्रयविवचया तदुक्तिः। ता एता देवताः सरस्वत्यश्विन्यौ चेत्येते सर्व्वे शरीरस्य मध्ये नाभ्यां शूषं न बलमिव, यथा बलं स्थापयन्ति तथेन्द्रार्थम् इन्द्रियं दधुः ॥

अथाष्टममन्त्रमाह। "देव इन्द्रो नराशꣳसः। त्रिवरूथः सरस्वत्याश्विभ्यामीयते रथः। रेतो न रूपममृतं जनित्रम्।

इन्द्राय त्वष्टा दधदिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज" [४] इति। नराशंसाख्योऽष्टमानुयाजदेवः, स च देवः द्योतमानात्मकः, इन्द्रः परमैश्वर्ययुक्तः त्रिवरूथः सेनात्रययुक्तः रथो रथयुक्तः, स च सरस्वत्या अश्विभ्याञ्च सह ईयते व्याप्रियते, रूपं रूपसम्पादकम् अमृतं सुखकारणं जनित्रं प्रजोत्पादकं रेतो न रेत इव, यथा रेतः स्वस्थाने प्रापयन्ति तथा इन्द्रायेन्द्रार्थम् अयं त्वष्टा नराशंसाख्यो देवः इन्द्रियाणि दधत् सम्पादयति॥

नवममन्त्रमाह। "देव इन्द्रो वनस्पतिः। हिरण्यपर्णो अश्विभ्याम्। सरस्वत्याः सुपिप्पलः। इन्द्राय पच्यते मधु। ओजो न जूतिरृषभो न भामम्। वनस्पतिर्नो दधदिन्द्रियाणि। वसुवने वसुधेयस्य वियन्तु यज" इति। नवमानुयाजदेवो वनस्पतिशब्दवाच्यः, स च देवो द्योतमानात्मकः इन्द्रः इन्द्रेण सहितः हिरण्यपर्णः सुवर्णपत्रः अश्विभ्यां देवाभ्याञ्च युक्तः सरस्वत्याश्च सम्बन्धि सुपिप्पलः शोभनफलोपेतः, इन्द्रार्थमस्मिन् यज्ञे मधु मधुरं हविः पच्यते। ओजो न जूतिं, यथा शरीरमध्ये बलशक्तिवेगमुत्पादयति। ऋषभो न भामं, यथा लोके कश्चिदृषभो दृप्तः क्रोधमुत्पादयति, तद्वदयं वनस्पतिः नः अस्मदर्थमिन्द्रियाणि दधतु सम्पादयतु॥

अथ दशममन्त्रमाह। "देवं बर्हिर्वारितीनाम्। अध्वरे स्तीर्णमश्विभ्याम्। चूर्णं म्रदाः सरस्वत्याः [५]। स्योनमिन्द्र ते सदः। ईशायै मन्युꣳ राजानं बर्हिषा दधुरिन्द्रियम्। वसु-

वने वसुधेयस्य वियन्तु यज” इति। दशमानुयाजदेवस्वरूपं बर्हिर्नामकं, तच्च देवं द्योतनात्मकं वारितीनां जलप्राप्तीनां सम्बन्धि यत्र भूमिर्जलेन सिच्यते, तत्र बर्हिर्जायते तच्चाश्विभ्यामध्वरे यागे स्तीर्णं प्रसारितम् ऊर्णम्रदाः कम्बलवत् मृदुः सरस्वत्याः सम्बन्धि हे इन्द्र तादृशं बर्हिः ते तव स्योनं सुखकरम् उपनिवेशनस्थानम् ईशायै जगदीश्वररूपेन्द्रदेवतायै मन्युं वैरिविषयं क्रोधं राजानं शरीरे दीप्तिम् इन्द्रियं चक्षुरादिपाटवञ्च बर्हिषा बर्हिर्देवतामुखेन दधुः सरस्वत्यादयः सम्पादितवत्यः ॥

एकादशमन्त्रमाह। “देवो अग्निः स्विष्टकृत्। देवान् यक्षद्यथायथम्। होताराविन्द्रमश्विना। वाचा वाचꣳ सरस्वतीम्। अग्निꣳ सोमꣳ स्विष्टकृत्। स्विष्ट इन्द्रः सुत्रामा सविता वरुणो भिषक्। इष्टो देवो वनस्पतिः। स्विष्टा देवा आज्यपाः। इष्टो अग्निरग्निना। होता होत्रे स्विष्टकृत्। यशो न दधदिन्द्रियम्। ऊर्जमपचितिꣳ स्वधाम्। वसुवने वसुधेयस्य वियन्तु यज” [६] इति। एकादशोऽनुयाजदेवः स्विष्टकृच्छब्दवाचकोऽग्निः, सोऽयं द्योतनात्मकः अन्यान्देवान् यथायथं यक्षत् यद्यस्य योग्यं तं तेन पूजितवान्। कं कं पूजितवानिति तदुच्यते, होतारौ दैव्यमानुषरूपौ देवौ स्वयं देहं धृत्वा वाचा मन्त्रेण इन्द्रं देवम्, अश्विनौ द्वौ देवौ वाचं सरस्वतीं वाग्रूपाख्यां सरस्वत्याख्यां देवतां पूजितवान्। तथा स्विष्टकृदयम् अग्निं सोमञ्च उभौ आज्यभागदेवौ पूजितवान्। सुत्रामेन्द्रः स्विष्टः सुष्ठु पूजितः।

सविता च स्विष्टः। भिषग्रूपो वरुणेनापि स्विष्टः। तथा यूपदेवो वनस्पतिरिष्टः आज्यपाः प्रयाजानुयाजदेवाः स्विष्टाः। देव्यो होता योऽयमग्निः सोऽयममेनाग्निना इष्टः। स्विष्टकृदाख्योऽयमग्निः होत्रे होमकर्म्मे यजमानाय यशो न यश इव इन्द्रियं दधत् सम्पादयति। तथा ऊर्जं क्षीरादिरसं सम्पादयति। तथा अपचितिं पूजां सम्पादयति। तथा स्वधामन्नञ्च सम्पादयति॥

इति चतुर्द्दशोऽनुवाकः॥ १४॥

अथ पञ्चदशोऽनुवाकः।

चतुर्द्दशे प्रधानपशुत्रयार्था अनूयाजप्रैषा उक्ताः। अथ पञ्चदशे सूक्तवाकप्रैषोऽभिधीयते। "सोमेन अग्निमद्य होतारमवृणीत। अयꣳ सुतासुती यजमानः। पचन् पक्तीः। पचन् पुरोडाशान्। गृह्णन् गृहान्। बध्नन्नश्विभ्यां छागꣳ सरस्वत्या इन्द्राय। बध्नन्त्सरस्वत्यै मेषमिन्द्रायाश्विभ्याम्। बध्नन्निन्द्रायर्षभमश्विभ्याꣳ सरस्वत्यै। सूपस्था अद्य देवो वनस्पतिरभवत्। अश्विभ्यां छागेन सरस्वत्या इन्द्राय [१]। सरस्वत्यै मेषेणेन्द्रायाश्विभ्याम्। इन्द्रायर्षभेणाश्विभ्याꣳ सरस्वत्यै। अक्षꣳस्तान्मेदस्तः प्रति पचताग्रभीषुः। अवीवृधन्त गृहैः। अपातामश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा। सोमान्त्सुराम्णः। उपो उक्था मदाश्रौ द्विमदा अदन्। अवीवृधन्ताङ्गूषैः। त्वा

मद्यर्ष आर्षेयर्षीणां न पादवृणीत। अयꣳ सुतासुती यजमानः। बहुभ्य आसङ्गतेभ्यः। एष मे देवेषु वसुवार्य्या यक्ष्यत इति। ता या देवा देवदान्यदुः। तान्यस्मा आचशास्व। आचगुरस्व। इषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः। सूक्तवाकाय सूक्ता ब्रूहि" [२] इति। अथास्मिन् कर्म्मणि अयं यजमानः अग्निरूपं देवं होतारं होमनिष्पादकं पुरुषमवृणीत वृतवान्। कीदृशो यजमानः, सुतासुती सुतमभिसुतं सोम सुरादि असुतमभिषवरहितं पयः प्रभृति तदुभयमस्यास्तीति सुतासुती। किं कुर्व्वन् पक्तीः, पक्तव्यानि द्रव्याणि पचन् पक्वानि कुर्व्वन्। तथा पुरोडाशान् ऐन्द्रसावित्रादीन् पचन् पक्वान् कुर्व्वन्। ग्रहान् आश्विनादीन् गृह्णन् पात्रेषु स्वीकुर्व्वन्। योऽयं छागस्तं सरस्वतीमिन्द्रयुक्ताभ्यामश्विभ्यां सर्व्वदेवार्थं यूपे बध्नन्। तथा यो मेषस्तमिन्द्राश्वियुक्तायै मुख्यायै सरस्वत्यै बध्नन्। तथा यो वृषभस्तमश्विसरस्वतीयुक्ताय मुख्यायेन्द्राय बध्नन्। अथास्मिन् दिने वनस्पतिर्देवो यूपात्मकः सूपस्था अभवत् सुष्ठु स्थिरावस्थानयुक्तोऽभवत्। सरस्वतीन्द्रयुक्ताभ्यां मुख्याभ्यामश्विभ्यां छागेन पशुना यजमानाः परिचरन्ति। इन्द्राश्वियुक्तायै मुख्यायै सरस्वत्यै मेषेण पशुना परिचरन्ति। अश्विसरस्वतीयुक्तायेन्द्राय वृषभेण पशुना परिचरन्ति। तान् पशून् इन्द्रादयो देवा अघन् अशितवन्तः। मेदस्तः मेदांसि पचता पक्वानि हवींषि प्रत्यग्रभीषुः प्रतिगृहीतवन्तः। ग्रहैरनुष्ठितैः अवीवृधन्त वर्द्धितवन्तः। अश्विनौ

देवौ, सोमान् 'सुरामाणः' सुरासदृशानि सोमद्रव्याणि, 'अपाताः' पीतवन्तौ, सरस्वती च पीतवती, 'सुत्रामा वृत्रहा' इन्द्रस्य पीतवान्। 'उपो' समीपे, 'उक्था मदाः' शस्त्रवद्धर्षहेतुमन्त्रान्, 'श्रौत्' अश्रौषुः। 'विमदा' विशेषेण हर्षयुक्ताः, 'अदन्' भक्षितवन्तः। 'आङ्गूषैः' अङ्गविशेषैः, 'अवीवृधन्त' सम्यग् वर्द्धितवन्तः। 'अद्य' अस्मिन् कर्म्मणि, हे 'ऋषे' अतीन्द्रियार्थदर्शिन् हे होतः, 'त्वामयं यजमानः' 'अवृणीत' वृतवान्। 'आर्षेय' हे ऋषिकुलोत्पन्न, 'ऋषीणान्नपात्' हे ऋषिनप्तः गोत्रप्रवर्त्तकम् ऋषिं प्रति चतुर्थ इत्यर्थः। एतदुभयमपि ऋषिविशेषणम्। कीदृशो यजमानः, 'सुतासुतौ' अभिषुतानभिषुतद्रव्यद्वयवान्। किमर्थं वृतवानिति तदुच्यते, 'आमङ्गतेभ्यः वसुभ्यः' आगत्यास्मिन् कर्म्मणि सम्बद्धानां बहूनां देवानाम् अर्थे। केनाभिप्रायेण वृतवानिति सोऽभिप्राय उच्यते, 'एष' होता, 'मे' 'वसु वारि' पुरोडाशरूपं वसु पयः सुरारूपं वारि च 'देवेषु' 'आयक्ष्यते' समन्ताद्यागं करिष्यतीति। 'ता या देवा देवदानानि' यानि तानि देवेभ्यो दत्तानि हवींषि देवा 'अदुः' ऋत्विजो दत्तवन्तः। 'तानि' सर्व्वाणि हविःफलानि 'अस्मै' यजमानाय, 'आशास्व च' सिद्ध्यन्त्वित्येवमाशिषस्व कुरु। 'आगुरस्व च' तत्सिद्ध्यर्थम् उद्यमञ्च कुरु। हे 'होतः' 'इषितः' मयाभिलषितः प्रेषितश्च, 'असि', 'भद्रवाच्याय' कल्याणवचनाय प्रेषितः 'मानुषः' होता त्वं सूक्तस्य वचनं वाको यस्य देवस्य सोऽयं देवः 'सूक्तवाकः' तस्मै सूक्तवाकदेवाय, 'सूक्तान् ब्रूहि' इदं द्यावापृथिवीत्येतान्यनुवाकोक्तानि शोभनानि वचनानि कथय॥

इति पञ्चदशोऽनुवाकः॥ १५॥

अथ षोडशोऽनुवाकः ।

पञ्चदशे सूक्तवाकप्रैषोऽभिहितः । षोडशे पितृयज्ञविषया मन्त्रा उच्यन्ते। पितृयज्ञस्य सूत्रकारेण निर्द्दिष्टः पूर्व्ववत् पितृयज्ञ इति। स च राजसूयप्रकरणे चातुर्मास्येषु सोमाय पितृमत इत्यनुवाके व्याख्यातः। तदर्थानां मन्त्राणां दशानां प्रतीकं दर्शयति। "उशन्तस्त्वा हवामह आनो अग्ने सुकेतुना। त्वꣳ सोममहे भगं त्वꣳ सोम प्रचिकितो मनीषा। त्वया हि नः पितरः सोम पूर्व्वे त्वꣳ सोम पितृभिः संविदानः। बर्हिषदः पितर आह पितॄन्। अग्निष्वात्ताः पितरोऽग्निष्वात्ताः पितरः" इति। एतास्वत्तु 'उशन्तस्त्वा हवामहे' एषा सामिधेनी। सेयं संहिताद्वितीयकाण्डे व्याख्याता। 'आनो अग्ने' 'त्वं सोममहे' इत्युभे आज्यभागयोः पुरोऽनुवाक्ये। ते च वृषा सो अंशुः पवत इत्यनुवाके व्याख्याते। सोमाय पितृमते पुरोडाशं षट्कपालं निर्व्वपतीत्यस्मिन् कर्म्मणि 'त्वं सोम प्रचिकितः' 'त्वया हि नः पितरः' इत्येते पुरोऽनुवाक्ये। तत्रैव 'त्वं सोम पितृभिः' इति याज्या। पितृभ्यो बर्हिषद्भ्यो धाना इत्यस्मिन् कर्म्मणि बर्हिषदः पितर ऊत्यर्व्वाक्, आह पितॄन् सुविदत्रानित्येते पुरोऽनुवाक्ये। 'उपहूताः पितरः' इत्येषा याज्या। पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमित्यत्र, 'अग्निष्वात्ताः पितरः' सोम्यास इत्येषा पुरोऽनुवाक्या। ता एतास्त्वं सोम प्रचिकित इत्याद्याः सप्त संहितायामुशन्तस्त्वेत्यनुवाके व्याख्याताः॥

अथ द्वितीयां पुरोऽनुवाक्यामाह। "अग्निष्वात्तानृतुमतो

हवामहे। नराशꣳसे सोमपीथं य आशुः। ते नो अर्वन्तः सुहवा भवन्तु। शन्नो भवन्तु द्विपदे शं चतुष्पदे'' इति। 'अग्निष्वात्ताः' अग्निष्वात्तनामकाः पितरः पितृविशेषाः। ते च चातुर्मास्यगतपितृयज्ञब्राह्मणे स्पष्टमभिहिताः, ये वा अयज्वानो गृहमेधिनः ते पितरोऽग्निष्वात्ता इति। मनुष्यजन्मन्यग्निष्टोमादियागमकृत्वा स्मार्त्तकर्मनिष्ठाः सन्तो मृत्वा च पितृत्वं गताः तानग्निष्वात्तान् 'ऋतुमतः' ऋतुरूपेण यज्ञकालेन युक्तान् 'हवामहे' आह्वयामः। ये पितरो 'नराशंसे' नरैः शंसनीये यज्ञे सोमादिरूपेण 'सोमपीथं' सोमपानम्,'आशुः' प्राप्तवन्तः, 'ते' पितरो 'नः' अस्माकं 'सुहवाः' सुखेनाह्वातुं शक्याः,'अर्वन्तः' शीघ्रगतिमन्तो भवन्तु। 'नः' अस्माकं, 'द्विपदे' मनुष्याय 'शं' सुखकरा भवन्तु, 'चतुष्पदे' पशवे च 'शं' भवन्तु॥

अथ विकल्पितामन्यां द्वितीयां पुरोऽनुवाक्यामाह। ''ये अग्निष्वात्ता येऽनग्निष्वात्ताः [१]। अꣳहोमुचः पितरः सोम्यासः। परेऽवरेऽमृतासो भवन्तः। अधिब्रुवन्तु ते अवन्त्वस्मान्'' इति। 'अग्निष्वात्ताः' पूर्वोक्तलक्षणाः पितरो ये सन्ति, ये च यागं कृत्वा पितृलोकं प्राप्ता 'अनग्निष्वात्ताः पितरः', ते सर्वेऽपि 'अंहोमुचः' पापान् मोचयितारः, 'सोम्यासः' सोमपानार्हाः,'परेऽवरे', कृतयागाः 'परे', यागरहिता 'अवरे', द्विधा अपि, 'अमृतासः' मनुष्यवच्छीघ्रमरणरहिताः, ते 'भवन्तः' पितरः 'अधिब्रुवन्तु' देवानां समीपे यजमानमधिकं ब्रुवन्तु। यजमानान् 'अस्मान्' अवन्तु॥

अथ तत्रैव याज्यामाह। "वान्यायै दुग्धे जुषमाणाः करम्भम्। उदीराणा अवरे परे च। अग्निष्वात्ता ऋतुभिः संविदानाः। इन्द्रवतो हविरिदं जुषन्ताम्" इति। 'अग्निष्वात्ता' नामकाः पितरः,मदीयम्,'इदं हविर्जुषन्ताम्'। कीदृशाः अग्निष्वात्ताः, 'वान्यायै' मृतवत्सायाः धेनोः, 'दुग्धे' प्रक्षिप्तं 'करम्भं' यवपिष्टरूपं मन्थं 'जुषमाणाः', तेषु मध्ये ये परे उत्कृष्टाः ये च 'अवरे' निकृष्टाः, ते सर्व्वेऽपि 'उदीराणाः' अस्मिन् कर्म्मणि उत्कर्षेण प्राप्ताः। 'ऋतुभिः' यज्ञकालाभिमानिदेवैः सह 'संविदानाः' ऐकमत्यं गताः, 'इन्द्रवन्तः' परमैश्वर्य्ययुक्तेन पितृराजेन यमेन संयुक्ताः। अत्र शाखान्तरानुसारेण हविरन्तरं सूत्रकार उदाजहार। अग्नये कव्यवाहनाय यमाय वा मन्थमिति॥

तत्र द्वयोः पुरोऽनुवाक्ययोः एकस्या याज्यायाश्च प्रतीकानि दर्शयति। "यदग्ने कव्यवाहन। त्वमग्न ईडितो जातवेदः। मातलीकव्यैः" इति। एतास्तिस्र उशन्तस्त्वा हवामह इत्यनुवाके संहितायां व्याख्याताः॥

अथ तत्रैव स्विष्टकृतः पुरोऽनुवाक्यामाह। "ये तातृपुर्देवत्रा जेहमानाः। होत्रा वृधः स्तोमतष्टासो अर्कैः। आग्ने याहि सुविदत्रेभिरर्वाङ्। सत्यैः कव्यैः पितृभिर्घर्मसद्भिः" इति। 'ये' पितरः,'देवत्राः' देवेषु मध्ये,'जेहमानाः' प्रयमानाः, 'होत्रावृधः' होमकर्तॄन् वर्द्धयन्तः,'स्तोमतष्टासः' स्तोत्ररूपैः मन्त्रैः संस्कृताः सन्तः,'अर्कैः' अर्चनीयैः हविर्भिः,'तातृपुः' तृप्तिं गताः। हे 'अग्ने' तैः 'पितृभिः',सार्द्धम्,'अर्वाङ्' 'आयाहि' अस्मदभिमुखम्,

आगच्छ। कीदृशैः पितृभिः, 'सुविदत्रेभिः' सम्यक् अभिज्ञैः, 'सत्यैः' सत्यवादिभिः, 'कव्यैः' कव्याख्येन पितृणामन्नेन युक्तैः, 'घर्मासद्भिः' घर्मे दीप्यमानेऽस्मिन् कर्म्मणि निवसद्भिः ॥

अथ तत्रैव याज्यामाह। "हव्यवाहमजरं पुरुप्रियम्। अग्निं घृतेन हविषा सपर्य्यन्। उपासदं कव्यवाहं पितृणाम्। स नः प्रजां वीरवतीꣳ समृणोतु"[२] इति। अहं स्विष्टकृदाख्यमिमम्, 'अग्निम्', 'उपासदम्' उपसन्नोऽस्मि। किं कुर्व्वन् 'घृतेन', 'हविषा', 'सपर्य्यन्' पूजयन्। कीदृशमग्निं 'हव्यवाहं' देवार्थं हव्यस्य वोढारम्, 'अजरं' जरारहितं, 'पुरुप्रियं' पुरूणां बहूनां यजमानानां प्रियं, पितृणामर्थे 'कव्यवाहं' कव्याख्यस्य हविषो वोढारम्। 'सः' तादृशोऽग्निः, 'नः' अस्माकं, 'वीरवतीं' वीरैः भृत्यैर्युक्तां, 'प्रजां' पुत्रपौत्रादिरूपां, 'समृणोतु' सम्यक् प्रापयतु ॥

अत्र विनियोगसङ्ग्रहः ॥

पितृयज्ञे सामिधेनी युशन्तस्त्वेति वर्णिता।
आनस्त्वं सोम इत्याज्यभागयोर्द्वे पुरोरुचौ ॥
पितृमत्सोमयागेतु त्वं सोम प्रेत्यभिमते।
पुरोऽनुवाक्ये याज्या तु त्वं सोमेत्यादिका मता ॥
बर्हिषः पितृयागेतु वर्हीत्यादित्रयं तथा।
अग्निष्वेति चतस्रः स्युरग्निष्वात्तयजौ तथा ॥
यदग्ने कव्यवाहेति कव्यवाहयजौ त्रयम्।
येता द्वे स्विष्टकृद्यागे मन्त्राः अष्टादशेरिताः ॥

इति षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः।

षोडशे पितृयज्ञयाज्यानुवाक्या उक्ताः। अथ यत्पश्वन्तरं सूत्रकारेण उदाहृतम्, इन्द्राय वयोधसे पशुमालभत इति। तत्र प्रयाजार्था मैत्रावरुणप्रैषाः सप्तदशेऽभिधीयन्ते। तत्र प्रथममन्त्रमाह। "होता यक्षदिडस्पदे। समिधानं महद्यशः। सुषमिद्धं वरेण्यम्। अग्निमिन्द्रं वयोधसम्। गायत्रीं छन्द इन्द्रियम्। त्र्यविं गां वयोदधत्। वेत्वाज्यस्य होतर्यज" इति। योऽयं दैव्यो 'होता' सोऽयम् 'इडस्पदे' सोमक्रयणीपदपांसुयुक्त आहवनीये, 'समिधानं' समिन्नामकं, प्रथमप्रयाजदेवं 'यक्षत्' यजतु। कीदृशं देवं, 'महद्यशः' महतो यशसः कारणं। 'सुषमिद्धं', सुखेन सम्यक् प्रज्ज्वलितं। 'वरेण्यं' सर्व्वैर्वरणीयं। तद्देवद्वारा 'अग्निं' तदग्निरूपं, 'वयोधसं' वयः आयुष्यं धारयतीति वयोधाः, तादृशं 'इन्द्रं' पशुस्वामिनं देवं यजतु। तथा 'गायत्रीञ्छन्दः' चतुर्व्विंशत्यक्षरं छन्दोदेवं यजतु। ततो यजमानाय 'इन्द्रियं' चक्षुरादिपाटवं। 'त्र्यविं गाम्' अविशब्दो मासषट्कोपलक्षक इति चतुर्थकाण्डे प्रतिपादितम्, त्रीणि मासषट्कानि यस्या गोः सेयं त्र्यविः, तादृशीं गां, 'वयः' आयुष्यञ्च 'दधत्' सम्पादयतु। अयं प्रयाजदेव 'आज्यस्य वेतु' हूयमानमाज्यं पिबतु। तदर्थं हे मानुष 'होतः', 'यज' याज्यां पठ॥

अथ द्वितीयमन्त्रमाह। "होता यक्षच्छुचिव्रतम्। तनूनपातमुद्भिदम्। यं गर्भमदितिर्दधे[१]। शुचिमिन्द्रं वयोधसम्।

उष्णिहं छन्द इन्द्रियम्। दित्यवाहं गां वयो दधत्। वेत्वाज्यस्य होतर्यज" इति। तनूनपान्नामको द्वितीयप्रयाजदेवः, तं होता 'यक्षत्' यजतु। कीदृशं 'शुचिव्रतं' शुद्धमेतत्कर्मरूपं व्रतं यस्य तादृशम्,'उद्भिदं' फलस्योद्भेत्तारमुत्पादयितारं,'यं' तनूनपादाख्यमग्निम्, 'अदितिः' इयं भूमिः,'गर्भं दधे' तं यजत्विंत्यन्वयः। तद्वारेण 'शुचिं' शुद्धात्मानं,'वयोधसमिन्द्रं' पशुदेवम् उष्णिक्छन्दोदेवञ्च यजतु। ततः, 'इन्द्रियं दित्यवाहं गां' द्विवर्षां गाम् आयुष्यञ्च सम्पादयतु। वेत्वित्यादि पूर्व्ववत्॥

अथ तृतीयमन्त्रमाह। "होता यक्षदीडेन्यम्। ईडितं वृत्रहन्तमम्। इडाभिरीड्यꣳ सहः। सोममिन्द्रं वयोधसम्। अनुष्टुभं छन्द इन्द्रियम्। त्रिवत्सं गां वयो दधत्[२]। वेत्वाज्यस्य होतर्यज" इति। 'ईडेन्यः' तृतीयप्रयाजदेवः, तं 'होता' यजतु। कीदृशम्, 'ईडितं' सर्व्वैः ऋत्विग्भिः स्तुतम्। 'वृत्रहन्तमम्' अतिशयेन वैरिघातिनम्, 'इडाभिरीड्यं' स्तुतिपराभिः ऋत्विग्भिः स्तुतं, 'सहः' बलहेतुम्। इन्द्रमित्यादि पूर्व्ववत्। तस्य विशेषणं 'सोमं' सोमपानार्हमित्यर्थः। 'त्रिवत्सं' त्रिवर्षम्॥

अथ चतुर्थमन्त्रमाह। "होता यक्षत्सुबर्हिषदम्। पूषण्वन्तममर्त्यम्। सीदन्तं बर्हिषि प्रिये। अमृतेन्द्रं वयोधसम्। बृहतीं छन्द इन्द्रियम्। पञ्चाविं गां वयो दधत्। वेत्वाज्यस्य होतर्यज" इति। बर्हिःशब्देन चतुर्थप्रयाजदेव उच्यते, तं होता 'यक्षत्'। कीदृशं,'पूषण्वन्तं' पोषणसामर्थ्ययुक्तम्,'अमर्त्यं' मरणरहितं,'प्रिये बर्हिषि' यज्ञे,'सीदन्तम्' उपविष्टम्। अमृ-

तच्छब्दो मरणराहित्यवाची। इन्द्रस्य विशेषणं सार्द्धसंवत्सर-द्वयोपेतम्॥

अथ पञ्चममन्त्रमाह। "होता यक्षद्व्यचस्वतीः। सुप्रायणा ऋतावृधः [३]। द्वारो देवीर्हिरण्मयीः। ब्रह्माण इन्द्रं वयोधसम्। पङ्क्तिं छन्द इहेन्द्रियम्। तुर्य्यवाहं गां वयोदधत्। वेत्वाज्यस्य होतर्यज" इति। द्वारशब्दवाच्याः पञ्चमप्रयाज-देवताः, तास्र 'व्यचस्वतीः' व्याप्तिमत्योऽवकाशवत्यः, 'सुप्रायणाः' सुष्ठु प्रायणं गमनागमनरूपं यासु ताः, ऋतं सत्यं वर्द्धयन्ती 'ऋतावृधः', 'हिरण्मयीः' सुवर्णाभरणयुक्ताः, 'ब्राह्मणः' परि-वृढाः, तादृशीः होता यजतु। इन्द्रमित्यादि पूर्व्ववत्। 'तुर्य्य-वाहं गां वयो दधत्' सार्द्धसंवत्सरत्रयोपेतम्॥

अथ षष्ठमन्त्रमाह।"होता यक्षत् सुपेशसे। सुशिल्पे बृहती उभे। नक्तोषासा न दर्शते। विश्वमिन्द्रं वयोधसम्। त्रिष्टुभं छन्द इन्द्रियम् [४]। पष्ठवाहं गां वयोदधत्। वेत्वाज्यस्य होतर्यज" इति। 'नक्तोषासा' षष्ठप्रयाजदेवते, ते च 'सुपेशसे' शोभनरूपयुक्ते, 'सुशिल्पे' शोभनशिल्पोपेते, शिल्पशब्देन कला-विद्या उच्यन्ते। 'बृहती' महत्यौ 'न दर्शते' दर्शनीये च ते उभे होता यजतु। 'विश्वं' विश्वस्वामिनम्। इन्द्रमित्यादि पूर्व्ववत्। 'षष्ठवाहं' संवत्सरचतुष्टयोपेतम्॥

अथ सप्तममन्त्रमाह। "होता यक्षत् प्रचेतसा। देवाना-मुत्तमं यशः। होतारा दैव्या कवी। सयुजेन्द्रं वयोधसम्। जगतीं छन्द इन्द्रियम्। अनड्वाहं गां वयो दधत्। वेत्वाज्यस्य

होतर्यज" इति। 'दैव्या होतारौ' सप्तमप्रयाजदेवौ, तौ च 'प्रचेतसौ' प्रकृष्टज्ञानयुक्तौ, 'देवानां' सर्व्वेषामुत्तमं, 'यशः', सम्पादयन्तौ। 'कवी' विद्वांसौ, 'सयुजा' सहैव वर्त्तमानौ, 'इह', कर्म्मणि 'अनड्वाहं' शकटवहनक्षमं गाम्। अन्यत् पूर्व्ववत्॥

अथाष्टममन्त्रमाह। "होता यक्षत् पेशस्वतीः [५]। तिस्रो देवीर्हिरण्मयीः। भारतीर्बृहतीर्महीः। पतिमिन्द्रं वयोधसम्। विराजं छन्द इहेन्द्रियम्। धेनुं गां न वयो दधत्। वेत्वाज्यस्य होतर्यज" इति। 'तिस्रो देव्यः' अष्टमप्रयाजदेवताः, ताश्च 'पेशस्वतीः' रूपवत्यः, 'हिरण्मयीः' सुवर्णाभरणोपेताः, 'भारतीः' इति बहुवचनेन इडासरस्वत्यावपि गृह्येते। 'बृहतीः' प्रौढाः, 'महीः' पूज्याः, 'पतिं' पालकं, 'धेनुं गां' नवप्रसूतिं गामपि। अन्यत् पूर्व्ववत्॥

नवममन्त्रमाह। "होता यक्षत्सुरेतसम्। त्वष्टारं पुष्टिवर्द्धनम्। रूपाणि बिभ्रतं पृथक्। पुष्टिमिन्द्रं वयोधसम् [६]। द्विपदं छन्द इहेन्द्रियम्। उक्षाणं गां न वयो दधत्। वेत्वाज्यस्य होतर्यज" इति। 'त्वष्टृ' शब्देन नवमप्रयाजदेव उच्यते, स च 'सुरेताः' शोभनरेतस्कः बहुप्रजाप्रदः, शरीरस्य पुष्टिं वर्द्धयतीति 'पुष्टिवर्द्धनः'। स च प्रतिशरीरं 'पृथक्' विलक्षणानि 'रूपाणि बिभ्रत्', वर्त्तते। तादृशं देवं होता 'यक्षत्' यजतु। 'पुष्टिं' पुष्टिप्रदम्, 'इन्द्रम्', 'उक्षाणं गाम्' सेचनक्षमं वृषभमपि। अन्यत् पूर्व्ववत्॥

दशममन्त्रमाह। "होता यक्षद्वनस्पतिम्। शमितारं शतक्रतुम्। हिरण्यपर्णमुक्थिनम्। रशनां बिभ्रतं वशिम्। भगमिन्द्रं वयोधसम्। क-

कुभं छन्द इहेन्द्रियम्। वशां वेहतं गान्न वयो दधत्। वेत्वा-ज्यस्य होतर्यज'' इति। 'हिरण्यपर्ण' शब्देन सुवर्णपर्णयुक्तो दशम-प्रयाजदेवो वनस्पतिरुच्यते। स च 'शतक्रतुं' शतसङ्ख्याकक्रतुहेतुम्, 'उक्थ्यिनं' शस्त्रोपेतं मन्त्रेण प्रशस्यमानमित्यर्थः। स च 'वशिं' स्ववशं, 'रशनां', यूपावस्थायां,'बिभ्रत्', वर्त्तते, तादृशं 'होता', यजतु। 'भगं' भाग्ययुक्तं, 'वशां' बन्ध्यां, 'वेहतं गान्न' गर्भ-घातिनीं गामपि। अन्यत् पूर्व्ववत्॥

एकादशमन्त्रमाह। "होता यक्षत् स्वाहाकृतीः। अग्निं गृहपतिं पृथक्। वरुणं भेषजं कविम्। क्षत्रमिन्द्रं वयोधसम्। अतिच्छन्दसं छन्द *इन्द्रियम्। बृहदृषभं गां वयो दधत्। वे-त्वाज्यस्य होतर्यज'' [७] इति। 'स्वाहाकृति' शब्देन एकादशप्र-याजदेव उच्यते। स च 'पृथक् गृहपतिः' प्रत्येकगृहस्य पालकः, 'वरुणः' पापवारकः, 'कविः' विद्वान्, तादृशं,'अग्निं', 'होता', यजतु। 'क्षत्रं' बलवन्तं, 'बृहत्' प्रौढम्। अन्यत् पूर्व्ववत्॥

इति सप्तदशोऽनुवाकः॥ १७॥ †

---

* एतदादर्शपुस्तके कतिपयस्थाने इहेन्द्रियमितीदृशः पाठो वर्त्तते, कतिपयस्थाने केवलमिन्द्रियमित्यादिरेव। भाष्येऽपि इहशब्दत्यागोपा-दानेन व्याख्याकृतास्ति।

† अत्र मुद्रिते तैत्तिरीय-ब्राह्मणपुस्तके सप्तदशानुवाकानन्तरम्, "इडस्पदेऽग्नि गायत्रीं त्र्यविं स्रावयन्तं शुचिमाप्याह दित्यवाहम-न्वाया" "इन्द्रियमश्विवसुवनद्दशेन्द्रियमस्तुवतवद्वशागान्न वया दधत् सर्व्ववेतु" इत्यन्ताः एकादशर्चः सन्ति। किन्त्वस्मल्लब्धे तद्भाष्यपुस्तके नैतासामृचां व्याख्यानं वर्त्तते॥ * ॥

अथाष्टादशोऽनुवाकः।

ऐन्द्रे पशौ एकादश प्रयाजप्रैषाः सप्तदशेऽभिहिताः। अष्टादशे अप्रिनामकाः प्रयाजयाज्या उच्यन्ते। तत्र प्रथमामृचमाह। *"समिद्धो अग्निः समिधा सुषमिद्धो वरेण्यः। गायत्री छन्द इन्द्रियम्। त्र्यविर्गौर्वयो दधुः" इति। समिन्नामकः प्रथमप्रयाजदेवः, 'अग्निः', स च 'समिधा' समिद्योगेन, 'सुषमिद्धः' सुष्ठु प्रज्वलितः, योऽयं तादृशोऽग्निः यच्च 'गायत्र्याख्यं छन्दः', सोऽपि 'त्र्यविः' सार्द्धसंवत्सरो गौः, त एते देवाः 'इन्द्रियं' चक्षुरादिपाटवं, 'वयः' आयुष्यञ्च, 'दधु' सम्यादितवन्तः॥

अथ द्वितीयामाह। "तनूनपाच्छुचिव्रतः। तनूनपाच्च सरस्वती। उष्णिक् छन्द इन्द्रियम। दित्यवाड् गौर्वयो दधुः" इति।'तनूनपाच्'शब्देन द्वितीयप्रयाजदेव उच्यते। स च 'शुचिव्रतः' शुद्धेन व्रतकर्म्मणा युक्तः,तादृशः'तनूनपात्' शरीरप्राप्तिहेतुः,'सरस्वती' च, 'उष्णिक् छन्दः', च, 'दित्यवाट्' संवत्सरद्वयोपेतो'गौः',च इत्येते देवा 'इन्द्रियं','वयः',च सम्पादयन्तु॥

तृतीयामाह। "इडाभिरग्निरीड्यः। सोमो देवो अमर्त्यः [१]। अनुष्टुप् छन्द इन्द्रियम्। त्रिवत्सो गौर्वयो दधुः" इति। 'इडाभिः' मन्त्रोक्ताभिः स्तुतिभिः,'ईड्यः' स्तुत्यः,ईड्यनामकोऽग्निः तृतीयप्रयाजदेव, यश्च 'अमर्त्यः' मरणरहितः, सोमो देवः' यत् 'अनुष्टुप् छन्दः', योऽपि संवत्सरत्रयोपेतो 'गौः', त एते देवाः, 'इन्द्रियं', 'वयः', च 'दधुः'॥

* ३०४ पृष्ठायां "इडस्पदे सर्व्ववेतु" इति भाष्येन दृश्यते। अतिरिक्तपाठ इत्यनुमीयते।

अथ चतुर्थीमाह। "सुबर्हिरग्निः पूषण्वान्। स्तीर्णबर्हिरमर्त्यः। बृहती छन्द इन्द्रियम्। पञ्चाविर्गौर्वयो दधुः" इति। सुष्ठु बर्हिर्यस्यासौ 'सुबर्हिः', एतन्नामकश्चतुर्थप्रयाजदेवः 'अग्निः', 'पूषण्वान्' पूष्णा देवेन युक्तः, पोषणसामर्थ्ययुक्तो वा, 'स्तीर्णबर्हिः' वेदिप्रसारितबर्हिर्युक्तः, 'अमर्त्यः' मरणरहितः, ईदृशो योऽग्निः, 'यच्च बृहती छन्दः', योऽपि सार्द्धसंवत्सरद्वयोपेतो 'गौः', एते देवाः 'इन्द्रियं वयः', च 'दधुः'॥

अथ पञ्चमीमाह। "दुरो देवीर्दिशो महीः। ब्रह्मा देवो बृहस्पतिः। पङ्क्तिश्छन्द इहेन्द्रियम्। तुर्य्यवाड् गौर्वयो दधुः" [२] इति। 'दुरः', पञ्चमप्रयाजदेवताः। ता 'देवीः' द्योतमानाः, 'दिशः' दिग्रूपाः, 'महीः' महत्यः। यश्च 'ब्रह्मा' ब्राह्मणस्वामी, 'बृहस्पतिर्देवः', यदपि 'पङ्क्तिश्छन्दः', योऽपि सार्द्धसंवत्सरोपेतो 'गौः', एते देवा 'इन्द्रियम्', च 'वयः', 'दधुः'॥

अथ षष्ठीमाह। "उषे यह्वी सुपेशसा। विश्वे देवा अमर्त्याः। त्रिष्टुप् छन्द इन्द्रियम्। पष्ठवाड् गौर्वयो दधुः" इति। 'उषे', षष्ठप्रयाजदेवते, 'यह्वी' प्रयतमाने, 'सुपेशसा' शोभमानरूपे, ईदृश्यौ ये देव्यौ, ये च 'अमर्त्याः' मरणधर्मरहिताः, 'विश्वे देवाः', यच्च 'त्रिष्टुप् छन्दः', योऽपि संवत्सरचतुष्टयोपेतो 'गौः', एते देवा 'इन्द्रियम्', 'वयः', च 'दधुः'॥

अथ सप्तमीमाह। "दैव्या होतारा भिषजा। इन्द्रेण सयुजा युजा। जगती छन्द इहेन्द्रियम्। अनड्वान् गौर्वयो दधुः" इति। 'दैव्याहोतारौ', सप्तमप्रयाजदेवौ, तौ च 'भिषजौ'

चिकित्सकौ,'इन्द्रेण','मयुजा' सहवर्त्तमानौ,'युजा' परस्परमपि संयुक्तौ। ईदृशौ यौ देवौ, यच 'जगती छन्दः', योऽपि शकट-वहनक्षमो 'गौः', एते देवा. 'इन्द्रियम्', 'वयः', च 'दधुः'॥

अथाष्टमीमाह। "तिस्र इडा सरस्वती भारती मरुतो विशः [३]। विराट् छन्द इहेन्द्रियम्। धेनुर्गौर्न वयो दधुः" इति। 'सरस्वती''इडा''भारती', च अष्टमप्रयाजदेवताः,'तिस्रः' याः सन्ति, येऽपि देवानां मध्ये 'विशः', 'मरुतः', यदपि 'विराट् छन्दः', नवप्रसूतिका 'गौः', अपि या विद्यते। एते देवाः 'इह' कर्म्मणि, 'इन्द्रियम्', 'वयः', च 'दधुः'॥

अथ नवमीमाह। "त्वष्टा तुरीयो अद्भुतः। इन्द्राग्नी पुष्टि-वर्द्धना। द्विपाच्छन्द इहेन्द्रियम्। उक्षा गौर्न वयो दधुः" इति। 'त्वष्टा',नवमप्रयाजदेवः,स च 'तुरीयः' शीघ्रप्राप्तिमान,'अद्भुतः' आश्चर्य्यविग्रहः, तादृशो यो देवः, यौ च 'पुष्टिवर्द्धना' पुष्टिं वर्द्धयितारौ तौ 'इन्द्राग्नी',यदपि 'द्विपात्' पादद्वयोपेता 'उक्षा गौर्न' सेचनसमर्थो गौरपि यो विद्यते,ते देवाः 'इह' कर्म्मणि 'इन्द्रियम्', च 'वयः', च 'दधुः'॥

अथ दशमीमाह। "शमिता नो वनस्पतिः। सविता प्रसुवन् भगम्। ककुच्छन्द इहेन्द्रियम्। वशा वेहद्गौर्न वयो दधुः" इति। 'वनस्पतिः',दशमप्रयाजदेवः,स च 'नः' अस्माकं,'शमिता' सर्व्वो-पद्रवशमनहेतुः,तादृशो यो देवः,यश्च 'सविता', 'भगं' सौभाग्यं 'प्रसुवन्' प्रेरयन्, वर्त्तते, 'गौर्न' गौरपि,'वेहत्' गर्भघाती सती 'वशा' बन्ध्या या विद्यते, एते देवाः 'इन्द्रियं','वयः', च 'दधुः'॥

अथैकादशीमाह। "स्वाहा यज्ञं वरुणः। सुक्षत्रो भेषजं करत्। अतिच्छन्दाश्छन्द इन्द्रियम्। बृहदृषभो गौर्वयो दधुः" [४] इति। 'स्वाहाकाराख्य एकादशप्रयाजदेवः यज्ञं निष्पादयति। स च 'वरुणः' अनिष्टवारकः, 'सुक्षत्रः' शोभनबलोपेतः, 'भेषजं करत्' औषधं करोति, तादृशो यो देवः यच्च 'अतिच्छन्दाख्यश्छन्दः' योऽपि प्रौढ 'ऋषभः', 'गौः', एते देवाः 'इन्द्रियम्','वयः', च 'दधुः' ॥

इत्यष्टादशोऽनुवाकः ॥ १८ ॥

---

अथ ऊनविंशोऽनुवाकः।

ऐन्द्रस्य पशोः प्रयाजयाज्या अष्टादशेऽभिहिताः। एकोनविंशे वपा-पुरोडाशहविषां याज्यानुवाक्या उच्यन्ते। तत्र वपायाः पुरोऽनुवाक्यामाह। "वसन्तेनर्तुना देवाः। वसवस्त्रिवृता स्तुतम्। रथन्तरेण तेजसा। हविरिन्द्रे वयो दधुः" इति। 'वसन्ताख्येन 'ऋतुदेवेन सहिताः 'वसवः','देवाः','इन्द्रे', 'हविः','इदं' समर्प्यमाणं,'वयः' आयुष्यञ्च,'दधुः' सम्पादितवन्तः। कीदृशं हविः,'त्रिवृदाख्येन स्तोमेन 'स्तुतम्'। तथा 'तेजसा' तेजस्विना 'रथन्तर' आख्येन साम्ना स्तुतम्॥

वपायाज्यामाह। "ग्रीष्मेण देवा ऋतुना। रुद्राः पञ्चदशे स्तुतम्। बृहता यशसा बलम्। हविरिन्द्रे वयो दधुः" इति। 'ग्रीष्मर्तुना सहिताः। 'रुद्राः', 'पञ्चदशस्तोमेन, यशस्विना 'बृहत्साम्ना स्तुतं, 'बलकरं', 'हविः', 'वयः', च 'इन्द्रे', 'दधुः'॥

पुरोडाशस्य पुरोऽनुवाक्यामाह। "वर्षाभिर्ऋतुनादित्याः। स्तोमे सप्तदशे स्तुतम् [१]। वैरूपेण विशौजसा। हविरिन्द्रे वयो दधुः" इति। 'वर्षर्त्तुना सहिताः,'आदित्याः', 'सप्तदशस्तोमे',वैश्यानुग्राहकेण 'ओजस्विना 'वैरूपसाम्ना 'स्तुतं','हविर्वयः', च 'दधुः' 'इन्द्रे' ॥

पुरोडाशस्य याज्यामाह। "शारदेनर्त्तुना देवाः। एकविंश ऋभवः स्तुतम्। वैराजेन श्रिया श्रियम्। हविरिन्द्रे वयो दधुः" इति। 'शरदृतुसहिताः, 'ऋभुनामकाः, 'देवाः', 'एकविंशस्तोमे', 'श्रिया' श्रीप्रदेन वैराजेन साम्ना, 'स्तुतम्', 'श्रियं' श्रीप्रदं, 'हविर्वयः', च 'इन्द्रे', 'दधुः' ॥

अथ हविषः पुरोऽनुवाक्यामाह। "हैमन्तेनर्त्तुना देवाः। मरुतस्त्रिणवे स्तुतम्। बलेन शक्करीः सहः। हविरिन्द्रे वयो दधुः" इति। 'हेमन्तर्त्तुसहिताः,'मरुन्नामकाः,'देवाः', 'त्रिणवस्तोमे,'बलेन' बलप्रदेन,'शक्करीः' शक्करसाम्ना,'स्तुतम्','हविः', 'वयः', 'सहः', बलप्रदं हविर्वयश्च 'इन्द्रे', 'दधुः' ॥

हविषो याज्यामाह। "शैशिरेणर्त्तुना देवाः। त्रयस्त्रिꣳशेऽमृतꣳ स्तुतम्। सत्येन रेवतीः क्षत्रम्। हविरिन्द्रे वयो दधुः" [२] इति। 'शैशिरर्त्तुसहिताः, 'देवाः', 'त्रयस्त्रिंशाख्ये स्तोमे 'सत्येन' सत्यवाक्येन हेतुना, 'रेवतीः' रेवत्याख्येन साम्ना 'स्तुतम्', 'अमृतम्' अविनश्वरं, 'क्षत्रं' बलप्रदं, 'हविर्वयः', च 'इन्द्रे', 'दधुः' ॥

इत्येकोनविंशोऽनुवाकः ॥ १९ ॥

अथ विंशोऽनुवाकः ।

एकोनविंशे वपा-पुरोडाशहविषां याज्यानुवाक्या उक्ताः । अथ विंशे अनूयाजानां मैत्रावरुणप्रैषा उच्यन्ते । तत्र प्रथम-मन्त्रमाह । "देवं बर्हिरिन्द्रं वयोधसम् । देवं देवमवर्द्धयत् । गायत्रिया तेजसेन्द्रियम् । तेज इन्द्रे वयो दधत् । वसुवने वसु-धेयस्य वेतु यज" इति । 'बर्हिः' शब्देन प्रथमानूयाजदेवस्वरूप-मुच्यते, तच्च 'देवं' द्योतनशीलं । योऽयमिन्द्रो 'वयोधाः' आयु-ष्याधारकः, तं 'देवमिन्द्रं' पूर्व्वोक्तदेवनशीलं बर्हिस्वरूपम् 'अव-र्द्धयत्' वर्द्धितवान् । तच्च 'गायत्राख्येन छन्दसा सहितं सत् 'इन्द्रियं' चक्षुरादिपाटवं,'तेजः' शरीरकान्तिः,'वयः' आयुष्यञ्च 'दधत्' सम्पादयति । 'वसुधेयस्य' धनाधारकस्य देवस्य,'वसुवने' धने, दाननिमित्तमयं प्रथमानूयाजदेवो 'वेतु' आज्यं पिबतु । तदर्थं हे होतः, 'यज' याज्यां पठ ॥

अथ द्वितीयमन्त्रमाह । "देवीर्द्वारो देवमिन्द्रं वयोधसम् । देवीर्देवमवर्द्धयन् । उष्णिहा छन्दसेन्द्रियम् । प्राणमिन्द्रे वयो दधत् । वसुवने वसुधेयस्य वियन्तु यज" [१] इति । 'द्वार-शब्दवाच्या देव्यो द्वितीयानुयाजदेवता याः सन्ति, ताः देव्यो 'देवं' द्योतमानं, 'वयोधसम्', 'इन्द्रं', 'देवम्', 'अवर्द्धयन्' । तास्च देव्यः 'उष्णिहा छन्दसा', सहेन्द्रियपाटवं 'प्राणं' स्थैर्य्यम्, आयुष्यञ्च 'इन्द्रे', सम्पादयन्तु ॥

अथ तृतीयमन्त्रमाह । "देवी देवं वयोधसम् । उषे इन्द्र-मवर्द्धताम् । अनुष्टुभा छन्दसेन्द्रियम् । वाचमिन्द्रे वयो दधत् ।

वसुवने वसुधेयस्य वीतां यज" इति। 'उषे देवी' उषाख्ये देव्यौ तृतीयानुयाजदेवते, ते उभे 'वयोधसमिन्द्रं देवं', वर्द्धितवत्यौ। ते च 'अनुष्टुभा', 'छन्दसा', सह 'इन्द्रियं', वाग्वयांसि 'इन्द्रे', सम्पादयतः॥

अथ चतुर्थमन्त्रमाह। "देवी जोष्ट्री देवमिन्द्रं वयोधसम्। देवी देवमवर्द्धताम्। बृहत्या छन्दसेन्द्रियम्। श्रोत्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज" [२] इति। 'जोष्ट्री देवी' जोष्ट्र्याख्ये देव्यौ ये विद्येते ते देव्यौ द्योतमानं 'वयोधसमिन्द्रं देवं', वर्द्धितवत्यौ। ते च 'बृहत्या छन्दसा', सह 'इन्द्रियं', श्रोत्रवयांसि 'इन्द्रे', सम्पादयतः। इन्द्रियशब्दः सामान्यवाची, वाक्श्रोत्रादयो विशेषवाचिनः॥

अथ पञ्चममन्त्रमाह। "देवी ऊर्ज्जाहुती देवमिन्द्रं वयोधसम्। देवी देवमवर्द्धताम्। पङ्क्त्या छन्दसेन्द्रियम्। शुक्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज" इति। 'ऊर्ज्जाहुत्याख्ये ये देव्यौ विद्येते ते देव्यौ द्योतमानं वयोधसमिन्द्रं देवं वर्द्धितवत्यौ। ते च 'पङ्क्त्या', 'छन्दसा', सह 'इन्द्रियं', 'शुक्रं', वयांसि 'इन्द्रे', सम्पादयतः। शुक्रशब्देन दीप्तिरुच्यते॥

अथ षष्ठमन्त्रमाह। "देवा दैव्या होतारा देवमिन्द्रं वयोधसम्। देवा देवमवर्द्धताम्। त्रिष्टुभा छन्दसेन्द्रियम्। त्विषिमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वीतां यज" [३] इति। दैव्यहोतृनामकौ यौ 'देवौ', विद्येते तौ 'देवौ', द्योतमानं 'वयोधसम्', 'इन्द्रं', वर्द्धितवन्तौ। तौ च 'त्रिष्टुभा', 'छन्दसा', सह

'इन्द्रियं', 'त्विषि', वयांसि, 'इन्द्रे', दधतुः। पूर्व्वत्र शुक्रशब्देन शरीरकान्तिरुक्ता इह त्विषिशब्देन रश्मिरुच्यते ॥

अथ सप्तममन्त्रमाह।"देवीस्तिस्रस्तिस्रो देवीर्वयोधसम्। पतिमिन्द्रमवर्द्धयन्। जगत्या छन्दसेन्द्रियम्। बलमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वियन्तु यज" इति। या देव्यः'तिस्रः' त्रिसङ्ख्याकाः,एकैकस्यास्त्रिमूर्त्तित्वात् पुनरपि 'तिस्रः' इति उच्यन्ते। ताः सर्व्वाः'वयोधसं','पालकं','इन्द्रं',वर्द्धितवत्यः। ताः पुनः'जगत्या', 'छन्दसा', सह 'इन्द्रियं', 'बलं', वयांसि 'इन्द्रे', सम्पादयन्ति ॥

अथाष्टममन्त्रमाह। "देवो नराशꣳसो देवमिन्द्रं वयोधसम्। देवो देवमवर्द्धयत्। विराजा छन्दसेन्द्रियम्। रेत इन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज" [४] इति। 'नराशंसाख्यो यो 'देवः', अस्ति, स देवो द्योतमानं 'वयोधसम्' 'इन्द्रं', 'देवं', वर्द्धितवान्। स च 'विराजा', 'छन्दसा', युक्त 'इन्द्रियं', 'रेतः', वयांसि 'इन्द्रे', सम्पादयति ॥

अथ नवममन्त्रमाह। "देवो वनस्पतिर्देवमिन्द्रं वयोधसम्। देवो देवमवर्द्धयत्। द्विपदा छन्दसेन्द्रियम्। भगमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज" इति। 'वनस्पत्याख्यो यो 'देवः' अस्ति, स देवो द्योतमानं 'वयोधसम्', 'इन्द्रम्', अवर्द्धितवान्। स च 'द्विपदा','छन्दसा', सह 'इन्द्रियसौभाग्यवयांसि' 'इन्द्रे', सम्पादयति ॥

अथ दशममन्त्रमाह। "देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसम्। देवो देवमवर्द्धयत्। ककुभा छन्दसेन्द्रियम्। यश इन्द्रे

वयो दधत्। वसुवने वसुधेयस्य वेतु यज" इति। 'वारितीनां' जलप्राणीनां सम्बन्धि 'बर्हिराख्यं यद्देवस्वरूपमस्ति, तदिदं बर्हिस्वरूपं द्योतमानं 'वयोधसमिन्द्रं देवं', वर्द्धितवत्। तच्च 'ककुभा छन्दसा', सहेन्द्रिययशोवयांसीन्द्रे सम्पादयति॥

अथैकादशमन्त्रमाह। "देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम्। देवो देवमवर्द्धयत्। अतिच्छन्दसा छन्दसेन्द्रियम्। क्षत्रमिन्द्रे वयो दधत्। वसुवने वसुधेयस्य वेतु यज" [५] इति। 'स्विष्टकृदाख्यो 'अग्निर्देवो', योऽस्ति, स 'देवः', द्योतमानं 'वयोधसम्','इन्द्रं','देवं',वर्द्धितवान्। स चातिच्छन्दोरूपेण'छन्दसा' सहेन्द्रियबलवयांसीन्द्रे सम्पादयति। अतो धनाधारकस्य धनदाननिमित्तम् अयं स्विष्टकृद्देव आज्यं'वेतु' पिबतु। तदर्थं हे होतः, 'यज' याज्यां पठ॥

अस्य प्रपाठकस्य अनुवाकार्थसङ्ग्रहः॥

गृहा उपस्थितिर्होम उपहोमोऽभिषेचनम्।
तयावस्थय ऐन्द्रे तु पशौ चत्वार ईरिताः॥
पश्वन्तरेऽथ चत्वारः सूक्तवाके त्वनन्तरः।
पितृयज्ञे त्वन्तरः स्यात् पशावैन्द्रे चतुष्टयम्॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः॥२०॥

समाप्तश्च षष्ठप्रपाठकः॥

# अथ तैत्तिरीय-ब्राह्मणभाष्ये

## द्वितीयकाण्डे सप्तमप्रपाठके

### प्रथमोऽनुवाकः।

हरिः ॐ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १॥
षष्ठे प्रपाठके सौत्रामणिः कौकिल्युदीरिता।
सवनामान एकाहाः कथ्यन्ते सप्तमे स्फुटम्॥ २॥

सूयते ईश्वरत्वेनाभिषिच्यते एष्विति सवाः एकाहविशेषाः। तत्रादौ बृहस्पतिसव उच्यते। तस्मिंश्च बृहस्पतिसवे चोदकप्राप्तान् द्वादशस्वपि स्तोत्रेषु बाधितुम् एकं स्तोमं विधत्ते। "त्रिवृत्स्तोमो भवति। ब्रह्मवर्चसं वै त्रिवृत्। ब्रह्मवर्चसमेवावरुन्धे" इति। प्रकृतौ बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमस्य षष्ठ्याज्यस्तोत्रेषु माध्यन्दिनपवमानस्तोत्रे पञ्चदशस्तोमः, चतुर्षु पृष्ठस्तोत्रेषु आर्भवपवमानस्तोत्रे सप्तदशस्तोमः, यज्ञायज्ञीयस्तोत्रे एकविंशतिस्तोमः, तान् बाधित्वा सर्व्वेषु * स्तोत्रेषु 'त्रिवृत्स्तोमः', एकः कर्त्तव्यः। तस्य 'ब्रह्मवर्चसहेतुत्वात् 'ब्रह्मवर्चसप्राप्तिर्भवति॥

सोमयागसंस्थाविशेषं विधत्ते। "अग्निष्टोमः सोमो भवति। ब्रह्मवर्चसं वा अग्निष्टोमः। ब्रह्मवर्चसमेवावरुन्धे" इति॥

पृष्ठस्तोत्रे विकल्पितबृहत्सोमव्यावृत्त्यर्थं रथन्तरनियमं विधत्ते। "रथन्तरꣳ साम भवति। ब्रह्मवर्चसं वै रथन्तरम्। ब्रह्मवर्चसमेवावरुन्धे" इति॥

होतरि कञ्चिद्विधत्ते। "परिस्रजी होता भवति [१]। अरुणो मिर्म्मिरस्त्रिशुक्रः। एतद्वै ब्रह्मवर्चसस्य रूपम्। रूपेणैव ब्रह्मवर्चसमवरुन्धे" इति। 'परिस्रजी' खल्वतिः, सिरसि स्रगाकारेण परित एव केशाः न तु मध्ये इत्यर्थः। 'अरुणः' सन्ध्यावर्णः, 'मिर्म्मिरः' पुनःपुनरतिवेगेन चक्षुर्मीलनयुक्तः, 'त्रिशुक्रः' त्रिषु वेदेषु शुद्धः, मातृवंशपितृवंशनिजाचारेषु वा शुद्धः, यत् 'एतत्', द्विजवेशस्य लक्षणं खल्वत्यादि, यच्च त्रिशुक्लत्वं तदुभयमपि 'ब्रह्मवर्चसस्वरूपम्'। अतस्तदनुकूलेन रूपेण 'ब्रह्मवर्चसं' प्राप्नोति॥

बृहस्पतिसवस्य उत्पत्तिविधिमुक्त्वा प्रयोगं विधत्ते। "बृहस्पतिरकामयत देवानां पुरोधां गच्छेयमिति। स एतं बृहस्पतिसवमपश्यत्। तमाहरत्। तेनायजत। ततो वै स देवानां पुरोधामगच्छत्। यः पुरोधाकामः स्यात्। स बृहस्पतिसवेन यजेत [२]। पुरोधामेव गच्छति" इति। बृहस्पतेः पुरोधां देवगुरुत्वलक्षणं मुख्यत्वं पौरोहित्यं वा॥

दक्षिणायां विशेषं विधत्ते। "तस्य प्रातःसवने सन्नेषु नाराशꣳसेषु। एकादश दक्षिणा नीयन्ते। एकादश माध्यन्दिने सवने सन्नेषु नाराशꣳसेषु। एकादश तृतीयसवने सन्नेषु नाराशꣳसेषु। त्रयस्त्रिꣳशत्सम्पद्यन्ते। त्रयस्त्रिꣳशद्वै देवताः। देवता एवाव-

रुन्धे'' इति। भक्षिताप्यायितश्चमसा 'नराशंसाः', तेषु दक्षिणस्य हविर्द्धानस्य अधस्तात् सन्नेषु सत्सु 'एकादश', गावो 'दक्षिणात्वेन 'नीयन्ते' दातव्याः। एवमुत्तरयोरपि सवनयोस्ताः मिलित्वा त्रयस्त्रिंशत्सङ्ख्या या देवता-साम्यात् तत्प्रीतिहेतवो भवन्ति, ये देवा दिव्येकादशस्थेतिमन्त्रे त्रयस्त्रिंशद्देवा आम्नाताः॥

दक्षिणायामपरं विशेषमाह। ''अश्वश्चतुस्त्रिꣳशः। प्राजापत्यो वा अश्वः [३]। प्रजापतिश्चतुस्त्रिꣳशो देवतानाम्। यावतीरेव देवताः। ता एवावरुन्धे'' इति। पूर्व्वोक्तगवापेक्षया चतुस्त्रिंशत्सङ्ख्यापूरकः 'अश्वः', दातव्यः। प्रजापतिजन्यत्वात् 'प्राजापत्यत्वम्, 'प्रजापतेश्च', पूर्व्वोक्तदेवतापेक्षया 'चतुस्त्रिंशः', अतोऽश्वदानेन सर्व्वदेवताप्राप्तिर्भवति॥

एतस्य कर्म्मणः सवत्वात् अभिषेकं विधत्ते। ''कृष्णाजिनेऽभिषिञ्चति। ब्रह्मणो वा एतद्रूपम्। यत् कृष्णाजिनम्। ब्रह्मवर्चसेनैनꣳ समर्द्धयति'' इति। कृष्णाजिनमास्तीर्य्य तत्रोपविष्टं यजमाममभिषिञ्चेत्। ऋक्सामयोः 'कृष्णमृगरूपत्वसाधारणत्वात् ब्रह्मरूपत्वं, तेन 'ब्रह्मवर्चससमृद्धिः॥

अभिषेकद्रव्यं विधत्ते। ''आज्येनाभिषिञ्चति। तेजो वा आज्यम्। तेज एवास्मिन् दधाति'' इति। आज्यस्य स्निग्धत्वात्तेजस्त्वम्॥

अत्र मीमांसा-चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्॥

इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत्।
कालं प्रबोध्यते वाक्यमुताङ्गत्वस्य बोधकम्॥

क्त्वाश्रुत्या भाति कालोऽत्र नैवमङ्गत्वबोधनम्।
श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते॥

इदमाम्नायते, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत। अग्निं चित्वा सौत्रामण्या यजेत। तत्रेष्ट्वेति त्वाप्रत्ययः वाजपेयस्य पूर्व्वकालिकतां ब्रूते। तस्माद्वाक्यमिदं बृहस्पतिसवस्योत्तर-कालीनतां बोधयतीति चेन्नैवं, वाजपेयाङ्गत्वबोधनमेव क्त्वा-श्रुतेर्मुख्योऽर्थः। समानकर्त्तृकयोः पूर्व्वकाल इति सूत्रेण क्रि-याद्वयस्य एककर्त्तृकतायां तद्विधानात्। यद्यपि सूत्रे पूर्व्वकाल इत्युक्तम्, तथापि तन्न नियतं, मुखं व्यादाय स्वपितीत्यत्र कालैक्येऽपि प्रयोगात् वाजपेयप्रकरणमप्यङ्गत्वेन गृह्यते। अ-न्यथा त्वप्रकृते बृहस्पतिसवे कालविधानात् प्रकरणं बाध्येत। अङ्गत्वे कर्म्मान्तरत्वेन प्रसिद्धबृहस्पतिसवलाभावात् शब्दोऽनुप-पन्न इति चेत् न, मासाग्निहोत्रन्यायेन तद्धर्म्मातिदेशार्थत्वात्। तस्माद्वाक्यमिदमङ्गत्वबोधकम्। अग्निं चित्वेत्यत्राप्येवं योज-नीयम्॥

इति प्रथमोऽनुवाकः॥ १॥

---

अथ द्वितीयोऽनुवाकः॥

प्रथमे बृहस्पतिसवोऽभिहितः। द्वितीये वैश्यसवोऽभिधी-यते, स च सूत्रकारेण स्पष्टमभिहितः। अथ सवानां व्या-ख्यातो बृहस्पतिसवः, वैश्यः पुष्टिकाम आग्नेयादीनि सप्त हवींषि

निर्वपति सूयिण:। पष्ठौही मारुत्यालभ्यते, तस्याः पुरस्तात् स्विष्टकृतो यजमानायतन ऋषभचर्म्म प्राचीनग्रीवमुत्तरलोम-मास्तीर्य्य तस्मिन्नासीनं यजमानं दध्नाभिषिञ्चतीति। तत्र प्रथमं हविर्विधत्ते। "यदाग्नेयो भवति। अग्निमुखाह्यृद्धिः" इति। 'आग्नेयः' अष्टाकपालः कर्त्तव्यः, समृद्धेरग्निपूर्व्वकत्वात् आदावाग्नेयेन तत् समृद्धं कर्म्म भवति॥

द्वितीयं हविर्विधत्ते। "अथ यत्पौष्णः। पुष्टिर्वै पूषा। पुष्टि-र्वैश्यस्य। पुष्टिमेवावरुन्धे" इति। 'पौष्णः' चरुः कर्त्तव्यः, पूष-देवतायाः पुष्टिहेतुत्वात्। 'वैश्यस्य', पुष्टिकामत्वात् 'पुष्टिमेव', प्राप्नोति॥

अथ तृतीयं हविर्विधत्ते। "प्रसवाय सावित्रः" इति। 'सा-वित्रः', अष्टाकपालः पुरोडाशः कार्य्यः, स च सवितुः 'प्रसवाय' प्रेरणाय सम्पद्यते॥

चतुर्थं हविर्विधत्ते। "अथ यत्त्वाष्ट्रः। त्वष्टा हि रूपाणि विकरोति" इति। अष्टाकपालः 'त्वाष्ट्रः' कार्य्यस्तस्मात् 'त्वष्टा', निषिक्ते रेतसि विविधानि रूपाणि करोति॥

पञ्चमं हविर्विधत्ते। "निर्वरुणत्वाय वारुणः [१]। अथो य एव कश्च सन्त्सूयते। स हि वारुणः" इति। अष्टाकपालः 'वारुणः', कार्य्यः, स च 'निर्वरुणत्वाय' वरुणपाशराहित्याय सम्पद्यते। अपि च पूर्व्वं 'यः', 'कः', ह्यल्पः पुरुषः 'सन्', 'सूयते' अभिषिच्यते। 'स हि', तदा 'वारुणः' वरुणेन अनुगृहीत इत्युच्यते। तस्मात वारुणयागोऽभिषेकयोग्यः॥

षष्ठं हविर्विधत्ते। "अथ यद्वैश्वदेवः। वैश्वदेवो हि वैश्यः" इति। एकादशकपालो 'वैश्वदेवः' कार्य्यः, यस्मात् 'वैश्यः', विश्वैर्देवैः सह प्रजापतेर्मध्यभागात् उत्पन्नः। तं विश्वे देवा देवता अन्वसृज्यन्त, जगतीछन्दो वै रूपं साम वैश्यो मनुष्याणामिति श्रुत्यन्तरविधानात्। ततस्तदीयत्वात् वैश्वदेवस्तत्र योग्यः॥

सप्तमं हविर्विधत्ते। "अथ यन्मारुतः। मारुतो हि वैश्यः" इति। एकादशकपालो 'मारुतः' कार्य्यः, मरुतां देवविट्त्वेन वैश्ययागे योग्यत्वात् मरुतां विट्त्वम्। मारुता वै देवानां विश इति विप्रसिद्धश्रुतेः॥

अधिकशङ्कानिवृत्तये हविःसङ्ख्यां दर्शयति। "सप्तैतानि हवींऽषि भवन्ति। सप्त गणा वै मरुतः" इति। ईदृङ् चान्यादृङ् चेत्यादयः सप्त गणाः॥

अथ पशुं विधत्ते। "पृश्निः पष्ठौही मारुत्यालभ्यते। विड् वै मरुतः" इति। 'पृश्निः' श्वेतवर्णः, 'पष्ठौही' चतुर्वर्षा तादृशी काचित् अजा मरुद्देवताकाऽऽलभ्यव्या॥

अथाभिषेककालविधिमुन्नयति। "विश एवैतन्मध्यतोऽभिषिच्यते। तस्मादा एष विशः प्रियः। विशो हि मध्यतोऽभिषिच्यते" इति। एतस्य पशोर्मध्ये स्विष्टकृतः पुरस्तात् अभिषिञ्चेदिति विध्युन्नेयः। एवं सति, 'विशः' प्रजायाः, मध्य एतदभिषेचनं कृतं भवति। यस्मात्, 'विशः' मध्ये अभिषेकः कृतः 'तस्मात्' एव 'एषः' वैश्यः, सर्व्वानुष्ठायिविशां 'प्रियः' भवति॥

अभिषेकार्थमासनं विधत्ते। "ऋषभचर्म्मेऽध्यभिषिञ्चति।

स हि प्रजनयिता" इति। यस्मादृषभः प्रजोत्पादकः तस्मात्तदीयस्य चर्म्मणि पर्य्यभिषिञ्चेत् ॥

अभिषेकद्रव्यं विधत्ते। "दध्नाऽभिषिञ्चति। ऊर्ग्वा अन्नाद्यं दधि। ऊर्ज्जैवैनमन्नाद्येन समर्द्धयति" [२] इति। दध्नो रसरूपत्वात् तादृशेनान्नेन 'एनं' वैश्यं रसवद्याजिनं 'समर्द्धयति' इति ॥

इति द्वितीयोऽनुवाकः॥ २ ॥

---

अथ तृतीयोऽनुवाकः।

द्वितीये वैश्यसवोऽभिहितः। तृतीये ब्राह्मणसवोऽभिधीयते। स च सूत्रकारेण स्पष्टीकृतः, ब्राह्मणो ब्रह्मवर्चसकाम आग्नेयादीन्यष्टौ हवींषि निर्वपति पुरस्तात् स्विष्टकृतः, हिरण्येन घृतमुत्पूय तेन कृष्णाजिन आसीनमभिषिञ्चतीति। तान्येतानि हवींषि विधातव्यानि। तत्र प्रथमं विधत्ते। "यदाग्नेयो भवति। आग्नेयो वै ब्राह्मणः" इति। 'आग्नेयः', अष्टाकपालः कर्त्तव्यः, अग्निना सह ब्राह्मणस्य प्रजापतिमुखजत्वसाम्येन आग्नेयत्वम् ॥

द्वितीयं विधत्ते। "अथ यत् सौम्यः। सौम्यो हि ब्राह्मणः" इति। 'सौम्यः' एकादशकपालः कर्त्तव्यः। सोमोऽस्माकं ब्राह्मणानाꣳ राजेति श्रुतेः, ब्राह्मणस्य सौम्यत्वम् ॥

तृतीयं विधत्ते। "प्रसवायैव सावित्रः" इति। 'सावित्रः' अष्टाकपालः कार्य्यः, स च 'प्रसवायैव सावित्रः', इति कल्प्यते ॥

चतुर्थं विधत्ते। "अथ यद्बार्हस्पत्यः। एतद्वै ब्राह्मणस्य

वाक्पतीयम्" इति। 'बार्हस्पत्यः' अष्टाकपालः कर्त्तव्यः, यद्बृहस्पतिसम्बन्धित्वम् एतदेव 'ब्राह्मणस्य', वाक्पतित्वं नाम॥

पञ्चमं विधत्ते। "अथ यदग्नीषोमीयः। आग्नेयो वै ब्राह्मणः। तौ यदा सङ्गच्छेते [१]। अथ वीर्य्यावत्तरो भवति" इति। 'अग्नीषोमीयः', एकादशकपालः कर्त्तव्यः, ब्राह्मणस्य आग्नेयत्वं पूर्व्वमुक्तम्। तेन पूर्व्वोक्तं सौम्यत्वमपि उपलक्ष्यते। 'तौ' अग्निश्च सोमश्च इत्येतौ 'यदा', सङ्गतौ भवतः, तदानीं द्विगुणब्राह्मण्येन वीर्य्यातिशयो भवति॥

षष्ठं विधत्ते। "अथ यत्सारस्वतः। एतद्धि प्रत्यक्षं ब्राह्मणस्य वाक्पतीयम्" इति। 'सारस्वतः' अष्टाकपालः कार्य्यः, 'ब्राह्मणस्य' सरस्वतीसम्बन्धित्वं 'यत्' अस्ति एतत् प्रत्यक्षमेव 'वाक्पतित्वम्, बृहस्पतिसम्बन्धेन तु यद्वाक्पतित्वं पूर्व्वमुक्तं तच्छास्त्रसिद्धम्। जिह्वायाः सरस्वतीसम्बन्धे तु तद्वाक्पतित्वम् अनुभूयते॥

सप्तमं विधत्ते। "निर्वरुणत्वायैव वारुणः। अथो य एव कश्च सन्त्सूयते। स हि वारुणः" इति। 'वारुणः' अष्टाकपालः कर्त्तव्यः, स च पूर्व्ववत् वरुणपाशराहित्यायैव सम्पद्यते। अपि च 'य एव','कः' चित् पुमान् धर्म्मोऽपि 'सूयते' अभिषिच्यते, 'सः' पुमान् वरुणेन अनुगृहीतो राजा भवति॥

अष्टमं विधत्ते। "अथ यद् द्यावापृथिव्यः। इन्द्रो वृत्राय वज्रमुदयच्छत्। तं द्यावापृथिवी नान्वमन्येताम्। तमेतेनैव भागधेयेनान्वमन्येताम् [२]। वज्रस्य वा एषोऽनुमानाय। अनुमतवज्रः सूयाता" इति। 'द्यावापृथिव्यः' एककपालः कर्त्तव्यः,

पुरा कदाचित्, 'इन्द्रः', वृत्रवधार्थं 'वज्रम्', उद्यतवान्, 'तम्' इन्द्रं ते 'द्यावापृथिव्यौ नान्वमन्येताम्'। अनुमत्यभावे कारणं दर्शपूर्णमासब्राह्मणे स्पष्टं श्रुतम्, ते अब्रूतां द्यावापृथिवी मा प्रहारावयोर्वै श्रुत इति। योऽयमेककपालरूपो भागोऽस्ति तेन 'भागधेयेन', तुष्टे द्यावापृथिव्यौ वृत्रवधार्थम् उद्यतं वज्रमिन्द्रम् अङ्गीकृतवत्यौ। अतोऽत्रापि यः पुरोडाशः स एव 'वज्रस्य', 'अनुमत्यर्थं सम्पद्यते, 'अनुमतवज्रः', हि, पुरुषः शत्रुक्षये समर्थत्वात् 'सुयाता' अभिषेकमर्हतीत्येव अभिज्ञा आहुः॥

अधिकत्वशङ्कानिवारणाय हविःसङ्ख्यां दर्शयति। "अष्टावेतानि हवीꣳषि भवन्ति। अष्टाक्षरा गायत्री। गायत्री ब्रह्मवर्चसम्। गायत्रियैव ब्रह्मवर्चसमवरुन्धे" इति। अष्टसङ्ख्योपेताया गायत्र्या ब्रह्मवर्चसहेतुतया ब्रह्मवर्चसत्वप्राप्तिः॥

अभिषेकद्रव्यस्योत्पवनं विधत्ते। "हिरण्येन घृतमुत्पुनाति तेजस एव रुचे" इति। निर्मलद्रव्यत्वात् स्वतोऽपि 'घृतं' तेजोऽर्थमेव पुनरपि हिरण्योत्पवनेनात्यन्तदीप्त्यर्थं भवति॥

अभिषेककालीनमाधारं विधत्ते। "कृष्णाजिनेऽभिषिञ्चति ब्रह्मणो वा एतदृक्सामयो रूपम्। यत् कृष्णाजिनम्। ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिञ्चति" इति। 'कृष्णाजिने', समासीनमेनमभिषिञ्चेत्। कृष्णाजिनस्य 'ब्रह्मणः' वेदस्य सम्बन्धिनोः 'ऋक्सामयोः' स्वरूपम्, ऋक्साममिवैतामित्यन्यत्राम्नानात्। अतः कृष्णाजिने अभिषेकेण 'ब्रह्मन्नेव' वेद एव 'ऋक्सामयोः' उपरि 'एनम्', 'अभिषिञ्चति'॥

द्रव्यं विधत्ते। "घृतेनाभिषिञ्चति। तथा वीर्य्यावत्तरो भवति" [३] इति। घृतस्य वज्ररूपत्वमन्यत्राम्नातम्, घृतं खलु वै देवा वज्रं कृत्वेति। अतो 'घृतेन' अभिषेके वीर्य्यातिशयो भवति॥

इति तृतीयोऽनुवाकः॥ ३॥

---

अथ चतुर्थोऽनुवाकः।

तृतीये ब्राह्मणसवो अभिहितः। चतुर्थे सोमसवो अभिधीयते। तस्य सोमयागरूपत्वं निषिध्य पशुरूपत्वं विधत्ते। "न वै सोमेन सोमस्य सवोऽस्ति। हतो ह्येषः। अभिषुतो ह्येषः। न हि हतः सूयते। सौमीꣳ सूतवशामालभते। सोमो वै रेतोधाः। रेत एव दधाति" इति। 'सोमेन' यागेन, 'सोमस्य' देवस्य च, 'सवः' अभिषेको नैवास्ति। यस्मात् कारणाच्च येषु सोमो 'हतः'। हननमपि कथमिति तदुच्यते, यस्मात्,'एषः' सोमः,'अभिषुतः', तस्मादस्ति तस्य हननम्। घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति इत्यन्यत्राभिषवस्य हननरूपत्वश्रवणात्।'न हि',कश्चिदपि 'हतः' पुरुषः अभिषिच्यमानो दृश्यते, तस्मात् सोमस्याभिषेकसिद्ध्यै सोमयागं परित्यज्य सोमदेवताकां 'सूतवशाम् आलभते'। सकृत् प्रजामुत्पाद्य पश्चात् वन्ध्या सूतवशा सोमस्य रेतोधारकत्वात्। तया देवतया 'रेत एव', धारयतीति॥

अथाभिषेकमन्त्रं विधत्ते। "सोम्यर्चाभिषिञ्चति। रेतोधा ह्येषा। रेतः सोमः। रेत एवास्मिन् दधाति" इति। अषाढमित्यादिका वक्ष्यमाणा 'सौमी'। यस्मात् ऋग्'एषा',रेतोधार-

*णहेतुः 'सोमः' अपि रेतःस्वरूपः। अतः सौम्या अभिषेके सति 'अस्मिन्' यज्ञे यजमाने 'रेत एव दधाति'॥*

अस्मिन् सवे कर्त्तव्यान्तरं विधत्ते। "यत्किञ्च राजसूयमृते सोमम्। तत्सर्व्वं भवति" इति। 'राजसूये' हेमपवित्राभिषेचनीयदशपेयकेशवपनीयव्युष्टिद्विरात्रचत्रधृतिसञ्ज्ञाः सप्त सोमयागाः, तान् वर्ज्जयित्वा यत्किञ्चित् अनुमत्यादिकं सौत्रामण्यं तं प्रयोगजातं 'तत्सर्व्वं' अस्मिन् सोमसवे अनुष्ठेयम्। तस्मिन् राजसूयप्रयोगमध्ये अरत्नीनां हविर्भ्य ऊर्द्धं संसृपां हविर्भ्यः पुरस्तात् सौमी सूतवशाऽऽलब्धव्या, तस्याः स्विष्टकृतः पुरस्तादभिषेकः कार्य्यः॥

अभिषेकाय सौमीमृचं पठति। "अषाढं युत्सु पृतनासु पप्रिम्। सुवर्षामप्स्वां वृजनस्य गोपाम्। भरेषुजाꣳ सुचितिꣳ सुश्रवसम्। जयन्तं त्वामनु मदेम सोम" [१] इति। हे सोम वयं 'त्वाम्' अनुसृत्य 'मदेम'। कीदृशं त्वाम्, 'युत्सु' युद्धेषु, 'अषाढं' सोढुम् अशक्यं, 'पृतनासु' सेनासु, 'पप्रिं' पूरकं, 'सुवर्षां' सुवः स्वर्गस्यात्यरिष्टं विनाशयतीति सुवर्षा तं सुवर्षाम्, 'अप्स्वां' न केनापि स्वायते भुज्यत इत्यप्स्वा तं, वृजनं पापवर्ज्जनं तस्य 'गोपां' रक्षितारम्, भरेषु भरणीयेषु अग्निष्टोमादिषु जायते निवसतीति भरेषुजाः तं 'भरेषुजां' 'सुचितिं' शोभनचितिः भूमिर्निवासस्थानं यस्यासौ सुचितिः तं, सुश्रवः कीर्त्तिर्यस्यासौ सुश्रवाः तं 'सुश्रवसं'। 'जयन्तं' सर्व्वत्र जयशीलम्॥

इति चतुर्थोऽनुवाकः॥ ४॥

अथ पञ्चमोऽनुवाकः ॥

चतुर्थे सोमसवोऽभिहितः। पञ्चमे पृथिसवो अभिधीयते। तमेतं विधत्ते। "यो वै सोमेन सूयते। स देवसवः। यः पशुना सूयते। स देवसवः। य इष्ट्या सूयते। स मनुष्यसवः। एतं वै पृथये देवाः प्रायच्छन्। ततो वै सोऽण्यारण्यानां पशूना-मसूयत। यावतीः कियतीश्च प्रजा वाचं वदन्ति। तासाꣳ सर्व्वासाꣳ सूयते [१]। य एतेन यजते। य उ चैनमेवं वेद" इति। 'यः' क्रतुः,'सोमेन','सूयते' निष्पाद्यते,'सः' देवानां योग्यः सवः, यथा पूर्व्वोक्तो वृहस्पतिसवः। 'यः' च 'पशुना' निष्पाद्यते वैश्य-सवादिः 'सः' अपि देवानामपि योग्यः सवः। अतस्तद्भयं तथैव तिष्ठतु। 'यः' च 'इष्ट्या' निष्पाद्यते 'सः' मनुष्ययोग्यः सवः सर्व्वेषां सुलभः। तस्मात् 'एतम्' एव मनुष्यसवं पृथिसाख्ये कर्म्मणि चि-द्रूपे वेनपुत्राय 'देवाः प्रायच्छन्'। तस्मादेव समनुष्यसवः सपृ-थिः।'आरण्यानाम्',अपि'पशूनाम्','असूयत' अधिपतिरासीत्, किमुत ग्राम्याणाम्। पृथिना अनुष्ठितत्वात् अयं पृथिसवः।'एतेन' पृथिसवेन 'यो यजते','यश्च एनं वेद' स द्विविधोऽप्यसौ पुरुषः प्रजाभिरुच्यमानानां 'तासां सर्व्वासां' वाचां,'सूयते' अधिपति-र्भवति। प्रजाश्च 'यावतीः कियतीश्च' यावत्यः कियत्यश्च सन्ति, ताः'प्रजाः वाचं वदन्ति'। तस्यां वाचि कोऽपि अंशो न परि-त्यजते। तदभिप्रेत्य तासां सर्व्वासामिति बहुवचननिर्द्देशः ॥

अस्मिन् पृथिसवे अभिषेकमन्त्रं विधत्ते। "साराग्ꣳस्य-र्षोऽभिषिञ्चति। मनुष्या वै सराग्ꣳमः। निरुक्त्य वावैतत्।

अथाभिषिञ्चति'' इति। नरैः शंसनीयः, स्वयमपि मनुष्यरूपो देवविशेषो नराशंसः, तत्सम्बन्धिनी येमे पञ्चाशतमित्यादिका 'नाराशंसी' तयाऽभिषिञ्चेत्। तत्र पूर्व्वोक्तरीत्या मनुष्यमूर्त्तय एव देवा नाराशंसशब्देनोच्यन्ते, तत्सम्बन्धि अभिषेचनं यदस्ति एतेन 'निह्नुत्यैव' अपलप्यैव। भवन्तः मनुष्याः अतो भवज्जातीयानस्मान् अनुग्रहीतुम् अर्हन्तीत्येवं प्रलोभ्यैवानन्तरम् 'अभिषिञ्चति'॥

अस्मिन् पृथिसवे कर्त्तव्यविशेषं विधत्ते। "यत्किञ्च राजसूयमनुत्तरवेदीकम्। तत्सर्व्वं भवति'' इति। राजसूये उत्तरवेदियुक्ताः सत्यसोमयागाः द्विपशुः पशुबन्धः चातुर्म्मास्यानि च एतानि वर्ज्जयित्वा यदन्यदानुमत्यादिकं सौत्रामण्यान्तमस्ति, 'तत्सर्व्वम्' अत्र कर्त्तव्यम्॥

अथ नराशंसीमृचं पठति। "ये मे पञ्चाशतं ददुः। अश्वानाꣳ सधस्तुतिः। द्युमदग्ने महो श्रवः। बृहत्कृधि मघोनाम्। नृवदमृत नृणाम्" [२] इति।'ये' मनुष्याः 'मे' मह्यमृत्विजे 'अश्वानां पञ्चाशतं','ददुः' दातुं समर्थाः। तेषां 'मघोनां' धनिकानां, 'नृणां' मनुष्याणां यजमानानां यशो हे 'अग्ने' 'सधस्तुतिः' स्तुत्या सहितं 'श्रवः' 'बृहत्कृधि'। कीदृशं श्रवः, 'द्युमत्' दीप्तिमत् धनयुक्तमित्यर्थः। 'महो' महत, 'नृवत्' पुत्रभृत्यादियुक्तम्, अमृतशब्दः सम्बुध्यन्तोऽग्निविशेषणम्॥

इति पञ्चमोऽनुवाकः॥ ५॥

---

अथ षष्ठोऽनुवाकः।

पञ्चमे पृथिसव उक्तः। षष्ठे गोसव उच्यते। "एष गोसवः। षट्त्रिꣳश उक्थ्यो बृहत्सामा। पवमाने कण्वरथन्तरं भवति" इति। 'एषः' वक्ष्यमाणः, 'गोसवाख्यः क्रतुरनुष्ठेयः, स च सर्व्वेषु स्तोत्रेषु 'षट्त्रिंशत्स्तोमयुक्तः, 'उक्थ्यसंस्थारूपपृष्ठस्तोत्रे 'बृहत्सामयुक्तः, तस्य 'पवमानस्तोत्रे 'कण्वरथन्तराख्यं' साम भवति॥

अथ वाजपेयराजसूयाभ्यामुत्कृष्टत्वेन एतं सवं प्रशंसति। "यो वै वाजपेयः। स सम्राट्सवः। यो राजसूयः। स वरुणसवः। प्रजापतिः स्वाराज्यं परमेष्ठी। स्वाराज्यं गौरेव" इति। 'यः', अयं 'वाजपेयः', अस्ति, 'सः', अयं 'साम्राज्यहेतुरेव 'सवः'। 'यः', च 'राजसूयः', 'सः', अपि 'वरुणैश्वर्य्यप्राप्तिहेतुरेव' 'सवः', न तु तदुभयमधिकफलप्राप्तिहेतुः। यस्तु 'स्वाराज्यं' अपराधीनं प्राप्तः, 'परमेष्ठी' परमे पदे स्थितः, 'प्रजापतिः', अस्ति; स तु सर्व्वेभ्यः फलेभ्यः अधिकफलभूतः। स्वाराज्यं हि सर्व्वैः प्रार्थ्यते 'स्वाराज्यं', नाम 'गौरेव' गोसव एव, स्वाराज्यप्राप्तिहेतुत्वात्॥

एतदनुष्ठानं तद्वेदनञ्च प्रशंसति। "गौरिव भवति [१]। य एतेन यजते। य उ चैनमेवं वेद" इति। यथा 'गौः', परत्र स्वच्छन्दचारी, एवमयं ब्रह्मलोकेऽपि स्वतन्त्रो भवति॥

बृहत्सामेति यदुक्तं तदेव सामद्वयरूपेण प्रशंसति। "उभे

बृहद्रथन्तरे भवतः। तद्धि स्वाराज्यम्'' इति। अत्र एकेनैव 'बृहत्साम्ना सामद्वयसाध्योऽतिशयः क्रियते। अतस्तद्धि बृहत्सामानुष्ठानमेव 'स्वाराज्य'प्राप्तिहेतुः॥

दक्षिणायां विशेषं विधत्ते। "अयुतं दक्षिणाः। तद्धि स्वाराज्यम्'' इति। गवाम् 'अयुतम्', अत्र 'दक्षिणात्वेन दातव्यम्॥

अभिषेकद्रव्यं विधत्ते। "प्रतिधुषाऽभिषिञ्चति। तद्धि स्वाराज्यम्'' इति। 'प्रतिधुषा' तदानीमेव दुग्धेन क्षीरेण 'अभिषिञ्चेत्, सोऽयमभिषेकः अयुतगोप्राप्तिवत् 'स्वाराज्य'हेतुः॥

अथाभिषेकस्य देशकालौ विधत्ते। "अनुद्धुते वेद्यै दक्षिणत आहवनीयस्य बृहतस्तोत्रं प्रत्यभिषिञ्चति'' इति। 'वेद्यै' वेद्यां मध्ये 'आहवनीयस्य', 'दक्षिण-भागे योऽयम् 'अनुद्धुत'देशोऽस्ति, सोऽयमभिषेकस्य देशः योग्यः, तस्मिन् देशे 'अभिषिञ्चेत्। 'बृहतस्तोत्रं प्रति' बृहत्साम्ना क्रियमाणं स्तोत्रं यदा प्रवर्त्तते तदा 'अभिषिञ्चेत्॥

विधत्ते। "इयं वाव रथन्तरम्[२]। असौ बृहत्। अनयोरेवैनमनन्तर्हितमभिषिञ्चति'' इति। यदिदं कण्व'रथन्तरं' पवमानस्तोत्रे प्रवृत्तं तद्भूमिस्वरूपं, यच्च पृष्ठस्तोत्रे 'बृहत्', साम तद्द्युलोकरूपं, तयोः उभयोर्लोकयोः मध्ये 'अनन्तर्हितं' व्यवधानरहितमेव 'एनं' यजमानम् 'अभिषिञ्चति'॥

षट्त्रिंश उक्थ्यो बृहत्सामेति यत् पूर्व्वमुक्तं तच्च स्तोत्रं प्रशंसति। "पशुस्तोमो वा एषः। तेन गोसवः। षट्त्रिंशः सर्व्वः'' इति। यस्मादेष क्रतुः 'पशुहेतुना 'स्तोमेन युक्तः, 'तेन

गोसवः', इत्युच्यते। पशुहेतुस्तोमयुक्तत्वमेव 'षट्त्रिंशः', इत्यनेन विशदीक्रियते। षट्त्रिंशदक्षरा बृहती, बार्हताः पशव इत्याम्नातम्। अतोऽस्मिन् गोसवे 'सर्व्वः' अपि स्तोमः षट्त्रिंश एव क्रियते न तु त्रिवृदादिः॥

अथाभिषेकार्थमन्त्रमाह। "रेवज्जातः सहसा वृद्धः। क्षत्राणां क्षत्रभृत्तमो वयोधाः। महान्महित्वे तस्तभानः। क्षत्रे राष्ट्रे च जागृहि। प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामि" इति। हे यजमान त्वं 'रेवत्' धनवत् जीवनं यथा भवति तथा, 'जातः' प्रवृत्तः, 'सहसा वृद्धः' बलेनाधिकः, 'क्षत्राणां' बलवतां मध्ये 'क्षत्रभृत्तमः' अतिशयेन बलवान्, 'वयोधाः' दीर्घायुष्यधारी, 'महान्' विद्याचारादिगुणैरधिकः, 'महित्वे' पूज्यत्वे, 'तस्तभानः' स्थिरवर्त्तमानः, 'क्षत्रे' क्षत्रकार्य्ये, 'राष्ट्रे' च जनपदेऽपि 'जागृहि' अप्रमत्तो वर्त्तस्व। 'परमेष्ठिनः' उत्तमे पदे स्थितस्य, 'प्रजापते', सम्बन्धिना 'स्वाराज्येन' पराधीनरहितत्वेन राज्येन निमित्तेन, 'त्वाम्' 'अभिषिञ्चामि'॥

तमेतं मन्त्रं विधत्ते। "इत्याह स्वाराज्यमेवैनं गमयति" [२] इति। 'इति' उक्तमेतं मन्त्रमेतदभिषेककाले पठेत्, तेन पाठेन 'एनं' यजमानं, 'स्वाराज्यं', प्रापयति॥

इति षष्ठोऽनुवाकः॥६॥

अथ सप्तमोऽनुवाकः ।

षष्ठे गोसवोऽभिहितः । सप्तमे ओदनसवोऽभिधीयते । कल्पः । 'ओदनसवेन अन्नाद्यकामो रोहिण्यां यजतोपव्युषं अपयति दर्विहोमो भवत्युदित आदित्ये सिꣳहे व्याघ्र' इति। एतस्य आहुतीः रोदनाद्धुत्वेति । तत्र प्रथमामृचमाह । "सिꣳहे व्याघ्र उत या पृदाकौ । त्विषिरग्नौ ब्राह्मणे सूर्य्ये या । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना" इति । 'पृदाकुः' मनुष्य-निगरणसमर्थोऽजगरः सर्पः, 'सिंहादिषु अग्न्यादिषु च 'या', इयं 'त्विषिः', अप्रधृष्यत्वलक्षणं तेजः, तदभिमानिनी 'या', 'देवी', 'सुभगा' सौभाग्ययुक्ता सती, 'इन्द्रं' परमैश्वर्य्ययुक्तं पुरुषं 'जजान' उत्पादयामास । 'सा', 'देवी', 'वर्चसा' बलेन, 'संविदाना' ऐकमत्ययुक्ता सती, 'नः' अस्मान् प्रति, 'आगन्' आगच्छतु ॥

अथ द्वितीयामाह । "या राजन्ये दुन्दुभावायतायाम् । अश्वस्य क्रन्द्ये पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान । सा न आगन्वर्चसा संविदाना" इति । 'राजन्ये' क्षत्रिये, 'आयतायां' ताड्यमानायां, 'दुन्दुभौ', 'अश्वस्य', 'क्रन्द्ये' क्रन्दने हेषिते, 'पुरुषस्य', 'मायौ' सिंहनादादिशब्दे, एतेषु 'या', त्विषिर्गाम्भीर्य्यलक्षणा तदभिमानिनी 'या', 'देवी', 'सा न' इत्यादि पूर्व्ववत् ॥

अथ तृतीयामृचमाह । "या हस्तिनि द्वीपिनि या हिरण्ये । त्विषिरश्वेषु पुरुषेषु गोषु [१] । इन्द्रं या देवी सुभगा

जजान। सा न आगन्वर्चसा संविदाना" इति। नगरे जात-स्तत्रैव वर्त्तमानो 'हस्ती', अरण्ये जातस्तत्रैव वर्त्तमानो 'द्वीपी', इत्यवान्तरभेदः। द्वीपी मृगान्तरं वा। हस्त्यादिषु च 'या', 'त्विषिः' दीर्घत्वमहत्त्वलक्षणा, तदभिमानिनी 'या', 'देवी', 'सा न इत्यादि पूर्व्ववत्॥

अथ चतुर्थीमाह। "रथे अक्षेषु वृषभस्य वाजे। वाते पर्ज्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान। सा न आगन्वर्चसा संविदाना" इति। 'वाजः' वेगः,'शुष्मः' बलम्, 'रथादिषु 'वातादिषु या त्विषिः स्वकार्यक्षमत्वलक्षणा तद-भिमानिनी 'या देवी', सा, इत्यादि पूर्व्ववत्॥

कल्पः। 'राडसीत्येतैः प्रतिमन्त्रं मन्थान् कल्पयत्याज्यं मन्थं ब्राह्मणः, पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः' इति। तान्मन्त्रानाह। "राडसि विराडसि। सम्राडसि स्वरा-डसि" इति॥ हे आज्यमन्थ त्वं 'राडसि' राजमानोऽसि, विविधं राजत इति 'विराट्', सम्यग्राजत इति 'सम्राट्', स्वातन्त्र्येण राजत इति 'स्वराट्'॥

कल्पः। 'इन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामीति ब्रा-ह्मणः', सक्तुभिराज्यं श्रीत्वा तेजोऽसि इत्यभिमन्त्र्य एतत्ते प्रयच्छामीति यजमानाय प्रयच्छति, तेजस्वदस्तु मे मुखमिति प्रतिगृह्य भक्षयति एवमितरेषामुत्तरोत्तरश्रयणोऽभिमन्त्रणः; प्रदानो भक्षणश्च यथा लिङ्गम्' इति। तत्र श्रयणमन्त्राणां पाठस्तु। "इन्द्राय त्वा तेजस्वते तेजस्वन्तꣳ श्रीणामि। इन्द्राय

त्वौजस्वत ओजस्वन्तꣳ श्रीणामि [२]। इन्द्राय त्वा पयस्वते पयस्वन्तꣳ श्रीणामि। इन्द्राय त्वायुष्मत आयुष्मन्तꣳ श्रीणामि" इति। हे आज्यमन्थ 'त्वां', 'तेजोयुक्ते 'इन्द्रार्थे 'तेजस्वन्तं', 'त्वां', सक्तुभिः सह 'श्रीणामि' पचामि। आज्यस्य तेजोरूपत्वेन तेजस्त्वम्। एवं पयोमन्थादिषु योज्यम्। ओजसो बलहेतुत्वात् पयोमन्थ ओजस्वान्। दर्शेष्टौ च इन्द्रः पय इत्याम्नानात्। 'इन्द्रस्य 'पयस्वत्त्वं', दधिमन्थस्य पयोविकारत्वेन पयस्वत्त्वम्। चिरञ्जीवीत्वात् 'इन्द्रस्य 'आयुष्मत्त्वम्। उदमन्थस्य आयुर्हेतुत्वात् आयुष्मत्त्वम्॥

आज्यमन्थस्य अभिमन्त्रणादींस्त्रीन्मन्त्रानाह। "तेजोऽसि। तत्ते प्रयच्छामि। तेजस्वदस्तु मे मुखम्। तेजस्वच्छिरो अस्तु मे। तेजस्वान् विश्वतः प्रत्यङ्। तेजसा सम्पिपृग्धि मा" इति। हे आज्यमन्थ त्वं 'तेजोरूपोऽसि', हे यजमान 'तत्' मन्थद्रव्यं,'ते' तुभ्यं, 'प्रयच्छामि', 'मे' मम, यजमानस्य, 'मुखं', 'तेजोयुक्तम्, 'अस्तु', 'शिरः',अपि 'तेजस्वदस्तु', हे मन्थ त्वं 'तेजस्वान्', भूत्वा 'विश्वतः' सर्व्वस्मात् अन्यस्मात् 'प्रत्यङ्' प्रत्यासन्नः सन् 'मां 'तेजसा', 'सम्पिपृग्धि' सम्पृक्तं कुरु॥

पयोमन्थस्य अभिमन्त्रणादींस्त्रीन्मन्त्रानाह। "ओजोऽसि। तत्ते प्रयच्छामि [३]। ओजस्वदस्तु मे मुखम्। ओजस्वच्छिरो अस्तु मे। ओजस्वान् विश्वतः प्रत्यङ्। ओजसा सम्पिपृग्धि मा" इति। 'ओजः' बलम्, अन्यत् पूर्व्ववद् व्याख्येयम्॥

दधिमन्थस्य अभिमन्त्रणादीन्मन्त्रानाह। "पयोऽसि। तत्ते

प्रयच्छामि। पयस्वदस्तु मे मुखम्। पयस्वच्छिरो अस्तु मे। पयस्वान् विश्वतः प्रत्यङ्। पयसा सम्पिपृग्धि मा"[४] इति। दधिमन्थस्य पयोविकारत्वात्, 'पयस्वन्मुखस्य पयोभोजित्वात्, पयस्त्वम्। 'शिरः' शब्देन कृत्स्नो देह उपलक्ष्यते। तस्य पयोजन्यशक्तिमत्त्वात् पयस्त्वं। अन्यत् पूर्व्ववत्॥

उदमन्थस्य अभिमन्त्रणादीन्मन्त्रानाह। "आयुरसि। तत्ते प्रयच्छामि। आयुष्मदस्तु मे मुखम्। आयुष्मच्छिरो अस्तु मे। आयुष्मान् विश्वतः प्रत्यङ्। आयुषा सम्पिपृग्धि मा" इति। उदमन्थस्य आयुर्हेतुत्वात् आयुष्ट्वम्। अन्यत् पूर्व्ववत्॥

कल्पः। 'ओदनशेषं यजमानः प्राश्नातीममग्न आयुषे वर्च्चसे कृधीति प्राश्नन्तमभिमन्त्रयते' इति। पाठस्तु, "इममग्न आयुषे वर्च्चसे कृधि। प्रियꣳ रेतो वरुण सोमराजन्। मा ते वास्मा अदिते शर्म्म यच्छ। विश्वे देवा जरदष्टिर्यथा सत्" [५] इति। हे 'अग्ने','इमं' यजमानम्, 'आयुषे' दीर्घायुष्याय, 'वर्च्चसे' बलाय, च 'कृधि' समर्थं कुरु। हे 'वरुण', 'प्रियं कृधि' अभीष्टं कुरु, हे 'सोमराजन्', 'रेतः कृधि' प्रजोत्पादनसामर्थ्यं कुरु। हे 'अदिते', 'अस्मै' यजमानाय, 'ते' तव, 'शर्म्म यच्छ' सुखं देहि, हे 'विश्वे देवाः', अयं यजमानो 'जरदष्टिर्यथा सत्' जराप्राप्तिमान् यथा भवति, तथा कुर्व्वन्तु, चिरजीविनं कुर्व्वन्त्वीत्यर्थः॥

कल्पः। 'हिरण्यं यजमानाय बध्नात्यायुरसि विश्वायुरसीत्याबध्यमानो जपति' इति। पाठस्तु,"आयुरसि विश्वायुरसि।

सर्व्वायुरसि सर्व्वमायुरसि" इति। हे हिरण्य त्वम्। 'आयुर्हेतु-रसि इति न केवलं ममैवायुर्हेतुः, किन्तु 'विश्वेषां मनुष्याणां, 'सर्व्वेषां देवानाञ्च,'आयुर्हेतुरसि, तस्मात्त्वमेव 'सर्व्वायुः,'असि'॥

कल्पः। 'तैरेनं संसृष्टैरभिषिञ्चति यतो वातो मनोजवाः इति। तैरपां ग्रहैः। पाठस्तु, "यतो वातो मनोजवाः। यतः चरन्ति सिन्धवः। तासां त्वा सर्व्वासाꣳ रुचा। अभिषिञ्चामि वर्च्चसा" इति। 'यतः' यस्याः रुचः, दीप्तेः, वेगवान् 'वातः', प्रवर्त्तते, पुनरपि 'यतः', सिन्धवः,'नद्यः', 'मनोजवाः' मनो-वेगयुक्ताः, सत्यः 'चरन्ति' प्रवहन्ति, 'तासां' सर्व्वासां सम्ब-न्धिन्या 'रुचा', 'त्वां' यजमानं, 'वर्च्चसा' बलनिमित्तम् 'अभि-षिञ्चामि' ॥

कल्पः। 'समुद्र इवासि गम्भनेत्येनमभिमन्त्र्य' इति। पाठस्तु, समुद्र इवासि गम्भना। सोम इवास्यदाभ्यः। अग्निरिव वि-श्वतः प्रत्यङ्। सूर्य्य इव ज्योतिषा विभूः" [६] इति। हे यजमान, त्वं 'गम्भना' गाम्भीर्य्येण, 'समुद्र इवासि' समुद्रस-मोऽसि, सोमवत् 'अदाभ्यः' केनापि अप्रधृष्योऽसि, 'अग्निरिव', 'विश्वतः' सर्व्वस्मात्, 'प्रत्यङ्' प्रत्यासन्नोऽसि। अग्निर्ह्युदरमध्य-वर्त्तित्वात् प्रत्यासन्नः। 'सूर्य्य इव ज्योतिषा', व्याप्तोऽसि॥

कल्पः। 'अपां ग्रहान् गृह्णन्ति ये मन्थान् कल्पयन्ति, अपां यो द्रवणे रस इत्येतैः प्रतिमन्त्रम्' इति। तानेतान् चतुरो मन्त्रानाह। "अपां यो द्रवणे रसः। तमहमस्मा आमुष्यायणाय। तेजसे ब्रह्मवर्च्चसाय गृह्णामि। अपां य ऊर्म्मौ

रसः। तमहमस्मा आमुष्यायणाय। ओजसे वीर्याय गृह्णामि। अपां यो मध्यतो रसः। तमहमस्मा आमुष्यायणाय। पुष्ट्यै प्रजननाय गृह्णामि। अपां यो यज्ञियो रसः। तमहमस्मा आमुष्यायणाय। आयुषे दीर्घायुत्वाय गृह्णामि" [७] इति। 'अपां', सम्बन्धिनि 'द्रवणे' द्रवीभावे, 'यः', 'रसः' सारः, 'तं' रसं 'अहम्', 'आमुष्यायणाय' अमुष्य देवदत्तस्य पुत्राय, 'अस्मै' यज्ञदत्ताख्याय यजमानाय 'तेजोब्रह्मवर्चसयोः', सिद्ध्यर्थं 'गृह्णामि'। एवमुत्तरे त्रयो मन्त्राः॥

अत्र विनियोगसङ्ग्रहः।

स्यादोदनसवे होमः सिंहे मन्त्रचतुष्टयात्।
राट्चतुर्भिश्चतुर्मन्त्रान् कल्पयेद् ब्राह्मणादयः॥
आज्यं क्षीरं दधि जलं द्रव्याण्येषां क्रमादिह।
श्रीणन्ति सक्तुभिर्मन्थानिन्द्रायेति चतुष्टयात्॥
तेजोऽसीत्याज्यमन्थस्य मन्त्रणं तत्र इत्यतः।
तं मन्थं स्वामिने दद्यात्तेजोत्यन्तं स लक्षयेत्॥
क्षीरादिमन्थेऽप्योजोऽसीत्यादिमन्त्रास्तथैव हि।
खादन्तं मन्त्रयेत्तेममायुस्तु स्वामिनो तथा॥
यतोऽभिषिच्याभिषिक्तं समुद्रो मन्त्रयेत हि।
अपामित्यभिषेकाय गृह्णामीति जलं गृहात्।
अनुवाके सप्तमेऽस्मिन् मन्त्रा द्वात्रिंशदीरिताः॥

इति सप्तमोऽनुवाकः॥ ७॥

अथाष्टमोऽनुवाकः ।

सप्तमे ओदनमवस्य होमादिमन्त्रा उक्ताः। अष्टमे रथारोहणमन्त्रा उच्यन्ते। कल्पः। अग्रेणाहवनीयं रथोऽवस्थितो भवति। अभिप्रेहीति तं यजमानोऽभ्येति। पाठस्तु, "अभि प्रेहि वीरयस्व। उग्रश्चेत्ता सपत्नहा" इति। हे यजमान रथम् 'अभि'लक्ष्य 'प्रेहि' प्रकर्षेण गच्छ, गत्वा च 'वीरयस्व' विक्रमं कुरु। 'उग्रः' तीव्रशमनः, 'चेत्ता' जयोपायाभिज्ञः, 'सपत्नहा' वैरिघाती, च भव॥

कल्पः। आतिष्ठ मित्रवर्द्धन इत्यारोहन्तमभिमन्त्रयत इति। पाठस्तु, "आतिष्ठ मित्रवर्द्धनः। तुभ्यं देवा अधिब्रुवन्" इति। हे यजमान त्वं 'मित्राभिवृद्धिहेतुः सन् रथम् 'आतिष्ठ' आरोह, 'देवाः', 'तुभ्यं' त्वदर्थम्, 'अधिब्रुवन्' अधिकाऽयं यजमान इति ब्रुवन्तु॥

कल्पः। अङ्क्तौ न्यङ्कावित्ति रथचक्रे अभिमृशति पञ्चमी वा आतिष्ठ वृत्रहन्निति पञ्चभिरारूढमिति। अभिमन्त्रयत इत्यनुवर्त्तते। तत्र चक्रस्पर्शनहेतोर्ऋचोऽभिमन्त्रणमन्त्रयोश्च प्रथमाया ऋचः प्रतीके दर्शयति। "अङ्क्तौ न्यङ्कावभितः आतिष्ठ वृत्रहन् रथम्" इति। अङ्क्तौ न्यङ्कावभितो रथं यावित्येषा संहितायाः प्रथमकाण्डे देवसवितः प्रसुवेत्यनुवाके व्याख्याता। आतिष्ठ वृत्रहन्नित्येषा गृहकाण्डे व्याख्याता॥

अथ द्वितीयामृचमाह। "आतिष्ठन्तं परि विश्वे अभूषन्।

श्रियं वसानश्चरति स्वरोचाः। महत्तदस्यासुरस्य नाम। आ विश्वरूपो अमृतानि तस्थौ" इति। 'आतिष्ठन्तं' रथमारोहन्तं यजमानं, 'विश्वे' देवाः, सर्व्वेऽपि देवाः, 'पर्य्यभूषन्' परितः अलङ्कृतवन्तः। अयञ्च रथस्त्वया अधिष्ठितः 'श्रियं वसानः' आच्छादयन् त्वयि सर्व्वसम्पदं करोत्वित्यर्थः। 'स्वरोचाः' स्वायत्तदीप्तिः सन् 'चरति' प्रवर्त्तते, 'असुरस्य' शत्रूणां निरसितुः, मित्राणां वा प्राणप्रदस्य, 'अस्य' रथस्य 'तन्नाम', 'महत्' अधिकं, त्वदीयो रथ आयातीति श्रुत्वा शत्रवः पलायन्त इत्यर्थः। एवंविधो रथो 'विश्वरूपः' बहुदेशसञ्चारेण बहुविधरूपः सन् 'अमृतानि' अमरण-साधनानि फलानि 'आतस्थौ' सम्पादयति॥

अथ तृतीयामाह। "अनु त्वेन्द्रो मदत्वनु बृहस्पतिः [१]। अनु सोमो अन्वग्निरावीत्। अनु त्वा विश्वे देवा अवन्तु। अनु सप्त राजानो य उताभिषिक्ताः" इति। हे यजमान रथमातिष्ठन्तं 'त्वां', 'इन्द्र बृहस्पति सोमाः', 'अनुमदन्तु, 'अनुमोदन्ताम् अङ्गीकुर्व्वन्ताम्। 'अग्निः', अपि त्वाम् 'अनु'क्रमेण 'आवीत्' रक्षतु। ये 'विश्वे देवाः', तेऽपि 'त्वाम्', 'अनु'क्रमेण 'अवन्तु', 'उत' अपि च 'सप्त राजानः' त्वदीयदिग्व्यतिरिक्ताः सप्तसु दिक्षु वर्त्तमानाः राजानो 'अभिषिक्ताः', ये सन्ति, ते सर्व्वेऽपि त्वामनुमोदन्तु॥

अथ चतुर्थीमाह। "अनु त्वा मित्रावरुणाविहावतम्। अनु द्यावापृथिवी विश्वशम्भू। सूर्य्यो अहोभिरनु त्वावतु। चन्द्रमा

नक्षत्रैरनु त्वावतु" इति। 'मित्रावरुणौ', 'इह' कर्मणि, 'त्वाम्', 'अनु'क्रमेण रक्षताम्। 'विश्वशम्भू' विश्वस्य सुखस्य भावयित्र्यौ 'द्यावापृथिव्यौ', 'त्वामनुरक्षताम्। 'सूर्यः', अयन् 'अहोभिः', सह 'त्वामन्ववतु'। 'चन्द्रमा नक्षत्रैः', सह 'त्वामनुरक्षतु ॥

अथ पञ्चमीमाह। "द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रो बृहद्दक्षिणा त्वा पिपर्त्तु। अनु स्वधा चिकित्सिताꣳ सोमो अग्निः। आयं पृणक्तु रजसी उपस्थम्" [२] इति। 'द्यौश्च पृथिवी च,' इत्येते 'प्रचेतसा' प्रकृष्टज्ञानयुक्ते सत्यौ 'त्वां' रक्षताम्। योऽयं सोमयागे 'शुक्राख्यो ग्रहः, स त्वां 'पिपर्त्तु' पालयतु। तथा 'बृहत्, सामनाम त्वां 'पिपर्त्तु', 'दक्षिणा', त्वां 'पिपर्त्तु', 'स्वधाशब्दोपलक्षितमन्नं त्वाम् 'अनुचिकित्सितां' तव अनिष्टं निवारयत्वित्यर्थः। तथा 'सोमः', 'अग्निः', च इत्येतौ उभौ त्वदीयमनिष्टं निवारयेताम्। 'अयं' रथः 'रजसी' रञ्जनात्मके द्यावापृथिव्यौ 'उपस्थं' तत्समीपे स्थितम्, अन्तरिक्षञ्च 'आपृणक्तु' सर्व्वतः स्वेन सम्पृक्तानि करोतु, स्वयं लोकत्रयं व्याप्नोत्वित्यर्थः ॥

अत्र विनियोगसङ्ग्रहः ॥

अभीति रथमभ्येऽति ह्यातिष्ठेत्यभिमन्त्रणम्।
अङ्कौ चक्रे स्पृशेदातिमन्त्रयेत् रथसंस्थितम् ॥
पञ्चभिश्चैव मन्त्रोक्ता अष्टौ मन्त्राः क्रमादमी।

इत्यष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः।

अष्टमे ओदनसवगता रथारोहणमन्त्रा उक्ताः, सोऽयमोदनसवो नवमे अभिधीयते। तमेतं विधत्ते। "प्रजापतिः प्रजा असृजत। ता अस्मात् सृष्टाः पराचीरायन्। स एतं प्रजापतिरोदनमपश्यत्। सोऽन्नं भूतोऽतिष्ठत्। ता अन्यत्रान्नाद्यमवित्त्वा। प्रजापतिं प्रजा उपावर्त्तन्त। अन्नमेवैनं भूतं पश्यन्तीः प्रजा उपावर्त्तन्ते। य एतेन यजते। य उ चैनमेवं वेद" इति। प्रजापतिना सृष्टाः प्रजा अन्नार्थिन्यः तदन्वेषणाय पुनरावृत्तिरहिताः 'आयन्' यत्र क्वापि गताः। तदानीं प्रजापतिरन्नहेतुम् 'ओदनसवं दृष्ट्वा तदनुष्ठानेन 'अन्नं', प्राप्तः 'अतिष्ठत्'। 'ताः' च प्रजा अन्यत्रान्नमलब्ध्वा पुनः 'प्रजापतिं', प्रत्यागताः 'यः' यजमानः 'एतेन' ओदनसवेन 'यजते, 'यः', च 'एनम्' ओदनसवं सम्यक् 'वेद' वेत्ति, तमेतमुभयविधं पुरुषमन्नप्राप्तियुक्तं दृष्ट्वा प्रजा सर्व्वा आगच्छन्ति॥

पूर्व्वोक्तैः सिंहे व्याघ्र इत्यादिभिर्मन्त्रैः यदन्नं होतव्यं तदिह विधत्ते। "सर्व्वाण्यन्नानि भवन्ति [१]। सर्व्वे पुरुषाः। सर्व्वाण्येवान्नान्यवरुन्धे। सर्व्वान् पुरुषान्" इति। व्रीहिप्रियङ्गुश्यामाकादिभिः निष्पाद्यानि यावन्ति 'अन्नानि', 'सम्भवन्ति', तावन्ति 'सर्व्वाणि', अत्र कर्त्तव्यानि। कर्त्तारश्च ब्राह्मणक्षत्रियवैश्यशूद्राः 'सर्व्वे पुरुषाः',। तेन 'सर्व्वान्नसर्व्वपुरुषसमृद्धिः प्राप्यते॥

मन्त्रकल्पनमन्त्राणां तात्पर्य्यं दर्शयति। "राडसि विरा-

डसीत्याह। स्वाराज्यमेवैनं गमयति" इति। 'राडसीत्यादीं-श्चतुरो मन्त्रान् पठेत्, तेन 'स्वाराज्यप्राप्तिः॥

यदुक्तं सूत्रकारेण, हिरण्यं ब्राह्मणाय ददातीति तिसृ-धन्वं राजन्याय, अष्ट्रां वैश्याय, माषकमण्डलुं शूद्रायेति। तदेतत् सर्व्वं विधत्ते। "यद्धिरण्यं ददाति। तेजस्तेनावरुन्धे। यत्तिसृधन्वम्। वीर्य्यं तेन। यदष्ट्राम् [२]। पुष्टिं तेन। यत्कमण्डलुम्। आयुष्टेन" इति। 'तिसृभिः' इषुभिः सहितं धनुः तत् 'तिसृधन्वम्'। 'अष्ट्रा' फालं लाङ्गलाग्रस्था लोह-शलाकेत्यर्थः॥

कर्णे हिरण्याभरणबन्धनं विधत्ते। "यद्धिरण्यमाबध्नाति। ज्योतिर्वै हिरण्यम्। ज्योतिरेवास्मिन् दधाति। अथो तेजो वै हिरण्यम्। तेज एवात्मन्धत्ते" इति। हिरण्यगता दीप्तिः 'ज्योतिः', तद्धारणेन मुखस्य शोभमानत्वं तेजः॥

होमद्रव्यशेषप्राशनं विधत्ते। "यदोदनं प्राश्नाति। एत-देव सर्व्वमवरुध्य [३]। तदस्मिन्नेकधाधात्" इति। सर्व्वान्न-शेषभक्षणे सति 'एतत् सर्व्वम्' अन्नजातं सम्पूर्णं सम्पाद्य, 'तत्' सम्पादितम् 'अन्यस्मिन् यजमाने 'एकधाधात्' एकीकृत्य स्थापयति॥

ओदनसवप्रयोगस्य नक्षत्रविशेषं विधत्ते। "रोहिण्यां कार्य्यः। यद्ब्राह्मण एव रोहिणी। तस्मादेव। अथो वर्ष्मैवैनꣳ समानानां करोति" इति। 'यस्मात् कारणात् 'रोहिणी' नक्षत्रं 'ब्राह्मणवत् प्रशस्तं, 'तस्मादेव' कारणात् 'रोहिण्याम्',

अयं 'कार्य्यः'। सप्तसप्तकमात् ज्ञेयाः विप्राद्याः कृत्तिकादय इति ज्योतिःशास्त्रे ब्राह्मणनक्षत्रेषु सप्तस्वर्वास्थितत्वात् रोहिण्या ब्राह्मणत्वमपि च रोहिण्यां कुर्व्वन्, 'एनं' यजमानं 'समानानां' सर्व्वेषां शरीरस्थानीयं 'करोति'॥

रोहिणीनक्षत्रयुक्तेऽपि उदयकालं विधत्ते। "उद्यता सूर्य्येण कार्य्यः। उद्यन्तं वा एतꣳ सर्व्वाः प्रजाः प्रतिनन्दन्ति" इति। 'उदयं गच्छता 'सूर्य्येण', सह अयं सवः कर्त्तव्यः, सूर्य्योदयस्य सर्व्वपुरुषानन्दहेतुत्वात् तत्रानुष्ठानं प्रशस्तम्॥

वेदनं प्रशंसति। दिदृक्षेण्यो दर्शनीयो भवति। य एवं वेद" इति। 'दिदृक्षेण्यः' दर्शनेच्छाविषयः, उपास्य इत्यर्थः। 'दर्शनीयः' सुरूपः॥

यदुक्तं सूत्रकारेण, अथैनं तिसृभिः दर्भपुञ्जीलैः पवयति अवभृथप्रत्याम्नायो भवतीति विज्ञाय इति। तदिदं विधत्ते। "ब्रह्मवादिनो वदन्ति" [४]। अवेत्याऽवभृथा३ना३ इति। यद्दर्भपुञ्जीलैः पवयति। तत्स्विदेवावैति। तन्नावैति" इति। अस्मिन्नोदनसवे किम् 'अवभृथः', कार्य्यो 'न', वेति 'ब्रह्मवादिनां विचारार्थेयं श्रुतिः। तदनुष्ठाने क्रियाबाहुल्यम् अनुष्ठानाभावे शुद्ध्यभाव इति तेषामभिप्रायः। तत्र दोषद्वयरहितमिदमुत्तरम्, 'दर्भपुञ्जील'शब्देन कतिपयदर्भनाडीयुक्ताः शाखाविशेषा उच्यन्ते, तैः शोधने सति 'तत्' 'एव' अवभृथाख्यं कर्म्म, 'अवैति स्वित्' अनुष्ठितमेव, शुद्धेः सम्पन्नत्वात्। 'तत्,' नानुष्ठितमपि, क्रियाबाहुल्याभावात्॥

दर्भपुञ्जीलसञ्ज्ञां विधत्ते। "त्रिभिः पवयति। त्रय इमे लोकाः। एभिरेवैनं लोकैः पवयति। अथो अपां वा एतत्तेजो वर्चः। यद्दर्भाः। यद्दर्भपुञ्जीलैः पवयति। अपामेवैनं तेजसा वर्चसाभिषिञ्चति" [५] इति। 'त्रिलसङ्ख्याया लोकसाम्यात् 'लोकैः', शुद्धिः कृता भवति। अपि च दर्भाणामुदकसारत्वात् बलहेतुत्वाच्च सारबलाभ्यामयं शोधितो भूत्वा अभिषिक्तो भवति॥

इति नवमोऽनुवाकः॥ ९॥

---

अथ दशमोऽनुवाकः॥

नवमेऽनुवाके ओदनसवो विहितः। दशमे पञ्चशारदीयविधिरुच्यते। स च सूत्रकारेण स्पष्टमुदाहृतः, पञ्चशारदीयेन बहोर्भूयान् भवत्यनुवत्सरं पशुबन्धेन यजते सप्तदशपृश्नीनुक्ष्णः पञ्चवर्षानानयन्ति सप्तदश पृश्नीर्वत्सतर्यः त्रिवत्सा अप्रतीताः प्रोक्षितान् पर्यग्निकृतानुक्ष्ण उत्सृजन्ति वत्सतरीरालभन्ते इति। तमिमं पञ्चशारदीयं विधत्ते। "प्रजापतिरकामयत बहोर्भूयान्त्स्यामिति। स एतं पञ्चशारदीयमपश्यत्। तमाहरत्। तेनायजत। ततो वै स बहोर्भूयानभवत्। यः कामयेत बहोर्भूयान्त्स्यामिति। स पञ्चशारदीयेन यजेत। बहोरेव भूयान् भवति" इति। 'बहोः' धनप्रजादिसमृद्धात् पुरुषादपि 'भूयान्' अत्यन्तसमृद्धः, पञ्चसु शरत्सु संवत्सरेषु अनुष्ठेयः 'पञ्चशारदीयः'। स्पष्टमन्यत्॥

तमेतं प्रशंसति। "मरुत्स्तोमो वा एषः। मरुतो हि देवानां भूयिष्ठाः" [१] इति। 'स्तोम'शब्देन स्तोमयुक्तो यज्ञ उपलक्ष्यते। मरुत्सञ्ज्ञकानां देवगणानां सम्बन्धी स्तोमः 'मरुत्स्तोमः', 'मरुतो हि', एतस्य अनुष्ठानेन 'देवानां', मध्ये अत्यन्तं समृद्धाः सम्पन्नाः॥

यागं वेदनञ्च प्रशंसति। "बहुर्भवति। य एतेन यजते। य उ चैनमेवं वेद" इति॥

संवत्सरसङ्ख्यां प्रशंसति।"पञ्चशारदीयो भवति। पञ्च वा ऋतवः संवत्सरः। ऋतुष्वेव संवत्सरे प्रतितिष्ठति। अथो पञ्चाक्षरा पङ्क्तिः। पाङ्क्तो यज्ञः। यज्ञमेवावरुन्धे" इति। 'पञ्चसङ्ख्या सामान्यादृतुद्वारा 'संवत्सरे', प्रतिष्ठिता, तथा पङ्क्तिच्छन्दोद्वारा यज्ञप्राप्तिः॥

स्तोमानामवधिं विधत्ते। "सप्तदशꣳ स्तोमा नातियन्ति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै" इति। त्रिवृदादि'स्तोमाः','सप्तदश'स्तोमं नातिक्रामन्ति। तमेतमनतिक्रामं सूत्रकारः स्पष्टमुदाजहार, उक्तमौरालभ्य दीक्षन्ते त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशोऽतिरात्र इति। पञ्चमे संवत्सरे वत्सतरो हि चरमभाविनौरालभ्य पश्चात् पञ्चरात्राय दीक्षयित्वा क्रमेण 'त्रिवृदग्निष्टोमादीनि पञ्चाहान्यनुष्ठेयानि, तेषु पञ्चस्वप्यहःसु एकविंशत्रिणवादयः स्तोमा न विद्यन्ते। सोऽयं सप्तदशस्तोमानतिक्रमः। आश्रावयेत्याद्यक्षरात्मकत्वेन 'प्रजापतिः सप्तदशः'। अतः तदनतिक्रमः 'प्रजापतेः प्राप्त्यै', भवति॥ इति दशमोऽनुवाकः॥ १०॥

अथैकादशोऽनुवाकः ।

दशमे पञ्चशारदीयविधिरुक्तः । एकादशे तदीयपशुविधिरुच्यते, तत्रादौ सामविशेषं विधत्ते । "अगस्त्यो मरुद्भ्य उक्ष्णः प्रौक्षत् । तानिन्द्र आदत्त । त एनं वज्रमुद्यत्याभ्यायन्त । तानगस्त्यश्चैवेन्द्रश्च कयाशुभीयेनाशमयताम् । ताञ्छान्तानुपाह्वयत । यत् कयाशुभीयं भवति शान्त्यै" इति । 'अगस्त्यः' महर्षिः, 'मरुतः', उद्दिश्य, 'उक्ष्णः' वृषभान्, पशून् 'प्रोक्षितवान्, 'तान्' मरुदर्थं प्रोक्षितान् पशून्, 'इन्द्रः', अपजहार । तदा 'ते' मरुतः, हस्तैः 'वज्रम्', उद्यम्य, 'एनम्' इन्द्रम्, अभिलक्ष्य हन्तुमागताः । तदानीं 'अगस्त्येन्द्रौ', 'कयाशुभीयाख्येन साम्ना 'तान्' मरुतः, 'शान्तान्', अकुरुताम् । तत इन्द्रो गतक्रोधान् 'तान्' मरुतः, स्वसमीपे 'समाहूतवान्, अतोऽस्मिन् पञ्चशारदीयशान्त्यर्थं कयाशुभीयं साम गायेत् ॥

अथ पशून् विधत्ते । "तस्मादेत ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ति । त्रयः प्रथमेऽहन्नालभ्यन्ते । एवं द्वितीये । एवं तृतीये [१] । एवं चतुर्थे । पञ्चोत्तमेऽहन्नालभ्यन्ते । वर्षिष्ठमिव ह्येतदहः" इति । यस्मादिन्द्रस्य मरुताञ्च पशुविषयमैकमत्यं सम्पन्नम्, 'तस्मादैन्द्रा मारुताः', कर्त्तव्याः । तेषाञ्च सवनीयानां सप्तदशानाम् उक्ष्णां पञ्चसु दिनेषु विभज्य प्रयोगः । तत्र प्रतिदिनं पशुत्रये सति द्वावधिकाववशिष्येते । अतस्ताभ्यां सह 'पञ्च' पशवः,'उत्तमेऽहनि', आलभ्याः, यस्मात्

'एतदहः', समाप्तिदिनत्वात् अतिशयेन प्रवृद्धं, तत्र हि उदीच्यादिदिग्विशेषा अतिरात्रत्वेन स्तोत्रविशेषाश्च सम्पद्यन्ते। तस्मात्तत्र पशुबाहुल्यं युक्तम् ॥

यजनवेदने प्रशंसति। "वर्षिष्ठः समानानां भवति। य एतेन यजते। य उ चैनमेवं वेद" इति। 'समानानाम्', मध्ये, 'वर्षिष्ठः' गुणैः अतिशयेन प्रवृद्धः ॥

पञ्चशारदीयं प्रशंसति। "स्वाराज्यं वा एष यज्ञः। एतेन वा एकयावा कान्दमः स्वाराज्यमगच्छत्। स्वाराज्यं गच्छति" इति। 'एषः' पञ्चशारदीयाख्यः 'यज्ञः', 'स्वाराज्य'स्वरूपः। तत्प्राप्तिहेतुत्वात्, 'एतेन' पञ्चशारदीयेनैव, पुरा 'कान्दमः', नाम कश्चिदृषिः 'स्वाराज्यं', प्राप्तवान्। कीदृशः, 'एकयावाः' एकेन वाहनेन यातीति 'एकयावाः', रथेनैव गच्छति न तु वाहनान्तरेण इत्यर्थः ॥

विधत्ते। "य एतेन यजते" [२] इति ॥

यागवेदने प्रशंसति। "य उ चैनमेवं वेद" इति ॥

पशुदेवतारूपमरुत्सम्बन्धेन क्रतुं प्रशंसति। "मारुतो वा एष स्तोमः। एतेन वै मरुतो देवानां भूयिष्ठा अभवन्। भूयिष्ठः समानानां भवति। य एतेन यजते। य उ चैनमेवं वेद" इति। यस्मादेतेन पञ्चशारदीयेन 'देवानां',मध्ये,'मरुतः', अतिशयेन बहुला 'अभवन्', तस्मात् 'एषः', त्रिवृत् पञ्चदशसप्तदश'स्तोम'युक्तो यागो 'मारुतः'। एतद्याजी तद्वेदी च 'समानानां', मध्ये अत्यन्तबहुलो भवति ॥

पञ्चसु संवत्सरेषु अनुष्ठानं प्रशंसति। "पञ्चशारदीयो वा एष यज्ञः। आपञ्चमात् पुरुषादन्नमत्ति। य एतेन यजते। य उ चैनमेवं वेद" इति। स्वात्मानमारभ्य पुत्रपौत्रादि-द्वारा यः 'पञ्चमः 'पुरुषः, तत्पर्य्यन्तं सर्व्वेषाम् 'अन्नसमृद्धि-र्भवति॥

सप्तदशं स्तोमावसानं प्रशंसति। "सप्तदशꣳ स्तोमा नाति-यन्ति। सप्तदशः प्रजापतिः। प्रजापतेरेव नैति" [३] इति। प्रजापतेः प्रकाशात् नातिगच्छतीत्यर्थः॥

अत्र मीमांसा, एकादशाध्यायस्य द्वितीयपादे चिन्तितम्।

उक्षोत्सर्गे किमुत्कर्षस्त्यागो वाद्योऽत्र पूर्व्ववत्।
अन्वहचित्वयोरुक्तमाहपञ्चत्वयोर्विधौ॥
वाक्यभेदाद्विशिष्टानामन्येषां कर्म्मणां विधिः।
तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम्॥

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित् सवविशेषः प-ञ्चाहः पञ्चसु संवत्सरेषु अनुष्ठेयः, तत्र प्रथमे संवत्सरे विशाखा-नक्षत्रयुक्तायाममावास्यायां सप्तदश स्तोपशवः सप्तदशोक्षाणश्च विहिताः, तेषु सर्व्वेषु पर्य्यग्निकृतेषु प्रोक्षितेषु सत्सु स्तोपशूना-मालम्भं पुरुषपशूनामुत्सर्गञ्चाम्नाय पुनर्द्वितीये तृतीयचतुर्थे संवत्सरे तथैवानुष्ठानमाम्नाय पश्चादिदमाम्नातम्, चीस्त्रीनि-त्येकैकस्मिन्नहनि आलभेरन् पञ्चोत्तमेऽहनीति। तत्र वत्सर-चतुष्टयगतासु चतुर्ष्वमावास्यासु योऽयं पुरुषपशूनामुक्षणा-मुत्सर्गः तत्र तत्कर्म्मशेषत्यागो न भवति, किन्तु उत्कर्षः। कुतः,

त्रींस्त्रीनितिवाक्येन आलम्भस्याभिधानात्। यथा पूर्व्वत्र प्राजापत्यानामालम्भोत्कर्षः, तथात्रापि युज्यत इति प्राप्ते ब्रूमः। किं त्रीनेकैकस्मिन् आलभेरन्नित्यत्र पर्य्यग्निकरणानन्तरभाविनं प्राप्तमालम्भनमनूद्यैकैकाहनि त्रित्वगुणयोर्विधौ वाक्यं भिद्येत, तथा पञ्चोत्तमे अहन्नित्यत्र उत्तमाहत्वं पञ्चत्वयोर्विधौ वाक्यभेदः। तस्मात् गुणद्वयविशिष्टानामन्येषां कर्म्मणां विधिरभ्युपेयः। तथा सत्यारण्यपशुत्यागेनैव सप्तदशानां पर्य्यग्निकरणप्रोक्षणाभ्यां समापनीयः॥

इत्येकादशोऽनुवाकः॥ ११॥

---

अथ द्वादशोऽनुवाकः।

एकादशे पञ्चशारदीया गताः, द्वादशे अग्निष्टुदाख्ये क्रतौ ग्रहाणां ग्रहकाले पुरोरुचोऽभिधीयन्ते। अतएव सूत्रकारेणोक्तम्, "तथाग्निःशुक्तस्य पुरोरुचोऽस्याजरासोऽग्न आयूंषि पवस इति ऐन्द्रवायवस्य द्वितीया मैत्रावरुणस्य तृतीयाश्विनस्य चतुर्थी पञ्चमो शुक्रामन्थिनोः षष्ठ्याग्रयणस्य अन्यामाग्नयीमुक्थ्यस्य नियुत्क्तीति ध्रुवस्य नियुत्वैन्द्राग्नैश्वदेवयोरग्निश्रिय इति तिस्रो मरुत्वतीयानां अधिश्रुत् कर्णत्युत्तरा माहेन्द्रस्य विश्वेषामदितिरिति तिस्र आदित्यग्रहस्योत्तमा माविचस्वेति"। तत्रैन्द्रवायवस्य या प्रथमा पुरोरुग्विद्यते तामाह।

"अस्याजरासो दमा मरित्राः। अर्चद्धूमासो अग्नयः पावकाः। श्वितीचयः श्वात्रासो भुरण्यवः। वनर्षदो वायवो न सोमाः" इति। 'अस्य' यजमानस्य, 'दमाः' यज्ञगृहाः, एवङ्गुणकाः सन्त्विति प्रार्थ्यते, किङ्गुणकाः, 'अजरासः' विनाशरहिताः, 'मरित्राः' म्रियन्ते मञ्ज्ञप्यन्ते पशवो येष्विति मरित्राः, पुनः पुनर्विशस्यमानपशुका इत्यर्थः। 'अर्चद्धूमासः' अर्चनीयधूमाः, 'अग्नयः' अग्निमन्तः, 'पावकाः', शोधकाः, 'श्वितीचयः' श्वितीं वृद्धिं अञ्चन्ति गच्छन्ति, प्रतिदिनमनुष्ठानवृद्धियुक्ता इत्यर्थः। अतएव 'श्वात्रासः' श्वेता निर्मला इत्यर्थः। 'भुरण्यवः' भरणकुशलाः, फलसम्पादका इत्यर्थः। 'वनर्षदः' वननीयफलप्राप्तिहेतवः, 'वायवो न' वायुसदृशाः, निरन्तरयज्ञप्रवृत्तियुक्ता इत्यर्थः। 'सोमाः' सोमयागयुक्ताः॥

अथ मैत्रावरुणग्रहस्य पुरोरुचमाह। "यजा नो मित्रावरुणा। यजा देवाꣳ ऋतं बृहत्। अग्ने यक्षि स्वन्दमम्" इति। हे ग्रह 'नः' अस्मदर्थं, 'मित्रावरुणा यजा' मित्रावरुणाख्यौ देवौ पूजय, तद्वारा 'देवान्', सर्व्वान्, 'यज', 'ऋतं' यज्ञरूपमिदं कर्म्म 'बृहत्' प्रौढरूपं वर्त्तते। अतो हे अग्ने 'स्वन्दमं' स्वकीयं ग्रहं, 'यक्षि' पूजय, कर्म्मनिष्पादनेन अलङ्कुर्व्वित्यर्थः॥

अथाश्विनग्रहस्य पुरोरुचमाह। "अश्विना पिबतꣳ सुतम्। दीद्यग्नी शुचिव्रता। ऋतुना यज्ञवाहसा" [१] इति। हे 'अश्विनौ', युवां 'सुतं, अभिषुतं सोमं 'पिबतं'। कीदृशौ, 'दीद्यग्नी' दीप्यमानाग्नियुक्तौ, 'शुचिव्रता' शुद्धकर्म्मयुक्तौ,

तथा 'यज्ञवाहसा', यज्ञनिर्व्वाहकौ 'क्रतुना' यज्ञोचितकाल-विशेषेण युक्ताविति शेषः॥

अथ शुक्रग्रहस्य पुरोरुचमाह। "द्वे विरूपे चरतः स्वर्थे। अन्यान्या वत्समुपधापयेते। हरिरन्यस्यां भवति स्वधावान्। शुक्रो अन्यस्यां ददृशे सुवर्चाः" इति। अहश्च रात्रिश्चेत्येते 'द्वे' विरूपे, शुक्लकृष्णत्वात्, 'विरूपे' विषमरूपे, 'स्वर्थे' सुप्रयोजने, 'चरतः' पर्य्यावर्त्तेते। 'अन्यान्या' तयोरेकैका पृथक् पृथक् एव 'वत्समुपधापयेते' वत्समदृशं स्वस्वोचितं देवम्, 'उपधापयेते' स्तनपानेनेव प्रीणयतः, तयोर्मध्ये 'अन्यस्यां' रात्रिरूपायां मातरि, वत्सस्थानीयः, 'हरिः' हरणशीलः, अग्निः, 'स्वधावान्' अन्नवान् भवति। 'अन्यस्याम्' अहःसञ्ज्ञिकायां मातरि, वत्सस्थानीयः 'शुक्रः', शुभ्रः, 'सुवर्चाः' शोभनदीप्तिः आदित्यः, अन्नवान् दृश्यते। तथा च अग्निहोत्रब्राह्मणे श्रुतम्, तस्मादग्नये सायं हूयते सूर्य्याय प्रातरिति। एवंविधसूर्य्याग्निरूपोऽयं शुक्रग्रह इत्यर्थः॥

अथ मन्थिग्रहस्य पुरोरुचमाह। "पूर्व्वापरं चरतो मायैतौ। शिशू क्रीडन्तौ परियातो अध्वरम्। विश्वान्यन्यो भुवनाभिचष्टे। ऋतूनन्यो विदधज्जायते पुनः" इति। 'एतौ' सूर्य्यचन्द्रमोरूपौ मातृस्थानीयाया दिवः, 'शिशू' बालकौ, 'पूर्व्वभागमपरभागञ्च प्रति'सञ्चरतः', उदयाय पूर्व्वभागः, अस्तमयाय पश्चिमभागः, एवंविधसञ्चारे पारमेश्वरी 'मायैव साधनं, सा हि पारमेश्वरी शक्तिः सूर्य्याचन्द्रमसौ निर्म्माय

स्वस्वव्यापारे स्थापितवती, तौ च शिशू स्वकीयलीलया 'क्रीडन्तौ', अस्मदीयम् 'अध्वरम्, 'परियातः' प्राप्नुतः, तयोर्मध्ये 'अन्यः' सूर्य्यः, 'विश्वानि भुवनानि' सर्व्वान् लोकान्, 'अभिचष्टे' सर्व्वतः प्रकाशयति। 'अन्यः' चन्द्रमाः, 'ऋतून्' वसन्तादीन्, 'विदधत्' निष्पादयन्, 'पुनर्जायते' तत्तच्छुक्लप्रतिपदि पुनः पुनरुत्पद्यते, एवंविधचन्द्ररूपोऽयं मन्थिग्रहः। तथा च श्रुतम्, असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थीति॥

अथाग्रयणस्य पुरोरुचमाह। "त्रीणि शतात् त्रीसहस्राण्यग्निम्। त्रिꣳशच्च देवा नव चासपर्य्यन् [२]। औक्षन् घृतैरास्तृणन् बर्हिरस्मै। आदिद्धोतारं न्यसादयन्त" इति। यद्यपि हविर्भुजः त्रयस्त्रिंशद्देवाः, तथापि योगैश्वर्य्यकल्पितलीलाविग्रहभेदात् 'शतत्रयं 'सहस्रत्रयं 'त्रिंशन्नव चेत्येतावन्तो देवा भवन्ति। ते च 'देवाः' 'अग्निम्', 'असपर्यन्' परिचितवन्तः, त्रयस्त्रिंशत्सङ्ख्याकानामेव मुख्यदेवतानां इतरे लीलाविग्रहाः। इत्यमुमर्थं वाजसनेयिनः साकल्यब्राह्मणे समामनन्ति, महिमान एवैषां ये ते त्रयस्त्रिंशत्त्वेव देवा इति। ते देवाः कथं परिचरन्तीति तदुच्यते, 'घृतैः' आज्यैः, 'औक्षन्' उपरिसिञ्चन्ति जुह्वतीत्यर्थः। 'अस्मै' अग्न्यर्थम्, 'बर्हिरास्तृणम्' वेद्यां बर्हिरास्तृणन्ति, 'आदित्' अनन्तरमेव, एनमग्निं तत्र 'होतारम्', अनुमन्यमानाः 'न्यषादयन्त' निषण्णं कुर्व्वन्ति॥

अथैन्द्राग्नस्य पुरोरुचमाह। "अग्निनाग्निः समिध्यते। कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः" इति। इन्द्रसहितेन

'अग्निना' गृहदेवतारूपेण, अयमाहुत्याधारः 'अग्निः', 'समिध्यते' सम्यक् दीप्यते। कीदृशोऽग्निः, 'कविः' हविर्हवनप्रकारं विद्वान्, 'गृहपतिः' यज्ञगृहस्वामी, 'युवा' सर्व्वदा तरुणः, देवार्थं हव्यं वहतीति 'हव्यवाट्', जुहूरेव आस्यं मुखं यस्यासौ 'जुह्वास्यः', जुहूगतं हविरयं भक्षयतीत्यर्थः॥

अथ वैश्वदेवगृहस्य पुरोरुचमाह। "अग्निर्देवानां जठरम्। पूतदक्षः कविक्रतुः। देवो देवेभिरागमत्" इति। योऽयम् 'अग्निः', स एव 'देवानां', 'जठरं' उदरस्थानीयः, पूतस्यासौ दक्षश्चेति 'पूतदक्षः' 'पूतः' शुद्धः,'दक्षः' कर्म्मनिष्पादनकुशलः, 'कविक्रतुः' कवीनां विदुषां देवानां सम्बन्धी क्रतुर्यागो यस्यासौ 'कविक्रतुः, तादृशः 'देवः' अग्निः, 'देवेभिः' अन्यैः देवैः सह 'आगमत्' इह कर्म्मण्यागच्छतु॥

अथ मरुत्वतीयगृहाणां यास्तिस्रः पुरोरुचः तासां मध्ये प्रथमामाह। "अग्निश्रियो मरुतो विश्वकृष्टयः। आ त्वेषमुग्रमव ईमहे वयम् [३]। ते स्वानिनो रुद्रिया वर्षनिर्णिजः। सिꣳहा न हेषक्रतवः सुदानवः" इति। य एते 'मरुतः', ते 'अग्निश्रियः विश्वकृष्टयः' च अग्निं श्रयन्ते सेवन्ते इत्यग्निश्रियः, ते हविःस्वीकरणार्थम् अग्निमाश्रयन्ति, विश्वकृष्टयो मनुष्या येषां ते 'विश्वकृष्टयः, सर्व्वैर्मनुष्यैः पूज्या इत्यर्थः। तादृशानां मरुतां 'अवः' रक्षणम्, 'आ' समन्तात्, 'वयम्', ईमहे' प्राप्नुमः। ते अस्मान् रक्षन्ति, कीदृशं रक्षणं 'त्वेषं' दीप्तिमत्, 'उग्रं' विरोधिनां भयङ्करं, यथा दीप्त्या विरोधितमो नश्यति, एवमेव

तदीयरक्षणजन्येन तेजसा अस्मद्विरोधिनो नश्यन्तीत्यर्थः । 'ते' मरुतो वायुविशेषाः, 'स्वानिनः' वृष्टिवेलायां स्वानयुक्ताः गर्ज्जनयुक्ताः, रुद्रो वैद्युताग्निः । रुद्रो वा एष यदग्निरिति श्रुतेः । 'रुद्रा' वैद्युताग्नियुक्ताः, वर्षेण निर्णजन्ति भूमिं शोधयन्तीति 'वर्षनिर्णिजः', 'सिंहा न' सिंहा इव 'हेषक्रतवः' शब्दकारिणः, उत्साहेन सिंहनादं कुर्व्वन्तीत्यर्थः । 'सुदानवः' शोभनफलस्य दातारः ॥

अथ द्वितीयामाह । "यदुत्तमे मरुतो मध्यमे वा । यद्वावमे सुभगासो दिविष्ठ । ततो नो रुद्रा उतवान्वस्य । अग्ने वित्ताद्धविषो यद्यजामः" इति । हे 'मरुतः' यूयं 'यदुत्तमे' स्थाने स्थिताः, यदि 'वा मध्यमे', स्थिताः, 'यद्वावमे' अत्यन्तनिकृष्टे स्थाने स्थिताः, अथवा 'सुभगासः' सौभाग्ययुक्ताः सन्तः, 'दिवि' द्युलोके स्थिताः । हे 'रुद्राः' दुःखद्रावियो मरुतः, 'ततः' युष्मदीयात् स्थानात् 'उतवान', यस्मात् स्थानात् 'नोऽनु' अस्माननुगच्छत, हे 'अग्ने', 'यद्धविः', वयं 'यजामः', 'अस्य हविषः', सारं 'वित्तात्' जानीहि ॥

अथ तृतीयामाह । "ईडे अग्निꣳ स्ववसन्नमोभिः । इह प्रसत्तो विचयत् कृतं नः । रथैरिव प्रभरे वाजयद्भिः । प्रदक्षिणिन्मरुताꣳ स्तोममृध्याम्" [४] इति । 'स्ववसं' सुष्ठु रक्षकम्, 'अग्निं', 'नमोभिः' नमस्कारैः सह, 'ईडे' स्तुतिं कुर्व्वे, सोऽग्निः 'इह' कर्म्मणि, 'प्रसत्तः' प्रकर्षेण समागतः सन्, 'नः' अस्माभिः, यत् कृतं कर्म्म तत् 'विचयत्' विचिनुयात्, 'वाजयद्भिः'

अन्नमिच्छद्भिः, ऋत्विग्भिः सहितोऽहं 'रथैरिव प्रभरे' यथा रथैर्युद्धसाधनानि प्रकर्षेण हरन्ति, एवमहं हवींषि प्रकर्षेण हरामि, 'प्रदक्षिणिन्' प्रदक्षिणयन् भक्त्या प्रदक्षिणं कुर्व्वन्, अहं 'मरुतां', सम्बन्धिनं 'स्तोमं' स्तोत्रयुक्तं यज्ञम्, 'ऋध्यां' समृद्धं कुर्य्याम् ॥

अथ माहेन्द्रग्रहस्य पुरोरुचमाह। "श्रुधि श्रुत्कर्ण वह्निभिः। देवैरग्ने सयावभिः। आसीदन्तु बर्हिषि। मित्रो वरुणो अर्य्यमा। प्रातर्य्यावाणो अध्वरम्" इति। हे 'अग्ने', 'श्रुत्कर्ण' श्रुत्स्वत्कर्ण विज्ञाप्यस्य श्रोतः, 'वह्निभिः' हविषो वोढृभिः, 'सयावभिः' सहगमनशीलसहितैः देवैः सह, त्वं 'श्रुधि', अस्मद्विज्ञाप्यं शृणु, 'अध्वरं' यज्ञं, 'प्रातर्य्यावाणः' प्रातःकाले गन्तारः, 'मित्रादयस्त्रयः बर्हिषि' अस्मदीययज्ञे 'आसीदन्तु' आगत्य तिष्ठन्तु ॥

अथादित्यग्रहस्य तिस्रः पुरोरुचः, तत्र प्रथमामाह। "विश्वेषामदितिर्यज्ञियानाम्। विश्वेषामतिथिर्मानुषाणाम्। अग्निर्देवानामव आवृणानः। सुमृडीको भवतु विश्ववेदाः" इति। अयम् 'अग्निः', 'सुमृडीकः' सुखहेतुः, 'भवतु'। कीदृशोऽग्निः, 'यज्ञियानां' यज्ञयोग्यानां, 'विश्वेषां' सर्व्वेषां ऋत्विजाम्, 'अदितिः' अखण्डयिता, मातृवत् पालक इत्यर्थः, तथा 'विश्वेषां' सर्व्वेषां 'मानुषाणाम्' 'अतिथिः' अतिथिवत् पूजनीयः, 'देवानां', सर्व्वेषां मध्ये 'अवः' अस्मद्रक्षणम् 'आवृणानः' सर्व्वत्र प्रार्थयमानः, 'विश्ववेदाः' विश्वस्य वेदिता ॥

अथ द्वितीयामाह। "त्वे अग्ने सुमतिं भिक्षमाणाः [५]। दिवि श्रवो दधिरे यज्ञियासः। नक्ता च चक्रुरुषसा विरूपे। कृष्णञ्च वर्णमरुणञ्च सन्धुः" इति। हे 'अग्ने', 'यज्ञियासः' यज्ञार्हाः ऋत्विग्यजमानाः, 'त्वे' त्वयि, 'सुमतिं' शोभनबुद्धिं, त्वत्सेवापरां 'भिक्षमाणाः' याचमानाः, 'दिवि' द्युलोके, 'श्रवः' कीर्त्तिं, 'दधिरे' सम्पादितवन्तः, त्वां सेवित्वा देवेषु कीर्त्तिं प्राप्ता इत्यर्थः। 'उषसा' उषःकालेन सह, 'नक्तञ्च' रात्रिमपि, चकारात् अहस्र, 'विरूपे' विलक्षणरूपयुक्ते, 'चक्रुः' कृतवन्तः। तदेव कथमिति तदुच्यते, 'कृष्णञ्च वर्णं' रात्रेः कृष्णरूपम् 'अरुणञ्च', 'उषसः नक्तरूपं' चकाराभ्याम् अह्नः शुक्लरूपञ्च 'सिन्धुः' सम्पादितवन्तः। यज्ञानुष्ठानद्वारा यजमानद्वारा वा यज्ञेन तुष्टा देवा वा तादृशं रूपं कृतवन्त इत्यर्थः॥

अथ तृतीयामाह। "त्वामग्न आदित्यास आस्यम्। त्वां जिह्वाꣳ शुचयश्चक्रिरे कवे। त्वाꣳ रातिषाचो अध्वरेषु सश्चिरे। त्वे देवा हविरदन्त्याहुतम्" इति। हे 'अग्ने', 'आदित्यासः' एते आदित्याः, 'त्वाम्', 'आस्यं' मुखं, 'चक्रिरे'। त्वयि हुतस्य भक्षणात्, हे 'कवे' विद्वन् अग्ने, 'शुचयः' शुद्धाः, अन्येऽपि देवाः, 'त्वां', स्वकीय'जिह्वां', चक्रिरे। 'रातिं' फलदानं 'सचन्ते' समवनयन्तीति 'रातिषाचः' फलप्राप्तिकामा इत्यर्थः। तादृशा यजमानाः त्वाम् अग्निम् 'अध्वरेषु' यागेषु, 'सश्चिरे' फलदानाय प्राप्तवन्तः। 'देवाः', सर्व्वेऽपि, 'त्वे' त्वयि, 'आहुतं' सर्व्वतो हुतं, 'हविः,' इदम् 'अदन्ति'॥

अथ सावित्रस्य पुरोरुचमाह। "नि त्वा यज्ञस्य साधनम्। अग्ने होतारमृत्विजम्। वनुष्वद्देव धीमहि प्रचेतसम्। जीरं दूतममर्त्यम्"[६] इति। हे 'अग्ने', 'देव' 'त्वां', 'निधीमहि' नितरां ध्यायामहे। कीदृशं, 'यज्ञस्य', 'साधनं' होमद्वारा निष्पादकं, 'होतारं' देवानाम् आह्वातारम्, अतएव 'ऋत्विजम्' ऋत्विक्समानं 'प्रचेतसं' प्रकृष्टज्ञानयुक्तं, 'जीरं' जीवनप्रदं, 'दूतं' हितार्थं यतमानम्, 'अमर्त्यं' मरणरहितं, 'वनुष्वत्' इति क्रियाविशेषणम्। परिचरणवद्यथा भवति तथा ध्यायामेत्यर्थः॥

अत्र विनियोगसङ्ग्रहः।

अस्या जरा पुरोरुक् स्यादग्निरुत्येन्द्रवायवे।
यजेति मैत्रावरुणे अश्विनेत्याश्विनेग्रहे॥
द्वे विरूपे तु शुक्रस्य ग्रहे पूर्व्वेऽपि मन्थिनो।
त्रीणित्याग्रयणेत्यग्निनेत्यैन्द्राग्नग्रहे भवेत्॥
अग्निर्देवा वैश्वदेवे ह्यग्निश्चिय इति त्रयम्।
ज्ञेया मरुत्वतीयेषु माहेन्द्रेषु त्रुधित्यसौ॥
विश्वेषां तिस्र आदित्ये नीत्वा सावित्रके ग्रहे।
अनुवाके द्वादशेऽस्मिन्मन्त्रा द्वादश वर्णिताः॥

अथ मीमांसा, दशमाध्यायस्य चतुर्थे पादे चिन्तितम्।

आग्नेयेषु ग्रहेषूहो नास्ति वा स्तुतशस्त्रयोः।
संस्कारत्वादस्ति मैवमर्थकर्म्मत्वनिर्णयात्॥

अग्निस्तुदाख्य एकाहे श्रूयते, आग्नेया ग्रहा भवन्तीति। तेषु चोदकप्राप्तयोः नानादेवत्ययोः स्तुतशस्त्रयोः संस्कारकर्म्मत्व-

भ्रमेण अस्त्यूह इति वदन्तं प्रति एतदुत्तरम्; द्वितीयाध्याये तयोरर्थकर्मत्वस्य निर्णीतत्वात् नास्त्यूह इति ॥

इति द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

द्वादशेऽनुवाके अग्निष्टुद्यागे ग्रहाणां पुरोरुचोऽभिहिताः। अथ त्रयोदशे इन्द्रस्तुद्यागे ग्रहाणां पुरोरुचोऽभिधीयन्ते। एतच्च सूत्रे स्पष्टमभिहितं, "इन्द्रस्तुतेन्द्रस्तोमेन उक्थेन्द्रियकामो वीर्य्यकामो वा यजेत ऐन्द्रियः पुरोरुचः तिष्ठा हरीकस्य वृषेत्यैन्द्रवायवस्तृतीया मैत्रावरुणस्य चतुर्थाश्विनस्य पञ्चमी षष्ठी शुक्रामन्थिनोः सप्तम्याग्रयणस्य नित्योक्थ्यस्य नियुनक्तिध्रुवैन्द्राग्नवैश्वदेवानां नीता मरुत्वतीयमाहेन्द्राणाम् आ नो विश्वाभिरिति तिस्र आदित्यगृहस्योत्तमा सावित्रस्येति"। तत्रैन्द्रवायवस्य प्रथमां पुरोरुचमाह। "तिष्ठा हरी रथ आ युज्यमाना याहि। वायुर्न नियुतो नो अच्छ। पिबास्यन्धो अभिसृष्टो अस्मे। इन्द्र स्वाहा ररिमा ते मदाय" इति। हे 'इन्द्र', 'युज्यमाना' 'रथे', सम्बन्ध्यमानौ, 'हरी' अश्वौ, 'आतिष्ठ' अधितिष्ठ, 'नः' अस्मान्, 'अच्छ' अभिलक्ष्य 'आयाहि' आगच्छ। तत्र दृष्टान्तः, 'वायुर्न नियुतः' यथा नियुत्सञ्ज्ञकानश्वान् अभिलक्ष्य वायुर्याति तद्वत् आगत्य च 'अस्मे' अस्माभिः 'अभिसृष्टः' प्रेरितस्त्वम् 'अन्धः' अन्नरूपं सोमं, 'पिबासि' पीतवान्

भव। हे इन्द्र 'ते मदाय' तव हर्षार्थं 'स्वाहा रश्मि' स्वाहा-कृतं हविर्ददिम॥

अथ तत्रैव द्वितीयां पुरोरुचमाह। "कस्य वृषा सुते सचा। नियुत्वान् वृषभो रणत्। वृत्रहा सोमपीतये" इति। 'कस्य' प्रजापतेः सम्बन्धि, 'वृषा' इन्द्रः, 'सुते' अभिषुते सोमे, 'सचा' सम्बद्धः 'नियुत्वान्' नियुन्नामकैरश्वैः युक्तो वायुः,'वृषभो रणत्' यथा वृषभो दृप्तो रणति तथा अयं वायुस्तृप्तो रणति गर्ज्जति, 'वृत्रहा' इन्द्रश्च, 'सोमपीतये' सोमपानाय रणति॥

अथ मैत्रावरुणग्रहस्य पुरोरुचमाह। "इन्द्रं वयं महाधने। इन्द्रमर्भे हवामहे। युजं वृत्रेषु वज्रिणम्" [१] इति। 'वयं' यज-मानाः, 'महाधने' बहुधनसाध्ये प्रौढकर्म्मणि, 'इन्द्रं', 'हवामहे' आह्वयामः। 'अर्भे' स्वल्पेऽपि कर्म्मणि, 'इन्द्रं', 'हवामहे' आह्व-यामः। कीदृशमिन्द्रं, 'युजं' कर्म्मद्वयेऽपि योग्यम्, 'वृत्रेषु' शत्रुषु प्राप्तेषु, 'वज्रिणं' वज्रहस्तम्॥

अथाश्विनग्रहस्य पुरोरुचमाह। "द्विताया वृत्रहन्तमः। विद इन्द्रः शतक्रतुः। उपनो हरिभिः सुतम्" इति। द्वयो-र्लोकयोः समूहो द्विता तस्यां 'द्वितायां', 'वृत्रहन्तमः' अति-शयेन वैरिघाती, 'शतक्रतुः' शतसङ्ख्याकाश्वमेधयुक्तः, यः 'इन्द्रः', विद्यते सोऽयमिन्द्रो 'हरिभिः' अश्वैः सह, 'उपनः' अस्माकं समीपं प्राप्य, 'सुतम्' अभिषुतं सोमं 'विदे' लब्धवान्॥

अथ शुक्रग्रहस्य पुरोरुचमाह। "स सूर आ जनयन् ज्यो-तिरिन्द्रम्। अया धिया तरणिरद्रिबर्हाः। ऋतेन शुष्मीन-

वमानो अर्कैः। उस्त्रिधो अस्तो अद्रिर्विभेद" इति। 'सः' शुक्रग्रहरूपः, 'स्वरः' आदित्यः, 'ज्योतिः' प्रकाशम्, 'जनयन्', 'इन्द्रम्', आगच्छतु, 'अया धिया' अनया मदनुग्रहबुद्ध्या, 'तरणिः' त्वरमाणः, 'अद्रिबर्हाः' पर्व्वतानां शत्रूणां निवर्हिता, अभिभविता भवति। 'ऋतेन' यज्ञेन अनुष्ठितेन, 'शुष्मीन्' बलवतो अस्मान्, 'अर्कैः' अर्चनीयैः फलैः, 'अवमानः' पालयमानः, वर्त्तते, 'अस्तः' निरसनकुशलः, 'अद्रिः' पर्व्वतसमानः, इन्द्रः 'उस्त्रिधः' उत्कर्षेण आगच्छत, शत्रून् 'विभेद' विशेषेण दारितवान्॥

अथ मन्थिग्रहस्य पुरोरुचमाह। "उत त्यदाश्वश्वियम्। यदिन्द्रनाहुषीष्वा। अग्रे विक्षु प्रतीदयत्" [२] इति। हे 'इन्द्र' 'नाहुषीषु' नहुषस्य राज्ञः सम्बन्धिनीषु, 'विक्षु' प्रजासु, 'यत्' धनं, 'प्रतीदयत्' प्रत्येकमेव प्राप्तमासीत्, तादृशम् 'आश्वश्वियमुत' आशुगामि अश्वसमूहयुक्तम्, 'आ' 'त्यत्' त्वमेव स्वभक्तेभ्यः आनयसि॥

अथाग्रयणस्य पुरोरुचमाह। "भरेष्विन्द्रं सुहवꣳ हवामहे। अꣳहोमुचꣳ सुकृतं दैव्यं जनम्। अग्निं मित्रं वरुणꣳ सातये भगम्। द्यावापृथिवी मरुतः स्वस्तये" इति। 'सुहवं' सुखेनाह्वातुं शक्यम्, इन्द्रं 'भरेषु' भरणीयेषु कर्म्मसु, 'हवामहे' आह्वयामः। अथ 'अग्निमित्रावरुणान्', 'भगम्' आदित्यञ्च, 'सातये' धनलाभाय आह्वयामः। तथा 'द्यावापृथिव्यौ', 'मरुतः' च 'स्वस्तये' क्षेमाय, आह्वयामः॥

अथैन्द्राग्नस्य पुरोरुचमाह। "महि त्रं पुरु चन्द्रं विविद्वान्। आदित्सखिभ्यश्च रथꣳ समैरत्। इन्द्रो नृभिरजनद्दीद्यानः साकम्। सूर्य्यमुषसं गातुमग्निम्" इति। अयम्,'इन्द्रः','विविद्वान्' विविधद्रव्यजातं जानन्,'आदित्' अनन्तरमेव,'सखिभ्यः' सखिसदृशेभ्यो यजमानेभ्यः,'महि' प्रौढं,'चेत्रं','पुरु चन्द्रं' बहुलमाह्लादकारि,धनञ्च 'रथं, चरणशीलं गोमहिषादि च, 'समैरयत्' सम्यक् प्रेरितवान्, दत्तवानित्यर्थः। सोऽयमिन्द्रो 'दीद्यानः' दीप्यमानः, 'नृभिः' मनुष्यैः, ऋत्विग्भिः सार्द्धम्, सूर्य्यादीन् 'अजनत्' अजनयत्, उत्पादितवान्, 'गातुं' गमनशीलो वायुः तं॥

अथ वैश्वदेवग्रहस्य पुरोरुचमाह। "उरुन्नो लोकमनुनेषि विद्वान्। सुवर्वज्ज्योतिरभयꣳ स्वस्ति [३]। ऋष्वा त इन्द्र स्थविरस्य बाहू। उपस्थेयाम शरणा बृहन्ता" इति। हे 'इन्द्र', त्वं 'विद्वान्' सर्व्वं जानन्, 'नः' अस्मदर्थम्, 'उरुं' विस्तीर्णं,'लोकम्','अनुनेषि,अनुक्रमेण सम्पादयसि। तथा 'सुवर्व्वत्' स्वर्गयुक्तं, तत्साधनभूतमित्यर्थः। 'अभयं' भयरहितं, 'स्वस्ति' क्षेमकरं, 'ज्योतिः' अग्निस्वरूपं, 'ऋष्व' प्राप्नुहि। 'स्थविरस्य' चिरकालीनत्वेन वृद्धसदृशस्य, 'ते' तव, 'बाहू' 'उपस्थेयाम' उपस्थानं करवाम, त्वदीयं बाहुद्वयमनुग्रहबुद्ध्या यथा अस्मच्छिरसि स्थापयसि, तथा वयं त्वां भजम। कीदृशौ बाहू, 'शरणाः' रक्षितारौ, 'बृहन्ता' गुणाधिकौ॥

अथादित्यग्रहस्य पुरोरुचः, तत्र प्रथमामाह। "आ नो

विश्वाभिरूतिभिः सजोषाः । ब्रह्म जुषाणो हर्य्यश्व याहि । वरीवृजत् स्थविरेभिः सुशिप्र । अस्मे दधद्वृषणꣳ शुष्ममिन्द्र" इति । हरिनामकावश्वौ यस्यासौ 'हर्य्यश्व', शोभने शिप्रे हनू यस्यासौ 'सुशिप्र', तादृश हे 'इन्द्र', त्वं 'ब्रह्म जुषाणः' परिवृढमिदं कर्म्म सेवमानः, 'सजोषाः' अस्माभिः सह समानप्रीतिः, सन्, 'विश्वाभिः' 'ऊतिभिः' समस्तैः रचणैः सहितः 'नः' अस्मान् प्रति 'आयाहि' आगच्छ । किं कुर्व्वन्, 'स्थविरेभिः' 'वरीवृजत्' प्रवृद्धैरुपायैः वर्ज्जयितव्यान्छत्रूनत्यर्थं वर्ज्जयन्, तथा 'वृषणं' कामवर्षणहेतुं, 'शुष्मं' बलं, 'अस्मे दधत्' अस्मासु सम्पादयन् ॥

अथ द्वितीयामाह । "इन्द्राय गाव आशिरम् । दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरे विदत्" इति । 'वज्रिणे' वज्रयुक्ताय, 'इन्द्राय' इन्द्रार्थं, 'आशिरं' ईषन्मथितं दधिहेतुभूतं, 'मधु' मधुरं चीरं, गावो 'दुदुह्रे' दुग्धवत्यः । 'यत्सीं' यदेव चीरं, 'उपह्वरे' अस्मिन् प्रवृत्ते अध्वरे वर्त्तमाने, इन्द्रो 'विदत्' अलभ्यवान्, तत् चीरं दुदुह्रे इति पूर्व्वत्रान्वयः ॥

अथ तृतीयामाह । "तास्ते वज्रिन् धेनवो जोजयुर्नः । गभस्तयो नियुतो विश्ववाराः । अहरहर्भूय इज्जोगुवानाः । पूर्णा इन्द्र चुमतो भोजनस्य" इति । हे 'वज्रिन्' 'वज्रयुक्त इन्द्र, 'ते' त्वदर्थं, 'ताः' पूर्व्वोक्ता धेनवः, 'नः' अस्मान्, 'जोजयुः' शीघ्रमेव प्राप्ताः । कीदृश्यो धेनवः, 'गभस्तयः' दीप्तिमत्यः, पुष्टशरीरा इत्यर्थः । 'नियुतः' नियमेन चीरादेर्मिश्रयित्र्यः,

'विश्ववाराः' स्वकीयक्षीरेण क्षुधादिरूपं विश्वं सर्व्वमपि उपद्रवं वारयन्तीति 'विश्ववाराः', 'अहरहः' दिने दिने 'भूय इत्' भूयिष्ठमेव, 'जोगुवानाः' शब्दयन्त्यः क्षीरपूर्णस्तनत्वेन दोहनार्थं वत्समाकारयितुं हम्भारवं कुर्व्वन्त्य इत्यर्थः। 'क्षुमतः' शब्दवतो भोजनस्य, 'पूर्णाः' पूरयित्र्यः, क्षीरस्य बाहुल्ये सति चुलुकेन पुनः पुनर्भोजने हि महान् शब्द उत्पद्यते॥

अथ सावित्रग्रहस्य पुरोरुचमाह। "इमां ते धियं प्रभरे महो महीम्। अस्य स्तोत्रे धिषणा यत्त आनजे। तमुत्सवे च प्रसवे च सासहिम्। इन्द्रं देवासः शवसा मदन्ननु" [४] इति। हे इन्द्र 'महो' महनीयस्य, 'ते' तव, 'महीं' महतीं, 'इमाम्' अनुग्रहरूपां, 'धियं', 'प्रभरे' प्रकर्षेण धारयामि। 'अस्य' 'ते' ईदृशस्य तव, सम्बन्धि 'यत्' स्तोत्रं, 'आनजे' तद्गुणानभिव्यञ्जयति, तस्मिन् 'स्तोत्रे', 'धिषणा' मदीयबुद्धिः, प्रवर्त्ततामिति शेषः। 'उत्सवे' अस्मिन् कर्म्मानुष्ठानरूपे, 'प्रसवे च' तत्फलोत्पादने, 'सासहिं' अत्यन्तमहिष्णुं, सर्व्वदा युक्तमित्यर्थः। तादृशं,'शवसा' बलेन, युक्तं 'तम्' 'इन्द्रं', 'देवासः' सर्व्वे देवाः, 'अनु' 'मदन्' अनुमोदन्ताम्॥

अत्र विनियोगसङ्ग्रहः।

इन्द्रस्तुन्नामके यागग्रहणाः स्युः पुरोरुचः।
तिष्ठाकस्यैन्द्रवायव्यमिन्द्रश्च तदनन्तरम्॥
द्वितीय इत्याश्विने स्यात् स सूरः शुक्रमश्नुते।
उत त्यन्मन्थिनाम्नि स्यादूरेभ्याग्रयणग्रहे॥

मह्यीत्यैन्द्राग्नके वैश्वदेवे त्वन्न इत्यमौ।
आदित्ये तिस्र आन स्तुरिमां सावित्रकग्रहे।
त्रयोदशेऽनुवाकेऽस्मिन् मन्त्रा उक्तास्त्रयोदश: ॥

इति त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

त्रयोदशे इन्द्रसुत्रामके क्रतौ ग्रहाणां पुरोरुच उक्ताः। चतुर्दशे अप्तोर्यामविधिरुच्यते, तं विधातुमाख्यानमाह। "प्रजापतिः पशूनसृजत। तेऽस्मात् सृष्टाः पराञ्च आयन्। तानग्निष्टोमेन नाप्नोत्। तानुक्थ्येन नाप्नोत्। तान् षोडशिना नाप्नोत्। तान् रात्रिया नाप्नोत्। तान्त्सन्धिना नाप्नोत्। सोऽग्निमब्रवीत्। इमान्म ईप्सेति। तानग्निस्त्रिवृता स्तोमेन नाप्नोत् [१]। स इन्द्रमब्रवीत्। इमान्म ईप्सेति। तानिन्द्रः पञ्चदशेन स्तोमेन नाप्नोत्। स विश्वान् देवानब्रवीत्। इमान्म इप्सतेति। तान् विश्वे देवाः सप्तदशेन स्तोमेन नाप्नुवन्। स विष्णुमब्रवीत्। इमान्म ईप्सेति। तान् विष्णुरेकविꣳशेन स्तोमेनाप्नोत्। वारवन्तीयेनावारयत। इदं विष्णुर्विचक्रम इति व्यक्रमत" इति। प्रजापतिना सृष्टाः पशवो यदा पुनरावृत्तिरहिताः प्रजापतेः सकाशाद्गताः, तदा प्रजापतिः 'अग्निष्टोमादिकं क्रमेणानुष्ठाय 'तान्' पशून्, प्राप्तुं 'न', शक्तोऽभूत्।

यत् 'रात्रिया' अतिरात्रक्रतुगतैः रात्रिपर्य्यायैः स्तोत्रैः,'सन्धिना', अतिरात्रावसाने त्रिवृद्राथन्तरः सन्धिरिति यत् स्तोत्रं विहितं तेन स्तोत्रेण। एतैरुपायैः पशून् प्राप्तुमशक्तः प्रजापतिः 'अग्निं', प्रति 'अब्रवीत्'। हे अग्ने 'मे' मदर्थं, 'इमान्' पशून्, 'ईप्स' आप्तुमिच्छ, तदर्थमुद्योगं कुरु इति। ततः सः 'अग्निः' तदर्थं 'त्रिवृत्स्तोममनुष्ठाय तेन प्राप्तुं शक्तो नाभूत्। एवमिन्द्रो विश्वे देवाश्च। 'विष्णुः', तु 'एकविंशस्तोममनुष्ठाय तेन पशून् प्राप्य 'वारवन्तीयेन' साम्ना, पुनर्गमनं निवारयामास। अतोऽयं विष्णुः, 'इदं विष्णुरिति मन्त्रेणोक्तो यो विक्रमः तं कृतवान्, तमेव पशुप्राप्तिरूपं विक्रमं मन्त्रोऽवादीदित्यर्थः॥

इदानीं अप्तोर्यामक्रतुं विधत्ते।"यस्मात् पशवः प्र प्रेव भ्रंशेरन्। स एतेन यजेत" इति। एकः 'प्र'शब्दः प्राथम्यवाची, अपरः प्रकर्षवाची। प्रथममेव पशवो 'यस्मात्' पुरुषात्, 'प्रेव भ्रंशेरन्' प्रकर्षेण भ्रष्टा इव भवन्ति, 'सः' पुरुषः, 'एतेन' अप्तोर्यामेन स्तोमेन, 'यजेत'। तत्स्वरूपं सूत्रकारेण स्पष्टमुक्तम्, "अप्तोर्यामश्चेत् सन्धिचममानुनयंश्चतुर्भ्यश्चमसगणेभ्यो राजानमितिरेचयतीति"। सन्धिस्तोत्रपर्य्यन्तैरेकोनत्रिंशत्स्तोत्रैर्युक्तमतिरात्रप्रयोगमनुष्ठाय तत्तदूर्द्ध्वं चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयेत्। ततः पुनरपि चत्वारि स्तोत्राणि भवन्ति, तदेवं त्रयस्त्रिंशत्स्तोत्रयुक्तोऽप्तोर्यामः॥

तस्य निर्व्वचनं दर्शयति। "यदाप्नोत्। तदप्तोर्यामस्याप्तोर्यामत्वम्" इति। यस्मात् कारणादनेन क्रतुना पशूना-

प्नोत्, तस्मात् कारणादाप्नुर्यो यामो यज्ञ इति व्युत्पत्त्या तन्नाम सम्पन्नम् ॥

एतस्य क्रतोः सर्व्वकामप्राप्तिसाधनत्वं दर्शयति। "एतेन वै देवा जैत्वानि जित्वा। यं काममकामयन्त तमाप्नुवन्। यं कामं कामयते। तमेतेनाप्नोति" [२] इति। पुरा 'देवाः', 'एतेन' आप्तोर्यामक्रतुना, जेतव्यानि सर्व्वाणि युद्धानि 'जित्वा', काम्यमानं फलं 'प्राप्नुवन्'। अतोऽन्योऽपि देववत् सर्व्वं 'प्राप्नोति ॥

इति चतुर्द्दशोऽनुवाकः ॥ १४ ॥

---

अथ पञ्चदशोऽनुवाकः।

चतुर्द्दशे आप्तोर्यामोऽभिहितः। अथ पञ्चदश-षोडश-सप्तदशेष्वनुवाकेषु यज्ञसंयुक्तालौकिको राजाभिषेकोऽभिधीयते। तत्रास्मिन्ननुवाके तावदादौ होममन्त्रा उच्यन्ते। कल्पः। व्याघ्रोऽयमग्नाविति सप्ताहुतीर्जुहोति। "व्याघ्रोऽयमग्नौ चरति प्रविष्टः। ऋषीणां पुत्रो अभिशस्तिपा अयम्। नमस्कारेण नमसा ते जुहोमि। मा देवानां मिथुया कर्म्म भागम्" इति। 'अयम्' अभिषेकार्हो राजा, अस्मिन्नाहुत्याधारे 'अग्नौ', 'प्रविष्टः' 'व्याघ्र'वदप्रधृष्यो भूत्वा लोके 'चरति'। सः 'अयं', 'ऋषीणाम्' ऋत्विजां, 'पुत्रः', अभिषेकसंस्कारेण तैरुत्पादितत्वात् 'अभिशस्तिपाः' पापेभ्यः पाता, रक्षिता भवत्विति

शेषः । हे अग्ने 'ते' तव 'नमस्कारेण' युक्तोऽहं 'नमसा' उपनतेन, हविषा 'जुहोमि' । 'देवानां', 'भागं', 'मिथुया', 'कर्म्मपन्था मिथ्या भवति, तथा वयं 'मा', कार्ष्म, किन्तु सत्यमेव कुर्म्म इत्यर्थः ॥

अथ द्वितीयामाह । "सावीर्हि देव प्रसवाय पित्रे । वर्ष्माण-मस्मै वरिमाणमस्मै । अथास्मभ्यꣳ सवितः सर्वताता । दिवे दिव आसुवा भूरिपश्वः" इति । हे 'देव', 'प्रसवाय' प्रजानां प्रेरकाय, 'पित्रे' पालकाय, 'अस्मै' राज्ञे, 'वर्ष्माणं', 'सावीर्हि' सर्व्वथा प्रेरय, अस्य राज्ञो देहो यथा सर्व्वान् पालयति तथा त्वमनुगृहाणेत्यर्थः । किञ्च 'अस्मै' राज्ञे, 'वरिमाणम्' उरुत्वं, राज्यविस्तारं, 'सावीः' प्रेरय, अनुजानीहि । 'अथ' अनन्तरं, हे 'सवितः', सर्व्वे देवास्तीयन्ते विस्तीर्य्यन्ते एष्विति सर्व्वताता ये यज्ञाः तेषु सर्व्वतातासु, 'अस्मभ्यम्' अस्मदर्थं, 'भूरिपश्वः' भूरीन् बहुलान् पशून् 'आसुव' सर्व्वतः प्रेरय ॥

अथ तृतीयामाह । "भूतो भूतेषु चरति प्रविष्टः । स भूता-नामधिपतिर्बभूव [१] । तस्य मृत्यौ चरति राजसूयम् । स राजा राज्यमनुमन्यतामिदम्" इति । 'भूतेषु' प्राणिजातेषु, मध्ये 'प्रविष्टः', अयं 'भूतः', स्वयमुद्भूतः, 'चरति' सर्व्वक्रिया-सकत्वेन प्रवर्त्तते । अतएव 'भूतानां' प्राणिनां सर्व्वेषाम्, 'अधि-पतिः' स्वामी, 'बभूव' । 'तस्य' राज्ञः, 'मृत्यौ' दृष्टिविघातरूप-मरणनिमित्तभूते सति, 'राजसूयं' 'चरति' । राजा सूयते-ऽभिषिच्यते अस्मिन् कर्म्मणीति राजसूयाख्यमिममभिषेकमिदं

कर्म्म च दुष्टशिक्षार्थं प्रवर्त्तते इत्यर्थः। 'सः' अभिषिक्तः,'राजा', 'राज्यम्', 'इदम्', 'अनुमन्यताम्' दुष्टशिक्षाशिष्टपरिपालनरूपं यद्राजकृत्यं तदङ्गीकरोतु॥

अथ चतुर्थीमाह। "येभिः शिल्पैः पप्रथानामदृꣳहत्। येभिर्द्यामभ्यपिꣳशत् प्रजापतिः। येभिर्वाचं विश्वरूपाꣳ सम-व्ययत्। तेनेममग्न इह वर्चसा समङ्ग्धि" इति। 'प्रजापतिः', 'येभिः' 'शिल्पैः' यैः कौशलैः, 'पप्रथानां' विस्तारयुक्तामिमां पृथिवीं 'अदृंहत्' दृढीकृतवान्। तथा 'येभिः' कर्म्मकौशलैः 'द्यां' 'द्युलोकम्' 'अभ्यपिंशत्' अभितश्चन्द्रतारकादिभिः सुरूपामक-रोत्। तथा 'येभिः' यैः कर्म्मकौशलैः, 'वाचम्' इमामुच्चार्य्य-माणां,'विश्वरूपां' नानापदार्थवाचकत्वेनानेकरूपां, 'समव्ययत्' सम्यक् सम्पादितवान्। 'तेन' तथाविधकौशलजालेन, 'वर्च्चसा' तद्योगेन बलेन, च हे अग्ने 'इमं' राजानं, 'इह' लोके, 'समङ्ग्धि' समृद्धं कुरु, तथाविधसामर्थ्येन संयोजयेत्यर्थः॥

अथ पञ्चमीमाह। "येभिरादित्यस्तपति प्रकेतुभिः। येभिः सूर्य्यो ददृशे चित्रभानुः। येभिर्वाचं पुष्कलेभिरव्ययत्। तेने-ममग्न इह वर्चसा समङ्ग्धि" [२] इति। 'येभिः', 'प्रकेतुभिः' प्रकृष्टतेजोविशेषैः, अयम् 'आदित्यः' सर्व्वत्र तापं करोति। किञ्च 'येभिः' यैस्तेजोविशेषैः, 'सूर्य्यः', 'चित्रभानुः' हृदये विचित्ररश्मियुक्तोऽयमिति प्राणिभिः 'दृश्यते'। 'येभिः' यैर-भिधेयविशेषैः 'पुष्कलैः, सम्पूर्णैः,'वाचं' शब्दात्मिकाम्, 'अव्ययत्' वीतां परिवृतां सर्व्वां जन्तुरकरोत्। तेनेत्यादि पूर्व्ववत्॥

अथ षष्ठीमाह। "आयं भातु शवसा पञ्चकृष्टीः। इन्द्र इव ज्येष्ठो भवतु प्रजावान्। अस्मा अस्तु पुष्कलं चित्रभानु। आयं पृणक्तु रजसी उपस्थम्" इति। 'अयं' राजा, 'शवसा' बलेन, 'पञ्चकृष्टीः' पञ्चसङ्ख्याकान् मनुष्यान्, निषादपञ्चमान् ब्राह्मणादिवर्णान्, 'आभातु' समन्तादीपयतु। किञ्च 'अयं' राजा, स्वयम् 'इन्द्र इव', 'ज्येष्ठः' प्रशस्यतमः, 'प्रजावान्' प्रजायुक्तः, 'भवतु'। 'अस्मै' राज्ञे, विद्यमानं सर्व्ववस्तुजातं, 'पुष्कलं' सम्पूर्णं, 'चित्रभानु' 'विचित्रभानु, विचित्रत्वेन भासमानं स्वस्वकार्य्यक्षमम् 'अस्तु'। किञ्च 'अयं' राजा, 'रजसी' रञ्जनात्मिके द्यावापृथिव्यौ, 'उपस्थम्' तत्समीपस्थितम् अन्तरिक्षं, 'आपृणक्तु' तेजसा सर्व्वतः प्राप्नोतु, पालयत्वित्यर्थः ॥

अथ सप्तमीमाह। "यत्ते शिल्पं कश्यप रोचनावत्। इन्द्रियावत् पुष्कलं चित्रभानु। यस्मिन्त्सूर्य्या अर्पिताः सप्त साकम्। तस्मिन्राजानमधिविश्रयेमम्" इति। हे 'कश्यपाख्य प्रजापते, 'ते' तव, 'यत्' 'शिल्पं' कर्म्मकौशलं, 'रोचनावत्' दीप्तिमत्, 'इन्द्रियावत्' वीर्य्योपेतम्, 'पुष्कलं' सम्पूर्णम्, 'चित्रभानु' विचित्रत्वेन भासमानं, किञ्च 'यस्मिन्' त्वदीये शिल्पे, 'सप्तसङ्ख्याकाः 'सूर्य्याः', 'साकम्' 'अर्पिताः' सहावस्थापिताः। ते च सप्त सूर्य्या आरण्यकाण्डे आरोगो भ्राज इत्यनुवाके प्रपञ्चिताः। 'तस्मिन्' शिल्पे, 'इमं' राजानं, 'अधिश्रय' अधिकत्वेन आश्रितं कुरु ॥

कल्पः। 'द्यौरसि पृथिव्यसि' इति यजमानायतने शार्दूलचर्म्मप्राचीनग्रीवमुत्तरलोमास्तृणातीति। हे शार्दूलचर्म्म त्वं द्युलोकरूपमसि भूलोकरूपमसि॥

कल्पः। 'तस्मिन् राज्यं प्रविशति व्याघ्रो वैयाघ्र इत्यासीनमभिमन्त्रयत' इति। पाठस्तु, "व्याघ्रो वैयाघ्रेऽधि [१]। विश्रयस्व दिशो महीः। विशस्त्वा सर्व्वा वाञ्छन्तु। मा त्वद्राष्ट्रमधिभ्रशत्" इति। हे राजन् त्वं 'व्याघ्रवदप्रधृष्यो भूत्वा 'व्याघ्रसम्बन्धिनि चर्म्मणि 'अधि' उपरिस्थितः, 'महीः' महतीः, 'दिशः' प्राच्यादिकाः, 'विश्रयस्व' विशेषेण आश्रितो भव। 'सर्व्वाः', 'विशः' प्रजाः, 'त्वां', 'वाञ्छन्तु' कामयन्ताम्, इदं 'राष्ट्रं', 'त्वन्माधिभ्रशत्' त्वत्तः सकाशाद्भ्रष्टं माभूत्॥

कल्पः। 'अथैनं तोक्मावास्ताभिर्दूर्व्वावास्ताभिर्वाऽद्भिरभिषिञ्चति या दिव्या आप इति प्रतिपद्या पाङ्क्तादिति। यास्वप्सु तोक्मानि व्रीह्यङ्कुराण्यवास्तानि प्रक्षिप्तानि ता आपस्तोक्मावास्ता, एवं दूर्व्वावास्ता अपि। पाठस्तु, "या दिव्या आपः पयसा सम्बभूवुः। या अन्तरिक्ष उतपार्थिवीर्याः। तासां त्वा सर्व्वासाꣳ रुचा। अभिषिञ्चामि वर्च्चसा। अभि त्वा वर्च्चसा सिञ्चं दिव्येन। पयसा सह। यथासा राष्ट्रवर्द्धनः [४]। तथा त्वा सविताऽकरत्। इन्द्रं विश्वा अवीवृधन्। समुद्रव्यचसङ्गिरः। रथीतमꣳ रथीनाम्। वाजानाꣳ सत्पतिं पतिम्। वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा। रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा। आदित्या-

त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा। विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा। बृहस्पतिस्त्वोपरिष्टा-दभिषिञ्चन्तु पाङ्क्तेन छन्दसा'' [५] इति। 'दिव्याः' दिवि-भवाः, 'आपः', 'याः', 'पयसा' क्षीरेण सह, 'सम्बभूवुः', 'अन्तरिक्षे', 'याः', सम्बभूवुः, 'उत' अपि च, 'पार्थिवीः' पृथिव्यामुत्पन्नाः, 'याः', आपः, तासां 'सर्व्वासां', 'रुचा' दीप्त्या, 'वर्च्चसा' बलेन, हे राजन्, त्वाम् 'अभिषिञ्चामि' 'पयसा' 'दिव्येन', सह, 'वर्च्चसा' बलेन, त्वां 'अभितः, 'सिञ्चं' सर्व्वतः सिक्तं करोमि। 'यथा', लोके 'सविता', स्वयं 'राष्ट्रवर्द्धनः', 'आस', तथा त्वामपि राष्ट्रवर्द्धनं करोतु। 'विश्वाः' 'गिरः' सर्व्वाः स्तुतिरूपा वाचः, त्वाम् 'अवीवृधन्' वर्द्धितवत्यः, कीदृशं त्वां, 'इन्द्रं' परमैश्वर्य्ययुक्तं, 'समुद्रव्यचसं' समुद्रवद्व्या-पिनं, 'रथीनां' 'रथीतमं' रथयुक्तानां राज्ञां मध्ये अति-शयेन रथस्वामिनं, 'वाजानां' अन्नानां, 'पतिं' पालकं, तथा 'सत्पतिं' सन्मार्गवर्त्तिनां पालकं, हे राजन्, 'त्वां' 'पुरस्तात्' पूर्व्वस्यां दिशि, 'गायत्रच्छन्दोऽभिमानिदेवेन सह 'वसवः', 'अभिषिञ्चन्तु'। एवं रुद्रास्त्वेत्यादिवाक्येष्वपियोजनीयम्॥

कल्पः। अरुणं त्वा वृकमित्येनमभिमन्त्र्येति। पाठस्तु, "अ-रुणं त्वा वृकमुग्रं खजं करम्। रोचमानं मरुतामग्रे अर्चिषः। सूर्य्यवन्तं मघवानं विषासहिम्। इन्द्रमुक्थ्येषु नामहूतमꣳ हुवेम" इति। हे राजन् त्वां 'उक्थ्येषु' स्तोत्रेषु, 'इन्द्रं' 'हुवेम' इन्द्रत्वेनाह्वयाम, इन्द्रनाम्नैव व्यवहराम इत्यर्थः। कीदृशं

त्वां, 'अरुणं' उदयकालीन सूर्य्यसदृशं 'वृकं' आरण्यमृगवच्छत्रूणां भयहेतुं, अतएव 'उग्रं', 'खजङ्करं' 'खजः' शत्रूणां भर्त्सनं तत्करोतीति 'खजङ्करः', तं, 'मरुतां' देवानाम्, 'अर्चिषः', 'अग्रे', 'रोचमानं' तदीयप्रकाशादप्यधिकेन प्रकाशेन युक्तमित्यर्थः। 'सूर्य्यवन्तं' उपमानार्थं सूर्य्यो अस्यास्तीति 'सूर्य्यवान्', तं, 'मघवानं' अन्नवन्तं, विषवद्वैरिणः सहतेऽभिभवतीति 'विषासहिः', तं, 'नामकृतमं' युद्धेषु शत्रूनतिशयेन तत्तन्नाम्नाकृयतीति नामकृतमः तम्॥

कल्पः। प्रवाहवेति प्रमार्ष्टीति। पाठस्तु, "प्र बाहवा सिसृतं जीवसे नः। आ नो गव्यूतिमुक्षतं घृतेन। आ नो जने श्रावयतं युवाना। श्रुतं मे मित्रावरुणा हवेमा" इति। हे 'बाहवा' उभौ बाहू, 'नः' अस्माकं, 'जीवसे' जीवनाय, 'प्रसिसृतं' प्रसृतौ भवतं, 'नः' अस्माकं, 'गव्यूतिं' गोसमूहं, 'घृतेन', 'उक्षतं' सिञ्चतं, 'युवाना' तरुणौ, परस्परमिश्रितौ वा, युवां 'नः' अस्मान् 'जने' जनसमूहे 'आश्रावयतं' सर्व्वत्र प्रख्यापयतम्। हे 'मित्रावरुणरूपौ', बाहू, 'मे' मदीयं 'इमा' इमं, 'हव' हवं आह्वानं, 'श्रुतं' शृणुतम्॥

कल्पः। इन्द्रस्यते वीर्य्यकृत इत्युपावहरतीति। पाठस्तु, "इन्द्रस्य ते वीर्य्यकृतः। बाहू उपावहरामि" [६] इति। हे राजन्, 'वीर्य्यकृतः' पराक्रमकारिणः, 'इन्द्रस्य' परमैश्वर्य्ययुक्तस्य, 'ते' तव, प्रसृतौ 'बाहू' 'उपावहरामि' पुनः सङ्कुचितौ करोमि॥

अत्र विनियोगसङ्ग्रहः।

व्याघ्रे राजाभिषेकाय जुहुयात् सप्तमन्त्रकैः॥
द्योर्व्याघ्रचर्म संस्तीर्य्य तत्स्थं व्याघ्रोऽभिमन्त्रयेत्।
अभिषिञ्चेदष्टभिर्वा अरुणं मन्त्रयेत्तदा॥
प्रबाह्वोस्तु प्रसारस्यादिन्द्रोपावहरेद्भौ।
अनुवाके पञ्चदशे प्रोक्ता मन्त्रास्तु विंशतिः॥

इति पञ्चदशोऽनुवाकः॥ १५॥

---

अथ षोडशोऽनुवाकः।

पञ्चदशे राजाभिषेक उक्तः। षोडशे तदङ्गत्वेन रथारोहण-मुच्यते। कल्पः। 'अग्रेणाग्निꣳ रथोऽवस्थितो भवत्यभिप्रेहीतीतꣳ राजानमभ्येति' इति। पाठस्तु, "अभिप्रेहि वीरयस्व। उग्रश्चेत्ता सपत्नहा" इति। सोऽयं मन्त्रोऽष्टमेऽनुवाके व्याख्यातः* ॥

कल्पः। 'आतिष्ठ वृत्रहन्तम इत्यभिमन्त्रयत' इति। पाठस्तु, "आतिष्ठ वृत्रहन्तमः तुभ्यं देवा अधिब्रुवन्" इति। अयमपि तत्रैव व्याख्यातः† ॥

कल्पः। 'अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति' इति। पाठस्तु, "अङ्कौ न्यङ्कावभितो रथं यौ। ध्वान्तं वाताग्रमनु-सञ्चरन्तौ। दूरे हेतिरिन्द्रियावान् पतत्री। ते नोऽग्नयः पप्रयः पारयन्तु" इति। 'अङ्कः' इति दक्षिणचक्रस्य नाम, 'न्यङ्कः' इत्युत्तरचक्रस्य, 'रथमभितः' रथस्य पार्श्वयोः, या-

* ७७२ पृष्ठायां द्रष्टव्यः। † ७७२ पृष्ठायां द्रष्टव्यः।

वङ्कौ न्यङ्कौ विद्येते, एकस्मिन् पार्श्वे चक्रद्वयं, रथस्य चक्रचतुष्टयोपेतत्वात्। अथवा अङ्कशब्दश्चक्रवाची, न्यङ्कशब्दश्चक्रयुक्तपक्षवाची, यावङ्कौ तौ यौ च न्यङ्कौ तौ 'ध्वान्तं' ध्वनियुक्तं, 'वाताग्रं' वायोः पूर्व्वभागम्, 'अनुसञ्चरन्तौ' वायोरपि शीघ्रवेगेन गच्छत इत्यर्थः। 'दूरे हेतिरित्यादिभिस्त्रिभिः शब्दैस्त्रयोऽग्निविशेषा उच्यन्ते, 'ते' त्रयोऽप्यग्नयः 'पप्रयः' गमनं पूरयन्तः, 'नः' अस्मान्, 'पारयन्तु' गमनसमाप्तिं प्रापयन्तु॥

कल्पः। 'नमस्त ऋष इति पुरोहितमभिमन्त्रयत' इति। पाठस्तु, "नमस्त ऋषे गद। अव्यथायै त्वा स्वधायै त्वा [१]। मा न इन्द्राभितस्त्वदृष्वारिषाम। एवा ब्रह्मन्तवेदस्तु" इति। हे 'ऋषे' अतीन्द्रियद्रष्टः पुरोहित, 'ते' तुभ्यं, 'नमः', अस्तु, 'गद' अस्मभ्यं हितं कथय, 'अव्यथायै' शत्रुकृतबाधराहित्याय 'त्वा' त्वां, भजाम इति शेषः। 'स्वधायै' अन्नार्थं त्वां भजामः। हे 'ऋष्व' पुरोहितात्मन् ऋषे, 'इन्द्र' परमैश्वर्य्यसम्पन्न, 'नः' अस्माकं, 'त्वत्' तव प्रसादात्, 'अरिषाम' अस्माभिः हिंसितुं बाधितुमशक्याः प्रत्यवायाः, 'अभितः' सर्व्वतो 'मा', भूवन्। हे 'ब्रह्मन्', 'तवेत्' तवैव, त्वत्प्रसादात् 'एवा' इत्थमेव, 'अस्तु'॥

कल्पः। 'तिष्ठा रथ इति सारथिम्' इति। अभिमन्त्रयेत इत्यनुवर्त्तते। पाठस्तु, "तिष्ठा रथे अधि यद्वज्रहस्तः" इति। हे सारथे, 'यस्मात्त्वं, 'वज्रहस्तः', तस्मात्, 'रथे', अपि 'अधितिष्ठ' अधिरुह्य स्थितो भव॥

कल्पः। 'आरग्मीनिति रश्मीनालभेत' इति। पाठस्तु, "आ

रश्मीन् देव युवसे स्वश्वः" इति। हे 'देव' रथप्रवर्त्तक, 'स्वश्वः' शोभनाश्वयुक्तः, त्वं 'रश्मीन्' प्रग्रहान्, 'आयुवसे' आदाय मिश्रीकुरु॥

कल्पः। 'आतिष्ठ वृत्रहन्निति पङ्क्तिरारूढम्' इति। अभिमन्त्रयत इत्यनुवर्त्तते। तत्र चतुर्णां मन्त्राणां प्रतीकानि दर्शयति। "आतिष्ठ वृत्रहन्, आतिष्ठन्तं परि। अनु त्वेन्द्रो मदत्वनु, त्वा मित्रावरुणौ" इति। एते मन्त्रा अष्टमानुवाके व्याख्याताः*॥

पञ्चमं मन्त्रमाह। "द्यौश्च त्वा पृथिवी च प्रचेतसा। शुक्रा बृहद्दक्षिणा त्वा पिपर्त्तु। अनु स्वधा चिकिताꣳ सोमो अग्निः। अनु त्वावतु सविता सवेन" [२] इति। अत्रापि पादत्रयं तस्मिन्नेवानुवाके व्याख्यातम्। हे राजन्, 'सविता' देवः, 'सवेन' प्रेरणेन, 'त्वा', 'अन्ववतु' अनुकूलः सन् रक्षतु॥

अथ षष्ठमन्त्रमाह। "इन्द्रं विश्वा अवीवृधन्। समुद्र व्यचसङ्गिरः। रथीतमꣳ रथीनाम्। वाजानाꣳ सत्पतिं पतिम्" इति। अयं मन्त्रः पूर्व्वानुवाके व्याख्यातः†॥

कल्पः। 'परिमामेन्या इति द्वे वाचयित्वा' इति। तत्र प्रथममाह। "परि मा सेन्या घोषाः। ज्यानां वृञ्जन्तु गृध्नवः। सेधिष्ठाः पिन्वमाना इह। मां गोपतिमभिसंविशन्तु" इति। 'सेन्याः' परकीयायां सेनायां भवाः, 'ज्यानां' धनुर्गतानां, 'घोषाः' नादाः, 'मा परिवृञ्जन्तु' मां परितो वर्ज्जयन्तु, तदीया धनुर्घोषा मद्विषये मा प्रवर्त्तन्त। कीदृशा घोषाः, 'गृध्नवः' पर राष्ट्र-

* ७७२,७७३ पृष्ठायां द्रष्टव्यः।     † ८०४ पृष्ठायां द्रष्टव्यः।

ग्रहणेच्छावन्तः, 'मेधिष्ठाः' श्रोत्रसङ्गमनोचिताः, 'इह' अस्मिन् कर्म्मणि, युद्धविशेषे वा, 'पिन्वमानाः' अप्रतिकूलत्वेन मां प्रीणयन्तः, तादृशः 'ज्याघोषाः' 'गोपतिं' भूपतिं, 'माम्', 'अभिसंविशन्तु' अभितः सम्यक् प्रविशन्तु। ये शत्रुसम्बन्धिनो घोषाः, ते सर्व्वेऽप्यप्रतिकूलत्वेन स्वकीयघोषा भवन्त्वित्यर्थः॥

अथ द्वितीयामाह। "तन्मेऽनुमतिरनुमन्यताम्। तन्माता पृथिवी तत्पिता द्यौः [३]। तद्ग्रावाणः सोमसुतो मयोभुवः। तदश्विना शृणुतꣳ सैाभगा युवम्" इति। 'अनुमत्याख्या देवी, 'तत्' मदीयं कर्म्म, 'अनुमन्यतां' अङ्गीकरोतु। 'पृथिव्याख्या,'माता', 'तत्','अनुमन्यतां'। 'द्युलोकरूपः 'पिता', 'तत्' 'अनुमन्यतां'। 'सोमसुतः' सोममभिषुण्वन्तः, 'मयोभुवः' सुखस्य भावयितारः,'ग्रावाणः'पाषाणाः,'तत्''अनुमन्यन्ताम्'। हे 'अश्विनो','सैाभगा युवं' भाग्यवन्तो युवां, 'तत्' 'शृणुतम्' ॥

कल्पः। 'उत्तराभिस्तिसृभिरभिमन्त्र्य' इति। तत्र द्वयोः प्रतीके दर्शयति। "अवते, हेडवदुत्तमम्" इति। एतद्योभयं संहितायां 'वैश्वानरो न' इत्यनुवाके व्याख्यातम्॥

अथ तृतीयामाह। "एना व्याघ्रं परिषस्वजानाः। सिꣳहꣳ हिन्वन्ति महते सैाभगाय। समुद्रं न सुहवं तस्थिवाꣳसम्। मर्मृज्यन्ते द्वीपिनमप्स्वन्तः" इति। 'व्याघ्रं' व्याघ्रवत् केनाप्यप्रधृष्यं, 'सिंहं' सिंहसमानशक्तियुक्तं, 'एनं' राजानं, 'परिषस्वजानाः' आलिङ्गयन्तो ब्राह्मणा बान्धवाश्च, 'महते','सैाभगाय', 'हिन्वन्ति' प्रीणयन्ति, आशीर्व्वादान् कुर्व्वन्तीत्यर्थः।

'समुद्रं न' समुद्रमिव, सुखेनाक्रान्तुं शक्यं, 'तस्मिन्वांसं' तस्मिं-स्थाने अवस्थितमेनं, 'मर्मृज्यन्ते' अभिषेकलेपान् पुनः पुनः शोधयन्ति। तत्र दृष्टान्तः, 'अप्सु' अन्तर्जलमध्ये, 'द्वीपिनं' गजं, यथा प्रक्षालयन्ति तद्वदित्यर्थः॥

कल्पः। उदसावेत्वित्यादित्यमुदीक्षयतीति। पाठस्तु, "उद-सावेतु सूर्य्यः। उदिदं मामकं वचः। उदिहि देव सूर्य्य। सह वग्नुना मम। अहं वाचो विवाचनम्। मयि वागस्तु धर्णसिः। यन्तु नद्यो वर्षन्तु पर्ज्जन्याः। सुपिप्पला ओषधयः भवन्तु" इति। 'असौ' राजा, सूर्य्यसमो भूत्वा 'उदेतु' उदयमभि-वृद्धिं गच्छतु, 'मामकं' मदीयं, 'इदम्' आशीर्व्वादरूपं, 'वचः', 'उदिहि' अभिवृद्धिं गच्छतु, हे 'सूर्य्य', 'देव' दीप्यमान, राजन् 'मम' ब्राह्मणस्य, 'सह वग्नुना' वचनेनाशीर्व्वादेन सह, त्वम् 'उदिहि' अभ्युदयं गच्छ, 'अहं' पुरोहितः, 'वाचः' धर्म्माधर्म्मात्मिकायाः, 'विवाचनं' विशेषेणाभिवदनसामर्थ्यं, प्राप्नुयामिति शेषः। येयम् 'मयि', स्थिता आशीर्व्वादरूपा 'वाक्', सा 'धर्णसिः' धरणशीला सुप्रतिष्ठितास्तु। 'नद्यो' नद्यः सर्व्वाः, 'यन्तु' पूर्णाः प्रवहन्तु, 'पर्ज्जन्याः' मघाः, स्वस्वकाले 'वर्षन्तु', 'ओषधयः' व्रीह्यादयः, 'सुपिप्पलाः' शोभनफला-पेताः, 'भवन्तु'॥

कल्पः। अन्नवतामिति जनपदाननुवीक्षत इति। पाठस्तु, "अन्नवतामोदनवतामामिक्षवताम्। एषाꣳ राजा भूयासम्" [४] इति। अदनीयानि प्रशस्तभक्ष्यभोज्यानि येषु ग्रामेषु ते

ग्रामा 'अन्नवन्तः' प्रभूतेन व्रीहिप्रियङ्ग्वाद्योदनेन युक्ता 'ओदनवन्तः', 'आमिक्ष'शब्देन दधिक्षीरादि-रसद्रव्याण्युपलक्ष्यन्ते, तैर्युक्ता 'आमिक्षवन्तः', तादृशानाम् 'एषां' ग्रामाणां, 'राजा' स्वामी, 'भूयासम्' ॥

अत्र विनियोगसङ्ग्रहः।

अभीति रथमागत्यातिष्ठारोहस्य मन्त्रणम्।
अङ्को चक्रे उपस्पृश्य नमो विप्राभिमन्त्रणम् ॥
सारथिर्मन्त्रयेत्तिष्ठाऽऽरश्मीनश्वम्बभिमर्शनम्।
आतिष्ठ षड्भिरारूढं मन्त्रयेत परिद्वयम् ॥
वाचयेतावते होडः त्रिभिस्तमभिमन्त्रयेत्।
उदसाविति राजानं द्वाभ्यां सूर्य्यमवेक्षयेत् ॥
अन्न ग्रामानवेक्षेत प्रोक्ता मन्त्रास्तु विंशतिः।

इति षोडशोऽनुवाकः ॥ १६ ॥

---

अथ सप्तदशोऽनुवाकः।

षोडशे राजाभिषेकाङ्गं रथारोहणमुक्तम्। सप्तदशे तदङ्गं वपनमभिधीयते। कल्पः। ये केशिनो नर्त्ते ब्रह्मण इति द्वे आहुती जुहोति। तत्र प्रथमामाह। "ये केशिनः प्रथमाः सत्रमासत। येभिराभृतं यदिदं विरोचते। तेभ्यो जुहोमि बहुधा घृतेन। रायस्पोषेणेमं वर्चसा सꣳसृजाथ" इति। केशा येषां सन्ति, ते 'केशिनः' केशिनोऽग्निर्वायुः सूर्य्यः।

शाखान्तरे त्रयः केशिन इत्याम्नानात्। ते च देवाः 'प्रथमाः' इतरेभ्यो देवेभ्यः पूर्व्वं प्रवृत्ताः। 'केशिनः', 'ये','सत्रम्', 'आसत' अनुष्ठितवन्तः, 'यदिदं' जगद्, 'विरोचते' विशेषेण प्रकाशते, तदिदं सर्व्वं 'येभिः' यैर्देवैः, 'आभृतं' सम्पादितं, 'तेभ्यः' देवेभ्यः, 'घृतेन', 'बहुधा' बहुप्रकारं 'जुहोमि'। हे देवाः केशिनः, 'इमं' राजानं, धनपुष्ट्या बलेन च संयोजयथ॥

अथ द्वितीयमाह। "नर्त्ते ब्रह्मणस्तपसो विमोकः। द्वि-नाम्नी दीक्षा वशिनी ह्युग्रा। प्र केशाः सुवते काण्डिनो भवन्ति। तेषां ब्रह्मेदीशे वपनस्य नान्यः" इति। 'ब्रह्मणः' परिवृढात्, एतस्माद्वपनादृते अभिषेकाख्यव्रतरूपात् 'तपसः', 'विमोकः' विसर्गः, समाप्तिः, नास्ति। उपक्रान्तं हि व्रतं समापनीयम्। अस्य चाभिषेकाख्यव्रतस्य वपनेनैव समाप्तिः। व्रतरूपा चेयमभि-षेक'दीक्षा, 'द्विनाम्नी' नामद्वययुक्ता, तस्याश्च 'वशिनी', इत्येकं नाम, तया हि सर्व्वाः प्रजाः वशीक्रियन्ते, 'उग्रा', इत्यपरं नाम, तया हि दीक्षया शत्रवोऽभिभूयन्ते। दीक्षाया द्विविधव्रतत्वं सोमप्रकरणेऽप्याम्नातम्। एतद्वै सुजघनं नाम व्रतमिति प्रथ-मम्। एतद्वै क्षुरपविनाम व्रतमिति द्वितीयम्। अतोऽस्य व्रतस्य समाप्तये वपनं कुर्य्यात्। अस्य राज्ञः 'केशाः', 'प्रसुवते' प्रकर्षेणात्यन्ताः वर्द्धन्ते, अतएव 'काण्डिनः' बहुसमूहयुक्ताः, 'भवन्ति'। 'तेषां' वर्द्धमानानां बहुसमूहयुक्तानां केशानां 'वप-नस्य','ब्रह्मेत्' प्रजापतिरेव,'ईशे' समर्थो भवति। 'न',तु 'अन्यः', कश्चित्। तस्मात्प्रजापतिरूपोऽयं पुरोहितः वपनं करोतीत्यर्थः॥

कल्पः। यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति ताꣳ राजारोहत्यारोह प्रोष्ठमित्यारोहन्तमभिमन्त्रयत इति। पाठस्तु, "आरोह प्रोष्ठं विषहस्व शत्रून्। अवास्राग्दीक्षा वशिनी ह्युग्रा [१]। देहि दक्षिणां प्रतिरस्वायुः। अथामुच्यस्व वरुणस्य पाशात्" इति। हे राजन् 'प्रोष्ठं' आसन्दीरूपं मञ्चकम्, 'आरोह, 'शत्रून्', 'विषहस्व' विशेषेणाभिभव, येयं 'वशिनी' 'उग्रा' चेति द्विनाम्नी 'दीक्षा', सेयं यस्मात् 'अवास्राक्' अवसृष्टा, समाप्ता, तस्मात् पुरोहिताय 'दक्षिणां', 'देहि', 'प्रतिरस्व'लमपि दीर्घम्, 'आयुः', प्राप्नुहि। 'अथ' अनन्तरं, 'वरुणस्य पाशात्' अस्माद्रथनिर्बन्धात्, 'मुच्यस्व' मुक्तो भव॥

कल्पः। तस्यामासीनः केशान्वापयते येनावपत् सविता क्षुरेणेति। पाठस्तु, "येनावपत् सविता क्षुरेण। सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्योर्जेमम्। रय्या वर्चसा सꣳसृजाथ" इति। पुरा 'विद्वान्', 'सविता', 'राज्ञः' राजाभिषेकं प्राप्नुवतः, 'सोमस्य', 'वरुणस्य', च केशान् 'येन' क्षुरेण, 'आवपत्', 'तेन' क्षुरेण, हे 'ब्राह्मणाः' प्रजापतिरूपाः पुरोहिताः, 'अस्य', 'इदं' केशजातं,'वपत', 'इमम्' च राजानं, 'उर्जा' क्षीरादिरसेन, 'रय्या' धनेन, 'वर्चसा' बलेन, च 'संसृजाथ' संयोजयत॥

कल्पः। मा ते केशानिति केशान् प्रकीर्य्यमाणाननुमन्त्रयत इति। पाठस्तु, "मा ते केशाननु गाद्वर्च एतत्। तथा धाता करोतु ते। तुभ्यमिन्द्रो बृहस्पतिः। सविता वर्च

आदधात्" [२] इति। हे राजन् 'ते','वर्चः' बलं, 'केशानन्', 'मागात्' मापगच्छतु। 'ते' तव, 'एतत्', यथा भवति तथा 'धाता करोतु', 'तुभ्यं' त्वदर्थं, 'इन्द्रबृहस्पति-सवितारः', नूतनमप्यधिकं 'वर्चः' बलं, सम्पादयन्तु॥

कल्पः। तान् समोप्यदर्भस्तम्बे निदधाति तेभ्यो निधानम् इति। पाठस्तु, "तेभ्यो निधानं बहुधा व्यैच्छन्। अन्तरा द्यावापृथिवी अपः सुवः। दर्भस्तम्बे वीर्यकृते निधाय। पौꣳस्येनेमं वर्चसा सꣳसृजाय" इति। 'तेभ्यः' तत्केशार्थं, 'निधानं' स्थापनप्रदेशं, 'बहुधा' बहुप्रकारं, 'व्यैच्छन्' ब्राह्मणा विशेषेणेच्छां कृतवन्तः। किं स्थानमिति तदुच्यते, ते, 'द्यावापृथिवी' 'अन्तरा' द्यावापृथिव्योर्मध्यम्, एकं स्थानमैच्छन्, 'अपः' जलं, द्वितीयं स्थानमैच्छन्,'सुवः' स्वर्गरूपं, तृतीयं स्थानमैच्छन्, 'वीर्यकृते' सामर्थ्येन सम्पादिते, 'दर्भस्तम्बे', तान् केशान् 'निधाय', 'इमं' राजानं, 'पौंस्येन' 'वर्चसा' पौरुषेण बलेन, 'संसृजाय' हे ब्राह्मणाः संयोजयत॥

कल्पः। अथैनमाज्यमिश्रेण पयसानक्ति बलन्ते बाह्वोरिति। पाठस्तु, "बलन्ते बाह्वोः सविता दधातु। सोमस्त्वानक्तु पयसा घृतेन। स्त्रीषु रूपमश्विनैतन्निधत्तम्। पौꣳस्येनेमं वर्चसा सꣳसृजाय" इति। हे राजन्, 'ते', 'बाह्वोः', 'बलं', 'सविता', सम्पादयतु, 'सोमस्त्वां', 'पयसा घृतेन' च 'समनक्तु' सम्यगक्तं करोतु, 'अश्विना' हे अश्विनौ, 'एतत्' रमणीयं रूपं, एतदीयासु 'स्त्रीषु','निधत्तं' स्थापयतं, पौंस्येनेत्यादि पूर्ववत्॥

कल्पः। यत् सीमन्तमिति शिर इति। आद्यमिश्रेण पुम-मानक्षीत्यनुवर्त्तते। पाठस्तु, "यत्सीमन्तं कङ्कतस्ते लिलेख। यद्वा चुरः परिववर्ज वपᳬस्ते। स्त्रीषु रूपमश्विनैतन्निधत्तम्। पौᳬस्येनेमᳬ सᳬसृजाथो वीर्य्येण" [२] इति। हे राजन्, 'ते' तव, वपनात् पुरा 'कङ्कतः' केशलघिमासम्पादिका शला-काविशेषः 'यत्' 'सीमन्तं', 'लिलेख' शिखावशेषाय वपनीय-स्थापनीययोः केशभागयोः विभागञ्चकार,'यद्वा' अथवा,'चुरः', अयं, 'वपन्' वपनं कुर्व्वन्, 'यत्' केशजातं, 'परिववर्ज' वपन-मकृत्वा स्थापितवान्, सीमन्तलेखनात्मकं यद्दर्शनीयं 'रूपं', यच्च वपननिमित्तं रूपं एतदुभयं हे 'अश्विनौ', एतदीयासु 'स्त्रीषु', अलङ्काराय 'निधत्तं', 'इमम्' तु राजानं, 'पौंस्येन' पुरुषसम्बन्धिना वीर्य्येण 'संसृजाथ' संयोजयत ॥

अत्र विनियोगसङ्ग्रहः।

ये केशिनः प्र नर्त्ते द्वे आहुतीर्जुहुयादथ।
आरोहेत तमासन्दीमारोहेत्यभिमन्त्रयेत् ॥
येनावापयते केशान्मा ते कीर्णाऽनुमन्त्रणम्।
तेभ्यस्तान् स्तम्ब आदध्याद्दलं बाहोघृताञ्जने ॥
यत् सीमन्तेऽञ्जनं मन्त्रा अष्टौ तत्र प्रकीर्त्तिताः ॥

इति सप्तदशोऽनुवाकः ॥ १७ ॥

अथाष्टादशोऽनुवाकः ॥

सप्तदशे *राजाभिषेकाङ्गवपनार्था मन्त्रा उक्ताः, तावता-भिषेकः समाप्तः । अथाष्टादशे विघनाख्यः कश्चिदेकाहविशेष उच्यते । तत्रादौ विघननिर्वचनं दर्शयति । "इन्द्रं वै स्वा विशो मरुतो नापाचायन् । सोऽनपचाय्यमान एतं विघनमपश्यत् । तमाहरत् । तेनायजत । तेनैवासां तꣳ सꣳस्तम्भं व्यहन् । यद्व्यहन् । तद्विघनस्य विघनत्वम्" इति । पुरा कदाचिद्राज्यं कुर्वन्तम्, 'इन्द्रं', 'मरुत्संज्ञकाः 'स्वकीयाः प्रजाः करप्रदानेन पूजां नाकुर्वन्, 'सः' अयमपूज्यमान इन्द्रस्तत्परिहाराय 'एतं' 'विघनाख्यं' क्रतुविशेषं, एकाहं निश्चित्य तदनुष्ठानेन 'आसां' प्रजानां, 'तं' 'संस्तम्भं' स्तम्भनरूपं प्रातिकूल्याचरणं, 'व्यहन्' विहतं कृतवान् । 'यत्' यस्मात् कारणात्, अनेन कर्म्मणा विहतवान्, तस्माद्विहन्यनेनेति व्युत्पत्त्या कर्म्मणो विघननाम सम्पन्नम् ॥

तमेतं विघनाख्यं क्रतुं विधत्ते । "विपाप्मानं भ्रातृव्यꣳ हते । य एतेन यजते । य उ चैनमेवं वेद" [१] इति ॥

अथ तत्राधिकारिणं दर्शयति । "यꣳ राजानं विशो ना-पचायेयुः । यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतः स्यात् । स एतेन यजेत । विघनेनैवैनद्विहत्य । विशामाधिपत्यं गच्छ-ति" इति । 'यं' राजानं, स्वकीयाः प्रजा न पूजयेयुः करं न दद्युः। अथवा 'यः' 'ब्राह्मणः','तमोरूपेण 'पाप्मना', 'प्रकर्षेणा-

* सवाभिषेक इत्यपि दृश्यते ।

वृतः स्यात्', 'सः' अयमुभयविधः पुरुषोऽत्राधिकारी। स च 'विघनाख्येनैव क्रतुना 'यजेत', तथा प्रातिकूल्यं विनाश्य प्रजानामाधिपत्यं राजा 'गच्छति', ब्राह्मणश्च विपापो भवति ॥

स्तोत्रविशेषं विधत्ते। "तस्य द्वे द्वादशे स्तोत्रे भवतः। द्वे चतुर्व्विꣳशे। औद्भिद्यमेव तत्। एतद्वै चत्रस्यौद्भिद्यम्। यदस्मै स्वा विशो बलिꣳ हरन्ति"[२]इति। 'तस्य' विघनाख्यस्य क्रतोः, 'द्वादशाख्येन स्तोमेन युक्तं 'स्तोत्रद्वयं कर्त्तव्यं, तथा 'चतुर्विꣳशाख्येन स्तोमेन युक्तं स्तोत्रद्वयं कर्त्तव्यं, 'तत्' च स्तोत्रचतुष्टयं, 'औद्भिद्यमेव' उद्भेदनसाधनमेव, अत्र च प्रकृते 'चत्रस्य' राज्ञः, 'स्वकीयाः प्रजाः करं प्रयच्छन्तीति 'यत्' 'एतत्', एव 'औद्भिद्यं' प्रातिकूल्यस्योद्भेदनं, तच्च स्तोत्रचतुष्टयेन सिद्ध्यति ॥

वेदनं प्रशंसति। "हरन्त्यस्मै विशो बलिम्। ऐनमप्रतिख्यातं गच्छति। य एवं वेद" इति। 'अस्मै' वेदित्रे, प्रजाः पूजां कुर्व्वन्ति, 'अप्रतिख्यातं' केनाप्यनिराकृता कीर्त्तिश्च 'एनं' वेदितारं, 'आगच्छति' ॥

एतस्य विघनस्य यागवेदने पुनः प्रशंसति। "प्रबाहुग्वा अग्रे चत्राण्यातेपुः। तेषामिन्द्रः चत्राण्यादत्त। न वा इमानि चत्राण्यभूवन्निति। तत् नचत्राणां नचत्रत्वम्। आ श्रेयसो भ्रातृव्यस्य तेज इन्द्रियं दत्ते। यत्र तेन यजते। य उचैनमेवं वेद" [३] इति। 'अग्रे' पुरा कदाचित्, 'चत्राणि' चत्रियवंशे जाताः पुरुषाः, 'प्रबाहुग्' बाहुल्येनैव, 'आतेपुः' सर्व्वतस्तपः कृतवन्तः, 'तेषां' तपः कुर्व्वतां सर्व्वेषां यानि 'चत्राणि'

बलानि, तानि 'इन्द्रः', 'आदत्त' स्वीकृतवान्, ततः 'इमानि' 'क्षत्राणि' बलानि, 'नैव अभूवन्', इति सर्व्वे जनाः उक्तवन्तः। यस्मादिन्द्रविरोधिनां क्षत्रं बलं नासीत्, तस्मात्तेषां बलराहित्यवाचि नक्षत्रनाम सम्पन्नम्। तस्मादिन्द्रवद्यः 'यजते', 'यश्च', 'वेद', सोऽयमुभयविधः पुमान् 'श्रेयसः' अधिकस्य, 'भ्रातृव्यस्य', 'तेजः' आत्मशक्तिं, 'इन्द्रियं' शरीरं बलञ्च, 'आदत्ते'॥

पूर्व्वोक्तयोः द्वादशचतुर्व्विंशस्तोमयोः स्थानविशेषं विधत्ते। "तद्यथा ह वै सचक्रिणौ कप्लकावुपावहितौ स्याताम्। एवमेतौ युग्मन्तौ स्तोमौ। अयुक्षु स्तोमेषु क्रियेते। पाप्मनोऽपहत्यै" इति। चक्रमस्यास्तीति 'चक्री' रथः, चक्रिणा सह वर्त्तेते इति 'सचक्रिणौ' रथस्वामिनौ, 'कप्लकौ' कपिवद्गमनसमर्थौ, तादृशौ द्वौ पुरुषौ यथा लोके 'उपावहितौ' गमनाय सावधानौ, 'स्यातां'। 'एवमेतौ' 'युग्मन्तौ' समसङ्ख्यायुक्तौ, द्वादशचतुर्विंश'स्तोमौ', क्रतोः परपारगमने समर्थौ, तावुभौ 'अयुक्षु' विषमसङ्ख्यायुक्तेषु, 'स्तोमेषु', कर्त्तव्यौ, त्रिवृत्पञ्चदशसप्तदशैकविंशाख्याश्चोदकप्राप्ता विषमसङ्ख्यायुक्ताः स्तोमास्तेषां स्थाने द्वावेतौ स्तोमौ प्रयोक्तव्यौ, तत्र त्रिवृत्पञ्चदशयोः स्थाने द्वादशः, सप्तदशैकविंशयोः स्थाने चतुर्विंश, इति विवेकः। एतच्च 'पापविनाशनार्थं भवति॥

एतदनुष्ठानवेदने प्रशंसति। "अप पाप्मानं भ्रातृव्यꣳ हते। य एतेन यजते। य उ चैनमेवं वेद" इति॥

उक्तस्तोमयुक्तानां स्तोत्राणामाधारभूतानृग्विशेषानिविधत्ते।

"तद्यथा ह वै सूतग्रामण्यः। एवं छन्दाꣳसि। तेष्वसावा-दित्यो बृहतीरभ्यूढः [४]। सतोबृहतीषु स्तुवते सतो बृहन्। प्रजया पशुभिरसानीत्येव" इति। 'सूतः' रथपः, 'ग्रामण्यः' ग्रामनिर्वाहकः, तत्र, लोके 'यथा', 'सूतग्रामण्यः', तथा गाय-त्र्यादीनि 'छन्दांसि', प्रवर्त्तन्ते, सूतेषु मध्ये रथस्वामित्वं यः अङ्गीकरोति स एव सूतो रथं प्रवर्त्तयतीति, ग्रामणीषु मध्ये यो राजत्वमङ्गीकरोति स एव ग्रामं नयति। 'एवम्', अत्रापि 'असावादित्यः', 'तेषु' छन्दःसु, मध्ये 'बृहती'च्छन्दोयुक्ता ऋचः 'अभ्यूढः', अङ्गीकृतवान्, तस्मात् कारणात् 'सतः' 'बृहती'-नामकच्छन्दोयुक्तास्वृक्षु स्तोत्रं कुर्युः; तेषां स्तोत्राणां प्रत्येकम-यमभिप्रायः। अतः सन्मार्गवर्त्तिनः पुरुषाः 'बृहन्' अधिकाः। 'सतोबृहन्', प्रजया च पशुभिश्चाहं सतो बृहन्, 'असानि' भवानि, 'इत्येव', स्तोतारः प्रवर्त्तन्ते॥

तास्वृक्षु गानकाले कश्चिद्विशेषं विधत्ते। "व्यतिषक्ताभिः स्तुवते। व्यतिषक्तं वै क्षत्रं विशा। विशैवैनं क्षत्रेण व्यतिषजति" इति। याः सतोबृहत्य ऋचः, ताश्छन्दोऽन्तरयुक्ताभिर्ऋग्भिः 'व्यतिषक्ताः', कार्य्याः। ऋगेका सतोबृहती, ऋगन्तरमन्यच्छ-न्दोयुक्तम्; पुनरपि सतोबृहती पुनरपि छन्दोऽन्तरमित्येवं व्यतिषङ्गः, तादृशीषु ऋक्षु स्तुतिं कुर्युः। 'क्षत्रं' क्षत्रजातिः, 'विशा' वैश्यजात्या, 'व्यतिषक्तं' मिश्रीभूय वर्त्तते। प्रजाभ्यः करं गृहीत्वा क्षत्रियो राज्यं करोति, एवं सति व्यतिषक्तस्तोत्रेण 'एनं' यजमानं, 'विशा', 'क्षत्रेण', 'व्यतिषजति' मिश्रयति।

तमेव व्यतिषक्तं प्रकारान्तरेण प्रशंसति। "व्यतिषक्ताभिः स्तुवते। व्यतिषक्तो वै ग्रामणीः सजातैः। सजातैरेवैनं व्यतिषजति" इति। 'ग्रामस्य निर्वाहकः पुरुषः, 'सजातैः' सहोत्पन्नैर्भ्रात्रादिभिस्तद्ग्रामनिवासिभिः, 'व्यतिषक्तः' मिश्रीभूतः, वर्त्तते। अतो व्यतिषक्तस्तोत्रेण 'एनं' यजमानं, 'सजातैर्भ्रात्रादिभिस्तद्ग्रामनिवासिभिः, व्यतिषक्तो मिश्रीभूतो वर्त्तते। अन्यो व्यतिषक्तस्तोत्रेणैनं यजमानं 'सजातैः' भ्रात्रादिभिः, संयोजयति॥

पुनरपि प्रकारान्तरेण प्रशंसति। "व्यतिषक्ताभिः स्तुवते। व्यभिषक्तो वै पुरुषः पाप्मभिः। व्यतिषक्ताभिरेवास्य पाप्मनो नुदते" [५] इति। 'पुरुषः', प्रमादकृतैः 'पाप्मभिः', संसृष्टो वर्त्तते। ततोऽत्र व्यतिषक्तस्तोत्रेण 'अस्य' पुरुषस्य, पापानि विनाशयति॥

अस्य प्रपाठकस्यानुवाकार्थसङ्ग्रहः।

सप्तमे तु सत्राख्याः स्तु सूयते ह्यभिषिच्यते।
ईश्वरत्वेन येऽप्येते प्रोच्यन्ते सवनामकाः॥
बृहस्पतिसवो वैश्यसवो ब्रह्मसवस्तथा।
प्रोक्तः सोमसवस्तद्वत् सवः स्यात् पृथिनामकः॥
गोसवश्चोदनाख्ये तु सवे होमार्थमन्त्रकाः।
रथारोहः कर्म्मविधिः पञ्चशारदनामकः॥
क्रतुस्तदीयपशवो ह्यग्निष्टुति पुरोरुचः।
इन्द्रस्तुति पुरोरुक् स्यादप्तोर्यामविधिस्तथा॥

राजाभिषेकमन्त्राश्च रथारोहणमन्त्रकाः ।
भवन्ति वपने मन्त्रा विघनः पाठको ह्ययम् ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्ब्राह्मणे द्वितीयकाण्डे सप्तमप्रपाठकेऽष्टादशोऽनुवाकः॥ ॥ १८ ॥

समाप्तश्च सप्तमः प्रपाठकः ॥ * ॥

---

# अथ तैत्तिरीय-ब्राह्मणभाष्ये

## द्वितीयकाण्डेऽष्टमप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ॐ ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके सप्तमे हि सवाः सर्व्वे समीरिताः ।
याज्यानुवाक्याः काम्यानां पशूनामष्टमे श्रुताः ॥
वायव्यः श्वेत आलभ्य इति काम्या उदीरिताः ।
एकैकस्मिन् पशौ सूक्तमेकैकं भवति क्रमात् ॥

ऋचः षट् सूक्त एकस्मिन्नत्र द्वे द्वे क्रमाद्भवेत्।
वपायाश्च पुरोडाशे हविषीति क्रमो भवेत्॥

वायव्यꣳ श्वेतमालभेत भूतिकाम इत्यत्र वायोर्या पुरोऽनुवाक्या तामाह। "पीवोऽन्नाꣳ रयिवृधः सुमेधाः। श्वेतः सिषक्ति नियुतामभिश्रीः। ते वायवे समनसो वितस्थुः। विश्वेन्नरः स्वपत्यानि चक्रुः" इति। यो वायुदेवताकः श्वेतश्छागः पशुः सोऽयं 'सिषक्ति' सिक्तो भवति, सम्बध्नातीत्यर्थः। उत्तरार्द्धे नर इत्यभिधास्यमानत्वात् नृन्मनुष्यान् यजमानान् सिषक्तीति योजनीयम्। कीदृशान् यजमानान् 'पीवोऽन्नान्' पीवानि स्थूलानि प्रभूतान्नानि येषां ते 'पीवोऽन्नाः', तान्, 'रयिवृधः' रय्या धनेन वर्द्धमानान्, 'सुमेधाः' शोभनया मेधया यज्ञप्रयोगधारणशक्त्या युक्तान्। कीदृशः श्वेतः पशुः, 'नियुतामभिश्रीः' नितरां युवतां रथेऽभिश्रयन्तीति 'नियुताः' वायोर्वडवाः, तासामभिश्रणीयः, एतस्य पशोर्वायव्यत्वेन वायुद्वारा वडवा अप्येतमाश्रयन्ति। यागे तान् नृन् यजमानान् 'श्वेतः', सिषक्ति, 'ते' नरः, यजमानाः, 'वायवे' वायुदेवतार्थं, 'समनसः', तेन देवेन समानमनस्काः, तस्मिन् प्रीतियुक्ता भूत्वा, 'वितस्थुः' विशेषेण स्थिताः। ततो 'विश्वेत्' विश्वान्येव वायुदेवताकानि कर्म्माणि, 'स्वपत्यानि' शोभनापत्यप्रदानि 'चक्रुः' कृतवन्तः॥

अथ वपायाज्यामाह। "रायेऽनु यं जज्ञतू रोदसी उभे। राये देवी धिषणा धाति देवं। अधा वायुं नियुतः सश्चत

स्वाः। उत श्वेतं वसुधितिं निरेके” इति। ‘रोदसी’ द्यावा-पृथिव्यौ ‘उभे’, ‘रायेऽनु’ धनार्थमेव, ‘यं’ वायुं, ‘जज्ञतुः’ उत्पादितवत्यौ। यजमानानां ‘धिषणा’ बुद्धिः, ‘देवी’ विद्योतमाना सती, वायुं ‘देवं’, ‘धाति’ धारयति, निरन्तरं ध्यायतीत्यर्थः। ‘अध’ आरम्भयागे, तं ‘वायुं’, ‘स्वाः’ ‘नियुतः’ स्वकीया वडवाः, ‘सश्चत’ सेवन्ते। ‘उत’ अपि च, रेको रिक्तत्वं तद्रहितं कर्म्म ‘निरेकं’, तादृशे, सर्व्वसाधनसम्पूर्णे कर्म्मणि ‘वसुधितिं’ हविर्लक्षणस्य वसुनो धावकं श्वेतं पशुमपि, नियुतः सश्चतेत्यन्वयः ॥

अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति। ‘आ वायो, प्रयाभिः’ इति। आ वायो भूषेति पुरोऽनुवाक्या, सा चैन्द्रवायवप्रस्तावे व्याख्याता। प्रयाभिर्यासिदाश्वाꣳसमित्येषा याज्या, सा च हिरण्यगर्भ आपो हेत्यनुवाके व्याख्याता ॥

अथ हविषः पुरोऽनुवाक्यामाह। “प्र वायुमच्छा बृहती मनीषा [१]। बृहद्रयिं विश्ववाराꣳ रथप्राम्। द्युतद्यामा नियुतः पत्यमानः। कविः कविमियक्षसि प्रयज्यो” इति। ‘बृहती’ महती, ‘मनीषा’ यजमानस्य बुद्धिः, ‘वायुम्’, अभिलक्ष्य ‘प्रकर्षेण यातीति शेषः। कीदृशं वायुं, ‘बृहद्रयिं’ बृहती रयिर्महद्धनं यस्यासौ ‘बृहद्रयिः’, बृहद्धनप्रद इत्यर्थः। ‘विश्ववारां’ विश्वेषामनिष्टानां निवारकं, ‘रथप्रां’ स्वकीयं रथमपेक्षितैर्धनैः पूरयन्तं। हे ‘प्रयज्यो’ प्रकर्षेण यष्टुमुद्युक्त यजमान, ‘कविः’ देवतातत्त्वाभिज्ञस्त्वं, ‘कविं’ सर्व्वज्ञं

वायुं देवम् 'इयक्षसि, यज, पूजय। कीदृशः कविः, 'द्युतद्यामा' यामशब्देन नियमरूपो यागोऽभिधीयते, द्योतमानो यागो यस्यासौ 'द्युतद्यामा', 'नियुतः पत्यमानः' नियुतो याः पूर्वोक्ता वडवास्ताः, 'पत्यमानः' वायोरानयनार्थं सेवमानः॥

अथ याज्यामाह। "आ नो नियुद्भिः शतिनीभिरध्वरम्। सहस्रिणीभिरुप याहि यज्ञम्। वायो अस्मिन् हविषि मादयस्व। यूयं पात स्वस्तिभिः सदा नः" इति। हे वायो, 'शतिनीभिः' शतसङ्ख्यायुक्ताभिः, 'सहस्रिणीभिः' सहस्रसङ्ख्यायुक्ताभिश्च 'नियुद्भिः' नियुक्ताभिर्वडवाभिः सह, 'नः' अस्मदीयं, 'अध्वरं' हिंसारहितं यज्ञं, प्रति 'उप' समीपे, 'आयाहि' आगच्छ, आगत्य च 'अस्मिन् हविषि', स्वीकृते सति 'मादयस्व' त्वं हृष्टः सन् अस्मानपि हर्षय, 'यूयं', त्वञ्च त्वदीयभृत्याश्च सर्वे,'स्वस्तिभिः' अविनाशैः फलैः,'नः' अस्मान्,'सदा', 'पात' रक्षत। यदेतत् षड्चं सूक्तं वायव्यपशौ प्रवृत्तं तदेतत् सूत्रकारः स्पष्टीचकार, 'काम्यैः पशुभिरमावास्यायां पौर्णमास्यां वा यजेत, तेषां निरूढपशुबन्धवत् कल्पो वायव्यꣳ श्वेतम्' इति। ये ब्राह्मणे न व्याख्यातास्तेपामावापिकेषु स्थानेषु यथादेवतं षड्चो निदधाति, वपायाः पुरोडाशस्य हविष इति द्वे द्वे, पीवोऽन्नाꣳ रयिवृधः सुमेधा इत्येतानि यथापूर्वं यथालिङ्गमाम्नातानि भवन्तीति।

अथ यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूवरमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह।

"प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु [१]। वयꣳ स्याम पतयो रयीणाम्" इति। हे 'प्रजापते', त्वदन्यः कश्चित् अपि 'जातानि', अन्यानि 'एतानि', 'विश्वानि' लोकजातानि, यानि सन्ति 'ता' तानि 'परि बभूव' परितो व्याप्तं, 'त्वत्' त्वत्तः, 'अन्यः', कोऽपि न समर्थः। वयं 'यत्कामाः' येन फलकामेन युक्ताः सन्तः, 'ते' तुभ्यं, 'जुहुमः', 'तत्' फलं, 'नः' अस्माकम्, 'अस्तु' सिध्यतु। 'वयं' त्वत्प्रसादात्, 'रयीणां' धनानां, 'पतयः', 'स्याम'॥

अथ वपाया याज्यामाह। "रयीणां पतिं यजतं बृहन्तम्। अस्मिन् भरे नृतमं वाजसातौ। प्रजापतिं प्रथमजामृतस्य। यजाम देवमधि नो ब्रवीतु" इति। भ्रियते सम्पाद्यते हविरनेति भरो यज्ञः,'अस्मिन् भरे','प्रजापतिं', देवं, वयं 'यजाम'। कीदृशं देवं, 'रयीणां पतिं' धनस्वामिनं, 'यजतं' यजनीयम्, 'बृहन्तं' महान्तं, 'नृतमं', अतिशयेन पुरुषं, पुरुषेषूत्तममित्यर्थः। 'ऋतस्य' यज्ञस्य, 'प्रथमजां' प्रथममेव जनयितारं, प्रजापतिर्यज्ञानसृजतेत्यन्यत्र श्रवणात्। कीदृशे भरे,'वाजसातौ' वाजस्य अन्नस्य सातिर्दानं यस्मिन् यज्ञे सोऽयं वाजसातिस्तस्मिन्, सोऽयमस्माभिरिष्टः प्रजापतिर्देवेषु मध्ये 'नः' अस्मान्, 'अधिकान् 'ब्रवीतु'॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "प्रजापते त्वं निधिपाः पुराणः। देवानां पिता जनिता प्रजानाम्। पतिर्विश्वस्य जगतः परस्याः हविर्नो देव विहवे जुषस्व" इति।

हे 'प्रजापते', 'त्वं', 'निधिपाः' शङ्खपद्मादीनां निधीनां पालकः,'पुराणः' जगतः स्रष्टृत्वादनादिः, 'देवानां','पिता' पालकः, 'प्रजानां' मनुष्यादीनां, 'जनिता' उत्पादयिता, 'विश्वस्य' सर्व्वस्य,'जगतः','पतिः' स्वामी,'परस्याः' अतिशयेन पालयिता। हे देव, विशेषेण हूयन्ते देवा अत्रेति 'विहवः' यज्ञः, तस्मिन् 'विहवे', 'नः' अस्मदीयम्, 'हविः', 'जुषस्व'॥

अथ पुरोडाशस्य याज्यामाह। "तवेमे लोकाः प्रदिशो दिशश्च [२]। परावतो निवत उद्वतश्च। प्रजापते विश्वसृज्जीवधन्य इदं नो देव। प्रतिहर्य्य हव्यम्" इति। हे 'प्रजापते', 'इमे' 'लोकाः' भूरादयः, याश्च 'प्रदिशः' प्रधानभूताः प्राच्याद्याः, या अप्यन्या आग्नेयाद्याः 'दिशः', तत् सर्व्वं 'तव', एवाधीनम्; लोकविशेषाः ते 'परावतः' दूरदेशस्था द्वीपान्तरादयः, 'निवतः' न्यग्भूताः पातालादयः, 'उद्वतश्च' ऊर्द्ध्ववर्त्तिनः स्वर्गादयोऽपि। हे देव, त्वं 'विश्वसृत्' विश्वस्य स्रष्टा, पाता, वा, 'जीवेषु सर्व्वेषु, प्राणिषु 'धन्यः' ईश्वरः, 'जीवधन्यः', तादृशो भूत्वा 'नः' अस्मदीयं, 'इदं' 'हव्यं', 'प्रतिहर्य्य' प्रतिगृहाण॥

अथ हविषः पुरोऽनुवाक्यामाह। "प्रजापतिं प्रथमं यज्ञियानाम्। देवानामग्रे यजतं यजध्वम्। स नो ददातु द्रविणꣳ सुवीर्य्यम्। रायस्पोषं विष्यतु नाभिमस्मे" इति। 'यज्ञियानाम्' यज्ञयोग्यानाम्,'देवानां', मध्ये 'प्रथमं' मुख्यं,'प्रजापतिं', 'यजतं' यजनीयम्, 'अग्रे' 'यजध्वम्, हे ऋत्विजः, आदौ पूजयत। 'सः' प्रजापतिः, 'नः' अस्मभ्यं, 'द्रविणं' धनं, 'रायस्पोषं' धनपुष्टिं,

'सुवीर्य्यं' शोभनसामर्थ्यञ्च 'ददातु' प्रयच्छतु। 'नाभिं' नहनम्, दारिद्र्यादिबन्धनम्; 'अस्मे वियतु' अस्मत्तः शिथिलयतु॥

अथ हविषो याज्यामाह। "यो राय ईशे शतदाय उक्थ्यः। यः पशूनाꣳ रक्षिता विष्ठितानाम्। प्रजापतिः प्रथमजा ऋतस्य [४]। सहस्रधामा जुषताꣳ हविर्नः" इति। 'यः' प्रजापतिः, 'शतदायः' शतसङ्ख्याकधनप्रदः,'उक्थ्यः' स्तुत्यः सन्, 'राय ईशे' धनस्येश्वरो भवति। 'यः', च प्रजापतिः, 'विष्ठितानां' विविधमवस्थितानां, गोमहिषादीनां 'पशूनां', 'रक्षिता', वर्त्तते, स 'प्रजापतिः', 'ऋतस्य' यज्ञस्य, 'प्रथमजाः' प्रथममुत्पादकः, 'सहस्रधामा' सहस्रसङ्ख्याकस्थानयुक्तः सन्, 'नः' अस्मदीयं, 'हविः', 'जुषताम्'॥

अथ सोमापौष्णं चैतमालभेत पशुकाम इत्यस्य पशोः सूक्ते वपासम्बन्धियाज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति। "सोमापूषणेमौ देवौ" इति। सोमापूषा जननेति पुरोऽनुवाक्या। इमौ देवौ जायमानौ जुषन्तेति याज्या। एतच्चोभयमग्नाविष्णू महितद्वां महित्वमित्यत्र व्याख्यातम्॥

अथ तत्रैवपुरोडाशस्य पुरोऽनुवाक्यामाह। "सोमापूषणा रजसो विमानम्। सप्तचक्रꣳ रथमविश्वमिन्वम्। विषूवृतं मनसा युज्यमानम्। तं जिन्वथो वृषणा पञ्चरश्मिम्" इति। हे 'सोमापूषणौ', 'वृषणा' कामवर्षकौ, 'तं,' रथं 'जिन्वथः' प्रीणयथः, आरोहणेनालङ्कुरुत इत्यर्थः। कीदृशं रथं, 'रजसः' रञ्जनात्मकस्य गमनस्य, 'विमानं' निर्म्मातारं, 'सप्तचक्रं' सप्तसङ्ख्या-

केश्चक्रैर्युक्तम्। अतएवान्यत्राप्याम्नायते। 'सप्तचक्रं सप्त वहन्त्यश्वा' इति। 'अविश्वमिन्वं' विश्वैः प्राणिभिः मीयते परिच्छिद्यत इति विश्वमिन्वः, तद्विलक्षणम्, 'अविश्वमिन्वं', केनापि परिच्छेत्तुमशक्यमित्यर्थः। 'विषूवृतं' अप्रतिहतगतित्वान्नानादेशेषु वर्त्तमानम्, 'मनसा युज्यमानं' इच्छामात्रेणाश्वैः संयुज्यमानं, 'पञ्चरश्मिं' हेमन्तशिशिरयोरैक्येन पञ्चर्त्तवो रश्मिस्थानीया यस्य सूर्य्यरथस्य सोऽयं 'पञ्चरश्मिः'। आदित्यरथगमनेन हि ऋतवो निष्पाद्यन्ते। तस्मादृतूनां रश्मित्वोपचारः॥

अथ पुरोडाशस्य याज्यामाह। "दिव्यन्यः सदनं चक्र उच्चा। पृथिव्यामन्यो अध्यन्तरिक्षे। तावस्मभ्यं पुरुवारं पुरुक्षुम्। रायस्पोषं विष्यतां नाभिमस्मे" [५] इति। योयं सोमस्तस्य यश्च पूषाऽऽदित्यः, तयोः 'अन्यः' एकः सूर्य्यः; 'दिवि' द्युलोके, 'उच्चा' 'सदनं' 'चक्रे' उन्नतदेशे स्थानं कृतवान्। 'अन्यः' चन्द्रः, 'पृथिव्याम्', 'अन्तरिक्षे', च 'अधि' उपरि 'सदनं' स्थानं, चक्रे। 'पृथिव्यां', लतात्मकः सोमस्तिष्ठति, 'अन्तरिक्षे', चन्द्रस्तिष्ठति। 'तौ' सोमापूषणौ, 'अस्मभ्यं', 'रायस्पोषं', दत्तामिति शेषः। कीदृशं, 'पुरुवारं' पुरुभिर्बहुभिर्वरणीयं, 'पुरुक्षुं' पुरुभिर्बहुभिः 'क्षुयते' शब्द्यते प्रशस्यते इति 'पुरुक्षुं', तादृशम्। 'नाभिं' नहनं, दारिद्र्यबन्धनं, 'अस्मे विष्यतां' अस्मत्तः शिथिलयताम्॥

अथ हविषः पुरोऽनुवाक्यामाह। "धियं पूषा जिन्वतु विश्वमिन्वः। रयिꣳ सोमो रयिपतिर्दधातु। अवतु देव्य-

दितिरनर्वा। बृहद्वदेम विदथे सुवीराः" इति। विश्वं मिनोति एतावदिति निश्चिनोतीति 'विश्वमिन्वः', तादृशः 'पूषा' सूर्य्यः, 'धियम्' अस्मद्बुद्धिं, 'जिन्वतु' प्रीणयतु। 'रयिपतिः' धनस्वामी, 'सोमः', 'रयिं' धनं, 'दधातु' अस्मासु सम्पादयतु। 'अदितिः' भूमिर्देवी, अस्मान् 'अवतु'। कीदृशी, 'अनर्वा' अर्वणा भ्रातृव्येण रहिता। भ्रातृव्यो वा अर्वेति श्रुतेः। सर्व्वोऽपि भूमेर्बन्धुरेव न तु कश्चिदपि शत्रुः। 'सुवीराः' शोभनपुत्राद्युपेताः, वयं, 'विदथे' यज्ञे, 'बृहत्' प्रौढं स्तोत्रं 'वदेम'॥

अथ हविषो याज्यामाह। "विश्वान्यन्यो भुवना जजान। विश्वमन्यो अभिचक्षाण एति। सोमापूषणाववतं धियं मे। युवभ्यां विश्वाः पृतना जयेम" इति। 'अन्यः' सोमः, 'विश्वानि', 'भुवनानि', ओषधिद्वारा 'जजान' उत्पादयामास। 'अन्यः' पूषा, 'विश्वम्', 'अभिचक्षाणः' सर्व्वतः प्रकाशयमानः, प्रतिसञ्चरति। हे 'सोमापूषणौ', 'मे', 'धियं' बुद्धिं, सत्कर्म्मविषयां; 'अवतं' रक्षतम्। 'युवभ्यां' युवयोः प्रसादात्, वयं 'विश्वाः पृतनाः' सर्व्वाः परकीयसेनाः, 'जयेम'॥

अथ यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमालभेतेत्यस्य पशोः वपापुरोडाशहविःषु प्रत्येकं याज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति। "उदुत्तमं वरुणास्तभ्नाद्याम्। यत्किञ्चेदं कितवासः। अवते हेडस्तत्त्वायामि" इति। उदुत्तमं वरुणपाशमिति वपायाः पुरोऽनुवाक्या, सा च इमामग्न इत्यत्र व्याख्याता। अस्तभ्नाद्यामृषभ इति याज्या,

सा च उदायुषास्वायुषेत्यत्र व्याख्याता। यत्किञ्चेदं वरुणेति पुरोडाशस्य पुरोऽनुवाक्या। कितवासो यद्रिरिपुरिति याज्या। तदुभयं त्वमग्ने बृहदित्यत्र व्याख्यातम्। अवतेहेडो वरुणेति हविषः पुरोऽनुवाक्या, सा च वैश्वानरो न इत्यत्र व्याख्याता। तत्त्वायामि ब्रह्मणेति याज्या, सा चेन्द्रं वो विश्वतस्परीन्द्रस्य इत्यत्र व्याख्याता॥

अथ यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामविंवशामादित्येभ्यः कामायालभेतेत्यस्य पशोः सूक्ते वपापुरोडाशहविष्षु क्रमेण याज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति। "आदित्यानामवसा न दक्षिणा। धारयन्त आदित्यासस्तिस्रो भूमीर्धारयन्। यज्ञो देवानाꣳ शुचिरपः" [६] इति। आदित्यानामवसा नूतनेनेति वपायाः पुरोऽनुवाक्या, न दक्षिणा चिकितिसत इति याज्या। धारयन्त आदित्यासो जगत्स्था इति पुरोडाशस्य पुरोऽनुवाक्या। तिस्रो भूमीर्धारयंस्त्रीꣳ रुतद्यूनिति याज्या। यज्ञो देवानां प्रत्येतीति हविषः पुरोऽनुवाक्या। शुचिरपः सूयवसा इति याज्या। तदेतत् सूक्तं सर्व्वम्, इन्द्रं वो विश्वतस्परीन्द्रस्सर इत्यत्र व्याख्यातम्। अत्रेदं सूक्तं यो ब्रह्मवर्चसकामः स्यात्तस्मा एतां दशर्षभामालभेतेति पशौ योजनीयम्। पूर्व्वोक्ते तु पशौ सूक्तमुत्तरत्र भविष्यति। तत्र हि कामेन देवा इति कामशब्दोदिता लिङ्गविशेषः प्रतीयते। लिङ्गेन हि पाठक्रमस्य बाधा युक्तः। तस्माद्दशर्षभाया आदित्यदेवताकत्वात्तत्रेदं सूक्तमुत्कृष्टव्यम्॥

अत्र विनियोगसङ्ग्रहः ॥

याज्याः काम्यपशूनां तु वर्णिता अष्टमे क्रमात् ।
ऋचः षट् सूक्त एकस्मिन् तद्विशेषाद्विविच्यते ॥
पीवोऽन्नामिति वायव्ये पशौ सूक्तमुदीरितम् ।
प्रजासूक्तन्तूपरे स्यात् सैामा चैते पशुप्रदे ॥
उदुत्तमं वारुणेऽस्यादित्यानामितितत्त्वतः ।
दशर्षभायां विज्ञेयं लिङ्गेन क्रमबाधनात् ॥

इति प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः ।

प्रथमानुवाके गवादीनां पशूनां सूक्तान्यभिहितानि। द्वितीये वशादीनां पशूनां सूक्तान्युच्यन्ते। तत्र स एतामविं-वशामादित्येभ्यः कामायालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "ते शुक्रासः शुचयो रश्मिवन्तः। सीद-न्त्वादित्या अधि बर्हिषि प्रिये। कामेन देवाः सरथं दिवो नः। आयान्तु यज्ञमुप नो जुषाणाः" इति। 'ते' प्रसिद्धा आदित्याः, 'प्रिये' बर्हिषि, अस्मदीये यागे,'अधिसीदन्' अधिष्ठाय सीदन्तु, कीदृशा आदित्याः, 'शुक्रासः' कान्तियुक्ताः, 'शुचयः' शुद्धिहेतवः, 'रश्मिवन्तः' रश्मिभिरनेकैर्युक्ताः, 'कामेन' अभिलषितार्थप्रदेन सहिताः, 'आदित्याः', 'देवाः', 'सरथं' रथसहितं यथा भवति तथा 'दिवः' सकाशात्, 'नः' अस्मान्,

प्रति, 'आयान्तु'। ततः 'नः' अस्मदीयं, 'यज्ञम्', 'उपेत्य 'जुषाणाः' प्रीतिपूर्व्वकं सेवमानाः' तिष्ठन्तु॥

अथ वपाया याज्यामाह। "ते सूनवो अदितेः पीवसामिषम्। घृतं पिन्वत् प्रतिहर्य्यन् नृतेजाः। प्र यज्ञिया यजमानाय येमुरे। आदित्याः कामं पितुमन्तमस्मे" इति। 'ते' प्रसिद्धाः,'अदितेः' अदितिदेवतायाः 'सूनवः' पुत्राः,'नृतेजाः' यज्ञनिमित्तमुत्पन्नाः सन्तः, 'पीवसां' पीवराणां, अतिस्थूलानां हविषां मध्ये 'इषं' इष्यमाणं, अस्मदीयपुरोडाशरूपमन्नं; 'पिन्वत्' 'घृतं' प्रीतिसाधनम् आज्यं, च 'प्रतिहर्य्यत्' प्रत्येकं कामयन्ताम्। 'यज्ञियाः' यज्ञयोग्याः,'आदित्याः', 'अस्मे' मह्यं, 'यजमानाय', 'पितुमन्तम्' अन्नवन्तम्, 'कामं' अभिलषितार्थं, 'प्रयेमुरे' दत्तवन्तः॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "आ नः पुत्रा अदितेर्यान्तु यज्ञम्। आदित्यासः पथिभिर्देवयानैः [१]। अस्मे कामं दाशुषे सन्नमन्तः। पुरोडाशं घृतवन्तं जुषन्ताम्" इति। 'अदितेः', 'पुत्राः', 'आदित्यासः' आदित्यनामका देवाः, 'देवयानैः' 'पथिभिः' देवानां योग्यैर्मार्गैः, 'नः' अस्मदीयम्, 'यज्ञम्', प्रति 'आयान्तु'। आगत्य च, 'दाशुषे' हविर्दत्तवते, 'अस्मे' मह्यं, यजमानाय; 'कामम्' अभिलषितार्थं, 'सन्नमन्तः' प्रापयन्तः, 'घृतवन्तं' बहुलघृतयुक्तं, 'पुरोडाशं', 'जुषन्तां'॥

अथ पुरोडाशस्य याज्यामाह। "अस्कभायत निर्ऋतिꣳ सेधतामतिम्। प्र रश्मिभिर्यतमाना अमृध्राः। आदित्याः काम

प्रयतां वषट्कृतिम्। जुषध्वं नो हव्यदातिं यजत्राः” इति। हे ‘आदित्याः’, हे ‘काम’, यूयं सर्व्वे ‘निर्ऋतिं’ राक्षसजातिं, बाधिकां देवतानां, ‘स्कभायत’ स्तब्धां कुरुत, अस्मद्बाध-सामर्थ्यरहितां कुरुतेत्यर्थः। ‘अमतिं’ अस्मदीयं बुद्धिमान्द्यं, ‘सेधत’ प्रतिषेधत, निवारयेत्यर्थः। कीदृशा आदित्याः, ‘रश्मिभिः’, स्वकीयैः,‘प्रयतमानाः’ अन्धकारनिवारणार्थमुद्योगं कुर्व्वन्तः, ‘अमृध्राः’ अमृदवः, अनिष्टनिवारणे तीक्ष्णा इत्य-र्थः। तादृशा यूयं, ‘प्रयतां’ परिशुद्धां, ‘हव्यदातिं’ हवि-र्दानकारणभूतां, ‘नः’ ‘वषट्कृतिं’ अस्माभिः प्रयुक्तं वषट्कारं ‘जुषध्वं’। कीदृशा यूयं, ‘यजत्राः’ यज्ञयोग्याः ॥

अथ हविषः पुरोऽनुवाक्यामाह। “आदित्यान् काममवसे हुवेम। ये भूतानि जनयन्तो विचिख्युः। सीदन्तु पुत्रा अदितेरुपस्थम्। स्तीर्णं बर्हिर्हविरद्याय देवाः” [२] इति। ‘ये’ पूर्व्वोक्ता आदित्याः, ‘देवाः’, यश्च कामदेवः, तान् सर्व्वान् ‘अवसे’ अस्मद्रक्षार्थं, ‘हुवेम’ इह कर्म्मण्याह्वयामः। ‘ये’ ‘देवाः’, ‘भूतानि जनयन्तः’ प्राणिजातान्युत्पादयन्तः, ‘विचिख्युः’ विशेषेण ख्यातिं गताः। ते देवाः, ‘अदितेः’, ‘पुत्राः’, ‘हवि-रद्याय’ हविर्भक्षणाय, ‘उपस्थं’ समीपे स्थातुं योग्यं, ‘स्तीर्णं’ वेद्यां प्रसारितं बर्हिः, ‘सीदन्तु’ ॥

अथ हविषो याज्यामाह। “स्तीर्णं बर्हिः सीदता यज्ञे अस्मिन्। ध्राजाः सेधन्तो अमतिं दुरेवाम्। अस्मभ्यं पुत्रा अदितेः प्रयꣳसत। आदित्याः कामहविषो जुषाणाः” इति।

हे 'आदित्याः', हे 'काम', 'अस्मिन्' 'यज्ञे', 'स्तीर्णं' वेद्यां आस्तीर्णं, 'बर्हिः', 'सीदत' प्राप्नुत। कीदृशाः, 'भ्राजाः' गतिमन्तः, 'अमतिं' अस्मदीयं बुद्धिमान्द्यं, 'दुरेवां' दुर्गतिञ्च 'सेधन्तः', तादृशाः 'अदितेः', 'पुत्राः', 'यूयं, 'हविषो जुषाणाः' अस्मदीयं हविः सेवमानाः, 'अस्मभ्यं', 'प्रयंसत' अभीष्टं प्रयच्छत ॥

अथ यो ब्रह्मवर्च्चसकामः स्यात्तस्मा एतामग्ना आलभेत, 'आग्नेयीं कृष्णग्रीवीᳶ सᳶहितामैन्द्रीᳶ श्वेतां बार्हस्पत्याम्' इति, अत्राग्नेय्यां सूक्तेर्वपायाः पुरोऽनुवाक्यामाह। "अग्ने नय सुपथा राये अस्मान्। विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनः। भूयिष्ठां ते नमउक्तिं विधेम" इति। हे 'अग्ने','देव', त्वं 'विश्वानि' 'वयुनानि' सर्वान् मार्गान्,'विद्वान' जानन्, वर्त्तसे, अतः 'अस्मान्', 'राये' धनप्राप्त्यै, 'सुपथा' 'नय' शोभनेन कर्म्मानुष्ठानमार्गेण प्रापय, 'जुहुराणं' कुटिलं, प्रतिबन्धकं, 'एनः' पापं, 'अस्मद्युयोऽधि' अस्मत्तः पृथक् कुरु, 'ते' तुभ्यं, 'भूयिष्ठां' अतिबहुलां, 'नमउक्तिं' नमस्कारयुक्तां वाचं, 'विधेम' कुर्य्याम ॥

अथ वपाया याज्यामाह। "प्र वः शुक्राय भानवे भरध्वम्। हव्यं मतिञ्चाग्नये सुपूतम् [२]। यो दैव्यानि मानुषा जनूᳶषि। अन्तर्विश्वानि विद्मना जिगाति" इति। हे ऋत्विजः, 'वः' युष्माकम्, अभीष्टसिद्ध्यर्थं, 'शुक्राय' निर्मलाय, 'भानवे' रश्मियुक्ताय, 'अग्नये', 'सुपूतं' सुष्ठु पूतम्, शुद्धमिदं 'हव्यं', 'मतिञ्च',

अग्निध्यानार्थं 'प्रकर्षेण 'भरध्वं' सम्पादयत। 'यः' अग्निः, 'दैव्यानि' देवविषयाणि, 'मानुषा' मनुष्यविषयाणि, 'जनूंषि' जन्मानि, 'विद्मना' वेदनेन, 'जिगाति' प्राप्नोति, अभिज्ञः सन् देवान् मनुष्यांश्च जनयतीत्यर्थः। पुनरपि 'अन्तः' देवानां मनुष्याणाञ्च मध्ये, तानि अवान्तरजन्मानि यक्षगन्धर्व्वादीनि, ब्राह्मणक्षत्रादीनि च तानि 'विश्वानि' सर्व्वाणि, 'जिगाति'। तस्मा अग्नय इति पूर्व्वत्रान्वयः ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "अच्छा गिरो मतयो देवयन्तीः। अग्निं यन्ति द्रविणं भिक्षमाणाः। सुसन्दृशꣳ सुप्रतीकꣳ स्वञ्चम्। हव्यवाहमरतिं मानुषाणाम्" इति। 'गिरः' अस्मदीयाः स्तुतिरूपा वाचः, 'मतयः' ध्यानरूपा बुद्धयश्च, 'देवयन्तीः' देवानिच्छन्त्यः, 'द्रविणं' 'भिक्षमाणाः' धनं याचमानाः, 'अग्निमच्छ' अग्निमभिमुखीकृत्य, 'यन्ति' प्रवर्त्तन्ते। कीदृशमग्निं, 'सुसन्दृशं' अत्यन्तं सुखेन द्रष्टुं शक्यं, 'सुप्रतीकं' शोभनावयवोपेतं, 'स्वञ्चं' शोभनगतिं, 'मानुषाणां' यजमानानां, 'हव्यवाहं' हविषो वोढारं, मानुषैर्यद्धविर्दीयते तद्देवान् प्रति वहतीत्यर्थः। रतिरुपरमः, तद्रहितम् 'अरतिं', निरन्तरं वहतीत्यर्थः ॥

अथ पुरोडाशस्य याज्यामाह। "अग्ने त्वमस्मद्युयोध्यमीवाः। अनग्नित्रा अभ्यमन्त कृष्टीः। पुनरस्मभ्यꣳ सुविताय देव। क्षां विश्वेभिरजरेभिर्यजत्र" [४] इति। हे 'अग्ने', 'त्वं', 'अमीवाः' रोगजातीः, 'अस्मद्युयोधि' अस्मत्तो वियोजय। या

रोगजातयः, 'अनग्निचाः' उदराग्निचाणरहिताः, मन्दाग्नि-हेतव इत्यर्थः। तादृश्यो भूत्वा 'कृष्टीः' मनुष्यान्, 'अभ्यमन्त' अभितो बाधितवत्यः, तादृशीः, युयोधीति पूर्व्वेणान्वयः। हे 'यजत्र' यजनीय, 'देव', 'अजरेभिः' जरानिवर्त्तकैः, 'विश्वेभिः' सर्व्वैरौषधैः, 'चां' चयव्याधिं, 'पुनः', 'अस्मभ्यं' 'युयोधि' अस्मत्तो वियोजय। किमर्थं, 'सुचिताय' शोभनगमनाय, नीरोगत्वेन जीवनायेत्यर्थः॥

अथ हविषः पुरोऽनुवाक्यामाह। "अग्ने त्वं पारया नव्यो अस्मान्। स्वस्तिभिरतिदुर्गाणि विश्वा। पूश्च पृथ्वी बहुला न उर्वी। भवा तोकाय तनयाय शं योः" इति। हे 'अग्ने', 'त्वं', 'स्वस्तिभिः' श्रेयोविशेषैः फलयुक्तः सन्, 'अस्मान्', 'पारय' कर्म्मणः समाप्तिं प्रापय। कीदृशस्त्वं, 'नव्यः' सर्व्वदा नूतनः, जरामरणरहित इत्यर्थः। 'नः' अस्माकं, 'पूश्च' निवासार्थं पुरी, 'पृथ्वी', विस्तृता भवतु, 'उर्वी' सस्यनिष्पत्त्यर्था भूमिश्च, 'बहुला' अत्यधिका भवतु, त्वञ्च 'तोकाय' पुत्राय, 'तनयाय' तत्पुत्राय, च 'शं' सुखहेतुः, 'योः' दुःखवियोगहेतुश्च भव॥

अथ हविषो याज्यामाह। "प्र कारवो मनना वाच्यमानाः। देवद्रीचीन्नयथ देवयन्तः। दक्षिणा वाड्वाजिनी प्राच्येति। हविर्भरन्त्यग्नये घृताची" इति। हे 'कारवः' कर्त्तारः, ऋत्विजः, यूयं 'वाच्यमानाः' अत्र पाठरूपं वचनं प्राप्नुवन्तः, 'देवयन्तः' देवानिच्छन्तः, 'मनना' मननीयाम्, इमां यागक्रियां 'देवद्रीचीं नयथ' देवान् प्रति यथा गच्छति तथा

प्रापयत। सा च यज्ञक्रिया, दक्षिणां वहतीति 'दक्षिणावाट्', वाजोऽन्नमस्यास्तीति 'वाजिनी', प्रकृष्टं फलं अञ्चति गच्छतीति 'प्राची', घृतमञ्चति प्राप्नोतीति 'घृताची', 'अग्नये', 'हविर्भरन्ती', सती, 'एति' प्रवर्त्तते॥

अथ संहितामैन्द्रीमित्यस्य पशोः सूक्ते वपाया याज्यानुवाक्ययोः प्रतीके दर्शयति। "इन्द्रं नरो युजे रथम्" इति। इन्द्रं नरो नेमधितेति पुरोऽनुवाक्या, सा चेन्द्र वो विश्वतस्परीत्यत्र व्याख्याता। युजे रथं गवेषणमिति याज्या, सा च जुष्टोदमूना इत्यत्र व्याख्याता॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "जगृभ्णा ते दक्षिणमिन्द्र हस्तम्[५]। वसूयवो वसुपते वसूनाम्। विद्मा हि त्वा गोपतिꣳ शूर गोनाम्। अस्मभ्यं चित्रं वृषणं रयिं दाः" इति। हे 'इन्द्र','ते' त्वदीयं,'दक्षिणहस्तं', 'जगृभ्णा' वयं गृहीतवन्तः, हस्तं धृत्वा प्रार्थयाम इत्यर्थः। कीदृशा वयं, 'वसूयवः' धनेच्छावन्तः, 'वसूनां' 'वसुपते' इत्येतदिन्द्रस्य विशेषणं; यानि वसूनि धनानि हिरण्यानि सन्ति, तेषां मध्ये यानि श्रेष्ठानि मणिमुक्तादीनि तत्स्वामिन् इत्यर्थः। हे 'शूर' शत्रूणामभिभवितः,'त्वां', 'गोनां' गवां मध्ये, 'गोपतिं' प्रशस्तगोस्वामिनं, 'हि' यस्मात्, वयं 'विद्म', तस्मात्, 'अस्मभ्यं','चित्रं' नानाविधं, 'वृषणं' कामाभिवर्षणक्षमं, 'रयिं दाः' धनं देहि॥

अथ पुरोडाशस्य याज्यामाह। "तवेदं विश्वमभितः पशव्यम्। यत् पश्यसि चक्षुसा सूर्यस्य। गवामसि गोपतिरेक

इन्द्र । भक्षीमहि ते प्रयतस्य वस्वः" इति । हे 'इन्द्र', 'सूर्यस्य', 'चक्षुषा' प्रकाशेन, 'यत्' 'विश्वं', 'पश्यसि', तत् इदं विश्वम्, 'अभितः' सर्व्वतः, 'पशव्यं' पशुयुक्तं, त्वदधीनमितिशेषः । त्वम्, 'एकः', एव 'गवां', मध्ये, 'गोपतिरसि' प्रशस्तगोस्वामी भवसि । 'प्रयतस्य' प्रयतमानस्य, 'ते' तव, 'वस्वः' वसूनि, धनानि, 'भक्षीमहि' अनुभूयास्म ॥

अथ हविषः पुरोऽनुवाक्यामाह । "समिन्द्र णो मनसा नेषि गोभिः । सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति [६] । सं देवानाꣳ सुमत्या यज्ञियानाम्" इति । हे 'इन्द्र', त्वं 'मनसा' स्मरणमात्रेण, 'नः' अस्मान्, 'गोभिः', 'सं'योजय, हे 'मघवन्', 'सूरिभिः' विद्वद्भिः, पुत्रैः, 'सं'योजयस्व । अनुग्रहबुद्ध्या संयोजय ॥

अथ हविषो याज्यामाह । "आराच्छत्रुमपबाधस्व दूरम् । उग्रो यः शम्बः पुरुहूत तेन । अस्मे धेहि यवमद्गोमदिन्द्र । कृधी धियं जरित्रे वाजरत्नाम्" इति । हे 'पुरुहूत' बहुभिर्यजमानैराहूत, इन्द्र, 'उग्रः' क्रूरः, 'यः', 'शम्ब'नामकोऽसुरः, 'तेन', सहितम्, 'आरात्' समीपे वर्त्तमानं, 'शत्रुं', 'दूरं', यथा भवति तथा, 'अपबाधस्व'। हे 'इन्द्र', 'यवमत्' यवैः प्रभूतैरुपेतं, 'गोमत्' बहुभिर्गोभिरुपेतं, धनम्, 'अस्मे धेहि' अस्मासु स्थापय । 'जरित्रे' जरणशीले, मयि, 'वाजरत्नां' अन्नेन रत्नैश्च सम्पूर्णां, 'धियम्' अनुग्रहबुद्धिं, 'कृधि' कुरु ॥

अथ श्वेतां बार्हस्पत्यामित्यस्य पशोः सूक्ते वपाया याज्या-

नुवाक्ययोः प्रतीके दर्शयति। "आवेधसꣳ सहि शुचिः" इति। आवेधसं नीलपृष्ठमिति पुरोऽनुवाक्या। "सहि शुचिः शतपत्र" इति याज्या। एतदुभयं यज्ञो राय इत्यत्र व्याख्यातम्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "बृहस्पतिः प्रथमं जायमानः। महो ज्योतिषः परमे व्योमन्। सप्तास्यस्तुविजातो रवेण। वि सप्तरश्मिरधमत्तमाꣳसि" [७] इति। योऽयं 'बृहस्पतिः', सोऽयमितरेभ्यो देवेभ्यः 'प्रथमं' पूर्व्वं, 'जायमानः', सन् 'परमे व्योमन्' उत्कृष्टे आकाशे, स्वर्गरूपे, 'ज्योतिषः' 'महः' अन्यदीयात् प्रकाशादत्यन्तं महान् भासते। कीदृशो बृहस्पतिः, 'रवेण' वेदशास्त्ररूपेण शब्देन 'सप्तास्यः' प्रसृतमुखः, अथवा सप्तसङ्ख्याकान्यास्यानि ज्वालारूपाणि यस्याग्नेः, सोऽयं सप्तास्यः, 'रवेण' मन्त्रेण, होमकाले हविः स्वीकर्त्तुं वह्निरूपो भवतीत्यर्थः। 'तुविजातः' सर्व्वेषां मध्ये बलयुक्तत्वेनोत्पन्नः, तादृशो बृहस्पतिः, 'सप्तरश्मिः' अग्निरूपेण सप्तजिह्वात्मकरश्मियुक्तः सन्, 'तमांसि', 'व्यधमत्' विनाशितवान्॥

अथ पुरोडाशस्य याज्यामाह। "बृहस्पतिः समजयद्वसूनि। महो व्रजान् गोमतो देव एषः। अपः सिषासन्त्सुवरप्रतीत्तः। बृहस्पतिर्हन्त्यमित्रमर्कैः" इति। अयं 'बृहस्पतिः' 'वसूनि' धनानि, 'समजयत्' सम्यक् जितवान्, तथा 'एष' 'देवः', 'गोमतः' बहुभिर्गोभिर्युक्तान्, 'महः' महतः, प्रौढान्, 'व्रजान्' गोगृहान्, 'समजयत्'। तादृशो बृहस्पतिः, 'अपः सिषासन्' वृष्टिरूपं जलं दातुमिच्छन्, 'सुवः' स्वर्गम्, 'अप्रतीत्तः'

प्रवृत्तिरादित्येन प्राप्तः, सर्व्वदा तत्र स्थित इत्यर्थः। स च 'बृहस्पतिः', 'अर्कैः' अस्मत्कृतैरर्चनैः, 'अमित्रं' शत्रुं, हन्ति॥

अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति। "बृहस्पते पर्य्येवा पित्रे" इति। बृहस्पते परिदीया रथेनेति पुरोऽनुवाक्या। एवा पित्रे विश्वदेवायेति याज्या। बृहस्पते परिदीया रथेनेत्यसावाम्नातः प्रशान इत्यत्र व्याख्याता। एवा पित्रे विश्वदेवायेत्यसावाम्ना विष्णुमहितद्वामित्यत्र व्याख्याता॥

अथ सारस्वतं मेषमित्यस्य पशोः सूक्ते पशूनां गवां प्रतीकानि दर्शयति। "आनो दिवः पावीरवी। इमा जुह्वाना यस्ते स्तनः। सरस्वत्यभि नो नेषि" इति। आनो दिवो बृहत इत्येषा वपायाः पुरोऽनुवाक्या। सा चाम्ना विष्णुमहितद्वामित्यत्र व्याख्याता। पावीरवी कन्येत्येषा याज्या, सा चाग्नेयं यज्ञमित्यत्र व्याख्याता। इमा जुह्वाना युष्मदा नमोभिरित्येषा पुरोडाशस्य पुरोऽनुवाक्या। सा चातनः प्रियत्यत्र व्याख्याता। यस्ते स्तनः शशय इति याज्या। सा चारण्यकाण्डे प्रवर्ग्यमन्त्रेषु व्याख्यास्यते। सरस्वत्यभि नो नेषि वस्य इति हविषः पुरोऽनुवाक्या। सा च जुष्टीनर इत्यत्र व्याख्याता॥

अथ हविषो याज्यामाह। "इयꣳ शुष्मेभिर्बिसखा इवारुजत्। सानु गिरीणां तविषेभिरूर्म्मिभिः। पारावतघ्नीमवसे सुवृक्तिभिः। सरस्वतीमाविवासेम धीतिभिः" [८] इति। 'इयं' सरस्वती, नदीरूपा, 'ऊर्म्मिभिः' स्वकीयैस्तरङ्गैः, स्वतीरावस्थितानां 'गिरीणां', 'सानु' मूलप्रदेशम्, 'अरुजत्' भग्नम-

करोत्। तत्र दृष्टान्तः, 'बिसखा इव' यथा जलमध्ये बिसानि खनितुं प्रवृत्तः पुरुष आयासमन्तरेणैवोन्मूलयति, एवमत्राप्यूर्म्मिस्पर्शमात्रेण पर्व्वतमूलानि विशीर्णानि भवन्ति। कीदृशैरूर्म्मिभिः, 'शुष्मेभिः' प्रबलैः, 'तविषेभिः' अतिस्थूलैः, वयन्तु 'सरस्वतीं','धीतिभिः' ध्यानविशेषैः, 'आविवासेम' सर्व्वत आच्छादयामः। किमर्थं, 'अवसे' रक्षणार्थम्। कीदृशीं सरस्वतीं, 'पारावतघ्नीं', 'अवदम्' अवरतीरं, 'पारं' परतीरञ्च स्ववेगेन हन्तीति 'पारावतघ्नी', तां। कीदृशीभिर्धीतिभिः, 'सुवृक्तिभिः' वृक्तिरन्यचिन्तावर्ज्जनं, सुष्टु वृक्तिर्यासु ध्यानक्रियासु ताः सुवृक्तयः, ताभिः, अनन्यचित्तरहितैर्ध्यानविशेषैर्निरन्तरं ध्यायाम इत्यर्थः॥

अत्र विनियोगसङ्ग्रहः।

ते शुक्रेति वपायां स्यादाग्नेयामग्न इत्यथ।<br>
इन्द्रमैन्द्र्यां तथावेधसं श्वेतायामुदीरितम्॥<br>
आनो मेष्यां द्वितीयेऽस्मिन् सूक्तपञ्चकमीरितम्।

इति द्वितीयोऽनुवाकः।

---

अथ तृतीयोऽनुवाकः।

द्वितीये वशादीनां पशूनां सूक्तान्यभिहितानि। तृतीये सौम्यादीनां सूक्तान्युच्यन्ते। तत्राप्याग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुञ्ज्योगामयावीत्येतस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्या-

माह। "सोमो धेनुꣳ सोमो अर्व्वन्तमाशुम्। सोमो वीरं कर्म्मण्यं ददातु। सादन्यं विदथ्यꣳ सभेयम्। पितुःश्रवणं यो ददाशदस्मै" इति। योऽयं 'सोमः', देवः, सोऽयम् 'अस्मै' यजमानाय, 'धेनुं', 'ददातु'। तथा स 'सोमः', 'आशुं' शीघ्रगामिनं, 'अर्व्वन्तम्' अश्वं, 'ददातु'। तथा स 'सोमः', 'कर्म्मण्यं' श्रौतस्मार्त्तकर्म्मयोग्यं, 'वीरं' पुत्रं, 'ददातु'। कीदृशं वीरं, सदनं गृहं, तत्र साधुः, 'सादन्यः', तं, गृहनिर्व्वाहकमित्यर्थः। विदथे यज्ञे कुशलं 'विदथ्यं'; सभायां साधु; 'सभेयं', स्वकीयस्य पितुः श्रवणं कीर्त्तिः सम्पाद्यते येन सोऽयं 'पितुश्रवणः'; तं, 'यः' यजमानः, सोमाय देवाय 'ददाशत्' चरुपुरोडाशादिकं ददाति, 'अस्मै' यजमानायेति पूर्व्वत्रान्वयः॥

अथ वपाया याज्यायाः पुरोडाशस्य पुरोऽनुवाक्यायाः प्रतीके दर्शयति। "आषाढं युत्सु त्वꣳ सोम क्रतुभिः" इति। "आषाढं युत्सु पृतनासुपप्रिमिति" वपाया याज्या, "त्वं सोमक्रतुभिरिति" पुरोडाशस्य पुरोऽनुवाक्या। एतच्चोभयं शुशीनर इत्यत्र व्याख्यातम्॥

अथ पुरोडाशस्य याज्यायाः प्रतीकं दर्शयन्ति। "या ते धामानि हविषा यजन्ति" इति। अग्नेरातिथ्यमसीत्यत्र व्याख्याता॥

अथ हविषः पुरोऽनुवाक्यामाह। "त्वमिमा ओषधीः सोम विश्वाः। त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्व्वन्तरिक्षम्। त्वं ज्योतिषा वितमो ववर्थ" [१] इति। हे 'सोम', 'त्वं', 'विश्वाः'

'सर्व्वाः', 'इमाः' 'ओषधीः', 'अजनयः'। 'त्वं', 'गाः' गवादि-पशून्, 'अजनयः'। तथा 'त्वम्' 'उरु' विस्तीर्णम्, 'अन्तरीक्षम्', 'आततन्थ' विस्तारितवान्, असि। तथा 'त्वं', 'ज्योतिषा' तेजसा, 'तमः' अन्धकारं, 'ववर्थ' निवारितवानसि॥

अथ हविषो याज्यामाह। "या ते धामानि दिवि या पृथिव्याम्। या पर्व्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेडन्। राजन्त्सोम प्रति हव्या गृभाय" इति। हे 'सोम राजन्', 'ते' तव, 'द्युलोके 'या धामानि' यानि स्थानानि, सन्ति, तथा 'पृथिव्यां', यानि सन्ति, 'पर्व्वतेष्वोषधीष्वप्सु', यानि सन्ति, 'सुमनाः' अस्माभिः सह सौमनस्ययुक्तः, त्वं, 'तेभिः' 'विश्वैः' तैः सर्व्वैः स्थानैर्युक्तः, 'नः' अस्मान् प्रति, 'अहेडन्' क्रोधमकुर्व्वन्। 'हव्या प्रतिगृभाय' हवींषि प्रतिगृहाण॥

अथ वैष्णवं वामनमालभेत स्पर्द्धमान इत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति। "विष्णोर्नुकं तदस्य प्रियम्। प्रतद्विष्णुः" इति। विष्णोर्नुकं वीर्य्याणीति वपायाः पुरोऽनुवाक्या, सेयं युञ्जते मन इत्यत्र व्याख्याता। तदस्य प्रियमभिपाथो अश्या-मिति वपाया याज्या, सेयमुत नः प्रियेत्यत्र व्याख्याता। प्रत-द्विष्णुस्तवत इति पुरोडाशस्य पुरोऽनुवाक्या, सेयं जुष्टीनर इत्यत्र व्याख्याता॥

अथ पुरोडाशस्य याज्यामाह। "परो मात्रया तनुवा वृ-धान। न ते महित्वमन्वश्नुवन्ति। उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वम्। परमस्य वित्से" [२] इति। हे 'विष्णो', 'देव',

'मायया' कृत्स्नं जगन्मातुं प्रवृत्तया, 'तनुवा' त्रिविक्रमावतारूपया मूर्त्या, 'वृधान' हे वर्द्धमान, 'परः' उत्कृष्टोऽसि, 'ते' त्वदीयं, 'महित्वं' महिमानं, 'नान्वश्नुवन्ति' कोऽपि समर्था अनुगन्तुं न क्षमन्ते, 'ते' च लोकान् मातुं प्रवृत्तस्य, 'पृथिव्याः', आरभ्य 'उभे' 'रजसी' द्वे रञ्जनस्थाने, पृथिव्यन्तरिक्षमिल्येते त्वदीयपदे इति वयं 'विद्मः'। त्वं पुनः 'परमस्य' उत्कृष्टस्य तृतीयस्य पदस्य, स्थानं 'वित्से' जानासि॥

अथ हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति। "विचक्रमे त्रिर्देवः" इति। विचक्रमे पृथिवीमेष इति पुरोऽनुवाक्या, त्रिर्देवः पृथिवीमेष इति याज्या। एतच्चोभयं जुष्टोनरः इत्यत्र व्याख्यातम्॥

अथेन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमालभेतेत्यस्य पशोः सूक्ते प्रतीकत्रयं दर्शयति। "आ ते महो यो जात एव। अभिगोत्राणि" इति। आ ते मह इन्द्रोऽत्युग्रेति वपायाः पुरोऽनुवाक्या। यो जात एव प्रथमो मनस्वानिति याज्या। एतच्चोभयमन्वहमासा इत्यत्र व्याख्यातम्। अभिगोत्राणि सहसा गाहमान इति पुरोडाशस्य पुरोऽनुवाक्या, सा च आशुः शिशान इत्यत्र व्याख्याता॥

अथ पुरोडाशस्य याज्यामाह। "अभि स्पृधो मिथतीररिषण्यन्। अमित्रस्य व्यथया मन्युमिन्द्र। आभिर्विश्वा अभियुजो विषूचीः। आर्याय विशोऽवतारीर्दासीः" इति। हे 'इन्द्र', 'अमित्रस्य' अस्मद्वैरिणः, 'मन्युं' क्रोधं, 'व्यथय' बाधितं, नि-

फलं कुरु। अस्मासु क्रुद्धः शत्रुः यदाऽस्मान् हन्तुं न क्षमते, तदा तदीयः क्रोधो निष्फलो भवेत्, तथा त्वं कुर्व्वित्यर्थः। किं कुर्व्वन्, 'स्पृधः' शत्रूणां स्पर्धमानाः, अस्मदीयाः सेनाः, 'मिथतीः' त्वां प्रत्यभयं याचमानाः,'आभिः' अस्मदीयाभिस्तुतिभिः, 'अरिषण्यन्' अहिंसिताः कुर्व्वन्, अस्मदीयस्तुतिभिः तुष्टस्त्वमस्मदीयाः सेना यथा न हिंसिता भवन्ति तथा कुर्व्वित्यर्थः। किञ्च 'विश्वाः' परकीयाः सर्व्वाः सेनाः, 'अभियुजः' अस्मद्वधमभिलक्ष्य प्रयुज्यमानाः, त्वं, 'विषूचीः' नानागतीः, 'दासीः' 'उपक्षयं प्राप्ताः, 'विशः' सर्व्वाः प्रजाः, अभितुष्टः सन् 'अवतारीः' विनाशय, यथास्मदीयस्तुत्या तुष्टः त्वां प्रत्यभयं याचमानानामस्मत्सेनानां न हिंसां कृतवानसि। तथैवास्मदीयस्तुत्या तुष्टः सन् परकीयसेना विनाशयेत्यर्थः॥

अथ हविषः पुरोऽनुवाक्यामाह। "अयꣳ शृण्वे अध जयन्नुतघ्नन्। अयमुत प्रकृणुते युधा गाः। यदा सत्यं कृणुते मन्युमिन्द्रः [२]। विश्वं दृढं भयत एजदस्मात्" इति। 'अयं' इन्द्रः, 'अध' कदाचित्, 'जयन्', वर्त्तते, 'उत' अथवा, 'घ्नन्', वर्त्तते, इत्यहं 'शृण्वे', अयमर्थः,यदा यदेन्द्रस्य वार्त्तां शृणोमि तदा तदा जयतीति वा वैरिणं हन्तीति वा शृणोमि। 'उत' अपि च, 'अयं' इन्द्रः, 'युधा' युद्धे, 'गाः' परकीयाः, 'प्रकृणुते' प्रकर्षेण स्वाधीनाः करोति। किञ्च 'यदा', 'अयम्, 'इन्द्रः', स्वकीयं 'मन्युं,' 'सत्यम्' अवश्यम्भाविनं, 'कृणुते' करोति, तदानीं 'दृढं' क्वचिदेवावस्थितं, स्थावरं, 'एजत्' कम्पमानं,

जङ्गमञ्च, 'विश्वं' सर्व्वं जगत्, 'अस्मात्' इन्द्रात्, 'भयते' बिभेति। अयमर्थः, परिहासार्थं यं कोपमन्तरेण यदा हृदयपूर्व्वकोपं करोति तदा सर्व्वं जगद्बिभेतीति॥

अथ हविषो याज्यामाह। "अनु स्वधामक्षरन्नापो अस्य। अवर्द्धत मध्य आ नाव्यानाम्। सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन। हन्मनाहन्नभिद्यून्" इति। 'अस्य' इन्द्रस्य, 'स्वधां' हविर्लक्षणं, 'अनु', 'आपः' वृष्टिलक्षणाः, 'अक्षरन्' स्रवन्ति, 'नाव्यानां' नावा तरणीयानां नदीनां मध्ये 'आवर्द्धत', जलं सर्व्वतो अभिवृद्धमभूत्। अयं, 'इन्द्रः', 'ओजिष्ठेन' अत्यन्तबलयुक्तेन, 'सध्रीचीनेन' सह प्रवर्त्तमानेन, 'मनसा', युक्तः,'तं' प्रसिद्धं मेघं, 'अभिद्यून्' प्रतिदिनं, 'हन्मना' हन्त्रा, स्वायुधेन वज्रेण; 'अहन्' ताडयति। अयमर्थ, यदायं स्वेच्छया मेघं भिनत्ति तदा वृष्ट्या नदीपूरणक्षमं जलं वर्द्धत इति॥

अथेन्द्राय मरुत्वते पृश्निसक्थमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "मरुत्वन्तं वृषभं वावृधानम्। अकवारिं दिव्यꣳ शासमिन्द्रम्। विश्वासाहमवसे नूतनाय। उग्रꣳ सहोदामिह तꣳ हुवेम"इति। 'इह' कर्म्मणि,'तम्' इन्द्रं, 'हुवेम' आह्वयामः। किमर्थं 'नूतनाय''अवसे' अन्यैरकृतपूर्व्वाय, रक्षणाय। कीदृशमिन्द्रं, "मरुत्वन्तं" मरुद्भिः संयुतं, 'वृषभं' कामानां वर्षितारं,'वावृधानं' अतिशयेन वर्द्धमानं, 'अकवारिं' अकुत्सितारं, कुत्सितेनातिस्वल्पेन वैरिणा सह स्पर्द्धा लज्जार्थे भवति। 'दिव्यं' दिविभवं, 'शासं' शासितारं, 'विश्वासाहं'

विश्वस्याभिभवितारं, 'उग्रं' अनभिभवनीयं 'सहोदां' बल-प्रदम् ॥

अथ वपाया याज्यामाह। "जनिष्ठा उग्रः सहसे तुराय। [४]। मन्द्र ओजिष्ठो बहुलाभिमानः। अवर्द्धन्निन्द्रं मरुत-श्चिदत्र। माता यद्वीरं दधनद्धनिष्ठा" इति। हे इन्द्र, त्वं 'उग्रः' परैरप्रधृष्यः, 'जनिष्ठः' उत्पन्नोऽसि। किमर्थं 'स-हसे' वैरिबलस्य, 'तुराय' हिंसार्थं। कीदृश इन्द्रः, 'मन्द्रः' हर्षयुक्तः, 'ओजिष्ठः' बलवत्तरः, 'बहुलाभिमानः' प्रभूताह-ङ्कारः। 'मरुतश्चित्' मरुतोऽपि, बलकर्मणि वृत्रवधादिके 'इन्द्रं','अवर्द्धन्' वर्द्धितवन्तः। किञ्च 'धनिष्ठा' अतिशयेन धन-वती, 'माता' अदितिरूपा, 'यद्वीरं' यमिन्द्रं, शूरं 'दधनत्' धारितवती, तमिन्द्रमवर्द्धन्नित्यन्वयः ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "क्वस्या वो मरुतः स्वधासीत्। यन्मामेकꣳ समधत्ताहिहत्ये। अहꣳ ह्युग्रस्त-विषस्तुविष्मान्। विश्वस्य शत्रोरनमं वधस्नैः" इति। इन्द्रस्य मरुताञ्च परस्परसम्वादोऽयम् अहिनामकस्यासुरस्य बधे मरुतः इन्द्रस्य माहात्म्यमज्ञात्वा पलायिताः, अतस्तान् प्रतीन्द्रः कुपित एवं ब्रवीति, हे 'मरुतः', 'यत्' यस्मात् कारणात्, 'अहिहत्ये' अहिनामकशत्रोर्बधे, 'मामेकम्', एव यूयं 'समधत्त' संयोजित-वन्तः, तदानीं 'वः' युष्माकं, सा 'स्वधा' अन्ननिमित्तस्य शक्तिः, 'क्वस्य' क्वासीत्, कुत्र गता, अथवा किं युष्माभिः 'अहं ह्युग्रः' अहमेवातितीव्रः, 'तविषः' महान्, 'तुविष्मान्'

बलवान्, तादृशः सन् 'विश्वस्य' सर्व्वस्यापि 'शत्रोः', बधस्नैः बधबन्धनैः, 'अनमं' वशीकरणे शक्तोऽस्मि॥

अथ पुरोडाशस्य याज्यामाह। "वृत्रस्य त्वा श्वसथादीषमाणाः विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्तु [५]। अथेमा विश्वाः पृतना जयासि" इति। पुरा वृत्रवधार्थमिन्द्रः सर्व्वेषां देवानां सहायमपेक्षमाणः तैः सह युद्धार्थमागतः, तदा सर्व्वे देवाः वृत्रस्य श्वाससाधनेन निराकृताः सन्तो गताः। मरुतस्तु पलायनमकृत्वा इन्द्रस्य सख्यमाचरन्। सोऽयं वृत्तान्तो बहुषु ब्राह्मणार्थेऽस्मिन्मन्त्रे सूच्यते, तमेतमर्थं इन्द्रं सम्बोध्य होता कथयति। हे 'इन्द्र', 'विश्वे' सर्व्वे, 'देवाः', 'वृत्रस्य', 'श्वसथात्' तदुच्छ्वासात्, 'ईषमाणाः' पलायमानाः, सन्तः, 'त्वां', 'अजहुः' परित्यक्तवन्तः, 'ये' तु 'सखायः', मरुतो न पलायन्ते तैः 'मरुद्भिः', 'सख्यं', तव 'अस्तु'। 'अथ' अनन्तरं, 'इमाः' 'विश्वाः' सर्व्वाः, 'पृतनाः' सेनाः, 'जयासि' जयसि॥

अथ हविषः पुरोऽनुवाक्यामाह। "वधीं वृत्रं मरुत इन्द्रियेण। स्वेन भामेन तविषो बभूवान्। अहमेता मनवे विश्वचन्द्राः। सुगा अपश्चकर वज्रबाहुः" इति। हे 'मरुतः', इन्द्रोऽहं 'स्वेन', इन्द्रियेण' हस्तेन, 'स्वेन भामेन' स्वकीयेन कोपेन, 'वृत्रं', 'वधीं' अवधिषम्। अतः 'तविषो बभूवान्' महानभवम्; इन्द्रो महानित्येवं लोके कीर्त्तिर्जातेत्यर्थः। 'अहम्' इन्द्रः, 'वज्रबाहुः', सन् 'विश्वचन्द्राः' सर्व्वस्य जगत आह्लादकराः, 'सुगाः' सुखेन गन्तुं प्राप्तुं शक्याः, 'एताः' दृश्यमानाः वृष्टिलक्षणाः, 'अपः',

'मनवे' मनुष्यार्थं, 'चकर' कृतवानसि, सर्व्वस्य लोकस्यानिष्ट-निवारणाय वृत्रं हत्वा इष्टप्राप्तये वृष्टिमुत्पादितवानसी-त्यर्थः ॥

अथ हविषो याज्यामाह। "स यो वृषा वृष्णियेभिः स-मोकाः। महो दिवः पृथिव्याश्च सम्राट्। सतीनसत्वा हव्यो भरेषु। मरुत्वान्नो भवत्विन्द्र ऊती:" इति। 'यः' इन्द्रः, वृषत्वा-दिगुणकः 'सः' इन्द्रः,'नः' अस्मान् प्रति,'मरुत्वान्' मरुद्भिर्युक्तः, 'ऊतीः' रक्षणहेतुः, 'भवतु। के ते गुणा इति ते अभिधीयन्ते, 'वृषा' कामानां वर्षयिता, वृष्णियशब्दो बलनामसु पठितः, 'वृष्णियैः' बलैः, 'समोकाः' संयुक्ताः,'महः' महत्याः। 'दिवः', 'पृथिव्याश्च', 'सम्राट्' स्वामी सन्, सम्यग्राजमानः, 'सतीन' शब्दो जलनामसुपठितः, 'सतीनसत्वाः' वृष्यात्मकजलसत्वाः, भ्रियन्ते सम्पाद्यन्ते हवींषि येषु यागेष्विति 'भराः' यागाः, तेषु 'हव्यः' आह्वानार्हः ॥

अथेन्द्राय वृत्रतुरे ललामं प्राशृङ्गमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "इन्द्रो वृत्रमतरद्वृत्रतूर्य्ये [६]। अनाधृष्यो मघवा शूर इन्द्रः। अन्वेनं विशो अमदन्त पूर्व्वीः। अयꣳ राजा जगतश्चर्षणीनाम्" इति। अयम्, इन्द्रः, 'वृत्रतूर्य्ये' वृत्रबधनिमित्ते युद्धे,'वृत्रम्','अतरत्' विनाशितवान्, सः 'इन्द्रः', 'अनाधृष्यः' केनापि तिरस्कर्त्तुमशक्यः, 'मघवा' धनवान्, 'शूरः' विक्रमयुक्तः, 'पूर्व्वीः' पूर्व्वकालीनाः, 'विशः' प्रजाः, 'अन्वेनं' इन्द्रमन्वमदन्त, वृत्रबधेनेन्द्रे हृष्टे सति प्रजा

अपि हृष्टवत्यः, 'अयम्' इन्द्रः, 'चर्षणीनां' मनुष्याणां, कृत्स्नस्य 'जगतश्च', 'राजा', भूत्वा वर्त्तते॥

अथ वपाया याज्यामाह। "स एव वीरः स उ वीर्य्यावान्। स एकराजो जगतः परस्याः। यदा वृत्रमतरच्छूर इन्द्रः। अथाभवद्दमिताभिक्रतूनाम्" इति। यः अयम्, 'इन्द्रः', 'स एव,' 'वीरः' युद्धेषु शूरः, 'स उ वीर्य्यावान्' स एव उत्साहयुक्तः, 'स एकराजः' कृत्स्नस्य 'जगतः', एक एव राजा, 'परस्याः' अतिशयेन पाता, सोऽयं 'शूरः', 'इन्द्रः,' 'यदा', 'वृत्रं', 'अतरत्' विनाशितवान्, 'अथ' अनन्तरं, 'अभिक्रतूनां' अभिप्राप्त-विरोधाचरण-लक्षण-कर्म्मणां शत्रूणां, 'दमिता' दमनहेतुः 'अभवत्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "इन्द्रो यज्ञं वर्द्धयन् विश्ववेदाः। पुरोडाशस्य जुषताꣳ हविर्नः। वृत्रं तीर्त्वा दानवं वज्रबाहुः [७]। दिशो दृꣳहत् दृꣳहिता दृꣳहणेन" इति। 'विश्ववेदाः' सर्व्वज्ञः, अयम्, 'इन्द्रः', 'यज्ञम्', 'अस्मदीयं' 'वर्द्धयन्', 'नः' अस्मदीयस्य, 'पुरोडाशस्य', सारांशं 'हविः', 'जुषतां', 'वज्रबाहुः', अयं 'वृत्राख्यं' 'दानवं', 'तीर्त्वा' हत्वा, 'दृꣳहणेन' दृढीकरणसाधनेन, 'दृꣳहिता' दृढीकर्त्तुमुद्यतः, सन् 'दिशो दृꣳहत्' वृत्रकृतोपद्रवेण प्रचलितानां सर्व्वदिग्वर्त्तिप्रजानां स्थैर्य्यं कृतवानित्यर्थः॥

अथ पुरोडाशस्य याज्यामाह। "इमं यज्ञं वर्द्धयन् विश्ववेदाः। पुरोडाशं प्रतिगृभ्णात्विन्द्रः। यदा वृत्रमतरच्छूर

इन्द्रः। अथैकराजो अभवज्जनानाम्" इति। स्पष्टोऽर्थः॥

अथ हविषः पुरोऽनुवाक्यामाह। "इन्द्रो देवाञ्छम्बर-हत्य आवत्। इन्द्रो देवानामभवत् पुरोगाः। इन्द्रो यज्ञे हविषा वावृधानः। वृत्रतूर्नो अभयꣳ शर्म यꣳसत्" इति। 'शम्बरहत्ये' शम्बराख्यस्यासुरस्य बधे निष्पन्ने सति, सः 'इन्द्रः', 'देवान्', 'आवत्' रक्षितवान्। स च 'इन्द्रः', 'देवानां', मध्ये 'पुरोगाः' 'मुख्यः' अभवत्, 'इन्द्रः' अस्मिन् यज्ञे 'हविषा', 'वावृधानः' अतिशयेन वर्द्धते, 'वृत्रतूः' वृत्रघाती, सः 'इन्द्रः', 'नः' अस्मभ्यम्, 'अभयं' भयरहितं, 'शर्म' सुखं, 'यंसत्' यच्छतु॥

अथ हविषो याज्यामाह। "यः सप्त सिन्धूꣳरदधात् पृथिव्यां। यः सप्त लोकानकृणोद्दिशश्च। इन्द्रो हविष्मान्त्सगणो मरुद्भिः। वृत्रतूर्नो यज्ञमिहोपयासत्" [८] इति। 'यः' अयम् इन्द्रः, 'पृथिव्यां', 'सप्त', 'सिन्धून्' समुद्रान्, 'अदधात्' स्थापितवान्, 'यः' इन्द्रः, 'सप्त लोकान्' भूरादीन्, 'दिशश्च', 'अकृणोत्' कृतवान्, 'मरुद्भिः', देवैर्युक्तेन 'सगणः' गणसहितः, 'इन्द्रः', 'हविष्मान्' हविर्युक्तोऽभूत्, 'वृत्रतूः' वृत्रघाती, सः इन्द्रः, 'इह' लोके, 'नः' अस्मदीयं, 'यज्ञं', 'उपयासत्' उपागच्छतु॥

अत्र विनियोगसङ्ग्रहः।

सोमो धेनुमिति प्रोक्तं सौम्ये विष्णोर्नु वामने।
आते महो य ऐन्द्रे स्यान्मरुत्वत्यैन्द्रके महत्॥
इन्द्रो वृत्रं तुरैन्द्रे स्यादर्णितं सूक्तपञ्चकम्।

इति तृतीयोऽनुवाकः॥ ३॥

अथ चतुर्थोऽनुवाकः।

तृतीये सौम्यादिपशुसूक्तान्यभिहितानि। चतुर्थे त्वभिमातिहेन्द्रादिपशुसूक्तान्युच्यन्ते। तत्रेन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमालभेतेत्यस्य वपायाः पुरोऽनुवाक्यामाह "इन्द्रस्तरस्वानभिमातिहोग्रः। हिरण्यवाशीरिषिरः सुवर्षाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रे सौमनसे स्याम" इति। योऽयम् 'इन्द्रः', अस्ति 'यज्ञियस्य' यज्ञार्हस्य, 'तस्य' इन्द्रस्य, 'सुमतौ' अनुग्रहबुद्धौ, 'वयं', 'स्याम' तिष्ठेम। कीदृश इन्द्रः, 'तरस्वान्' तरोजवस्तद्वान्, 'अभिमातिहा' शत्रुघाती, 'उग्रः' शत्रुषु क्रूरः, वाशीति वाङ्नाम हिरण्यं वाश्यां वाचि यस्यासौ 'हिरण्यवाशीः', अस्मै शतम्, अस्मै सहस्रं इत्येवं सर्व्वदा धनदानं वक्तीत्यर्थः। 'इषिरः' एषणीयः, 'सुवर्षाः' स्वर्गप्रदः, तादृशस्यानुग्रहे स्थित्वा 'भद्रे' कल्याणे, 'सौमनसेऽपि' चित्तसमाधानरूपे सुखेऽपि, 'स्याम' तिष्ठेम॥

अथ वपाया याज्यामाह। "हिरण्यवर्णो अभयं कृणोतु। अभिमातिहेन्द्रः पृतनासु जिष्णुः। स नः शर्म्म त्रिवरूथं वियꣳसत्। यूयं पात स्वस्तिभिः सदा नः" इति। अयम् 'इन्द्रः', अस्माकम् 'अभयं', 'कृणोतु' करोतु। कीदृशः, 'हिरण्यवर्णः' सर्व्वाभरणभूषितत्वेन हिरण्यसदृशवर्णोपेतः, 'अभिमातिहा' शत्रुघाती, 'पृतनासु' परकीयसेनासु, 'जिष्णुः' जयशीलः, 'सः' तादृश इन्द्रः, 'नः' अस्मभ्यं, 'त्रिवरूथं' त्रिभूमिकं, 'शर्म्म' गृहं, 'वियंसत्' विशेषेण यच्छतु। हे इन्द्र, यस्त्वं, ये च त्वत्सेवकाः,

ते सर्व्वे 'यूयं', 'नः' अस्मान्, 'स्वस्तिभिः' क्षेमैः 'सदा', 'पात',॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "इन्द्रꣳ स्तुहि वज्रिणꣳ स्तोमपृष्ठम्। पुरोडाशस्य जुषताꣳ हविर्नः [१]। हत्वाभिमातीः पृतना सहस्वान्। अथाभयं कृणुहि विश्वतो नः" इति। हे वागिन्द्रिय, इमम् 'इन्द्रं', 'स्तुहि'। कीदृशं, 'वज्रिणं' वज्रयुक्तं, 'स्तोमपृष्ठं' स्तोमैः साध्यानि पृष्ठस्तोत्राणि यस्यासौ 'स्तोमपृष्ठः', तं, स चेन्द्रः, 'नः' अस्मदीयस्य 'पुरोडाशस्य', सारभूतं 'हविः', 'जुषतां'। 'सहस्वान्' बलवान्, इन्द्रः, 'अभिमातीः' 'पृतनाः' वैरिसेनाः सर्व्वा 'हत्वा', 'अथ' अनन्तरं, 'नः' अस्माकं, 'विश्वतः' सर्व्वस्मात्, 'अभयं', 'कृणुहि' कुरु ॥

पुरोडाशस्य याज्यामाह। "स्तुहि शूरं वज्रिणमप्रतीतं। अभिमातिहनं पुरुहूतमिन्द्रम्। य एक इच्छतपतिर्जनेषु। तस्मा इन्द्राय हविराजुहोत" इति। अप्रतिकूलत्वेन प्राप्तम् 'अप्रतीतम्' शूरादिशब्दैर्व्विशेषितमिन्द्रम्, हे वागिन्द्रिय, 'स्तुहि', 'यः' अयमिन्द्रः, 'एक इत्', 'जनेषु', सर्व्वेषु मध्ये 'शतपतिः' शतसङ्ख्याकानां देवानां स्वामी, 'तस्मा इन्द्राय', हे ऋत्विजः 'हविः', 'आजुहोत' सर्व्वतो हुतं कुरुत ॥

अथ हविषः पुरोऽनुवाक्यामाह। "इन्द्रो देवानामधिपाः पुरोहितः। दिशां पतिरभवद्वाजिनीवान्। अभिमातिहा तविषस्तुविष्मान्। अस्मभ्यं चित्रं वृषणꣳ रयिं दात्" [२] इति। अयम् 'इन्द्रः', सर्व्वेषां 'देवानाम्', 'अधिपाः' स्वामी, सन् 'पुरोहितः' मुखत एव हितकारी, 'दिशां' प्राच्यादीनां,

'पतिः' पालकः, 'वाजिनीवान्' अन्नमभूद्युक्तोऽभवत्, 'अभिमातिहा' शत्रुघाती, 'तविषः' महान्, 'तुविष्मान्' बलवान्, तादृश इन्द्रः, 'अस्मभ्यं', 'चित्रं' मणिमुक्तादिरूपेण नानाविधं, 'वृषणं' कामाभिवर्षणक्षमं, 'रयिं' धनं, 'दात्' ददातु ॥

अथ हविषो याज्यामाह । "य इमे द्यावापृथिवी महित्वा । बलेनादृꣳहदभिमातिहेन्द्रः । स नो हविः प्रतिगृभ्णातु रातये । देवानां देवो निधिपा नो अव्यात्" इति । 'अभिमातिहा' शत्रुघाती, 'यः' इन्द्रः, 'महित्वा' महता बलेन,'इमे' द्यावापृथिव्यौ, 'अदृंहत्' दृढीकृतवान् । 'सः' इन्द्रः, 'नः' अस्मभ्यं, 'रातये' धनदानाय, 'हविः', 'प्रतिगृभ्णातु' स्वीकरोतु, 'देवानाम्', अपि 'देवः' पूज्यः, 'निधिपाः' शङ्खपद्मादिनिधीनां पालकः, इन्द्रः 'नः' अस्मान्, 'अव्यात्' रक्षतु ॥

अथेन्द्राय वज्रिणे ललामं प्राशृङ्गमित्यस्य पशोः सूक्ते वपापुरोडाशविषयाणां याज्यानुवाक्यानां प्रतीकानि दर्शयति । "अनवस्ते रथं वृष्णे यक्ते । इन्द्रस्य नु वीर्य्याण्यहन्नहिम्" इति । अनवस्ते रथमश्वायेति वपायाः पुरोऽनुवाक्या । वृष्णे यक्ते वृषणो अर्कमिति याज्या, एतच्चोभयमिन्द्रं वो विश्वतस्परीत्यत्र व्याख्यातम् । इन्द्रस्य नु वीर्य्याणि प्रवोचमिति पुरोडाशस्य पुरोऽनुवाक्या । अहं नहिमन्वप इति याज्या, एतच्चोभयमानो भर भगमिन्द्रेत्यत्र व्याख्यातम् ॥

अथ हविषः पुरोऽनुवाक्यामाह । "इन्द्रो यातोऽवसितस्य राजा । शमस्य च शृङ्गिणो वज्रबाहुः । सेदु राजा क्षेति

चर्षणीनाम्। अरान्न नेमिः परिता बभूव" [३] इति। अयम् 'इन्द्रः', 'यातः' गच्छतः जङ्गमस्य, 'अवसितस्य' क्वचिदवस्थितस्य स्थावरस्य च, 'राजा' स्वामी, किञ्च 'वज्रबाहुः'। 'सेदु' स एवेन्द्रः, 'शमस्य' शान्तियुक्तस्य महर्षिवर्गस्य 'शृङ्गिणः' शृङ्गोपेतस्य गवादेरपि, 'चर्षणीनां' मनुष्याणामपि, 'राजा', भूत्वा 'क्षेति' निवसति। तस्य दृष्टान्तः, 'अरान्न नेमिः' यथा रथचक्रस्य परितो वर्त्तमाना नेमिः, तत्र स्थितानरान् व्याप्नोति। तथायमिन्द्रः, 'परिता बभूव' परितस्तानि स्थावरजङ्गमादीनि प्राप्तवान्॥

अथ हविषो याज्यामाह। "अभि सिध्मो अजिगादस्य शत्रून्। वि तिग्मेन वृषभेणापुरोभेत्। सं वज्रेणासृजद्वृत्रमिन्द्रः। प्र स्वां मतिमतिरच्छाशदानः" इति। 'अस्य' इन्द्रस्य, 'सिध्मः' कार्यसाधको वज्रः, शत्रून् सर्व्वान् 'अभि' सर्व्वतः, 'अजिगात्' प्राप्तवान् हतवानित्यर्थः। 'तिग्मेन' तीक्ष्णेन, 'वृषभेण' श्रेष्ठेन, 'वज्रेण', 'पुरः' शत्रूणां पुराणि, 'व्यभेत्' विशेषेण भिन्नवान्। अयम्, 'इन्द्रः', 'वज्रेण', वृत्रं 'समसृजत्' संसृष्टवान्, संसर्गमात्रेण हतवानित्यर्थः। 'शाशदानः' पुनः पुनर्वैरिणो विनाशयन्, 'स्वां मतिं' स्वकीयां बुद्धिं, 'प्रातिरत्' प्रकर्षेण वर्द्धितवान्॥

अथ यो भ्रातृव्यवान् स्यात् स स्पर्द्धमानो वैष्णववारुणीं वशामालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "विष्णुं देवं वरुणमूतये भगम्। मेदसा देवा वपया यज-

ध्वम्। ता नो यज्ञमागतं विश्वधेना। प्रजावदस्मे द्रविणेह धत्तम्" इति। हे 'देवाः' दीप्यमाना ऋत्विजः, 'भगं' भजनीयं 'विष्णुं,' 'वरुणं', च 'देवं', 'ऊतये' अस्मद्रक्षणार्थं, 'मेदसा' मेदोयुक्तया, 'वपया', 'यजध्वं' पूजयध्वम्। मेदःशब्देन वपायां लेपरूपो मांससार उच्यते, विष्णुर्वरुणश्चेत्येतौ देवौ 'प्रधना'* प्रकर्षेण प्रीणयन्तौ 'ता' तौ युवां, 'नः' अस्मदीयं, 'यज्ञं', प्रति 'आगतं' आगच्छतम्। आगत्य च 'इह' कर्म्मणि, 'प्रजावत्' पुत्रपौत्रादियुक्तं 'द्रविणं' धनं, 'अस्मे धत्त' अस्मान् सम्पादयतम्॥

अथ वपाया याज्यामाह। "मेदसा देवा वपया यजध्वम्। विष्णुञ्च देवं वरुणञ्च रातिम् [४]। ता नो अमीवा अपबाधमानौ। इमं यज्ञं जुषमाणावुपेतम्" इति। हे 'देवाः' ऋत्विजः, 'रातिं' फलस्य दातारं, 'विष्णुञ्च', 'वरुणञ्च', 'देवं', 'मेदोयुक्तया 'वपया', 'यजध्वं' पूजयत, हे विष्णो वरुण 'ता' तौ युवां, 'नः' अस्माकं, 'अमीवा' रोगान्, 'अपबाधमानौ', 'इमं' 'यज्ञं', सेवमानौ, 'उपेतं' समीप आगच्छतम्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "विष्णू वरुणा युवमध्वराय नः। विशे जनाय महि शर्म्म यच्छतम्। दीर्घप्रयज्यू हविषा वृधाना। ज्योतिषारातीर्दहतं तमांसि" इति। हे 'विष्णू वरुणौ', युवां 'नः' अस्मदीयाय, 'अध्वराय' यज्ञाय, 'विशे' करप्रदाय प्रजायै 'जनाय' पुत्रपौत्रादिरूपाय, मनुष्याय, 'महि शर्म्म' महत्सुखं, 'यच्छतम्'। 'दीर्घप्रयज्यू'

---

* मूले विश्वधेनाशब्दो वर्त्तते, भाष्ये तत्प्रतीकं प्रधना इत्युक्तम्।

चिरं प्रकर्षेण यष्टव्यौ, 'हविषा', 'वृधाना' अतिशयेन वर्द्धमानौ, 'ज्योतिषा' भवदीयेन तेजसा, 'अरातीः' शत्रून्, 'तमांसि' अन्धकारांश्च 'दहतम्' ॥

अथ पुरोडाशस्य याज्यामाह। "ययोरोजसा स्कभिता रजाꣳसि। वीर्य्येभिर्वीरतमा शविष्ठा। या पत्येते अप्रतीता सहोभिः। विष्णू अगन् वरुणा पूर्व्वहूतौ" [५] इति। 'ययोः' विष्णुवरुणयोः, 'ओजसा' बलेन, 'रजांसि' रजसात्मकानि पृथिव्यादिस्थानानि, 'स्कभिता' स्तम्भितानि, दृढीकृतानीत्यर्थः। 'वीर्य्येभिः' तत्तद्युद्धगतैः पराक्रमैः, 'वीरतमा' अत्यन्तं शूरौ, 'शविष्ठा' अतिशयेन बलवन्तौ, 'यौ' विष्णूवरुणौ, 'सहोभिः' बलैः, 'अप्रतीतौ' प्रतिकूलरहितौ सन्तौ 'पत्येते' ऐश्वर्य्यं प्राप्नुतः। तौ 'विष्णुः', 'वरुणः', चेत्येतौ 'पूर्व्वहूतौ' प्रथममाहूतौ, युवां 'अगन्' आगच्छतम् ॥

अथ हविषः पुरोऽनुवाक्यामाह। "विष्णूवरुणावभिशस्तिपा वाम्। देवा यजन्त हविषा घृतेन। अपामीवाꣳ सेधतꣳ रक्षसश्च। अथाधत्तं यजमानाय शं योः" इति। हे 'देवाः', ऋत्विजः हे 'विष्णुवरुणौ', 'अभिशस्तिपा' अपवादात् पातारौ, 'वां' युवां, 'घृतेन' 'हविषा' घृतयुक्तेन पश्वङ्गलक्षणेन हविषा 'यजन्त' पूजयन्तु, 'अमीवां' रोगान्, 'रक्षसश्च' रक्षांस्यपि, 'अपसेधतं' निराकुरुतम्। 'अथ' अनन्तरं, 'यजमानाय', 'शं' इष्टप्राप्तिनिमित्तं सुखं, 'योः' अनिष्टवियोगञ्च 'धत्तं' सम्पादयतम् ॥

अथ हविषो याज्यामाह। "अꣳहोमुचा वृषभा सुप्रतूर्ती। देवानां देवतमा शचिष्ठा। विष्णू वरुणा प्रतिहर्य्यतं नः। इदं नरा प्रयतमूतये हविः" इति। हे 'विष्णूवरुणौ', 'नरा' पुरुषश्रेष्ठौ, युवां 'नः' अस्माकम्, 'ऊतये' रक्षणाय, 'प्रयतं' प्रकर्षेण समर्पितम्,'इदं''हविः','प्रतिहर्य्यतं' कामयतं। कीदृशौ युवां 'अंहोमुचा' पापात् मोचयितारौ, 'वृषभा' श्रेष्ठौ, 'सुप्रतूर्ती' सुष्ठु वैरिणां हिंसकौ, 'देवानां', मध्ये 'देवतमा' अतिशयेन दीप्तिमन्तौ, 'शचिष्ठा' अतिशयेन शक्तिमन्तौ॥

अथ द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्ध इत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "मही नु द्यावापृथिवी इह ज्येष्ठे। रुचाऽभवताꣳ शुचयद्भिरर्कैः [६]। यत्सीं वरिष्ठे बृहती विमिन्वन्। नृवद्भ्योऽचा पप्रथानेभिरेवैः" इति। 'द्यावापृथिवी', देवते, 'अर्कैः' अस्मदीयैः अर्च्चयनीयैः, तुष्टे सति 'इह' 'अभवतां' अस्मिन् कर्म्मणि तिष्ठतां। कीदृश्यौ द्यावापृथिव्यौ, 'मही' महत्यौ, 'नु' प्रसिद्धे, 'रुचा' स्वकीयेन तेजसा, 'ज्येष्ठे' अत्यन्तप्रशस्ते। कीदृशैरर्कैः, 'शुचयद्भिः' अस्मत्पापं शोधयद्भिः, 'यत्' यं द्यावापृथिव्यौ, 'सीं' फलमासानं, ,विमिन्वन्' निश्चितवत्यौ, ते द्यावापृथिव्याविति पूर्व्वेणान्वयः। कीदृश्यौ, 'वरिष्ठे' गुणैरत्यन्तश्रेष्ठे, 'बृहती' स्वरूपेण विस्तृते, 'पप्रथानेभिः' अतिप्रथितैः प्रसिद्धैः, 'एवैः' आगमनैः, 'नृवद्भ्यः' ऋत्विक्पुरुषयुक्तेभ्यो, यजमानेभ्यः, 'अचा' प्रत्यक्षत्वेनावस्थिते, पुनः पुनरागत्य भक्तजनानां दृश्ये भवत इत्यर्थः॥

अथ वपाया याज्यामाह। प्र पूर्व्वजे पितरानव्यसीभिः। गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन। जनेन यातं महि वां वरूथम्" इति। 'पूर्व्वजे' सृष्ट्यादावुत्पन्ने, 'पितरा' मातापितृस्थानीये, द्यावापृथिव्यौ, 'नव्यसीभिः' अत्यन्तनूतनाभिः, 'गीर्भिः' स्तुतिभिः, तुष्टे सती 'ऋतस्य' यज्ञस्य, सम्बन्धिनी 'सदने' निवासाय देस्थाने, 'कृणुध्वं' कुरुतां। प्रशब्दः सदनविशेषणं, प्रकृष्टे स्थाने इत्यर्थः। हे 'द्यावापृथिवी', "दैव्येन' दिवि भवेन, 'जनेन', सह 'वां' युवयोः सम्बन्धि, 'महि वरूथं' प्रौढं यागगृहं प्रति 'आयातम्' आगच्छतम्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "स इत्स्वपा भुवनेष्वास। य इमे द्यावापृथिवी जजान। उर्वी गभीरे रजसी सुमेके। अवꣳशे धीरः शच्या समैरत्" [७] इति। 'यः' प्रजापतिः, 'इमे' द्यावापृथिवी, 'जजान' 'उत्पादयामास, 'स इत्' स एव प्रजापतिः, 'भुवनेषु' लोकेषु मध्ये, 'स्वपा आस', अप्शब्दः कर्म्मवाची, शोभनव्यापारो बभूवेत्यर्थः। कीदृशौ द्यावापृथिव्यौ, 'उर्वी' स्वरूपेण विस्तीर्णे,'गभीरे' गुणैर्गम्भीरे,'रजसी' रञ्जनात्मिके, 'सुमेके' सुनिर्माणे, 'अवंशे' काश्यपभरद्वाजादिगोत्ररूपवंशरहिते, सर्वेभ्यो महर्षिभ्यः पूर्वमुत्पन्नत्वात् नास्ति तयोः कश्चिद्वंशः, तादृश्यौ द्यावापृथिव्यौ, 'धीरः' धीमान्, प्रजापतिः 'शच्या' स्वकीयया शक्त्या, 'समैरत्' संयोजितवान्॥

अथ पुरोडाशस्य याज्यामाह। "भूरिं द्वे अचरन्ती चरन्तम्। पद्वन्तं गर्भमपदी दधाते। नित्यं न सूनुं पित्रोरुपस्थे।

तं पिपृतꣳ रोदसी सत्यवाचम्" इति। 'द्वे' द्यावापृथिव्यौ, 'गर्भं' सर्व्वप्राणिरूपं, 'दधाते' धारयतः। कीदृश्यौ द्वे, 'अचरन्ती' क्वाप्यविचरन्त्यौ, स्थिरे इत्यर्थः। अत एव 'अपदी' पादरहिते, न हि गमनाभावे पादयोरस्ति कश्चिदुपयोगः। कीदृशं गर्भभूतं देवतिर्य्यगादिरूपेण बहुविधं 'चरन्तं' जङ्गमत्वेन सञ्चारयुक्तं, अत एव 'पद्वन्तं' पादयुक्तं। तत्र दृष्टान्तः, 'पित्रोरुपस्थे' मातापित्रोरुत्सङ्गे, 'नित्यं', 'न सूनुं' पुत्रमिवसमानं, 'हे रोदसी' द्यावापृथिव्यौ, 'सत्यवाचं' अवितथवाग्युतं देवादिरूपं गर्भं, 'पिपृतं' पालयतम्॥

अथ हविषः पुरोऽनुवाक्यामाह। "इदं द्यावापृथिवी सत्यमस्तु। पितर्मातर्यदिहोपब्रुवे वाम्। भूतं देवानामवमे अवोभिः। विद्यामेषं वृजनं जीरदानुम्" इति। हे 'पितः' द्युलोक, हे 'मातः' पृथिवि, 'वां' युवामभिलक्ष्य, 'इह' कर्म्मणि, 'यत्' वचनं, अहम् 'उपब्रुवे', हे 'द्यावापृथिवी', 'इदं' मदीयं वचनं, 'सत्यमस्तु'। किन्तद्वचनमिति तदुच्यते, 'अवोभिः' अस्मदीयलक्षणैः, सह 'देवानां', सर्व्वेषां, 'अवमे' 'भूतं' युवां रक्षकं भवतं, वयमपि भवत्प्रसादात् 'इषम्' अन्नं, 'वृजनं' पापवर्ज्जितं, 'जीरदानुं' जीवनस्य दातारं, 'विद्याम' लभेम॥

हविषो याज्यामाह। "उर्वी पृथ्वी बहुले दूरे अन्ते। उपब्रुवे नमसा यज्ञे अस्मिन्। दधाते ये सुभगे सुप्रतूर्त्ती। द्यावा रक्षतं

* अस्मद्दृष्टषट्पुस्तकेषु "जीरद नुं" इति पाठः, अपि तु एतादृशस्थले "जीवदानुं" इति पाठः इति कश्चित्।

पृथिवी नो अभ्वात्'' इति। 'उर्वी' गुणैरधिके, 'पृथ्वि' स्वरूपेण विस्तीर्णे, 'बहुले' भोगैः प्रभूते, 'दूरे अन्ते' सर्व्वेषां दूरवर्त्तिन्यौ समीपवर्त्तिन्यौ च, सर्व्वत्र विद्यमानत्वात्। तादृश्यौ द्यावापृथिव्यावभिलक्ष्य अहम्, 'अस्मिन्' 'यज्ञे', 'नमसा' नमस्कारेण युक्तं, 'उपब्रुवे' किञ्चिद्विज्ञापनं ब्रवीमि। किं तद्विज्ञापनमिति तदुच्यते, 'ये' द्यावापृथिव्यौ, 'सुभगे' सौभाग्ययुक्ते, 'सुप्रतूर्त्ती' सुष्ठु शत्रुहिंसके, 'दधाते' जगद्गर्भं धारयतः। ते 'द्यावा', 'पृथिवी', युवामुभे 'नः' अस्मान्, 'अभ्वाद्रक्षतं' अभवनमसद्भावो विनाशस्तस्माद्विनाशात् पालयतम्॥

अथ ओषधीभ्यो वेहतमालभेत प्रजाकाम इत्यस्य पशोः सूक्ते क्रमेण षट्कप्रतीकानि दर्शयति। ''या जाता ओषधयोऽतिविश्वाः परिष्ठाः। या ओषधयः सोमराज्ञीरश्वावतीꣳ सोमवतीं। ओषधीरिति मातरोऽन्यावो अन्यामवतु'' [८] इति। या जाता ओषधय इति वपायाः पुरोऽनुवाक्या। अतिविश्वाः परिष्ठास्तेन इवेति याज्या। या ओषधयः सोमराज्ञीरिति पुरोऽनुवाक्या। अश्वावतीꣳ सोमवतीमिति याज्या। ओषधीरिति मातर इति हविषः पुरोऽनुवाक्या। अन्यावो अन्यामवत्विति याज्या। एतत्सर्वं या जाता ओषधयो देवेभ्यः स्त्रियुगꣳ पुरेत्यस्मिन्ननुवाके व्याख्यातम्॥

अत्र विनियोगसंग्रहः।

इन्द्रस्तरस्वानित्येतदभिमानिष्व ऐन्द्रके।
अनवो वज्रयुक्तेन्द्रे वशायां विष्णुमित्यदः॥

महो द्यावापृथिव्यायां या जाताविहतोऽथते ॥

इति चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

चतुर्थेऽनुवाके अभिमातीन्द्रपश्वादीनां सूक्तान्यभिहितानि पञ्चमे त्वैन्द्राग्निपश्वादीनां सूक्तान्यभिधीयन्ते। तत्र ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेत्यस्य पशोः सूक्ते षण्णामृचां प्रतीकानि दर्शयति। "शुचिं नु स्तोमं॰ अयद्वृत्रम्। उभावामिन्द्राग्नी प्रचर्षणिभ्यः। आवृत्रहणा गोर्भिर्विप्रः" इति। शुचिं नु स्तोमं नवजातमिति वपायाः पुरोऽनुवाक्या। सा चोभावामिन्द्राग्नी इत्यत्र व्याख्याता। उभावामिन्द्राग्नी आहुवध्या इति पुरोडाशस्य पुरोऽनुवाक्या। सा चोभावामिन्द्राग्नी इत्यत्र व्याख्याता। अयद्वृत्रमुतसनोतीति वपाया याज्या। सा चेन्द्राग्नी रोचनादिव इत्यत्र व्याख्याता। उभावामिन्द्राग्नी आहुवध्या इति पुरोडाशस्य पुरोऽनुवाक्या। आवृत्रहणा वृत्रहभिर्गिति हविषः पुरोऽनुवाक्या। गोर्भिः विप्रः प्रमतिमिति याज्या। एतच्चोभयं पाशुकहोत्रे व्याख्यास्यते ॥

अथ ब्राह्मणस्पत्यं तूपरमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "ब्रह्मणस्पते त्वमस्य यन्ता। सूक्तस्य बोधि तनयञ्च जिन्व। विश्वं तद्भद्रं यदवन्ति देवाः। बृहद्वदेम विदथे सुवीराः" इति। 'ब्रह्मणः' मन्त्रजातस्य, 'पतिः' पालकः,

कश्चिद्देवः हे 'ब्रह्मणस्पते' 'त्वमस्य' अस्माभिः पठ्यमानस्य सूक्तस्य, 'यन्ता' नियामकः, अतः,'बोधि' एतस्य सूक्तस्य तात्पर्य्यं बुध्यस्व, ततः 'तनयञ्च' त्वत्पुत्रसमानञ्च, मां 'जिन्व' प्रीणय, 'देवा' युष्मदादयः, 'विश्वम्', 'अवन्ति', इति 'यत्', अस्ति 'तत्', 'भद्रं' कल्याणं, अतो रक्षार्थं 'सुवीराः' शोभनापत्ययुक्ताः, वयं 'विदथे' यज्ञे, 'बृहत्' प्रौढं स्तोत्रं, 'वदेम' ॥

अथ वपाया याज्यामाह। "स ईꣳ सत्येभिः सखिभिः शुचद्भिः। गोधायसं विधनसैरतर्दत्। ब्रह्मणस्पतिर्वृषभिर्वराहैः [१]। घर्मस्वेदेभिर्द्रविणं व्यानट्"इति। 'स ईं' स एव ब्रह्मणस्पतिः, 'गोधायसं', गोभूमेर्धारकं प्रतिपक्षिणं राजानं 'व्यतर्दत्' विशेषेण हिंसितवान्। कैः सहितः स्नेहयुक्तैः कीदृशैः 'सखिभिः', 'सत्येभिः' सत्यवादिभिः, 'शुचद्भिः' शुद्धियुक्तैः, 'धनसैः' हविर्लक्षणस्य धनस्य दातृभिः, ईदृशैः ऋत्विग्भिः पूजितो 'ब्रह्मणस्पतिः', विरोधिनः विनाशयतीत्यर्थः। न केवलमनिष्टं निवारयति किन्त्विष्टमपि प्रापयति, कथमिति तदुच्यते, अयं ब्रह्मणस्पतिः 'वृषभिः' वर्षणशीलैः,'घर्मस्वेदेभिः' घर्मनिमित्तस्वेदयुक्तपुरुषसदृशैः 'वराहैः' मेघैः, द्रविणस्य निष्पत्तिरूपं धनं 'व्यानट्' विशेषेण व्याप्तवान्, वारिवाहशब्दस्य वर्णव्यत्ययेन वराह इति प्रयोगः। यथा घर्मसन्तप्ताः पुरुषाः स्विद्यन्ति तथा मेघदेहाः ब्रह्मणस्पतिना प्रेरिताः जलं स्रावयन्तीत्यर्थः ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "ब्रह्मणस्पतेरभव-

यथा वशम्। सत्यो मन्युर्महि कर्म्मा करिष्यतः। यो गा उदाजत् स दिवे वि चाभजत्। महीव रीतिः शवसा सरत् पृथक्" इति। अस्य 'ब्रह्मणस्पतेः', सर्व्वं जगद्यथा 'वशमभवत्' येन प्रकारेणायमिच्छति तथैव प्रवर्त्तते, 'महिकर्म्मा' जगन्नियमनरूपं महान्तं व्यापारं 'करिष्यतः', ब्रह्मणस्पतेः 'मन्युः' 'सत्यः' अवितथः, कोपः, तस्मादेतदिच्छानुसारेण जगत् प्रवर्त्तते जगत एतदधीनमेव स्पष्टीक्रियते, 'गो' शब्दोऽत्र जलवाची, 'यः' आदित्यः, 'गा उदाजत्' घर्म्मकाले जलानि स्वरश्मिभिः भूम्यां स्वीकृतवान्, 'सः' आदित्यः, पुनरपि 'दिवे' दिवः सकाशात्, 'व्यभजत्' विशेषेण विभागं कृत्वा वृष्टिकाले जलं प्रक्षिप्तवान्, योऽयं घर्म्मकाले जलस्वीकारः यश्च वृष्टिकाले पुनरपि जलस्य परित्यागः एतत् सर्व्वं जगद्व्यवहारस्योपलक्षणं। ब्रह्मणस्पतेरीदृशी 'रीतिः', महीव जगन्नियमनप्रकारो महानेव भूत्वा, 'शवसा' तदीयबलेन, 'पृथक् सरत्' बहुधा प्रवर्त्तते॥

अथ पुरोडाशस्य याज्यामाह। "इन्धानो अग्निं वनवद्वनुष्यतः। कृतब्रह्मा शूशुवद्रातहव्य इत्। जातेन जातमति स प्रसृंसते। यं यं युजं कृणुते ब्रह्मणस्पतिः" इति। 'ब्रह्मणस्पतिः' देवः, 'यं यं' यजमानं, 'युजं कृणुते' कर्म्मानुष्ठानयुक्तं कुरुते, असावसौ यजमानः 'अग्निम्', 'इन्धानः' प्रदीपयन्, 'वनुष्यतः' स्वात्मानं हिंसिष्यतः शत्रून्, 'वनवत्' वनुयात, प्रतिहिंस्यात्, स च यजमानः 'कृतब्रह्मा' संस्कृतमन्त्रः, 'रातहव्य इत्' दत्तहविष्क एव भूत्वा, 'शूशुवत्' अतिशयेन वर्धते, अयं

यजमानः 'सूत्' प्रसूतं, 'जातं' वैरिणं, जन्म'जातेन' स्वकीयेन जन्मना, 'अति सूत्प्रसृंसते' अतिशयेन प्रसंसयति, अधः करोतीत्यर्थः ॥

अथ हविषः पुरोऽनुवाक्यामाह। "ब्रह्मणस्पते सुयमस्य विश्वाहा [२]। रायः स्याम रथ्यो विवस्वतः। वीरेषु वीराꣳ उपपृङ्ग्धि नस्त्वम्। यदीशानो ब्रह्मणा वेषि मे हवम्" इति। हे 'ब्रह्मणस्पते', 'सुयमस्य' सुष्ठु नियामकस्य, 'विवस्वतः' शत्रून् विनाशयतः, तव प्रसादात् 'विश्वहा' सर्व्वेष्वहःसु, 'रायः' धनयुक्ताः, 'रथ्यः' रथयुक्ताः, 'स्याम', त्वं तु 'नः' अस्मदीयेषु, 'वीरेषु' पुत्रेषु, 'वीरान्' परकीयान् पुत्रान्, 'उपपृङ्धि' उपचीणत्वेन संपृक्तान् कुरु। 'यत्' यदा, 'ईशानः' अस्मत् स्वामी त्वं 'ब्रह्मणा' मन्त्रेण, युक्तं 'मे हवं' मदीयं हविः, 'वेषि' प्राप्नोषि, तदेतत् सर्व्वं कुर्व्विति पूर्व्वत्रान्वयः ॥

अथ हविषो याज्यामाह। "स इज्जनेन सविशा स जन्मना। स पुत्रैर्वाजम्भरते धना नृभिः। देवानां यः पितरमाविवासति श्रद्धामना हविषा ब्रह्मणस्पतिम्" इति। 'यः' अयं जमानः, 'देवानां', 'पितरं' पालकं, 'ब्रह्मणस्पतिं', 'श्रद्धामनाः' श्रद्धायुक्तेन मनसा ध्यायन्, 'हविषा' दीयमानेन, 'आविवासति' सर्व्वतो विशेषणाच्छादयति, प्रभूतं हविर्ददातीत्यर्थः। 'स इत्' स एव यजमानः, 'जनेन' स्वकीयेन, सह 'वाजं भरते' अन्नं पोष्टयति। स इज्जनेनेत्युक्तमेव प्रपञ्चयति, 'सविशा' स यजमानः, करप्रदया प्रजया सह वाजं भरते, 'स जन्मना

'सः' यजमानः, जातेन महोदरेण युक्तः, 'वाजं भरते', तथा 'सः' यजमानः, 'पुत्रैः', सह वाजं भरते। तथा स यजमानः 'नृभिः' अन्यैर्मनुष्यैः सह, 'धना भरते' मणिमुक्तादीनि धनानि सम्पादयति॥

अथ पौष्णꣳ श्याममालभेतान्नकाम इत्यस्य पशोः सूक्ते तिसृणामृचां प्रतीकानि दर्शयति। "यास्ते पूषन्नावो अन्तः। शुक्रं ते अन्यत्पूषेमा आशाः" इति। यास्ते पूषन् नावो अन्तः समुद्र इत्येषा वपायाः पुरोऽनुवाक्या। सा च यज्ञो राय इत्यनुवाके व्याख्याता। शुक्रन्ते अन्यद्यजतन्ते अन्यदिति वपाया याज्या। सा चाग्नेयं यज्ञमित्यत्र व्याख्याता। पूषेमा आशा इति पुरोडाशस्य पुरोनुवाक्या। सा च तुभ्यं दस्मा इत्यनुवाके व्याख्याता॥

अथ पुरोडाशस्य याज्यामाह। "प्रपथे पथामजनिष्ट पूषा [३] प्रपथे दिवः प्रपथे पृथिव्याः। उभे अभि प्रियतमेसधस्थे। आ च परा च चरति प्रजानन्" इति। 'पूषा' पोषकोऽयमादित्यः, 'पथाम्,' अन्तरिक्षवर्त्तिनां मार्गाणां मध्ये, 'प्रपथे' प्रकृष्टमार्गे, 'अजनिष्ट' अवस्थितः। तथा 'दिवः' द्युलोकस्य सम्बन्धिनि, 'प्रपथे' प्रकृष्टमार्गे, 'अजनिष्ट'। तथा 'पृथिव्याः', सम्बन्धिनि 'प्रपथे,' 'अजनिष्ट'। 'प्रियतमे' अतिशयेन प्रीतिमत्यौ, 'सधस्थे' परस्परं सहैवावस्थिते, 'उभे' द्यावापृथिव्यौ, 'अभिलक्ष्यायं पूषा' 'प्रजानन्' यजमानेन कृतं कर्म्म तत् फलं च प्रकर्षेण विद्वान्, 'आचरति च' 'पराचरति च' आगच्छति

पुनर्गच्छति च, यजमानकृतस्य कर्मणः साक्षी भूत्वा लोकयोरुभयोरपि गमनागमने करोतीत्यर्थः ॥

अथ हविषः पुरोनुवाक्यामाह । "पूषा सुबन्धुर्दिव आपृथिव्याः । इडस्पतिर्मघवा दस्मवर्चाः ।' तं देवासो अददुः सूर्य्यायै । कामेन कृतं तवसꣳ स्वञ्चं" इति । अयं 'पूषा', 'दिवः' द्युलोकवर्त्तिनो जनस्य, 'बन्धुः', 'आपृथिव्याः' पृथिवीलोकवर्त्तिनश्च जनस्य, 'बन्धुः'; 'इडस्पतिः' अन्नस्य पालकः, 'मघवा' धनवान्, 'दस्मवर्चाः' दर्शनीयतेजाः, 'तं' पूषाणं, 'देवासः' इन्द्रादयः सर्व्वे देवाः, 'सूर्य्यायै' विवाहदेवतायै, 'अददुः' दत्तवन्तः । सूर्य्या च देवता विवाहप्रकरणे सूर्य्यां यः प्रत्यचमित्यादिमन्त्रेषु प्रसिद्धा । कीदृशं पूषणं, 'कामेन कृतं भोगेच्छया प्रेरितं, 'तवसं' महान्तं, 'स्वञ्चं' शोभनगतिं ॥

अथ हविषो याज्यामाह । "अजाश्वः पशुपा वाजवस्त्यः । धियञ्जिन्वो विश्वे भुवने अर्पितः । अष्ट्रां पूषा शिथिरामुद्वरीवृजत् [४] सञ्चक्षाणो भुवना देव ईयते" इति । यः 'पूषा',सोयम् 'अजाश्वः', अश्वस्थाने रथे वध्यत इत्यर्थः । 'पशुपाः' पशूनां पालयिता, 'वस्त्यं' गृहं, 'वाजेन' अन्नेन, सम्पूर्णं गृहं' यस्यासौ 'वाजवस्त्यः', 'धियं' प्राणिनां बुद्धिं, 'जिन्वति' प्रीणयतीति, 'धियञ्जिन्वः', 'विश्वे' 'भुवने' सर्व्वस्मिन् लोके, 'अर्पितः,' अवस्थितः, तादृशः पूषा 'अष्ट्रां' स्वहस्ते स्थितां आयुधविशेषरूपामारां, 'शिथिरां' शिथिलां, कृत्वा 'उद्वरीवृजत्' उदवर्ज्जितवान्, परित्यक्तवान्, मदमत्तानां गजा-

नाभिवारिका येयं दीर्घदण्डा सेयमारा सा च पूष्णो हस्ते वर्त्तते। तथाच बह्वृचा आमनंति, यां पूषन् ब्रह्मचोदनी-मारां बिभर्ष्याघृण इति। या ते अष्ट्रेतिमन्त्रान्तरे समाम्ना-नादारैवाष्ट्रा अस्मदनुग्रहार्थं भयहेतुमारां वर्ज्जितवानित्यर्थः स 'देवः' पूषा, 'भुवना संचचाणः' लोकान् प्रकाशयन्, 'ईयते' चेष्टते॥

अथ मारुतं पृश्निमालभेतान्नकाम इत्यस्य पशोः सूक्ते वपायाः पुरोनुवाक्यामाह। "शुची वो हव्या मरुतः शुचीनां। शुचिꣳ हिनोम्यध्वरꣳ शुचिभ्यः। ऋतेन सत्यमृतसाप आयन्। शुचिजन्मानः शुचयः पावकाः" इति। हे 'मरुतः', 'शुचीनां' शुद्धानां, 'वः' युष्माकं, 'शुची' 'हव्या' शुद्धानि हवींषि, 'हिनोमि' प्रापयामीत्य-र्थः। तथा 'शुचिभ्यः' मरुद्भ्यः, 'शुचिं' शुद्धं, 'अध्वरं' हिं-सारहितं कर्म्म, 'हिनोमि' सम्पादयामि। 'ऋतसापः' यज्ञसम-वायिनो मरुतः, 'ऋतेन' यज्ञेन, 'सत्यम्' अवितथं फलं, 'आयन्' प्रापितवन्तः। कीदृशा मरुतः, 'शुचिजन्मानः' शुद्धेन जन्मना युक्ताः, 'शुचयः' आचरणेनापि शुद्धाः, 'पावकाः' इतरेषां शोधकाः॥

अथ वपाया याज्यामाह। "प्र चित्रमर्कं गृणते तुराय। मारुताय स्वतवसे भरध्वं। ये सहाꣳसि सहसा सहन्ते। रेजते अग्ने पृथिवी मखेभ्यः" इति। हे ऋत्विजः 'मारुताय' मरुतां सङ्घाताय, 'अर्कं' अर्चनं, 'प्रभरध्वं' प्रकर्षेण सम्पा-

दयत। कीदृशमर्कं, 'चित्रं' नानाविधं, कीदृशाय मारुताय, 'गृणते' अस्मद्धितं ब्रुवते, 'तुराय' सेनायुक्ताय, 'स्वतवसे' स्वतः-सिद्धबलयुक्ताय। 'ये' मरुतः, 'सहांसि' परकीयबलानि, 'सह-सा' स्वकीयबलेन, 'सहन्ते' अभिभवन्ति। हे 'अग्ने', 'मखेभ्यः' यागस्वामिभ्यस्तेभ्यो मरुद्भ्यः, 'पृथिवी', 'रेजते' कम्पते, अत-स्तच्छान्त्यर्थं हविर्वहेतेत्यभिप्रायः॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "अꣳसेष्वा मरुतः खादयो वः [५]। वक्षःसु रुक्मा उपशिश्रियाणाः। वि विद्युतो न वृष्टिभी रुचानाः। अनु स्वधामायुधैर्यच्छमानाः" इति। हे 'मरुतः,' 'वः' युष्माकं, 'अंसेषु', 'खादयः' शत्रून् खादितुं प्रहर्तुं समर्था आयुधविशेषाः, 'आ' सर्वत आरूढाः, 'वक्षः-सु,' त्वदीयेषु 'रुक्माः' रत्नाः, आभरणविशेषाः, 'उपशिश्रि-याणाः' उपेत्याश्रित्य वर्त्तन्ते। 'विद्युतो न' यथा विद्युत्स-म्पाताः रोचन्ते तद्वद्यूयं 'वृष्टिभिः' आयुधविशेषैः, वृष्ट्याख्यै र्विशेषेण रोचमाना स्थिताः। तथाच मन्त्रान्तरं, यत् क्रीडय मरुत ऋष्टिमन्त इति। ऋष्टय एव विशिष्टत्वात् वृष्टय इत्यु-च्यन्ते। तथा स्वकीयैः 'आयुधैः', 'स्वधां' परकीयमन्नं जित्वा 'अनुयच्छमानाः' अनुदिनमस्मभ्यं ददतोऽवस्थिताः॥

अथ पुरोडाशस्य याज्यामाह। "या वः शर्म्म शशमानाय सन्ति। त्रिधातूनि दाशुषे यच्छताधि। अस्मभ्यं तानि मरुतो वियन्त। रयिं नो धत्त वृषणः सुवीरं" इति। हे 'मरुतः', 'वः' युष्माकं, 'या शर्म्म' यानि शरणानि गृहाणि, 'शशमानाय

सन्ति' शंसनं कुर्व्वते यजमानाय सम्पादितानि। तानि गृहाणि 'त्रिधातूनि' अशनं पानं खादनमित्येतानि गृहाणि धारयन्तीति 'त्रिधातूनि'। तदेतत्त्रयमन्यत्राम्नायते, त्रेधा विहितं वा इद-मन्नमशनं पानं खाद इति। तैस्त्रिविधैः अन्नैरूपेतानि गृहाणि 'दाशुषे' हविर्दत्तवते यजमानाय, 'अधियच्छतु' आधिक्येन धत्त। हे 'मरुत',' 'अस्मभ्यम्', अपि 'तानि' गृहाणि,'नियन्त' विशेषेणायच्छत। 'वृषणः' कामानां वर्षितारः, यूयं 'रयिं' धनं, 'सुवीरं' सुष्ठु वीरपुत्रयुतञ्च, 'धत्त', सम्पादयत ॥

अथ हविषः पुरोनुवाक्यामाह। "इमे तुरं मरुता राम-यन्ति। इमे सहः सहस आनमन्ति। इमे शंसं वनुष्यतो निपान्ति [६] गुरुद्वेषो अररुषे दधन्ति" इति। 'इमे' मरुतः, 'तुरं' तूर्णं, 'रामयन्ति' अस्मान् क्रीडयन्ति, 'इमे' मरुतः, 'सहसः' बलवतः शत्रोः, 'सहः' बलम्, 'आनमन्ति' अन्तं कुर्व्वन्ति, विनाशयन्तीत्यर्थः। 'इमे' मरुतः, 'शंसं' शंसि-तारं यजमानं, 'वनुष्यतः' हिंसितुं शत्रोः, सकाशात् 'नि-पान्ति' नितरां रचन्ति। 'अररुषे' हविःप्रदानमकुर्व्वते ना-स्तिकाय, 'गुरुद्वेषः' महान्तं द्वेषं, 'दधन्ति' कुर्वन्ति ॥

अथ हविषो याज्यामाह। "अरा इवेदचरमा अहेव। प्र प्रजायन्ते अकवा महोभिः। पृश्नेः पुत्रा उपमासो रभिष्ठाः। स्वया मत्या मरुतः संमिमिक्षुः" इति। 'अरा इवेत्' यथा रथचक्रस्यारा: सर्व्वतो वर्त्तमानाः, 'अचरमाः' प्रथमचर-मभावरहिताः, तथैवैते 'मरुतः,' सर्व्वे सहोत्पन्नत्वात् प्रथम-

चरमभावरहिताः, 'अहेव' यथा वा अहानि षष्टिघटिकात्मकानि न्यूनाधिकभावरहितानि, तथैवैते 'मरुतः', चलनस्वभावेन समानत्वात् उत्तमाधमभावरहिताः, तेच 'मरुतः', 'अकवाः' अकुत्सिताः, 'महोभिः' स्वकीयैर्माहात्म्यैः, 'प्र प्रजायन्ते' अतिशयेन प्रकृष्टाः सम्पद्यन्ते। तेच 'मरुतः', 'पृश्नेः पुत्राः' गोरूपायाः पृश्निदेवतायाः अपत्यानि, 'उपमासः' सर्व्वेषामुत्तमवस्तूनामुपमारूपा एव, 'रभिष्ठाः' अतिशयेन वेगेन युक्ताः, तेच 'मरुतः,' 'स्वया मत्या' स्वकीयया बुद्ध्या, 'संमिमिक्षुः' सम्यग् मेहनं वृष्टिजलं दत्तवन्तः॥

अथैन्द्रमरुणमालभेतेन्द्रियकाम इत्यस्य पशोः वपायाः पुरोनुवाक्यामाह। "अनु ते दायि मह इन्द्रियाय। सत्रा ते विश्वमनु वृत्रहत्ये। अनु क्षत्रमनु सहो यजत्र। इन्द्र देवेभिरनु ते नृषह्ये" इति। हे 'इन्द्र', 'ते' तव, 'इन्द्रियाय' इन्द्रियाभिवृद्ध्यर्थं, 'महे' महतीपूजा, 'अनुदायि' अनुक्रमेण दत्ता। अथवा 'महे' महते इन्द्रियाय, यदनुकूलं तद्दत्तं। तथा 'वृत्रहत्ये' वृत्रवधे सति, 'ते' तुभ्यं, 'सत्रा' साकं, सर्व्वैर्देवैर्मिलित्वा, 'विश्वम्,' 'अनु' दत्तं, यदा वृत्रवधं कृतवानसि तदा तव विश्वस्वामित्वं सर्वैर्देवैरङ्गीकृतमित्यर्थः। हे 'यजत्र' पूजार्हेन्द्र, 'क्षत्रं' क्षत्रियजातिः, 'अनु' दत्ता, सर्व्वक्षत्रियस्वामित्वं तुभ्यं दत्तमित्यर्थः। तथा 'सहः' बलम्, 'अनु' दत्तं, 'नृषह्ये' मनुष्याणामभिभवे प्राप्ते 'देवेभिः,' 'ते' तुभ्यम्, 'अनु' दत्तं, तद्रक्षणमितिशेषः॥

अथ वपाया याज्यामाह। "य इन्द्र शुष्मो मघवन्ते अस्ति [७]। शिक्षा सखिभ्यः पुरुहूत नृभ्यः। त्वꣳहि दृढा मघवन् विचेताः। अपावृधि परिवृतिन्न राधः" इति। हे 'मघवन्' धनवन्, 'इन्द्र,' 'ते' तव, 'यः' 'शुष्मः' बलम्, 'अस्ति'। हे 'पुरुहूत', 'सखिभ्यः' त्वयिस्निग्धेभ्यः, 'नृभ्यः' मनुष्येभ्यो यजमानेभ्यः, 'शिक्षा' शिक्षितं, शुष्मं बलं देहि। हे 'मघवन्' इन्द्र, 'त्वं,' 'हि' यस्मात् कारणात्, 'दृढा' बलाधिक्यादत्यन्तदृढः, 'विचेताः' विविधजगदभिज्ञस्य, तस्मात् कारणात् 'राधः' अन्नम्, 'अपावृधि' अभिवर्द्धय, 'परिवृतिं न' परिवारमपि, अभिवर्द्धय॥

अथ पुरोडाशस्य पुरोनुवाक्यामाह। "इन्द्रो राजा जगतश्चर्षणीनां। अधिक्षमि विषुरूपं यदस्ति। ततो ददातु दाशुषे वसूनि। चोदद्राध उपस्तुतश्चिदर्वाक्" इति। अयम्, 'इन्द्रः', कृत्स्नस्य 'जगतः', विशेषतः 'चर्षणीनां' मनुष्याणां, च 'राजा', 'अधिक्षमि' क्षमाया भूमेरुपरि, 'विषुरूपं' नानाप्रकारं, 'यत्' धनम्, 'अस्ति'। 'ततः' सकाशात्, 'दाशुषे' हविर्दत्तवते यजमानाय, 'वसूनि' अपेक्षितानि धनानि, 'ददातु'। 'उपस्तुतः' यजमानेन स्तूयमानः सन्, 'अर्वाक्' अभिमुखो भूत्वा, 'राधश्चित्' अन्नमपि, 'चोदत्' प्रेरयतु, ददात्वित्यर्थः॥

अथ पुरोडाशस्य याज्यामाह। तमु ष्टुहि यो अभिभूत्योजाः। वन्वन्नवातः पुरुहूत इन्द्रः। आषाढमुग्रꣳ सहमानमाभिः। गीर्भिर्वर्द्ध वृषभं चर्षणीनां" इति। शत्रूणामभि-

भूतौ शक्तं ओजो बलं यस्य सः 'अभिभूत्योजाः', तादृशः 'यः' 'इन्द्रः' अस्ति। 'तमु' तमेवेन्द्रं, हे वागिन्द्रिय 'स्तुहि'। अयम् इन्द्रः,'पुरुहूतः' बहुभिर्यजमानैराहूतः, 'अवातः' वायुरहितः, निश्चल इत्यर्थः। तादृशः 'वन्वन्' अभिमतप्रदानं कुर्व्वन्, वर्त्तते। 'आषाढं' अन्यैरभिभवितुमशक्यं, 'उग्रं' तीव्रं, 'सह-मानं' शत्रूनभिभवन्तं, 'चर्षणीनां' 'वृषभं' मनुष्याणां कामा-भिवर्षणहेतुं। 'आभिः' गीर्भिः वेदोक्ताभिस्तुतिभिः, 'वर्ध' हे वागिन्द्रिय वर्धस्व॥

अथ हविषः पुरोनुवाक्यामाह। "स्थूरस्य रायो बृहतो य ईशे। तमु ष्टवाम विदथेष्विन्द्रं। यो वायुना जयति गोम-तीषु। प्र धृष्णुया नयति वस्यो अच्छ" इति। वृषभः श्रेष्ठः 'यः' इन्द्रः, 'स्थूरस्य' स्थूलस्य बहुलस्येत्यर्थः। 'बृहतः' महतः, अनर्घ्यस्येत्यर्थः। तादृशस्य 'रायः' धनस्य, 'ईशे' स्वामी भवति, 'तमु' तमेव, 'इन्द्रं', 'विदथेषु' यज्ञेषु, 'स्तवाम' नानाविधैस्तोत्रैस्तुतिं करवाम, 'यः' इन्द्रः, 'वायुना', सहितः 'गोमतीषु' गोमहिषादियुक्तासु परसेनासु, 'जयति' जयं प्राप्नोति। 'धृष्णुया' स्वकीयेन धृष्णुत्वेन प्रागल्भ्येन 'वस्यः' वसीयसो धनवत्तमान् पुत्रादीन्, 'प्रअच्छ' अस्मदाभिमुख्येन प्रकर्षेण नयति॥

अथ हविषो याज्यामाह। "आ ते शुष्मो वृषभ एतु पश्चात्। ओत्तरा दधरागा पुरस्तात्। आ विश्वतो अभिसमेत्व-र्वाङ्। इन्द्र द्युम्नꣳ सुवर्वद्धेह्यस्मे" [८] इति। हे 'इन्द्र' 'वृषभ

श्रेष्ठ, 'ते' तव, 'शुष्मः' बलं, 'पश्चात्' अस्मत्तः पश्चिमभागे, 'आएतु' आगच्छतु, तथैव 'उत्तरा' उत्तरभागेऽपि, आगच्छतु, 'अधराग्' अधो भागेऽपि, आगच्छतु, 'पुरस्तात्' पूर्व्वभागेऽपि, आगच्छतु, 'विश्वतः' सर्व्वेषु प्रदेशेषु, 'अभि' अस्मानभिलक्ष्य, 'अर्वाङ्' समीपवर्त्ती, 'समेतु' सम्यक् प्राप्नोतु। हे 'इन्द्र', 'सुवर्वत्' स्वर्गयुक्तं, 'द्युम्नं' धनम्, 'अस्मे धेहि' अस्मासु सम्पादय॥

अत्र विनियोगसङ्ग्रहः।

पुनरुत्सृष्ट ऐन्द्राग्ने 'शुचिं नु स्तोम' सूक्तकम्।
'ब्रह्मणस्पत' इत्येतद्ब्राह्मणस्पत्यतूपरे॥
'यास्ते पूष'न्निति त्वन्नप्रदे श्यामे हि पौष्णके।
'शुचीव' इति पृश्नौ स्यात् मारुतेऽन्नस्य दातरि॥
'अनु ते दायी'न्द्रके स्यादरुणे होन्द्रियप्रदे।

इति पञ्चमोऽनुवाकः॥ ५॥

अथ षष्ठोऽनुवाकः।

पञ्चमे ऐन्द्राग्नपश्वादीनां सूक्तान्यभिहितानि। षष्ठे सावित्रादिपशूनां सूक्तान्यभिधीयन्ते। तत्र सावित्रमुपध्वस्तमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "आ देवो यातु सविता सुरत्नः। अन्तरिक्षप्रा वहमानो अश्वैः। हस्ते दधानो नर्य्या पुरूणि। निवेशयञ्च प्रसुवञ्च भूम" इति। 'सविता', 'देवः', 'आयातु' आगच्छतु। कीदृशः,

'सुरत्नः' शोभनैः रत्नैर्युक्तः, 'अन्तरिक्षप्राः' स्वकीयैः रश्मिभिः अन्तरिक्षं पूरयिता, 'अश्वैर्वहमानः' स्वकीयैः अश्वैः रथं वाहयन्, 'नर्य्या' नरेभ्यो हितानि, 'पुरूणि' बहूनि रत्नानि, यजमानाय दातुं 'हस्ते दधानः', 'भूम' बहुलं जगत्, प्राणिजातं, 'निवेशयञ्च' रात्रौ स्वस्वगृहेऽवस्थापयन्नपि, 'प्रसुवञ्च' दिवसे स्वस्वव्यापारेषु प्रेरयन्नपि, वर्त्तते इति शेषः ॥

अथ वपाया याज्यामाह। "अभीवृतं कृशनैर्विश्वरूपं। हिरण्यशम्यं यजतो बृहन्तं। आस्थाद्रथꣳ सविता चित्रभानुः। कृष्णारजाꣳसि तविषीं दधान" इति। अयं 'सविता', 'रथं', 'आस्थात्' आरूढवान्। कीदृशं रथं, 'कृशनैरभीवृतं' कृशनशब्दः सुवर्णवाची सुवर्णैरभितोऽलङ्कृतमित्यर्थः। 'विश्वरूपं' अनेकैः आकारैरुपेतं, 'हिरण्यशम्यं' युगच्छिद्रे प्रक्षेपणीयः काष्ठविशेषः 'शम्या', सुवर्णमयीभ्यां शम्याभ्यामुपेतं, 'बृहन्तं' अतिप्रौढं। कीदृशः सविता, 'यजतः' यष्टव्यः, 'चित्रभानुः' बहुविधरश्मियुक्तः, 'तविषीं' स्वकीयं बलं, प्राप्य 'कृष्णारजांसि' 'दधानः' क्वचित् कृष्णानि रूपाणि क्वचित् रक्तानि रूपाणि धारयन् वर्त्तते, एतद्रूपान्तराणामप्युपलक्षणं। अत एव छन्दोगाः, असौ वा आदित्यो देवमध्वित्येतस्यां मधुविद्यायां यदेतदादित्यस्य रोहितं रूपं यदेतदादित्यस्य शुक्लं रूपं यदेतदादित्यस्य कृष्णं रूपं इति बहुविधानि रूपाण्यामनन्ति ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "सद्या नो देवः सवि-

ता सवाय । आसाविषद्वसुपतिर्वसूनि [१] । विश्रयमाणो अम-तिमुरूचीम् । मर्त्तभोजन *मधरासते न" इति । 'सद्या' स एव, 'सविता', 'देवः' 'वसुपतिः' धनपतिर्भूत्वा, 'नः' अस्माकं, 'सवाय' कर्मानुष्ठानाय, 'वसूनि' धनानि, 'आसाविषत्' सर्व्वतः सम्पादितवान् । किं कुर्व्वन्, 'उरूचीं' विस्तीर्णां गतिं, 'अ-मतिं' अस्मदीयां मन्दप्रज्ञां, 'विश्रयमाणः' विप्रतिषेधन्, 'अथ' अनन्तरं, 'मर्त्तभोजनं' मनुष्यैर्भोक्तुं योग्यमन्नं, 'रासते' अस्मभ्यं ददाति ॥

अथ पुरोडाशस्य याज्यामाह । "वि जनाञ्छ्यावाः शि-तिपादो अख्यन् । रथꣳ हिरण्यप्रउगं वहन्तः । शश्वद्विशः सवितुर्दैव्यस्य । उपस्थे विश्वा भुवनानि तस्थुः" इति । 'श्यावाः' श्यामवर्णाः, 'शितिपादः' श्वेतैः पादैः युक्ताः, 'सवितुः', अश्वाः 'जनान्' जन्तून्, 'व्यख्यन्' विशेषेण ज्ञापितवन्तः, अश्वेषु गच्छ-त्सु आदित्यो गच्छतीत्येवं जानन्ति । कीदृशा अश्वाः, 'रथं वहन्तः', कीदृशं रथं, 'हिरण्यप्रउगं' ईषाग्रयोः योगः प्रउग इत्युच्यते, सुवर्णमयः प्रउगो यस्य रथस्य सोऽयं हिरण्य-प्रउगः तं, 'दैव्यस्य' देवेभ्यो हितस्य, 'सवितुः', 'उपस्थे' उत्सङ्गे, 'विशः' प्राच्याद्याः, 'विश्वा भुवनानि' पृथिव्यादयः सर्व्वे लोकाश्च, 'शश्वत्तस्थुः' निरन्तरं तिष्ठन्ति, सवितृप्रकाशमध्ये वर्त्तमानमेव तदुत्सङ्गेऽवस्थानं ॥

* अस्मद्दृष्टपुस्तकेषु "अधरासते न" इति पाठो वर्त्तते । परन्तु भाष्यस्थं "अथानन्तरं" इति पाठं दृष्ट्वा "अथ रासते" इत्यनुमीयते ।

अथ हविषः पुरोऽनुवाक्यामाह। "वि सुपर्णो अन्तरिक्षाण्यख्यत्। गभीरवेपा असुरः सुनीथः। क्वेदानीꣳ सूर्य्यः कश्चिकेत। कतमां द्याꣳ रश्मिरस्याततान" इति। 'सुपर्णः' पक्षिसदृश आदित्यः, आकाशगामित्वात् पक्षिसादृश्यं। तादृश आदित्यः, 'अन्तरिक्षाणि' आकाशप्रदेशविशेषान्, 'व्यख्यत्' विशेषेण प्रकाशितवान्, पृथिव्यन्तरिक्षद्युलोकान् सर्व्वान् प्रकाशयतीत्यर्थः। कीदृशः सविता, 'गभीरवेपाः' वेपस्शब्दः कर्म्मवाची, उदयास्तमय-लक्षणगभीरकर्म्मेत्यर्थः। 'असुरः' प्राणप्रदः। अत एवान्यत्राम्नायते, योऽसौ तपन्नुदेति, स सर्वेषां भूतानां प्राणानादायोदेतीति। 'सुनीथः' प्रशस्तः। एवम्भूत आदित्यः 'इदानीं' रात्रौ, 'क्व' प्रदेशे वर्त्तते, इत्येवं 'कश्चिकेत' को वा जानाति, 'अस्य' सूर्य्यस्य, 'रश्मिः', 'कतमां द्यामाततान' कं नामाकाशभागं व्याप्नोति, इति। को वा जानाति, रात्रौ सूर्य्यस्य तद्रश्मेश्च अवस्थानं देशस्य बुद्धिमद्भिरपि दुर्विज्ञेयत्वात् अयमचिन्त्यमहिमेत्यर्थः ॥

अथ हविषो याज्यामाह। "भगं धियं वाजयन्तः पुरन्धिं। नराशꣳसो ग्नास्पतिर्नो अव्यात्। आये वामस्य सङ्गथे रयीणाम्। प्रिया देवस्य सवितुः स्याम" इति। 'भगं' सौभाग्यं, 'धियं' सत्कर्म्मविषयां प्रज्ञां, 'सवितुः', प्रसादात्, 'वाजयन्तः' प्राप्नुवन्तः, वर्त्तामहे, 'नः' अस्माकं, 'पुरन्धिं' बहुविषयां प्रज्ञां, अयं देवः 'अव्यात्' रक्षतात्, कीदृशोऽयं, 'नराशंसः' नरैः शंसनीयः, 'ग्नास्पतिः' छन्दसां पालयिता। छन्दाꣳसि

वै ग्ना इति श्रुत्यन्तरात्। देवपत्न्यो वा ग्नाशब्देनाभिधीयन्ते। उत ग्ना वियन्तु देवपत्नीरिति मन्त्रवर्णात्। 'श्राये'शब्दः एतव्यं प्राप्तव्यमाचष्टे, श्रासमन्तादये प्राप्तव्ये 'रयीणां' धनानां, 'सङ्गथे' सङ्गमे, निमित्तभूते सति 'वामस्य' सर्व्वैषां वननीयस्य सवितुर्देवस्य वयं 'प्रियाः स्यामः'॥

अथ वैश्वदेवं बहुरूपमालभेतान्नकाम इत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "आ नो विश्वे अस्क्रा गमन्तु देवाः। मित्रो अर्य्यमा वरुणः सजोषाः। भुवन्यथा नो विश्वे वृधासः। करन्त्सुषाहा विथुरन्न शवः" इति। 'मित्रो अर्यमा वरुणः', इत्येवमाद्याः, 'सजोषाः' समानप्रीतयः, 'विश्वे' सर्व्वे, 'देवाः', 'अस्क्राः' आभिमुख्येन कर्त्तारः सन्तः, 'नः' अस्मान् प्रति, 'आगमन्तु' आगच्छन्तु, 'विश्वे' देवाः, 'नावृधासः' अस्मान् वर्धयितारः, 'यथा', 'भुवन्' भवन्ति, 'शवः' अस्मदीयं बलं, 'सुषाहा' सुसहं, परेषामभिभवितृ। 'न विथुरं' अचलितं यथा, 'करन्' कुर्व्वन्ति, तथास्मानागच्छन्त्विति पूर्व्वत्रान्वयः॥

अथ वपाया याज्यामाह। "शन्नो देवा विश्वदेवा भवन्तु। शꣳ सरस्वती सह धीभिरस्तु [१]। शमभिषाचः शमुरातिषाचः। शन्नो दिव्याः पार्थिवाः शन्नो अप्याः" इति। विश्वदेवशब्दो वसुरुद्रादिशब्दगणविशेषवाची। 'विश्वे देवा'ऽऽख्याः, 'देवाः', 'नः' अस्माकं, 'शं' सुखहेतवः, 'भवन्तु'। 'सरस्वती', देवी 'धीभिः' बुद्ध्यभिमानिनीभिर्देवताभिः, 'सह', 'शं'

सुखहेतुः, 'अस्तु'। अभितः सचन्ते समवयन्तीति 'अभिषाचः' बान्धवाः, ते 'शं' सुखहेतवः, भवन्तु। रातिर्मित्रं तेन सचन्त इति 'रातिषाचः' मित्रद्वारा सम्बध्यमानाः पुरुषाः, 'उ' अपि, तेऽपि 'शं' सुखहेतवः, भवन्तु। दिवि भवा 'दिव्याः', पृथिव्यां भवाः 'पार्थिवाः', अपोऽन्तरिक्षं तत्र भवा 'अप्याः', ये देवा दिव्येकादशस्थेत्यत्र पठिताः लोकत्रयवर्त्तिनो देवाः 'शं' सुखहेतवः, भवन्तु॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः। ते सौभगं वीरवद्गोमदप्नः। दधातन द्रविणं चित्रमस्मे" इति। 'ये' 'विश्वे', 'देवाः', 'सत्यसवस्य' सत्यप्रेरणस्य, 'सवितुः', 'मित्रस्य', 'वरुणस्य,' च सम्बन्धिनि 'व्रते' कर्मणि, समागताः 'ते' सर्व्वे यूयं, 'सौभगं' सौभाग्यं, 'अप्नः' कर्म्मविशेषं, 'द्रविणं' धनञ्च, 'अस्मे दधातन' अस्मासु सम्पादयत। कीदृशं सौभाग्यं, 'वीरवत्' बहुभिर्वीरैः पुत्रैर्युक्तं, 'गोमत्' बहुभिर्गोभिर्युक्तं, कीदृशं द्रविणं, 'चित्रं' मणिमुक्तादिभेदेन बहुविधम्॥

अथ पुरोडाशस्य याज्यामाह। "अग्ने याहि दूत्यं वारिषेण्यः। देवाꣳ अच्छा ब्रह्मकृता गणेन। सरस्वतीं मरुतो अश्विनापः। यक्षि देवान् रत्नधेयाय विश्वान्" [४] इति। हे 'अग्ने', 'देवानच्छा' देवानभिलक्ष्य,'दूत्यं याहि' दूतकर्म्म कुरु, 'वारिषेण्यः' कार्य्यविघातेन अस्मान् मा हिꣳसीः। कान् देवानभिलक्ष्येति तदुच्यते, ब्रह्म परिवृढमिदं कर्म्म करोतीति

'अह्वृकृत्', तेन कर्मकारिणा, वैश्वदेव'गणेन', सह मरुत्वदा-दीन् देवानभिलक्ष्य दूत्यं कृत्वा 'रत्नधेयाय' रत्नसम्पादनाय, 'विश्वान्' देवान्, 'यक्षि' पूजय॥

अथ हविषः पुरोऽनुवाक्यामाह। "द्यौः पितः पृथिवि मातरध्रुक्। अग्ने भ्रातर्वसवो मृडता नः। विश्व आदित्या अदिते सजोषाः। अस्मभ्यꣳ शर्म्म बहुलं वियन्त" इति। येयं 'द्यौः', तद्रूप, हे 'पितः', हे 'पृथिवि मातः', 'अध्रुक्' द्रोहरहितः, हे 'अग्ने', 'भ्रातः', त्वमप्यध्रुक्। हे 'वसवः', यूय-मप्यद्रुहः। ते यूयमस्माकं द्रोहमनाचरन्तः, 'नः' अस्मान्, 'मृडत' सुखयत। हे 'विश्वे', देवाः हे 'आदित्याः', हे 'अदिते', यूयं 'सजोषाः' समानप्रीतयः, 'अस्मभ्यं', 'बहुलं', 'शर्म', सुखं, 'वियन्त' विशेषेण यच्छत॥

अथ हविषो याज्यामाह। "विश्वे देवाः शृणुतेमꣳ हवं मे। ये अन्तरिक्षे य उप द्यवि ष्ठ। ये अग्निजिह्वा उत वा यजत्राः। आसद्यास्मिन् बर्हिषि मादयध्वं" इति। हे 'विश्वे देवाः' 'मे हवं' मदीयमाह्वानं, 'शृणुत'। 'ये' यूयं, 'अन्तरिक्षे ष्ठ' अन्तरिक्ष-लोके स्थिताः; 'ये', च 'उप' समीपे पृथिव्यां स्थिताः; 'ये', च 'द्यवि' दिविलोके स्थाः, 'ये' यूयम्, 'अग्निजिह्वाः' अग्निद्वारेण हविषः स्वीकर्त्तारः। 'उत वा' अन्येऽपि, वा 'यजत्राः' यष्टव्याः, ते सर्व्वेऽपि 'अस्मिन्' 'बर्हिषि'यागे, 'आसद्य' उपविश्य, 'माद-यध्वं' तृप्ता भवत, अस्मानपि हर्षयत॥

अथ मैत्रावरुणीं द्विरूपामालभेतेत्यस्य पशोः सूक्ते पुरोऽनुवा-

क्यामाह। "आ वां मित्रा वरुणा हव्यजुष्टिं। नमसा देवा ववसा-ववृत्यां [५]। अस्माकं ब्रह्म पृतनासु सह्या। अस्माकं वृष्टि-र्दिव्यासुपारा" इति। 'मित्रा वरुणा देवौ' हे मित्रा वरुणा देवौ, 'अवसा' अस्मद्रक्षणेन निमित्तभूतेन, 'वां' युवयोः,'हव्य-जुष्टिं' हविषा प्रीतिं,'नमसा' नमस्कारेण सह,'आववृत्यां' पुनः पुनरावर्त्तयामि; अतो भवत् प्रसादात् 'अस्माकं', 'पृतनासु' परकीयसेनासु प्राप्तासु, 'ब्रह्म' भवदुपदिष्टं मन्त्रजातं 'सह्याः' सहतां, परकीयसेना अभिभवतु। किञ्च 'अस्माकं' भवत्-प्रसादात् दिवि भवा 'दिव्या', 'वृष्टिः'; 'सुपारा' सुष्ठु पार-यित्री फलं प्रापयन्ती भवतु॥

अथ वपाया याज्यामाह। "युवं वस्त्राणि पीवसा वसाथे। युवोरच्छिद्रामन्तवो ह सर्गाः। अवातिरतमनृतानि विश्वा। ऋतेन मित्रावरुणा सचेथे" इति। हे 'मित्रावरुणौ', 'पीवसा' अतिस्थूलौ, 'युवं' युवामुभौ, 'वस्त्राणि', बहुविधानि 'वसाथे' आच्छादयाथः, 'युवोः' युवयोः, 'मन्तवो' मननरूपा अनु-ग्रहविशेषाः, 'सर्गाः' भवद्भिः सृष्टाः, 'अच्छिद्राः' अच्छिन्नाः, निरन्तरं भवदनुग्रहात् अस्मासु वर्त्तन्त इत्यर्थः। 'विश्वा' सर्व्वाण्यनृतानि अस्मदीयापराधरूपाणि, 'अवातिरतं' युवां विनाशितवन्तौ। हे मित्रावरुणौ, 'ऋतेन' सत्येन, शास्त्रीय-मार्गेण; 'सचेथे' अस्मान् संयोजयथः॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "तत्सु वां मित्रावरुणा महित्वं। ईर्मा तस्थुषीरहभिर्दुदुह्रे। विश्वाः पिन्वथः स्वसरस्य-

धेनाः । अनु वामेकः पविरावर्त्ति” [६] इति । हे ‘मित्रा-वरुणौ’, ‘वां’ युवयोः, ‘तत्’ ‘महित्वं’ माहात्म्यं, ‘सु’ अत्यन्तं सुष्ठु वर्त्तते। किं तन्माहात्म्यमिति तदुच्यते, ‘ईर्मा’ गमनशीले आदित्ये, ‘तस्थुषीः’ रश्मिद्वारेण अवस्थिताः आपः, ‘अहभिः’ सर्व्वेष्वहःसु, ‘दुदुह्रे’ युवां दुग्धवन्तौ, आदित्यमण्डले रश्मि-द्वारा यो जलसङ्ग्रहः, पुनरपि सङ्गृहीतस्य यदर्पणं, तदुभयमा-श्चर्य्यरूपं भवदीयं माहात्म्यम्। स्वयं सरति सर्व्वदा गच्छतीति ‘स्वसरः’ आदित्यः, तस्य सम्बन्धिना वृष्टिजलेन ‘धेनाः’ धातव्याः पोषणीयाः, ‘विश्वाः’ सर्व्वाः प्रजाः, ‘पिन्वथः’ प्रीणयथः। ‘अनु’ वृष्टिकालानन्तरमेव, ‘वां’ युवयोर्मध्ये, ‘एकः’, मित्र आदित्यः ‘पविः’ स्वकीयेनातपेन पङ्कयुक्ताया भूमेः शोधकः सन्, ‘आ-ववर्त्ति’ पुनः पुनरावर्त्तते॥

अथ पुरोडाशस्य याज्यामाह। “यद्वꣳहिष्ठं नातिविधे सुदानू। अच्छिद्रꣳ शर्म्म भुवनस्य गोपा। तेन नो मित्रा-वरुणाववीष्टं। सिषासन्तो जीगिवाꣳसः स्याम” इति। ‘भुवनस्य’ गोलोकस्य,‘गोपा’ रक्षकौ,‘सुदानू’ शोभनस्य फलस्य दातारौ,हे मित्रावरुणौ ‘यत्’ यस्मात् कारणात्, ‘वंहिष्ठं’ अत्यन्तबहुलम्, ‘अच्छिद्रं’ विनाशरहितं, ‘शर्म्म’ सुखं, ‘नातिविधे’ भवदनुग्रहं विना प्रकारान्तरेणास्माभिर्नात्यन्तं लभ्यम्, ‘ततः’ कार-णात्, हे ‘मित्रावरुणौ’ ‘नः’ अस्मान्, ‘अवीष्टं’ रक्षितवन्तौ, ‘सिषासन्तः’ भवद्दत्तं फलं लब्धुमिच्छन्तः, वयं ‘जीगिवांसः’ जेतुं प्राप्तवन्तः, स्याम॥

अथ हविषः पुरोऽनुवाक्यामाह। "आ नो मित्रावरुणा हव्यदातिं। घृतैर्गव्यूतिमुक्षतमिडाभिः। प्रति वामत्र वरमा-जनाय। पृणीतमुद्नो दिव्यस्य चारोः" इति। हे 'मित्रा-वरुणौ', युवां 'हव्यदातिं' हविर्दानहेतुं, 'नो गव्यूतिं' अस्मदीयं गोसमूहं, 'इडाभिः' तृणादिभक्ष्यविशेषैः, सह जनितेन 'घृतेन' आज्येन, 'आ' समन्तात्, 'उक्षतम्' अभिषिंतं, बहुविधगोग्रासद्वारा घृतसम्पूर्त्तिं कुरुतमित्यर्थः। हे 'मित्रावरुणौ', 'वां' युवां, 'अत्र' अस्मिन्देशे, 'जनाय' सर्व्वजनोपकारार्थं, 'दिव्यस्य' दिविभवस्य, 'चारोरुद्नः' समीचीनस्योदकस्य, 'वरं' श्रेष्ठं सारं, 'प्रतिपृणीतं' प्रतिक्षेत्रं पूरयतम्॥

अथ हविषो याज्यामाह। "प्र बाहवा सिसृतं जीवसे नः। आ नो गव्यूतिमुक्षतं घृतेन [७]। आ नो जने श्रवयतं युवाना। श्रुतं मे मित्रावरुणा हवेमा" इति। हे 'मित्रावरुणौ', 'नो जीवसे' अस्माकं जीवनार्थं, 'बाहवा' भवदीयौ बाहू, 'प्रसिसृतं' प्रसारयतं, बाहू प्रसार्य्य अस्मानादाय रक्षतमित्यर्थः। 'नो गव्यूतिम्' अस्मदीयं गोसमूहम्, 'आ' समन्तात्, 'घृतेन', 'उक्षतं' सिञ्चतं। 'युवाना'नित्यतरुणौ, परस्परमिश्रितौ वा, युवां 'नः' अस्मान्, 'जने' जनमध्ये, 'श्रवयतं' प्रख्यापयतं। हे 'मित्रावरुणौ', 'मे' मदीयं, 'इमा हवा श्रुतं' इदमाह्वानं शृणुतम्॥

अथ रौद्रीꣳ रोहिणीमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "इमा रुद्राय स्थिरधन्वने गिरः। क्षिप्रे-

षवे देवाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता शृणोतन'' इति। हे ऋत्विजः, हे पुत्रपौत्रा वा, 'शृणोतन' मदीयं वाक्यं शृणुत। किं वाक्यमिति तदुच्यते, 'रुद्राय', 'इमाः' वेदोक्ताः, 'गिरः' स्तुतिरूपा वाचः, 'भरता' सम्पादयत। कीदृशाय रुद्राय, 'स्थिरधन्वने' दृढेन धनुषा युक्ताय, 'क्षिप्रेषवे' शीघ्रगामिवाणयुक्ताय, 'देवाय' द्योतमानाय, 'स्वधाम्ने' स्वकीयस्थानयुक्ताय, स्वधाशब्दवाच्येनान्नेन युक्ताय वा, 'अषाढाय' परैरभिभवितुमशक्याय, 'सहमानाय' परानभिभवितुं समर्थाय, 'मीढुषे' वृष्ट्यादिसेचनसमर्थाय, 'तिग्मायुधाय' तीक्ष्णैरायुधैरुपेताय॥

अथ वपाया याज्यामाह। "त्वा दत्तेभी रुद्र शन्तमेभिः। शतꣳ हिमा अशीय भेषजेभिः। व्यस्मद्द्वेषो वितरं व्यꣳहः। व्यमीवाꣳश्चातयस्वा विषूचीः'' [८] इति। हे 'रुद्र', 'त्वा दत्तेभिः' त्वयास्मभ्यं दत्तैः, 'शन्तमेभिः' सुखतमैः, 'भेषजेभिः' ओषधैः, 'शतꣳ हिमाः' शतसङ्ख्याकान् संवत्सरान्, 'अशीय' व्याप्नुयाम्, 'द्वेषः' द्वेषिणः शत्रून्, 'अस्मद्विचातयस्वा' अस्मत्तो वियोजयस्व, नात्र वियोगमात्रं किन्तु 'वितरं' अतिशयेन वियोगं कुरु, 'अꣳहः' पापं, विचातयस्व, 'अमीवान्' रोगान्, 'विषूचीः' विविधगतियुक्तान् कृत्वा, विचातयस्व॥

अथ पुरोडाशस्य याज्यानुवाक्ययोः प्रतीके दर्शयति। "अर्हन् बिभर्षि सायकानि'' इति। अर्हन् बिभर्षि सायकानि धन्वेत्येषा पुरोऽनुवाक्या। सा च प्रवर्ग्यमन्त्रकाण्डे व्याख्या-,

ष्यते। मानस्तोके तनय इति याज्या। सा च त्वमग्ने बृहद्वय इत्यनुवाके व्याख्याता॥

अथ हविषः पुरोऽनुवाक्यामाह। "आ ते पितर्मरुतां सुम्नमेतु। मा नः सूर्य्यस्य सन्दृशो युयोथाः। अभि नो वीरो अर्व्वति क्षमेत। प्रजायेमहि रुद्र प्रजाभिः" इति। हे 'मरुतां', 'पितः' पालक, 'रुद्र', 'ते सुम्नं' त्वया सम्पादितत्वेन त्वदीयं सुखं, 'आ' समन्तात्, 'एतु' अस्मान् प्राप्नोतु, किञ्च त्वमस्मान्। 'सूर्य्यस्य सन्दृशः' सूर्य्यसम्बन्धिनो दर्शनात्, 'मा युयोथाः' मा वियोजय, सूर्य्यानुगृहीतं चक्षुःपाटवमस्माकं सर्व्वदाऽस्त्वित्यर्थः। 'नः' अस्माकं, 'वीरः' पुत्रः, 'अर्व्वति' अश्वस्य पुरुषैः, 'अभिक्षमेत' सर्व्वप्रकारेण समर्थोऽस्तु। हे 'रुद्र', त्वत्प्रसादाद्वयं 'प्रजाभिः' 'प्रजायेमहि' वह्वीः प्रजा उत्पादयाम॥

अथ हविषो याज्यामाह। "एवा बभ्रो वृषभ चेकितान। यथा देव न हृणीषे न हंसि। हावनश्रूर्नो रुद्रेह बोधि। बृहद्वदेम विदथे सुवीराः" इति। हे 'देव', 'यथा', 'न हृणीषे' न कुप्यसि, 'न हंसि च' न मारयस्यपि, 'एवा' एवमेव, त्वामाह्वयामीति शेषः। रुद्रस्य विशेषणानि, 'बभ्रो' पिङ्गलवर्ण, 'वृषभ' कामानां वर्षितः, 'चेकितान' सर्व्वज्ञ, हे 'रुद्र', 'हावनश्रूः' आह्वानस्य श्रोता सन्, 'इह' कर्मणि, 'नः' अस्मान्, 'बोधि' बुध्यस्व, अस्मदीयां स्तुतिं जानीहीत्यर्थः। वयं 'सुवीराः' शोभनापत्ययुक्ताः सन्तः, 'बृहद्वदेम' प्रौढं स्तोत्रं पठाम॥

अस्मिन्नेव रौद्रे पशौ विकल्पिते सूक्ते षण्णामृचां प्रतीकानि दर्शयति। "परि णो रुद्रस्य हेति स्तुहि श्रुतम्। मीढुष्टमार्हन् बिभर्षि। त्वमग्ने रुद्र आवो राजानं" [८] इति। परि णो रुद्रस्य हेतिर्वृणक्त्विति वपायाः पुरोऽनुवाक्या। स्तुहि श्रुतं गर्त्तसदं युवानमिति याज्या। मीढुष्टम शिवतमेति पुरोडाशस्य पुरोऽनुवाक्या। एतत्त्रयं रुद्राध्याये व्याख्यातं। अर्हन् बिभर्षीति पुरोडाशस्य याज्या। सा च प्रवर्ग्यमन्त्रेषु व्याख्यास्यते। त्वमग्ने रुद्रो असुर इति हविषः पुरोऽनुवाक्या। आ वो राजानमध्वरस्येति याज्या। एतद्द्वयं त्वमग्ने रुद्र इत्यनुवाके व्याख्यातम्॥

अत्र विनियोगसङ्ग्रहः।

'आदेव' इति सावित्रे उपध्वस्ते मनिप्रदं।
'आ नो विश्वे' वैश्वदेवे बहुरूपे मनिप्रदं॥
'आवां मित्रा' द्विरूपायां मैत्रावरुणनामनि।
'इमा रुद्राय' रोहिण्यां रौद्र्यां गवि समीरितम्।
'परि णो रुद्र' इत्येतत्तत्रैव हि विकल्पितम्॥

इति षष्ठोऽनुवाकः।

---

अथ सप्तमोऽनुवाकः।

षष्ठे सावित्र्यादिपशूनां सूक्तान्यभिहितानि। सप्तमे सौर्य्यादिपशूनां सूक्तान्यभिधीयन्ते। तत्र यो ब्रह्मवर्चसकामः

स्यात्तस्मा एताꣳ सौरीं श्वेतां वशामालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "सूर्यो देवीमुषसꣳ रोचमाना मर्य्यः। न योषामभ्येति पश्चात् यत्रा नरो देवयन्तो युगानि। वितन्वते प्रति भद्राय भद्रम्" इति। योऽयं 'सूर्यः' अस्ति सोऽयं 'रोचमाना' दीप्यमानः, 'उषसम्' उषोऽभिधां देवीमभिलक्ष्य, 'पश्चादेति' पृष्ठभागे गच्छति, तत्र दृष्टान्तः, 'मर्य्यो न योषा' यथा मर्त्यो योषामभिलक्ष्य पृष्ठतो गच्छति तद्वत्, उषा देवी प्रथमं प्रभातं करोति पश्चात् सूर्य्य उदेतीत्यर्थः। 'यत्रा' यस्यामुषसि प्रवृत्तायां, 'नरः' मनुष्याः, यजमानाः, 'देवयन्तः' देवानात्मार्थमिच्छन्तः, 'युगानि' दम्पतिरूपाणि युग्मानि भूत्वा, 'भद्राय' कल्याणाय, 'भद्रं वितन्वते' कल्याणं कर्म्मानुतिष्ठन्ति। यस्यामुषसि कर्म्मानुष्ठानप्रवृत्तिः, तामुषसमभ्येतीति पूर्व्वत्रान्वयः॥

अथ वपाया याज्यामाह। "भद्रा अश्वा हरितः सूर्य्यस्य। चित्रा एतग्वा अनुमाद्यासः। नमस्यन्तो दिव आ पृष्ठमस्थुः। परि द्यावापृथिवी यन्ति सद्यः" इति। एतच्छब्दपर्य्याय 'एतग्व'शब्दः सूर्य्यस्याश्वमाचष्टे। अत एव मन्त्रान्तरमाम्नायते, एतग्वेन त्वा सूर्य्यो देवतां गमयत्विति। 'सूर्य्यस्य', 'एतग्वाः' अश्वाः, 'दिवः पृष्ठं' द्युलोकस्योपरि, 'आस्थुः' आस्थितवन्तः, कीदृशा एतग्वाः, 'भद्राः' कल्याणरूपाः, 'अश्वाः' आशुगामिनः, 'हरितः' नीलवर्णाः, 'चित्राः' विचित्रगतियुक्ताः, 'अनुमाद्यासः' रथयोजनमनुहृष्यन्तः, 'नमस्यतः' नमस्कार-

मिच्छन्त इव प्रक्षोभूताः, तथाविधाः अश्वाः 'सद्यः' तस्मिन्नेव क्षणे, 'द्यावापृथिवी 'परियन्ति' लोकद्वयं परिभ्राम्य गच्छन्ति ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "तत्सूर्य्यस्य देवत्वं तन्महित्वम्। मध्या कर्त्तोर्विततꣳ सञ्जभार [१]। यदेदयुक्त हरितः। सधस्थात्। आद्रात्रीवासस्तनुते सिमस्मै" इति। 'विततं' विस्तीर्णं रश्मिजालं, 'मध्या कर्त्तोः' कृष्यादिक्रियायां मध्ये, 'सञ्जभार' संहृतवानिति, यदस्ति 'तत्', एव सूर्य्यस्य 'देवत्वं' प्रकाशकत्वं, 'तत्' एव 'महित्वं' माहात्म्यम्। अयमर्थः,सूर्य्यरश्मिसञ्चारे सति तदीयप्रकाशेनानुगृहीता मनुष्याः सर्व्वेषु देशेषु बहुविधानि कृष्यादिकर्म्माणि आरभन्ते तदीययामचतुष्टयमात्रेण सर्व्वरश्मिजालं संहृत्यास्तमेति इयतोरश्मिजालस्य जगत्प्रकाशनाय क्षणमात्रेण प्रसारणं पुनः संहरणञ्च नान्यमहिम्नः सम्भवति अतो महदेतन्माहात्म्यमिति। 'यदेत्' यदैव, 'सधस्थात्' कर्म्मानुष्ठातॄणां सहावस्थानयोग्यादस्माद्देशात्, मेरुमतीत्य गन्तुं 'हरितः' स्वकीयानश्वान्, 'अयुक्त' सूर्य्यः, स्वरथे योजयति 'आत्' अनन्तरमेव, 'सिमस्मै' प्राणिजाताय, तदुपकारार्थं 'रात्रीवासस्तनुते' लोकप्रसिद्धरात्रीनिवासं करोति। अयमर्थः, मेरुं प्रदक्षिणीकुर्व्वन् आदित्यः यदैवास्मात् मेरुपार्श्वात् परपार्श्वं गन्तुमुद्युक्तः तदानीमेव रात्रिर्भवतीति ॥

अथ पुरोडाशस्य याज्यामाह। "तन्मित्रस्य वरुणस्याभिचक्षे। सूर्य्यो रूपं कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः।

कृष्णमन्यद्धरितः सम्भरन्ति" इति। स्वकीयं रूपं करोति प्रादुर्भवतीति यदस्ति 'तत्' एतत् प्रादुर्भूतं 'रूपं', 'मित्रस्य', 'वरुणस्य,' तदुभयोपलक्षितस्य सर्व्वस्य जगतः, 'अभिचक्षे' अभितो दर्शनाय सम्पद्यते, 'अस्य' सूर्य्यस्य, 'अनन्तं पाजः' अत्यधिकं रश्मिजालरूपं,'अन्यत्' वक्ष्यमाणापेक्षया पृथगेव भूत्वा, 'रुशत्' दीप्यते, मध्याह्नकाले अपि केन तेजसा प्रकाशते। अत एवान्यत्राम्नातम्, वृहस्पतेर्मध्यं दिनः। तत् पुण्यं तेजसाहः। तस्मात्तर्हि तेक्ष्णिष्ठं तपतीति। 'अन्यत्' पूर्व्वोक्तात् मध्यन्दिनात् पृथगेव, रात्रो 'कृष्णं रूपं', 'हरितः' सूर्य्यस्याश्वाः, 'सम्भरन्ति' सम्पादयन्ति। एतेऽश्वा यदा मेरोः पश्चिमभागे गच्छन्ति तदानीमत्र कृष्णं रूपं सम्पद्यते॥

अथ हविषः पुरोऽनुवाक्यामाह। "अद्या देवा उदिता सूर्य्यस्य। निरꣳहसः पिपृतान्निरवद्यात्। तन्नो मित्रो वरुणो मामहन्ताम्। अदितिः सिन्धुः पृथिवी उत द्यौः" [२] इति। हे 'देवाः', 'अद्य' अस्मिन्दिने, 'सूर्य्यस्य', 'उदिता' उदितेन, उदयेन, अस्मान् 'अꣳहसः' पापात्, निष्कृष्य 'पिपृतात्' पालयत, तथा 'अवद्यात्' लौकिकादपि दोषान् निष्कृष्य 'पिपृतात्' पालयत, 'तत्' युष्माभिः क्रियमाणमस्मत्पालनं, 'मित्रादयः सर्व्वे देवाः 'मामहन्तां' अतिशयेन पूजयन्तु, अनुमोदन्तामित्यर्थः। 'सिन्धु.' नदविशेषः, समुद्रो वा, 'उत'-शब्दः समुच्चयार्थः॥

अथ हविषो याज्यामाह। "दिवो रुक्म उरुचक्षा उदेति।

दूरेअर्थस्तरणिर्भ्राजमानः। नूनं जनाः सूर्य्येण प्रसूताः। आयन्नर्थानि कृणवन्नपांसि" इति। अयं 'तरणिः' सूर्य्यः, 'उदेति'। कीदृशः, 'दिवो रुक्मः' स्वर्गस्य भासकः, 'उरुचक्षाः' उरुषु विस्तीर्णेषु पृथिव्यादिलोकेषु प्रकाशकः, 'दूरेअर्थः' दूरदेशः अर्थो गमनरूपं प्रयोजनं यस्यासौ 'दूरेअर्थः', । बहुदूरगमनञ्च पुराणे स्मर्य्यते,

योजनानां सहस्रे द्वे द्वे शते द्वे च योजने।
एकेन निमिषार्द्धेन क्रममाण नमोऽस्तु ते॥ इति।

तादृशोऽयं 'भ्राजमानः' दीप्यमानः, वर्त्तते। 'नूनं' अवश्यं, 'जनाः', सर्व्वे, 'सूर्य्येण', 'प्रसूताः' प्रेरिताः सन्तः, 'अर्थानि' अर्थ्यमानानि कृष्यादिफलानि, 'आयन्' प्राप्नुवन्ति। 'अपांसि' वैदिकानि कर्म्माणि 'कृणवन्' कुर्व्वन्ति॥

अथ तस्मिन्नेव हविषि विकल्पितामन्यां पुरोऽनुवाक्यामाह। "शन्नो भव चक्षसा शन्नो अह्ना। शम्भानुना शंहिमा शं घृणेन। यथा शमस्मै शमसद्दुरोणे। तत्सूर्य्य द्रविणं धेहि चित्रम्" इति। हे 'सूर्य्य', त्वं 'नः' अस्माकं, 'चक्षसा' चक्षुरनुग्रहेण, 'शं' सुखहेतुर्भव। तथा 'नः' अस्माकं, 'अह्ना' दिननिष्पादनेन, 'शं', भव। 'भानुना' रश्मिरूपप्रकाशनेन, 'शं', भव। 'हिमा' हिमेन रश्मीनुपसंहृत्य शैत्यप्रदानेन, 'शं', भव। 'घृणेन' घर्म्मप्रदानेन, 'शं', भव। वसन्त-ग्रीष्मयोः शैत्यप्रदानं, स्थलान्तरेषु घर्म्म-प्रदानमिति विवेकः। प्राणिनां हि वसन्तादौ शैत्यापेक्षा, वर्षादिषु औष्ण्यापेक्षा, अतस्तदुभयं प्रार्थ्यते। 'अस्मै'

यजमानाय गृहाद्बहिःसञ्चरते, 'यथा शमसत्' येन प्रकारेण सुखं भवति। 'दुरोणे' गृहे च, 'यथा शमसत्' येन प्रकारेण सुखं भवति। हे 'सूर्य्य', 'तद्धेहि' तथा कुरु। किञ्च 'चित्रं' मणिमुक्तादिरूपेण नानाविधं, 'द्रविणञ्च,' 'धेहि' सम्पादय॥

अथ हविषो विकल्पितामन्यां याज्यामाह। "चित्रं देवानामुदगादनीकम्। चक्षुर्मित्रस्य वरुणस्याग्नेः [३]। आप्रा द्यावापृथिवी अन्तरीक्षम्। सूर्य्य आत्मा जगतस्तस्थुषश्च" इति। 'चित्रं' ताम्रारुणबभ्रुत्वादिरूपेण विचित्रं, सूर्य्यमण्डलं 'उदगात्' उदयं प्राप्नोतु। तदेव वैचित्र्यमन्यत्राम्नातम्, असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गल इति। कीदृशं मण्डलं, 'देवानामनीकं' दीप्यमानबहुरश्मिरूपाणां देवानां सैन्यसदृशं, तथा 'मित्रावरुणाग्न्यादीनां', सर्व्वेषां दृष्ट्यनुग्राहकत्वेन 'चक्षु'स्थानीयं,'जगतः' जङ्गमस्य प्राणिजातस्य,'तस्थुषश्च' स्थावरस्यापि, 'आत्मा' प्रत्यगात्मत्वेन हृदयेऽवस्थितः, 'सूर्य्यः,' लोकत्रयम् 'आप्राः' सर्व्वतः स्वचैतन्येन स्वरश्मिना च पूरितवान्॥

अथ त्वाष्ट्रं वडबमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरोडाशस्य याज्यानुवाक्ययोस्त्वारि प्रतीकानि दर्शयति। "त्वष्टा दधत्तन्नस्तुरीपम्। त्वष्टा वीरं पिशङ्गरूपः" इति। त्वष्टा दधदिन्द्रायेति वपायाः पुरोऽनुवाक्या। सा चेयं समिद्ध इन्द्र उषसामित्यत्र व्याख्याता। तन्नस्तुरीपमधपोषयित्विति वपाया याज्या। सा चाग्निना रयिमश्नवदित्यत्र व्याख्याता। त्वष्टा वीरं देवकाममिति पुरोडाशस्य याज्या। सा चाग्निपुरोडा-

शस्य पुरोऽनुवाक्या। समिद्धो अञ्जन्नित्यत्र व्याख्याता। पिशङ्गरूपः सुभर इति पुरोडाशस्य याज्या। सा चाग्निरयिमश्नवदित्यत्र व्याख्याता॥

अथ हविषः पुरोऽनुवाक्यामाह। "दशेमं त्वष्टुर्जनयन्त गर्भम्। अतन्द्रासो युवतयो बिभर्त्रम्। तिग्मानीकꣳ स्वयशसं जनेषु। विरोचमानं परिषीन्नयन्ति" इति। प्राच्याद्याः 'दश',दिशः, 'इमं' अग्निं गर्भस्थानीयं,'त्वष्टुः', प्रकाशात् 'जनयन्त' उदपादयन्। पुरा कदाचित् सर्व्वत आन्ध्ये सति प्रकाशार्थं दशस्वपि दिक्षु त्वष्टा वह्निमुत्पादितवान्, इत्याख्यायिका ब्राह्मणान्तरे द्रष्टव्या। कीदृश्यो दिशः, 'अतन्द्रासः' प्राणिधारणरूपे स्वव्यापारे कदाचिदप्यालस्यरहिताः, 'युवतयः' नित्यतरुणस्वभावाः। कीदृशमग्निं, 'बिभर्त्रं' दाहपाकप्रकाशप्रदानेन सर्व्वस्य जगतः पोषकं, 'तिग्मानीकं' तीक्ष्णज्वालारूपेण सैन्यापेतं, 'स्वयशसं' स्वतः प्रसिद्धं यशोयुक्तं, 'जनेषु' प्राणिषु, 'विरोचमानं' उदराग्निरूपेण वहिःप्रकाशकत्वेन च विशेषेण च दीप्यमानं, तादृशमग्निं 'परिषीं' परितोऽवस्थितासु तत्तद्दृश्यमासु, सर्व्वे प्राणिनो 'नयन्ति'॥

अथ हविषो याज्यामाह। "अविष्ठो वर्द्धते चारुरासाम्। जिह्मानामूर्द्धः स्वयशा उपस्थे [४]। उभे त्वष्टुर्बिभ्यतुर्जायमानात्। प्रतीची सिꣳहं प्रतिजोषयेते" इति। 'आसां' कुटिलानां, वा तिर्यगवस्थितानां दिशां मध्ये 'उपस्थे' उपरिभागे, 'स्वयशाः' स्वाधीनयशस्कः, 'वर्द्धते', । योऽयमादित्यरूपेणा-

परि वर्त्तते, स एवाग्निरूपेण 'त्वष्टुः', सकाशाज्जायते, 'जाय-मानात्', तस्मादग्नेः 'उभे' द्यावापृथिव्यौ, 'बिभ्यतुः' भीते आस्तां। अत्यन्तदहननिमित्तेयं भीतिः। ते च भीते सत्यौ 'प्रतीची' प्रतीच्यामभिमुखे भूत्वा, 'सिंहं' सिंहसदृशं दुरास-दमग्निं प्रतिपद्य, 'जोषयेते' प्रीणयतः। ततः प्रीतोऽग्निः नात्यन्तं धक्षतीति तयोरभिप्रायः॥

अथ मैत्रꣳ श्वेतमालभेतेत्यस्य पशोः सूक्ते वपाया याज्या-नुवाक्ययोः प्रतीके दर्शयति। "मित्रो जनान् प्रसमित्र" इति। मित्रो जनान् यातयतीति पुरोऽनुवाक्या। प्रसमित्र मर्त्तो अस्त्विति याज्या। एतयोभयं त्वमग्ने वृहद्वय इत्यत्र व्या-ख्यातम्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "अयं मित्रो नमस्यः सुशेवः। राजा सुक्षत्रो अजनिष्ट वेधाः। तस्य वयꣳ सुमतौ यज्ञियस्य। अपि भद्रे सौमनसे स्याम" इति। 'अयं' पशूनां पूज्यमानः, 'मित्रः', एव 'नमस्यः' सर्व्वैर्नमस्कार्य्यः, 'सुशेवः' सुष्ठु सेवितुं शक्यः, 'राजा' सर्व्वेषां स्वामी, 'सुक्षत्रः' शोभन-बलयुक्तः, 'वेधाः' प्राणिनां विधाता भूत्वा, 'अजनिष्ट' प्रादुर्भूतः। 'यज्ञियस्य' यज्ञयोग्यस्य, 'तस्य' मित्रस्य, 'सुमतौ' अनुग्रहरूपायां बुद्धौ, 'वयं', 'स्याम' अवस्थिता भूयास्म। 'अपि', च 'भद्रे' कल्याणे, 'सौमनसे' चित्तस्वास्थ्ये, 'स्याम' अवस्थिताः भूयास्म॥

अथ पुरोडाशस्य याज्यामाह। "अनमीवास इडया म-

दन्तः । मितज्ञवो वरिमन्ना पृथिव्याः । आदित्यस्य व्रतमुपक्ष्यन्तः [५]। वयं मित्रस्य सुमतौ स्याम" इति। 'वयं' यजमानाः, 'मित्रस्य', देवस्य, 'सुमतौ' अनुग्रहबुद्धौ, 'स्याम' सर्व्वदावस्थिता भूयास्म । कीदृशा वयं, 'अनमीवासः' रोगरहिताः, 'इडया मदन्तः' अन्नमहिम्ना हृष्यन्तः, 'मितज्ञवः' भूमावस्थितजानुकाः । लोके हि स्वामिनः सन्निधौ विज्ञपनां कुर्व्वन्तो भृत्यास्तथा वर्त्तन्ते। 'पृथिव्याः', सम्बन्धिनि 'वरिमन्' वरिष्ठे देवयजने, 'आ'समन्तात्, 'आदित्यस्य' मित्रनाम्न आदित्यविशेषस्य, सम्बन्धि एतत्प्रद्रूपं कर्म्म, 'उपक्षन्तः' अनुतिष्ठन्तः ॥

अथ हविषः पुरोनुवाक्यामाह। "मित्रं न ईं शिम्या गोषु गव्यवत्। स्वाधियो विदथे अप्सुजीजनन्। अरेजयतां रोदसी पाजसा गिरा। प्रति प्रियं यजतं जनुषामव" इति। 'स्वाधियः' स्वतन्त्रबुद्धय ऋत्विजः, 'नः' अस्मदीयं, 'ईं विदथे' अस्मिन् यज्ञे, 'शिम्या', अनुष्ठानेन, जनयितव्या 'अप्सु' निमित्तभूतासु सतीषु 'मित्रं', देवम् 'अजीजनन्' उत्पादितवन्तः, अस्मिन् कर्म्मण्याहूतवन्तः। तत्र दृष्टान्तः, 'गोषु गव्यवत्' यथा गोषु गव्यं क्षीरादिकं जनयन्ति तथास्मिन् कर्म्मणि मित्रं हविर्भाक्त्वेनोत्पादितवन्तः। 'रोदसी' द्यावापृथिव्यौ, 'पाजसा' मित्रस्य बलेन, 'अरेजयतां' अकम्पतां, मित्रस्य आज्ञया वर्त्तेते इत्यर्थः। 'यजतं' यजनीयं, 'प्रियं' मित्रं, 'प्रतिजनुषां' जन्मवतां अस्माकं, 'अवः' रक्षणं, 'गिरा' वाचा, प्रार्थयामह इति शेषः ॥

अथ हविषो याज्यामाह। "महाꣳ आदित्यो नमसोप-सद्यः। यातयज्जनो गृणते सुसेवः। तस्मा एतत्पन्यतमाय जुष्टं। अग्नौ मित्राय हविराजुहोत" इति। 'आदित्यः, य अदितेः पुत्रः, मित्रः 'महान्' आकारेण बहुलः, 'नमसोपसद्यः' नमस्कारेण सेवनीयः, 'यातयज्जनः' एतदाराधनार्थं प्रयत्नं कारयद्भिर्जनैः युक्तः, 'गृणते' स्तुतिं कुर्व्वते यजमानाय, 'सुशेवः' सुखेन सेवितुं शक्यः। 'पन्यतमाय' अतिशयेन स्तुत्याय, 'तस्मै' पूर्व्वोक्तगुणयुक्ताय 'मित्राय', 'जुष्टं' प्रियम्, 'एतत्' 'हविः' 'अग्नौ' आहवनीये, हे ऋत्विजः 'आजुहोत' ॥

अथाश्विनं धूम्रमालभेतेत्यस्य पशोः सूक्ते वपायाः पुरो-नुवाक्यामाह। "आ वाꣳ रथो रोदसीबद्बधानः [६] हिरण्ययो वृषभिर्यात्वश्वैः। घृतवर्त्तनिः पविभीरुचानः। इषां वोढा नृपतिर्वाजिनीवान्" इति। हे अश्विनौ 'वां' युवयोः, 'रथः', 'अश्वैः', 'युक्तः', 'आयातुः', अस्मद्यज्ञं प्रत्यागच्छतु। कीदृशो रथः, 'रोदसी' द्यावापृथिव्यौ 'बद्बधानः' अतिशयेन बाधमानाः, 'हिरण्ययः' सुवर्णमयः, 'घृतवर्त्तनिः', घृतः वर्त्तन्यां मार्गे यस्य रथस्य सोयं 'घृतवर्त्तनिः' रथमार्गः, सर्व्वोऽपि घृतसमानेन जलेन पूर्ण इत्यर्थः। 'पविभिः' वज्रसमानैरायुधैः, रुचानः, दीप्यमानः, रथस्योपरि बहून्यायुधानि तिष्ठन्तीत्यर्थः। 'इषां' भक्तेभ्यो देयानामन्नानां 'वोढा', 'नृपतिः' नृणां पालयिता, 'वाजिनीवान्' वाजिनीभिरन्नीहेतुभिर्युक्तः। कीदृशैरश्वैः, 'वृ-षभिः' सेचनसमर्थैः ॥

अथ वपाया याज्यामाह। "स पप्रथानो अभि पञ्चभूम। त्रिवन्धुरो मनसायातु युक्तः। विशो येन गच्छथो देवयन्तीः। कुत्राचिद्याममश्विना दधाना" इति। 'सः' रथः मया 'युक्तः', 'आयातु' स्मरणमात्रेणास्मदीयं यज्ञमागच्छतु। कीदृशो रथः, 'पञ्चभूम' 'अभिपप्रथानः' भूमशब्दो भुवनवाची, पञ्चसङ्ख्याकानि भुवनानि पृथिव्यन्तरिक्षद्युलोकपातालनाकजनलोकरूपाणि, अभिलक्ष्य 'पप्रथानः' अतिशयेन प्रथमानः। बन्धुरशब्देन सारथिस्थानमुच्यते, त्रीणि बन्धुराणि यस्मिन् 'त्रिवन्धुरः', रथे बङ्कस्वेषु योजितेषु कक्ष्यात्रये सारथय उपविश्य तान् सर्व्वानश्वान् प्रेरयन्ति। हे अश्विनौ युवां 'येन' रथेन, 'देवयन्तीः' देवानामात्मन इच्छन्तीः, स रथः पूर्व्वोक्तगुणकः, हे अश्विनौ 'कुत्राचित्' यत्र यत्र क्वापि, 'यानं' गमनं, 'दधाना' मनसि धारयन्तौ, तेनैव रथेन गच्छथ इति शेषः॥

अथ पुरोडाशस्य पुरोनुवाक्यामाह। "स्वश्वा यशसाऽऽयातमर्वाक्। दस्रा निधिं मधुमन्तं पिबाथः। वि वां रथो बध्वा यादमानः [७] अन्तान्दिवो बाधते वर्त्तनिभ्यां" इति। हे 'दस्रा' अश्विनौ, 'स्वश्वा' शोभनैरश्वैर्युक्तौ, तथा 'यशसा', युक्तौ 'अर्वाक्' 'आयातं' अस्मदभिमुखं आगच्छतं, आगत्य च 'मधुमन्तं' माधुर्य्ययुक्तं, 'निधिं' निधिसमानां वपादिकं, 'पिबाथः' भक्षयथः, 'वध्वा', सहितयोः 'वां' युवयोः, अयं, 'रथः' यादमानः इतस्ततो भ्रमन् 'वर्त्तनिभ्यां' चक्रधाराभ्यां, चक्रमार्गाभ्यां वा, 'दिवोऽन्तान्' द्युलोकस्य पर्य्यन्तान्, विशेषेण 'बाधते'॥

अथ पुरोडाशस्य याज्यामाह। "युवो श्रियं परि योषा वृणीत। सूरो दुहिता परितक्मियायां। यद्देवयन्तमवथः शचीभिः। परिघ्रꣳस वां मना वां पयो गां" इति। हे अश्विनौ 'सूरोदुहिता' सूर्य्यस्य कन्यका, 'योषा' अस्ति 'परितक्मियायां' परितो गमनलक्षणायां क्रियायां, 'युवो श्रियं' युवयोराश्रय-भूतं रथं, 'परिवृणीत' परितो वृतवती। अयमर्थः सूर्य्यस्य दुहितरं परिवरितुं सर्व्वे देवाः काञ्चिन्मर्य्यादां चक्रुः। तस्याम-श्विनौ जितवन्तौ। तदानीमियं दुहिता गमनार्थं तदीयं रथं वव्र इति। इदमुपाख्यानं शाखान्तरे द्रष्टव्यम् 'यद्देवयन्तं' य-स्मात् कारणात् देवान् कामयमानं यजमानं, हे अश्विनौ 'शची-भिः' स्वशक्तिभिः, 'अवथः' रक्षथः तस्मात् कारणात् 'परिघ्र-ꣳस' घस्रः दिनमित्यर्थः, तस्य परितः सायंप्रातः कालयोरि-त्यर्थः। तयोः कालयोः 'वां' युवां, 'पयः', हविर्लक्षणमन्नं, 'गां,' गच्छतु। कीदृशं पयः, 'वां मना' युवयो मननीयं॥

अथ हविषः पुरोनुवाक्यामाह। "यो ह स्य वाꣳ रथिरा-वस्त उस्राः। रथो युजानः परियाति वर्त्तिः। तेन नः शंयो-रुषसो व्युष्टौ। न्यश्विना वहतं यज्ञे अस्मिन्" इति। हे 'रथि-रौ' रथयुक्तौ अश्विनौ, 'वां' युवयोः सम्बन्धी, 'योह' यः खलु रथोस्ति,' स्यः' स एष रथः, 'उस्राः' उस्रैः स्वनिष्ठमणिमु-क्तादिरश्मिभिः, 'अस्ते' स्वात्मानमाच्छादयति, मण्यादिभिरल-ङ्कृत इत्यर्थः। सच रथः, 'युजानः' अश्वयुक्तः सन्, 'वर्त्तिन्यां' मार्गे, 'परियाति' परितो गच्छति, 'तेन रथेन, अस्माकं 'शं

सुखप्राप्तिहेतुं, 'योः' दुःखवियोगहेतुञ्च, 'उषसो व्युष्टौ' व्युष्टायामुषसि, प्रातःकाले, 'अस्मिन्' 'यज्ञे', हे 'अश्विनौ', 'नियच्छतं' तदुभयं नितरां प्रापयतं॥

अथ हविषो याज्यामाह। "युवं भुज्युमवविद्धꣳ समुद्रे। [८] उदूहथुरर्णसो अस्रिधानैः। पतत्रिभिरश्रमैरव्यथिभिः। दꣳसनाभिरश्विना पारयन्ता" इति। हे 'अश्विनौ', 'युवं' युवामुभौ, 'समुद्रे', 'अवविद्धं' निमग्नं, 'भुज्युं' कञ्चिद्राजानं भुज्युनामकं, 'अर्णसः' उदकात्, 'उदूहथुः' ऊर्द्धं नीतवन्तौ। केन साधनेनेति तदुच्यते, 'अस्रिधानैः' अमन्दवेगैः, 'पतत्रिभिः' पक्षिविशेषैः, 'अश्रमैः' श्रमरहितैः, 'अव्यथिभिः' भयरहितैः। कीदृशावश्विनौ, 'दंसनाभिः' व्यापारविशेषैः, 'पारयन्तौ' तीरं प्रापयन्तौ। भुज्युनाम्नो राज्ञोऽश्विभ्यां समुद्रादुद्धरणमन्यत्रापि, तमूहथुर्नौभिरात् मन्वतीभिरिति मन्त्रे स्पष्टमाम्नातम्॥

अथ तृतीयकाण्डोक्ताग्नीषोमीयामालभेतत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "अग्नीषोमा यो अद्य वां। इदं वचः सपर्य्यति। तस्मै धत्तꣳ सुवीर्य्यं। गवां पोषꣳ स्वश्वियम्" इति। हे 'अग्नीषोमौ', 'यः' अयं यजमानः, अस्मिन् कर्मणि 'वां' युवां, 'इदं वचः' अनेन वचनप्रयुज्यमानेन मन्त्रेण, 'सपर्य्यति' परिचरति, 'तस्मै' यजमानाय, 'सुवीर्य्यं' शोभनसामर्थ्यं, 'गवां पोषं' गोसमृद्धिं, 'स्वश्वियं' शोभनाश्वसमूहञ्च, 'धत्तं' सम्पादयतम्॥

अथ वपाया याज्यामाह। "यो अग्नीषोमा हविषा सपर्य्यात्। देवद्रीचा मनसा यो घृतेन। तस्य व्रतꣳ रक्षतं पातमꣳहसः [८]। विशे जनाय महि शर्म्म यच्छतं" इति। हे 'अग्नीषोमौ', 'यः' यजमानः, 'हविषा' पशुरूपेण, 'सपर्यात्' परिचरति। 'यः', च 'देवद्रीचा' देवान् प्राप्नुवता, 'मनसा' मननीयेन, 'घृतेन', परिचरति। 'तस्य' यजमानस्य, 'व्रतं' इदं कर्म्म, विघ्नेभ्यो 'रक्षतं'। तं च यजमानं 'अꣳहसः' पापात्, 'पातं' रक्षतं। 'विशे' प्रजायुक्ताय यजमानाय, 'जनाय' मनुष्याय यजमानाय, 'महि शर्म' महत् सुखं, 'यच्छतं'॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "अग्नीषोमा य आहुतिं। यो वां दाशाद्धविष्कृतिं। स प्रजया सुवीर्य्यं। विश्वमायुर्व्यश्नवत्" इति। हे 'अग्नीषोमौ', 'यः' अयं यजमानः, 'आहुतिं', 'दाशात्' दद्यात्। तदेव पुनर्वाक्यान्तरेण स्पष्टीक्रियते, 'यः' यजमानः, 'वां' युवाभ्यां, 'हविष्कृतिं' हविर्योग्येन संस्कारेण संस्कृताम्, आहुतिं 'दाशात्' दद्यात्, मन्त्रेण क्रियया च अविकलं यथा भवति तथानुतिष्ठेदित्यर्थः। 'सः' यजमानः, 'प्रजया' पुत्रपौत्रादिरूपया सह, 'सुवीर्य्यं' शोभनसामर्थ्ययुक्तं, 'विश्वमायुः' शतसंवत्सरपर्य्यन्तमायुः, 'व्यश्नवत्' विशेषेण प्राप्नोति॥

अथ पुरोडाशस्य याज्यामाह। "अग्नीषोमा चेति तद्वीर्य्यं वां। यदमुष्णीतमवसं पणिङ्गोः। अवातिरतं प्रथयस्य शेषः।

अविन्दतं ज्योतिरेकं बहुभ्यः" इति। हे 'अग्नीषोमौ', 'पणिं' पणिनाम्नः कस्यचिदसुरस्य, 'गोः' यावत्यो गावः सन्ति ताः सर्व्वाः, 'अमुष्णीतं' युवामपहृतवन्तौ, 'इति' 'यत्', एतदस्ति, 'तत्', एतत्, 'वां वीर्य्यं' युवयोः सौर्य्यं, 'चेति' चेतति, सर्व्वो जनो विजानाति। पणिनामकः कश्चिदसुरो देवेभ्योऽभितः स्वकीया गाः स्वीकृत्य क्वचित् पलायनमकरोत्, तदानीमेतावग्नीषोमौ ताः सर्व्वा गाः बलादानीतवन्तौ, इति यदस्ति सेयमाख्यायिका शाखान्तरे द्रष्टव्या। हे अग्नीषोमौ तथा युवां 'प्रथयस्य' प्रथयनाम्नः कस्यचिदसुरस्य, 'शेषः' शेषनामानं वृत्रमसुरं, 'अवातिरतं' इन्द्रद्वारा विनाशितवन्तौ, ततस्तमोरूपस्य वृत्रस्य नाशात् 'बहुभ्यः' बहुयजमानोपकारार्थं, 'ज्योतिरेकं' सम्पूर्णचन्द्रमण्डलरूपं प्रकाशम्, 'अविन्दतं' लब्धवन्तौ। इदञ्च वृत्रवधाख्याने त्वष्टा हत पुत्र इत्यनुवाके प्रपञ्चितं, तत्र हि घ्नन्ति वा एनं पूर्णमास इति वाक्ये तमोरूपस्य वृत्रस्य वधे सति पौर्णमासदिने सम्पूर्णचन्द्रमण्डलस्य रूपस्य प्रकाशस्याविर्भावः श्रुतस्तत् सर्व्वमत्र मन्त्रेणोक्तम्॥

अथ हविषो याज्याऽनुवाक्यायाः प्रतीके दर्शयति। "अग्नीषोमाविमꣳसुमेऽग्नीषोमा हविषः प्रस्थितस्य" [१०] इति। अग्नीषोमाविमꣳसुमे शृणुतमिति पुरोनुवाक्या। अग्नीषोमा हविषः प्रस्थितस्येति याज्या। एतच्चोभयं सप्तमे निकाण्डेऽत्यन्त व्याख्यातं॥

अत्र विनियोगसङ्ग्रहः ।

'सूर्य्या देवी' श्वेतसौर्य्ये ब्रह्मवर्चसकामिनः ।
'शंनो भवेति' मन्त्रौ द्वौ पूर्व्वत्रैव विकल्पितौ ॥
'त्वष्टा दधादि'ति त्वाष्ट्रावडवे पशुकामिनः ।
'मित्रो जनेति' मैत्रे स्यात् सङ्ग्रामे समयार्थिनः ॥
'आवां रथ' इति त्वेतदाश्विने धूम्रलाञ्छिते ।
'अग्नीषोमा' वशायां स्यादजायामन्नकामिनः ॥

इति सप्तमोऽनुवाकः ।

---

अथाष्टमोऽनुवाकः ।

सप्तमे सौर्य्यादिपशूनां सूक्तान्यभिहितानि । अष्टमे वेहतादिपशूनां सूक्तान्युच्यन्ते । ते च पशवः शाखान्तरे समाम्नाताः । तत्र सूत्रकारेणोदाहृतम्, साम्नाय्ये वेहतमालभेत इत्यस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह । "अहमस्मि प्रथमजा ऋतस्य । पूर्व्वं देवेभ्यो अमृतस्य नाभिः । यो मा ददाति स इदेव मावाः । अहमन्नमन्नमदन्तमद्मि" इति । बह्वृचा आरण्यकाण्डे त्रिविधमन्नमामनन्ति, त्रेधा विहितं वा इदमन्नं अशनं पानं खाद इति । तस्याशनादेस्त्रिविधस्यान्नस्याभिमानिनी या देवता: तदीयानि वचनान्यस्मिन् सूक्ते प्रतिपाद्यन्ते । 'अहम्' अन्नस्वामी देवः, 'ऋतस्य' यज्ञस्य, 'प्रथमजाः' प्रथमं जनयितास्मि । यज्ञस्य हविर्जन्यत्वात् हविषः अन्नरूपत्वात् तादृशो-

ऽहमन्नस्वामी, 'पूर्व्वं' पुरा, 'देवेभ्यः' देवार्थं, 'अमृतस्य', 'नाभिः' बन्धकोऽस्मि' नह्यति बध्नात्यमृतमिति नाभिः। देवा ह्यमृतमुपजीवन्ति, अमृतं वा अन्नविशेषः, तस्मात् अहमेवामृतस्य सम्पादकः। 'यः' श्रद्धालुः पुमान्, 'मा' माम्, अन्नरूपं, 'ददाति' ब्राह्मणादिभ्यः प्रयच्छति, 'स इदेव' स दाता स्वयमेव, 'मा' माम् अन्नं देवं, 'आवाः' आवृणोति, स्वीकरोतीत्यर्थः। द्वौ हि लोकेषु पुरुषौ दाता चादाता च। तत्राद्यः कालान्तरे भोक्तुं मां सङ्गृह्णाति यावदन्नमिदानीं दीयते तावत्येव कालान्तरे शतधा सहस्रधा वर्द्धते। तस्मात् दातैव मां सङ्गृह्णाति। यस्त्वन्तिमः मां अदत्वा स्वयमेवात्ति, 'अहम्', एव 'अन्नमद्मि', इत्यभिमन्यते, तमन्नमदत्ताभिमानिनमन्नदेवः 'अहम्', 'अद्मि' तं विनाशयामि, अदातुः कालान्तरेऽन्नाभावात्॥

अथ वपाया याज्यामाह। "पूर्व्वमग्नेरपि दहत्यन्नं। यत्तौ हाऽऽसाते अहमुत्तरेषु। व्यात्तमस्य पशवः सुजम्भं। पश्यन्ति धीराः प्रचरन्ति पाकाः" इति। यदिदमन्नम् अदातृभिर्भुज्यते तदिदम् 'अन्नम्', 'अग्नेरपि पूर्व्वम्', तं भोक्तारं 'दहति'। अथ युक्तमन्नमुदराग्निर्दिनमात्रेण 'दहति' पाचयति। अदाता तु भोक्ता भुज्यमानेनान्नेन तदानीमेव दह्यते, नरकहेतोः प्रत्यवायस्य तदैवोत्पन्नत्वात्। अत एवाहुः, अदाता विषमश्नुत इति। 'यत्तौ हा' प्रयत्नवन्तावेव, 'आसाते' दाताऽदातारौ तिष्ठतः, दाता हि दानार्थं प्रयत्नं करोति, इतरस्तु भोजनार्थम्। तयोर्मध्ये ये पुरुषाः दातुः पक्षे वर्त्तन्ते

त एव 'उत्तराः' श्रेष्ठाः। तेषु 'उत्तरेषु', दातृषु कालान्तरेषु 'अहम्', अक्षीणो वसानि। ये 'पशवः' मूढाः, अदातारः, तान् प्रति 'अस्य' अन्नदेवस्य, मुखं 'व्यात्तं' विवृतं, 'सुजम्भम्' तीक्ष्णदन्तोपेतं, वर्त्तते, खादयाम्यदातृनिति सर्व्वदोद्युक्त इत्यर्थः। एतमन्नदेवस्याभिप्रायं दातारो 'धीराः' बुद्धिमन्तः, 'पश्यन्ति' जानन्ति, अतएवाददतः 'पाकाः' बालाः, मूढाः, 'प्रचरन्ति' प्रकर्षेण भक्षयन्त्येव, न तु किञ्चिदपि ददति॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "जहाम्यन्नं न जहाम्यन्यं। अहमन्नं वशमिच्चरामि [१]। समानमर्थं पर्य्येमि भुञ्जत्। कोमामन्नं मनुष्योदयेत" इति। अन्नदेवोऽहं 'अन्नं' अदातारं, 'जहामि' परित्यजामि, 'अन्यं' तु दातारं, 'न जहामि'। 'अहमन्नं' अन्नदेवरूपोऽहं, 'वशमित्' स्ववशमेव यथा भवति तथा, 'चरामि'। अदातुः परित्यक्तः दातृस्वीकारश्चेति एतत् स्ववशत्वं। यः पुमान् भोगदानयोः समानः सन् धनमर्थयते तं समानमर्थयितारं 'भुञ्जत्' पालयन्, अहं 'पर्य्येमि' परितः प्राप्नोमि। यस्तु भोगमात्रलम्पटः तं न पालयामि नापि तं पर्य्येमीत्यभिप्रायः। एवमदातृपरित्यागेन दातृपक्षपातेन च वर्त्तमानं 'माऽको मनुष्यः', 'दयेत' रक्षेत्, निवारयेत्, न कोपि मां निवारयितुं शक्त इत्यर्थः॥

अथ पुरोडाशस्य याज्यामाह। "पराके अन्नं निहितं लोक एतत्। विश्वैर्देवैः पितृभिर्गुप्तमन्नं। यद्द्यते लुप्यते यत्परोप्यते। शततमीसा तनूर्मे बभूव" इति। पूर्व्वस्मिन् मन्त्रे वश-

मिच्चरामि मां कोदयतेतियत् स्वातन्त्र्यमुक्तं तदुपपादयितुं स्वमाहात्म्यमत्र वर्ण्यते द्विविधो ह्यन्नस्य व्यवहारः, पारलौकिक ऐहिकश्चेति। तत्र 'पराके' परलोके दूरस्थपित्रादिलोके, 'एतदन्नं निहितं', दाता हि देवलोके पितृलोके वा ममेदं भूयादित्यभिप्रेत्यैव ब्राह्मणेभ्यो ददाति, अतो दत्तमन्नं दूरस्थे लोके निहितं भवति। तच्च 'अन्न', तत्तत् 'लोके', 'विश्वैः' मर्त्यैः, 'देवैः,' 'पितृभिः', च स्वार्थं 'गुप्तं' रक्षितं, भवति। यदग्नौ हुतं यच्च ब्राह्मणेभ्यो दत्तं तदेवोपजीव्य देवाः पितरश्च वर्त्तन्ते। एवं पारलौकिकोऽन्नव्यवहार उक्तः। ऐहिकोऽपि व्यवहार उच्यते, 'यत्' अन्नं, 'अद्यते' प्राणिभिर्भक्ष्यते, यच्च विदग्धं सत् भाण्डे अपि भवति, पर्य्युषितत्वेन वा पूतीभवति, तादृशं 'लुप्यते' नष्टं भवति। यच्च 'पराप्यते' स्वकीयैश्वर्य्य-प्रकटनाय वहिः परित्यज्यते, 'सा' सर्वाप्यैहिकामुष्मिकारूपा, 'मे' अन्नस्वामिनो देवस्य, 'शततमीः' शतसङ्ख्यापूरणी, 'तनूः', च सर्व्वोऽपि लेश एवेत्यर्थः; ईदृशं मदीयं माहात्म्यं॥

अथ हविषः पुरोऽनुवाक्यामाह। "महान्तौ चरू सकृद्दुग्धेन पप्रौ। दिवञ्च पृश्नि पृथिवीञ्च साकं। तत् संपिबन्तो नमिनन्ति वेधसः। नैतद्भूयो भवति नो कनीयः" [७] इति। पुनरपि माहात्म्यमेव प्रपञ्च्यते, तत्रायं दृष्टान्तः। यथा लोके बहुक्षीरप्रदाया गोः 'सकृद्दुग्धेन','महान्तौ चरू' प्रौढौ कुम्भौ, यस्य पूरयति, एवमत्रापि 'पृश्नि' स्वल्पमपि, दत्तमन्नं, 'दिवं च' पृथिवीं च, 'साकं' लोकद्वयमपि सह पूरयति। अग्नौ

ब्राह्मणेषु वा दत्तमन्नं मन्त्रपूतं सत् सहस्रधा फलति। अत एवान्यत्राम्नायते, यावदेवा देवता कामयते यावदेका। तावदाऊतिः प्रथत इति। 'तत्' अन्नं, 'संपिबन्तः' सम्यग् भक्षयन्तः, 'वेधसो' बुद्धिमन्तः, 'नमिनन्ति' न हिंसन्ति, स्वात्मानमन्नं वा न विनाशयन्ति। दानपूर्व्वकं भक्षणं सम्यग् भक्षणं तत् कुर्व्वन्तः पुरुषाः अन्नं न हिंसन्ति, तत्तस्यान्नस्य च वर्धमानत्वात् स्वात्मानमपि न हिंसन्ति, प्रवृद्धस्यान्नस्य च चिरभोक्तृत्वादपि चैतद्भोजनार्थं अन्नं च 'एतत्', 'न भूयः', 'न', अपि 'कनीयः', भूयस्त्वेस्यादजीर्ण्णिः, कनीयस्त्वे नास्तिक्षुन्निवृत्तिः। एतदेवाभिप्रेत्य स्मर्य्यते,

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नत इति।

एवं दानपुरःसरं युक्तेन प्रमाणेन भुञ्जानान् पुरुषान् लोकद्वये पालयतीत्यर्थः॥

अथ हविषो याज्यामाह। "अन्नं प्राणमन्नमपानमाऊः। अन्नं मृत्युं तमु जीवातुमाऊः। अन्नं ब्रह्माणो जरसं वदन्ति। अन्नमाऊः प्रजननं प्रजानां" इति। सर्व्वव्यवहारकारणस्यान्नस्य माहात्म्यमविवादं। तत् कथमिति तदुच्यते, योऽयं प्राणवायुरूर्द्धं सञ्चरति, पश्चादपानवायुरधः सञ्चरति, तावुभावन्नजन्यबलादेव सञ्चरतः। अतस्तयोरन्नात्मकत्वं 'आऊः', रसवैषम्येन व्याधिद्वारा मारकत्वात् 'अन्नं मृत्युमाऊः'। 'तं' एव अन्नदेवं, 'जीवातुं' जीवनौषधं, 'आऊः'। तच्च लोके प्रसिद्धं। 'ब्रह्माणः' आयुर्वेदशास्त्राभिज्ञाः ब्राह्मणाः 'अन्नं' एव 'जरसं

वदन्ति' जराहेतुं आहुः। केनचिदाहारविशेषेण सहसा अतिपलितत्वप्राप्तिरित्याहुरायुर्वेदे प्रसिद्धिः। अन्नमेवेन्द्रियवृद्धिद्वारा 'प्रजानां', 'प्रजननं' उत्पादकं, 'आहुः'॥

अथ हविष एव विकल्पितामन्यां पुरोऽनुवाक्यामाह। "मोघमन्नं विन्दते अप्रचेताः। सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं। केवलाघो भवति केवलादी" इति। योऽयम् 'अप्रचेताः' प्रकृष्टज्ञानरहितः, 'मोघं' व्यर्थमेव, 'अन्नं', 'विन्दते' लभते। तदेतत् 'सत्यं ब्रवीमि', न केवलं वैयर्थ्यं किन्तु 'सः' अयमदत्तोऽन्नपदार्थः, 'तस्य' दानरहितस्य पुरुषस्य, 'वध इत्' वध एव, वधश्च बाधकमेवेत्यर्थः। तत्र वैयर्थ्यत्वावत् स्पष्टीक्रियते, योऽयमदाता सोऽयमन्नेनार्यमादिकं देवं 'न पुष्यति', अग्नावाहुत्यभावात्। 'सखायं' अतिथ्यादिरूपं मनुष्यं, 'न पुष्यति', दानाभावात्। अतः परलोकेऽनुपयोगेन वैयर्थ्यं बधहेतुत्वं स्पष्टीक्रियते। 'केवलादी' केवलं भुङ्क्ते न तु ददाति, सोऽयं 'केवलाघः', 'भवति'; पापमेव सम्पादयति न तु किञ्चिदपि पुण्यं, सोऽयं वध एव, नरकहेतुत्वात्॥

अथ हविषो विकल्पितां याज्यामाह। "अहं मेघ स्तनयन् वर्षन्नस्मि। मामदन्त्यहमद्म्यन्यान्॥ १॥ अहं सदमृतो भवामि। मदादित्या अधि सर्वे तपन्ति" इति। योऽयं 'मेघः', 'स्तनयन्' गर्ज्जन्, 'वर्षंश्च', वर्त्तते, सोऽयं मेघोऽपि 'अहं' अन्नदेवः, 'अस्मि'। अग्नौ हुतस्यान्नस्य मेघरूपेण परिणतत्वात्। अत एव स्मर्य्यते, अग्नौ प्रास्ताहुतिः सम्यगादित्यमु-

प्रतिष्ठते। आदित्याज्जायते वृष्टिरिति। दातारो ये सन्ति ते 'माम्' 'अदन्ति', सुखेन भक्षयन्ति, 'अन्यांस्तु' दानरहितान्, 'अहम्', एव 'अद्मि' विनाशयामि। 'अहं', एव दातॄणां पथ्यं सन् 'अमृतो भवामि' अमरणहेतुर्भवामि, देवत्वं प्रापयामीत्यर्थः। 'सर्व्वेऽप्यादित्याः', अन्ननिमित्तत्वादधिकत्वेन 'तपन्ति' अन्नाभावे ते स्वयमेव न जीवेयुः, कुत स्तपेयुरित्यर्थः॥

यदुक्तं सूत्रकारेण, वायवे वेहतमिति, (गर्भघातिनी गौः वेहतमित्युच्यते), तस्य पशोः सूक्ते प्रतीकद्वयं दर्शयति। "देवीं वाचमजनयन्त यद्वाग्वदन्ति" इति।'देवीं वाचमजनयन्त देवा' इति वपायाः पुरोऽनुवाक्या। 'यद्वाग्वदन्तीति' याज्या। तदुभयमुत नः प्रियेत्यत्र व्याख्यातम्॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "अनन्तामन्तादधिनिर्म्मितां महीं। यस्यां देवा अदधुर्भोजनानि। एकाक्षरां द्विपदाꣳ षट्पदाञ्च। वाचं देवा उपजीवन्ति विश्वे" इति। 'देवाः' इन्द्रादयः, 'यस्यां' वाचि, 'भोजनानि', 'अदधुः' सम्पादितवन्तः। इन्द्राय स्वाहेति मन्त्रेण हुतं भुङ्क्ते, अतो वाङ्निमित्तं तद्भोजनम्। तां 'वाचं', भोजनहेतुं, 'विश्वे' सर्व्वे देवाः, 'उपजीवन्ति', सर्व्वेषामपि देवानां मन्त्रपुरःसरं दत्तमेवान्नं जीवनहेतुः। कीदृशीं वाचं, 'अनन्तां', न हि लौकिकवैदिकशब्दानामन्तःपारोऽस्ति। अतएव महाभाष्यकार उदाजहार, बृहस्पतिश्च वक्ता इन्द्रश्चाध्येता। दिव्यञ्च वर्षसहस्रमध्ययनकालः शब्दपारायणस्य, अन्तञ्च न जगामेति।

'अन्तादधिनिर्म्मिता' पूर्व्वसृष्टेरन्तः परमेश्वरः स्वरूपं हि तस्मिन् हि जगल्लीयते तस्मादन्तात् परमेश्वरादधिकत्वेन नि-र्म्मिता, तां 'एकाक्षरां' प्रणवरूपां, 'द्विपदां' संस्कृतापभ्रंशरूपां, 'षट्पदां' प्राकृतपैशाचादिभाषाभेदेन षड्विधां, अतएव 'मही' महतीम् ॥

अथ पुरोडाशस्य याज्यामाह। "वाचं देवा उपजीवन्ति विश्वे। वाचं गन्धर्वाः पशवो मनुष्याः। वाचीमा विश्वा भुव-नान्यर्पिता [४]। सा नो हवं जुषतामिन्द्रपत्नी" इति। पूर्व्वम-न्त्रोक्तरीत्या सर्व्वे देवा आहुतिकालीनमन्त्ररूपां 'वाचं', 'उप-जीवन्ति', 'गन्धर्वादयश्च वाचैव व्यवहरन्ति, पशूनामपि हम्भा-रवादिरूपया वाचैव व्यवहारो दृश्यते। तस्मात् 'इमा विश्वा भुवनानि' सर्व्वलोकनिवासिन एते प्राणिनः, 'वाचि अर्पिता' वाचमेवाश्रित्य वर्त्तन्ते, सेयमीदृशी वाक्, 'सा', इयम् 'इन्द्र-पत्नीः' इन्द्रस्य पालयित्री सती, 'नो हवं' अस्मदीयमिदं हविः, 'जुषतां' ॥

अथ हविषः पुरोऽनुवाक्यामाह। "वागक्षरं प्रथमजा ऋतस्य। वेदानां मातामृतस्य नाभिः। सा नो जुषाणोपय-ज्ञमागात्। अवन्ती देवी सुहवा मे अस्तु" इति। येयं 'वाक्', सैव 'अक्षरं' अविनश्वरं, परात्मस्वरूपं, तत उत्पन्नत्वात्। सा च 'ऋतस्य' यज्ञस्य, 'प्रथमजा' प्रथममुत्पादयित्री, सर्व्वाणि हि कर्म्मा-ण्युत्पाद्यन्ते। अत एवाथर्व्वणिका आमनन्ति, तदेतत् सत्यं मन्त्रेषु कर्म्माणि कवयो यान्यपश्यन्निति। सा च ऋग्वेदादीनां 'माता'

तेषां वाग्विशेषरूपत्वात्। 'अमृतस्य नाभिः' अमृतत्वं हि देवत्वं, वाचि नह्यते बध्यते मन्त्रपूर्व्वकानुष्ठानेन तत् प्राप्तेः। 'सा' वाग्-देवी, 'जुषाणा' प्रीतियुक्ता सती, 'नः' अस्मदीयं, 'यज्ञं' 'उप-आगात्' प्राप्नोतु। सा च 'देवी', 'अवन्ती' अस्मान्रक्षन्ती, 'मे' मम 'सुहवा' सुखेनाह्वातुं शक्या, 'अस्तु'॥

अथ हविषो याज्यामाह। "यामृषयो मन्त्रकृतो मनीषिणः। अन्वैच्छन्देवास्तपसा श्रमेण। तां देवीं वाचꣳ हविषा यजामहे। सा नो दधातु सुकृतस्य लोके" इति। 'मन्त्रकृतः' सम्प्रदाय-प्रवर्त्तकरूपेण मन्त्राणां कर्म्मकर्त्तारः, 'मनीषिणः' बुद्धिमन्तो धारणशक्तियुक्ताः, 'ऋषयः' वसिष्ठाद्याः, 'श्रमेण' 'तपसा' बहु-प्रयाससाध्येन तपसा युक्ताः, तथा 'देवाश्च', 'यां' वाचं, 'अन्वै-च्छन्' अनुप्राप्तुमिच्छामकुर्वन्। अत एव स्मर्य्यते, युगान्ते तर्हि तान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्व्वं अनु-ज्ञाताः स्वयम्भुवेति। 'तां' तादृशीं, 'वाचं', 'देवीं', अनेन 'हविषा यजामहे', 'सा' च देवी, 'सुकृतस्य' कर्म्मणः, फलभूते 'लोके', 'नः' अस्मान्, 'दधातु' स्थापयतु॥

अथ हविष एवं विकल्पितां याज्यामाह। "चत्वारि वाक्-परिमिता पदानि [५]। तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेऽङ्गयन्ति। तुरीयं वाचो मनुष्या वदन्ति" इति। येयं 'वाक्', सा 'परिमिता' इयत्तया परि-च्छिन्नानि, 'चत्वारि पदानि' चतुरोऽवयवान्, प्राप्य वर्त्तते। परा पश्यन्ती मध्यमा वैखरीति ते चत्वारः पादाः, 'तानि'

चत्वार्य्यपि पदानि, 'ये ब्राह्मणाः', 'मनीषिणः' शास्त्रज्ञाः, ते 'विदुः', न त्वितरे मूढाः। तत्र हेतुरुच्यते, 'त्रीणि' परा पश्यन्ती मध्यमेत्येतानि, पदानि 'गुहायां' शरीरमध्ये, 'निहितानि' स्थापितानि वर्त्तन्ते, 'नेङ्गयन्ति' न तु वहिः प्रसरन्ति, 'वाचस्तुरीयं' वैखरीयाख्यं यत्, 'मनुष्याः', सर्व्वे 'वदन्ति' उच्चारयन्ति। एतच्च शिक्षाकारेण स्पष्टीकृतं,

आत्मा बुध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतं॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरं।
कण्ठे माध्यन्दिनं योगं मध्यमं त्रैष्टुभावगं॥
तारं तार्त्तीयसवनं शीर्षण्यं जगतानुगं।
सोऽजीर्णो मूर्द्ध्न्यभिहतो वक्त्रमापद्य मारुतः॥
वर्णाञ्जनयते तेषां विभागः पञ्चधास्थितः।
स्वरतः कालतः स्थानात् प्रयत्नानुप्रमाणतः॥
इति वर्णविदः प्राहुर्निपुणं तन्निबोधत इति।

तस्माच्छरीरमध्ये गूढं पादत्रयं मनीषिण एव जानन्ति मूढाः, तुरीयमेव वदन्ति॥

यदुक्तं सूत्रकारेण, श्रद्धायै वेहतमिति। तस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह। "श्रद्धयाग्निः समिध्यते। श्रद्धया विन्दते हविः। श्रद्धां भगस्य मूर्द्धनि। वचसाऽऽवेदयामसि" इति। शास्त्रार्थे विश्वासातिशयरूपा चित्तवृत्तिः 'श्रद्धा', तदभिमानिनी देवतापि तन्निमित्तकैव, 'श्रद्धया' विश्वास-

तिशयेन, अनन्यया भक्त्या, अयम् 'अग्निः', 'समिध्यते' सम्यक् प्रज्वाल्यते, 'हविश्च', 'श्रद्धया', लभ्यते, 'भगस्य' सौभाग्यस्य, 'मूर्द्धनि' उपरिस्थितां, 'श्रद्धां', 'वचसा' वाक्येन, 'आवेदयामसि' जनानां सौभाग्यहेतुः श्रद्धेति प्रख्यापयामः ॥

अथ वपाया याज्यामाह। "प्रियꣳ श्रद्धे ददतः। प्रियꣳ श्रद्धे दिदासतः। प्रियं भोजेषु यज्वसु [६]। इदं म उदितं कृधि" इति। हे 'श्रद्धे', इदानीं 'ददतः', 'मे', 'प्रियꣳ' भवतु अभीष्टं सिध्यतु, इतः परमपि दातुमिच्छतो मे प्रियं भवतु। 'भोजेषु' भोगपरेषु अन्येषु, 'यज्वसु' यजमानेषु च, 'प्रियं', भवतु। 'इदं' अनन्तरोक्तं, यज्वसु मे प्रियं उदितं 'कृधि' अत्यधिकं कुरु ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "यथा देवा असुरेषु। श्रद्धामुग्रेषु चक्रिरे। एवं भोजेषु यज्वसु। अस्माकमुदितं कृधि" इति। 'यथा', लोके 'देवाः', 'उग्रेषु', 'असुरेषु', 'श्रद्धां' 'चक्रिरे' अवश्यमेते हन्तव्या इति दृढामिच्छां कृतवन्तः, 'एवमस्माकं', फलभोगेषु तत्साधकेषु 'यज्वस्वपि', प्रियं 'उदितं', कुरु ॥

अथ पुरोडाशस्य याज्यामाह। "श्रद्धां देवा यजमानाः। वायुगोपा उपासते। श्रद्धाꣳ हृदय्ययाकूत्या। श्रद्धाया ह्रूयते हविः" इति। हे 'देवाः' इन्द्रादयः, एते 'यजमानाः', 'वायुगोपाः' स्वकीयप्राणरचकाः सन्तः, 'श्रद्धां', 'उपासते' सेवन्ते। उक्तार्थ एव स्पष्टीक्रियते, 'हृदय्यया' हृदये भवया, 'आकूत्या'

सङ्कल्पक्रियया, 'श्रद्धामुपासते', अत्यादरेणोपासत इत्यर्थः । 'हविः', अपि 'श्रद्धया', इत्र 'हूयते' ॥

अथ हविषः पुरोऽनुवाक्यामाह । "श्रद्धां प्रातर्हवामहे [७] । श्रद्धां मध्यन्दिनं परि । श्रद्धाꣳ सूर्य्यस्य निम्रुचि । श्रद्धे श्रद्धापयेह मा" इति । 'श्रद्धां' श्रद्धाख्यां देवीं, 'प्रातर्हवामहे' प्रातः काले समाह्वयामः, तथा 'मध्यन्दिनं 'परि' मध्यन्दिन-समीपमपि, श्रद्धामाह्वयामः । 'सूर्य्यस्य', 'निम्रुचि' अस्तमय-वेलायामपि, श्रद्धामाह्वयामः । हे 'श्रद्धे', देवि 'इह' कर्मणि, 'मां' 'श्रद्धापय' विश्वासयुक्तं कुरु ॥

अथ हविषो याज्यामाह । "श्रद्धा देवानधिवस्ते । श्रद्धा विश्वमिदं जगत् । श्रद्धां कामस्य मातरं । हविषा वर्द्धयामसि" इति । इयं 'श्रद्धा', देवी 'देवानधिवस्ते' देवानधिवसति, 'विश्वं' सर्व्वम्, 'इदं जगत्', 'श्रद्धा', सेयं इच्छा विश्वासमन्तरेण कस्यापि व्यवहारस्याभावात् 'कामस्य मातरं' काम्य-मानफलस्योत्पादिकां, 'श्रद्धां', देवीम्, अनेन 'हविषा', 'व-र्द्धयामसि' अभिवृद्धां सन्तुष्टां कुर्मः ॥

यदुक्तं सूत्रकारेण, ब्रह्मण ऋषभमिति तस्य पशोः सूक्ते वपायाः पुरोऽनुवाक्यामाह । "ब्रह्म जज्ञानं प्रथमं पुरस्तात् । विसीमतः सुरुचोवेन आवः । सबुध्निया उपमा अस्य विष्ठाः [८] । सतश्च योनिमसतश्च विवः" इति । यदेतज्जगत् का-रणं 'ब्रह्म' सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिप्रसिद्धं, तदे-तत्, 'प्रथमं' सृष्ट्यादौ, 'जज्ञानं' जगदाकारेणोत्पद्यमानं

सत्, 'पुरस्तात्' पूर्व्वस्यां दिशि, 'वेनः' कामनीय आदित्योऽभूः, 'सुरुचः' सुष्ठु दीप्यमानः, 'सीमतः' पूर्व्वदक्षिणपश्चिमोदग्दिग्विशेषसीम्नः विभज्य, 'आवः' आवृणोत्, 'सः' वेन आदित्यः, 'वुध्नियाः' वुध्नं मूलं तत्र भवा आकाशवाय्वग्निजलपृथिव्यः 'विष्ठाः' विभज्यावस्थिताः अकरोदितिशेषः। तथा 'सतश्च' विद्यमानस्य गिरिनदीसमुद्रादेः, 'असतश्च' अविद्यमानस्य, 'योनिं' कारणं, प्रमाणं, भ्रान्तिरूपं, 'विवः' विवृतवान्, सर्व्वजगद्व्यवस्थां निर्म्मितवानित्यर्थः॥

अथ वपाया याज्यामाह। "पिता विराजामृषभो रयीणां। अन्तरिक्षं विश्वरूप आविवेश। तमर्कैरभ्यर्च्चन्ति वत्सं। ब्रह्मसन्तं ब्रह्मणा वर्द्धयन्तः" इति। योऽयं वेन आदित्यः पूर्व्वमुक्तः सोऽयं 'विराजां' विशेषेण राजमानानां 'रयीणां' धनानां, 'पिता' पालयिता, 'ऋषभः' श्रेष्ठः, 'विश्वरूपः' पूर्व्वाह्णादिषु वसन्तादिषु कालविशेषेषु च बहुरूपः, तादृशोऽयं इदम् 'अन्तरिक्षम्', 'आविवेश' प्रतिदिनं प्रविशति। 'ब्रह्मसन्तं' परंब्रह्मस्वरूप एव भूत्वावस्थितं, 'तम्' आदित्यं, 'ब्रह्मणा' मन्त्रेण 'वर्द्धयन्तः', ब्राह्मणाः 'अर्कैः' अर्चनीयैः, 'अभ्यर्च्चन्ति' अभितः पूजयन्ति। तत्र दृष्टान्तः, 'वत्सं', यथा दोग्धुकामाः पुरुषाः वत्समुपलालयन्ति एवं फलकामा आदित्यं अभ्यर्च्चन्ति॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "ब्रह्मदेवानजनयत्। ब्रह्म विश्वमिदं जगत्। ब्रह्मणः क्षत्रं निर्म्मितं। ब्रह्म

ब्राह्मण आत्मना" इति। यज्जगत्कारणं 'ब्रह्म', तदेव 'देवान्' इन्द्रादीन्, 'अजनयत्', तथैव तत् 'ब्रह्म', अन्यदपि 'विश्वं' सर्व्वम्, 'इदं' 'जगत्', 'अजनयत्', 'ब्रह्मणः', सकाशात् 'क्षत्रं निर्म्मितं' क्षत्रियजातिर्निर्म्मिता, यत् परं 'ब्रह्म' तत्, 'आत्मना' स्वस्वरूपेणैव, 'ब्राह्मणः', अभवत्। अस्ति हि ब्राह्मणशरीरे परं ब्रह्म आविर्भावविशेषः, अत एवाध्यापनादावधिक्रियते॥

अथ पुरोडाशस्य याज्यामाह। "अन्तरस्मिन्निमे लोकाः। [९]। अन्तर्विश्वमिदं जगत्। ब्रह्मैव भूतानां ज्येष्ठं। तेन कोऽर्हति स्पर्द्धितुं" इति। 'अस्मिन्' ब्रह्मणि, 'अन्तः' मध्ये, 'इमे' भूरादयः, 'लोकाः', अवस्थिताः, तथैव 'अन्तः' मध्ये, 'विश्वं' सर्व्वम्, 'इदं जगत्' स्थावरजङ्गमरूपमवस्थितं, तस्मात् कारणात् 'ब्रह्मैव', 'भूतानां' आकाशादिपञ्चमहाभूतानां प्राणिनां च मध्ये, 'ज्येष्ठं' अतिशयेन श्रेष्ठं, प्रशस्तञ्च, 'तेन' तादृशेन ब्रह्मणा, 'कः' नामान्यः पुरुषः, 'स्पर्द्धितुमर्हति' तत्समानस्पर्द्धायुक्तो न चास्ति कश्चित् समानः। अतएव श्वेताश्वतरशाखायां अधीयते, न तत् समश्चाभ्यधिकश्च दृश्यत इति॥

अथ हविषः पुरोऽनुवाक्यामाह। "ब्रह्मन्देवास्त्रयस्त्रिꣳशत्। ब्रह्मन्निन्द्रप्रजापती। ब्रह्मन् ह विश्वा भूतानि। नावीव न्तः समाहिताः" इति। हे 'ब्रह्मन्', यथोक्ते ब्रह्मणि 'त्रयस्त्रिꣳशद्देवाः' ये देवा दिव्येकादशस्येति मन्त्रोक्ताः, 'समाहिताः'। तथा 'ब्रह्मन्' परब्रह्मण्येव, देवस्वामिनौ 'इन्द्रप्रजापती', 'समाहितौ'। तथा 'ब्रह्मण्येव', 'विश्वा भूतानि' सर्व्वाणि

स्थावरजङ्गमानि, 'अन्तः', 'समाहितानि' सम्यगवस्थितानि, तत्र दृष्टान्तः 'नावीवेति' यथा समुद्रनद्यादितरणवेलायां चेतनाचेतनानि वस्तूनि 'नौ'मध्ये अवस्थाप्यन्ते तद्वत्॥

अथ हविषो याज्यामाह। "चतस्र आशाः प्रचरन्त्वग्नयः। इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरꣳ सुवीरं [१०] ब्रह्म समिद्भवत्याहुतीनां" इति। यथोक्ते ब्रह्मणि 'चतस्र आशाः' चतुर्व्विधाः प्राच्यादिदिशः, प्रति 'अग्नयः' आहवनीयाद्याः, 'प्रचरन्तु' प्रकर्षेण वर्त्तन्तां। पूर्व्वस्यान्दिश्याहवनीयः, दक्षिणस्यां दिश्यन्वाहार्य्यपचनः, पश्चिमायां दिशि गार्हपत्यः, उदिच्यां दिश्याग्नीध्रीयः। तथाविधः सर्व्वाधारपरमात्मानोऽस्मदीयम् 'इमं यज्ञं' 'प्रजानन्' प्रकर्षेणानुसन्दधानः, 'नयतु' समाप्तिं प्रापयतु। किं कुर्व्वन्, 'अजरम्' अविनश्वरं, 'सुवीरं' शोभनापत्यहेतुभूतं, इदं 'घृतं' आहुतिरूपं, 'पिन्वन्' पिबन्, किं बहुना 'आहुतीनां' अस्माभिरनुष्ठीयमानानां, 'ब्रह्म समिद्भवति' परब्रह्मैव सम्यक् प्रकाशको भवति॥

यदुक्तं सूत्रकारेण आगावो अग्मन्नित्युपहोमा इति। तत्राष्टानामृचां मध्ये प्रथमामाह। "आ गावो अग्मन्नुत भद्रमक्रन्। सीदन्तु गोष्ठे रणयन्त्वस्मे। प्रजावतीः पुरुरूपा इह स्युः। इन्द्राय पूर्वीरुषसो दुहानाः" इति। या एता 'गावः', सन्ति ता 'अग्मन्' इहागच्छन्तु, 'उत' अपि च, 'भद्रं' कल्याणं, 'अक्रन्' कुर्व्वन्तु, अस्मदीये 'गोष्ठे', 'सीदन्तु' तिष्ठन्तु, 'अस्मे' अस्मान्, 'रणयन्तु' रमयन्तु, 'इह' अस्मद्गृहे, 'प्रजा-

वतीः' बहुवत्सोपेताः, 'पुरुरूपाः' श्वेतकृष्णादिरूपेण बहुरूपाः, 'स्युः' भवेयुः, 'उषसः' उषः कालात्, 'पूर्व्वीः' परासु रात्रिषु, 'इन्द्राय' इन्द्रार्थं, साम्नाय्यमाभिरं च 'दुहानाः', तिष्ठन्तु॥

अथ द्वितीयामाह। "इन्द्रो यज्वने पृणते च शिचति। उपेद्ददाति न स्वं मुषायति। भूयो भूयो रयिमिदस्य वर्द्धयन्। अभिन्ने खिल्ले निदधाति देवयुं" इति। योऽयं 'यज्वा' यागानुष्ठायी, यश्च 'पृणन्' यागकाले हविः पूरयन् वर्त्तते, अथवा गां ददाति, तयोरुभयोरर्थे 'इन्द्रः', 'शिचति' फलं ददाति, 'उपेत्' पुनरपि ददाति, 'स्वं' आत्मानं, 'न मुषायति' न मुष्णायति, यजमानं प्रति भूयो भूयो ददानोऽपि कदाचिदपि न तिरोभवतीत्यर्थः। 'अस्य' यजमानस्य, 'भूयो भूयः' पौनःपुन्येन, 'रयिमित्' धनमेव, 'वर्धयन्', 'देवयुं' देवामात्मन इच्छन्तं यजमानं, 'अभिन्ने' स्वनिवासस्थानेन भेदरहिते, 'खिल्ले' खिलीभूते, यागरहितैरगम्ये, 'निदधाति' स्थापयति, स्वकीयलोक एव तं गमयतीत्यर्थः॥

अथ तृतीयायाश्चतुर्थ्याः प्रतीके दर्शयति। "न ता नशन्ति न ता अर्वा" [११] इति। 'न ता नशन्ति न दभाति तस्करः' इति तृतीया। 'न ता अर्वा रेणुककाट' इति चतुर्थी। एतच्चोभयमुत नः प्रियेत्यत्र व्याख्यातं॥

अथ पञ्चमीमाह। "गावो भगो गाव इन्द्रो मे अच्छात्। गावः सोमस्य प्रथमस्य भक्षः। इमा या गावः स जनास इन्द्रः। इच्छामीद्धृदा मनसा चिदिन्द्रं" इति। याः 'गावः' ताः 'भगः

सौभाग्यं भवति, 'अच्छात्' अच्छाः, निर्मलाः, 'गावः', एव 'मे' मम, 'इन्द्रः' स्वामी, यथा स्वामी पालयति तथा निर्मला गावो मां पालयन्तीत्यर्थः। तथा 'गावः', एव 'प्रथमस्य' मुख्यस्य, 'सोमस्य' अभिषुतस्य, 'भक्षः' भजनीयः, सोमो हि दध्यादिश्रयणार्थं गोभजनं करोति। 'या इमा गावः', सन्ति हे 'जनासः' मनुष्याः, ता गाव एव 'स इन्द्रः', इन्द्रो हि गाः पालयति तस्मादभेदोपचारः। 'हृदा' हृत्कमलनिष्ठेन, 'मनसाचित्' मनसैव, गोरक्षार्थम् 'इन्द्रमिच्छामि'॥

अथ षष्ठीमाह। "यूयं गावो मेदयथा कृशं चित्। अश्लीलं चित् कृणुथा सुप्रतीकं। भद्रं गृहं कृणुथ भद्रवाचः। बृहद्वो वय उच्यते सभासु" इति। हे 'गावः', 'यूयं', 'कृशं चित्' कृशमपि पुरुषं,वत्सं वा,'मेदयथा' मेदस्विनं पुष्टं कुरुत,'अश्लीलं चित्' अश्लीलं कुरूपमपि पुरुषं,'सुप्रतीकं कृणुथ' घृतादिना पोषयित्वा शोभनावयवं कुरुथ, 'भद्रवाचः' कल्याणवाक्याः, गावः 'गृहं भद्रं कृणुथ', हम्भारवयुक्ताभिर्गोभिर्वत्सैः सम्पूर्णं गृहं रमणीयं भासते। हे गावः 'वः' युष्मदीयं, 'वयः' अन्नक्षीरघृतादिकं, 'सभासु' यज्ञशालासु, 'बृहदुच्यते' महत्त्वेन प्रस्तूयते॥

अथ सप्तमीमाह। "प्रजावतीः सूयवसꣳ रिशन्तीः। शुद्धा अपः सुप्रपाणे पिबन्तीः। मा वस्तेन ईशत माऽघशꣳसः। परि वो हेती रुद्रस्य वृज्यात्" इति। एता गावः 'प्रजावतीः' वत्सोपेताः,'सूयवसं' शोभनं तृणादिकं, 'रिशन्तीः'* भक्षयन्त्य इत्यर्थः।

---

* रुशन्तीः इति वा पाठः।

'सुप्रपाणे' सुष्ठु प्रकर्षेण पातुं शक्ये तटाकादौ, 'शुद्धा अपः पिबन्तीः' विमलं जलं पिबन्त्यः, वर्त्तन्तामिति शेषः। हे गावः 'स्तेन', चोरः 'वो मा ईशत' युष्मानपहर्त्तुमीश्वरो माभूत्, 'अघशꣳसः' अघं पापं शंसति मारय ताडयेत्यादिभिर्भर्त्सनं करोतीत्यर्थः। अघशꣳसः सोऽपि 'वो मेशत', तथा 'रुद्रस्य' क्रूरस्य देवस्य, 'हेतिः' आयुधं, 'वः परिवृणक्तु' युष्माकं परितो वर्ज्जनं करोतु ॥

अथाष्टमीमाह। "उपेदमुपपर्चनं। आसु गोषूपपृच्यतां। उपर्षभस्य रेतसि। उपेन्द्र तव वीर्य्ये" [१२] इति। 'इदं' च वक्ष्यमाणं सर्व्वं, 'उपपृच्यतां' समीपे युज्यतां। किं किमिति तदुच्यते, 'उपपर्चनं' समीपे सम्पर्कयोग्यतृणादिकं, 'आसु गोषु', 'उपपृच्यतां' समीपे युज्यतां, 'ऋषभस्य रेतसि', 'उपपृच्यतां', गर्भ इति शेषः। हे 'इन्द्र', 'तव वीर्य्ये' त्वदीये रक्षणसामर्थ्ये 'उपपृच्यतां', गाव इति शेषः॥

अत्र विनियोगसङ्ग्रहः।

'अह'मष्टावन्यशाखाकथितान्नार्थवेहति।

'देवीं वाचं' वेहति स्याच्छ्रद्धे 'श्रद्धा'र्थवेहति॥

'ब्रह्म' ब्रह्मार्थ ऋषभे 'आगाव' उपहोमकाः।

इति अष्टमोऽनुवाकः।

---

अथ नवमोऽनुवाकः।

अष्टमे अन्नार्थपश्वादीनां सूक्तान्यभिहितानि। नवमे शुक्लकृष्णपश्वादीनां सूक्तान्युच्यन्ते। यदुक्तं सूत्रकारेण, सूर्य्याचन्द्रमाभ्यां यमौ श्वेतश्च कृष्णश्चैकयूप इति। यमावेकस्मिन् गर्भे समुत्पन्नौ तयोः पश्वोः सूक्ते वपयोः पुरोऽनुवाक्यामाह। "ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्। तेजो वसुमद्राजतो दिवि। सामात्माना चरतः सामचारिणा। ययोर्व्रतं न ममे जातु देवयोः" इति। 'ययोः' सूर्य्याचन्द्रमसोर्देवयोः, सम्बन्धि, 'व्रतं' कर्म्म, 'जातु' कदाचिदपि, 'न ममे' कश्चिदपि मातुं न शक्तः, एतदीयं कर्म 'एतावता फलेन युक्तमिति न कोऽपि परिच्छेत्तुं शक्नोति। 'तौ' तथाविधौ, 'सूर्य्याचन्द्रमसौ', 'दिवि राजतः' द्युलोके दीप्येते। कीदृशौ, 'विश्वभृत्तमा' अतिशयेन विश्वस्य भर्त्तारौ, पोषकौ, अत एव 'महत्' महान्तौ, 'तेजः' तेजस्विनौ, 'वसुमत्' धनवन्तौ, 'साम'शब्देन सामभेदाद्युपायेषु तेषु चतुर्षु प्रथमोपायोऽभिधीयते, तदात्मकौ, प्रजापालने सामोपायप्रधानावित्यर्थः। अत एव 'सामचारिणौ' साम्नोपायेन सर्व्वजगदनुग्राहकप्रकाशरूपेण चरणशीलौ, 'चरतः' परिभ्रमतः॥

अथ वपायाः याज्यामाह। "उभावन्तौ परियात अर्म्या। दिवो न रश्मीँस्तनुतो व्यर्णवे। उभा भुवन्ती भुवना कविक्रतू। सूर्या न चन्द्रा चरतो हतामती" इति। 'उभावन्तौ' पृथिव्याः पूर्वपश्चिमेत्येताववसानभागौ, 'अर्म्या' गत्या, 'परि-

यातः' परिक्रमणं कुरुतः। 'दिवेव' दिवीव, 'अर्णवे' समुद्र-समाने अन्तरिक्षे 'रश्मीन्' 'वितनुतः' प्रसारयतः, 'भुवना भुवन्तौ' लोकान् भावयन्तौ, उत्पादयन्तौ, 'कविक्रतू' कविर्मेधावी क्रतुः कर्त्ता, कवी च तौ क्रतू च कविक्रतू, 'हतामती' हता विनाशिता प्राणिनाममतिरन्धकारनिमित्तमज्ञानं याभ्यान्तौ 'हतामती', 'सूर्य्या न चन्द्रा' सूर्य्यश्चन्द्रश्चेत्येतावुभौ 'चरतः' सञ्चारं कुरुतः॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह। "पती द्युमद्विश्वविदा उभा दिवः। सूर्य्या उभा चन्द्रमसा विचक्षणा [१]। विश्ववारा वरिवोभा वरेण्या। ता नोऽवतं मतिमन्ता महिव्रता" इति। 'द्युमत्' द्युमन्तौ, दीप्तिमन्तौ, 'उभा', देवौ, 'विश्वविदा' सर्व्वज्ञौ, 'दिवः पती' द्युलोकस्य पालकौ वर्त्तेते, 'सूर्य्याचन्द्रमसा' सूर्य्याचन्द्रमसेत्येतौ, 'उभा', 'विचक्षणा' कुशलौ, 'विश्ववारा' विश्वेषां शत्रूणां निवारयितारौ, 'वरिवः' वरिवस्यमानौ, सर्व्वैः परिचर्य्यमाणौ, 'उभा', देवौ, 'वरेण्या' वरणीयौ, 'मतिमन्ता' अत्यन्तबुद्धियुक्तौ, 'महिव्रता' महता व्रतेन कर्म्मणा युक्तौ, ईदृशौ 'ता' उभा, 'नः' अस्मान्, 'अवतं' रक्षतं॥

अथ पुरोडाशस्य याज्यामाह। "विश्ववपरी प्रतरणा तरन्ता। सुवर्विदा दृशये भूरिरश्मी। सूर्य्या हि चन्द्रा वसु त्वेषदर्शता। मनस्विनोभानुचरतो नु सं दिवं" इति। 'विश्ववपरी' विश्वस्मिन् जगति रश्मीनावप्तारौ विस्तारयितारौ, 'प्रतरणा' आपदां प्रकर्षेण तारयितारौ, 'तरन्ता' आकाशसमुद्रं तरन्तौ,

'सुवर्विदा' स्वर्गस्य लम्भयितारौ, 'दृशये' सर्व्वलोकस्य दर्शनाय, 'भूरिरश्मी' प्रभूतदीप्ती, 'सूर्य्या हि चन्द्रा' सूर्य्यश्चन्द्रश्चेत्येवं प्रसिद्धौ, 'वसु' वासयितारौ, 'त्वेषदर्शता' दीप्त्या दर्शनीयौ, 'मनस्विना' दृढेन मनसा युक्तौ, 'उभा' देवावुभौ, 'नु' क्षिप्रं, 'दिवं' द्युलोकं, अभिसञ्चरतः ॥

अथ हविषः पुरोऽनुवाक्यामाह। "अस्य श्रवो नद्यः सप्त बिभ्रति। द्यावा क्षामा पृथिवी दर्शतं वपुः। अस्मे सूर्या च-न्द्रमसाऽभिचक्षे। श्रद्धे कमिन्द्र चरतो विचर्त्तुरम्" [२]इति। हे 'इन्द्र', त्वं 'अस्मे' अस्मदर्थं, 'सूर्य्याचन्द्रमसा' एतौ सूर्य्या-चन्द्रमसौ, 'अभिचक्षे' अभितः कथयसि, 'श्रद्धे' श्रद्धार्थं, 'कं' सुखार्थं च, 'विचर्त्तुरं' विशेषेण त्वरा यथा भवति तथा, 'चरतः', 'एतौ' उभौ, सञ्चरतः, 'अस्य' तवेन्द्रस्य, 'श्रवः' श्रवणीयं, 'दर्शतं' दर्शनीयं च, 'वपुः' शरीरं, 'सप्त नद्यः' गङ्गायमुनाद्याः सप्तसङ्ख्याकाः सरितः, 'द्यावा क्षामा पृथिवी' क्षामशब्दोऽन्त-रिक्षमभिधत्ते। त्रयो लोकाश्च, 'बिभ्रति' धारयन्ति। अयमर्थः, यदेतद्वृष्टिनिमित्तं जलं तदेतदिन्द्रेणोत्पादितत्वात् इन्द्रस्य शरीरं, तच्च सर्व्वेषां प्राणिनां प्रियत्वात् श्रवणीयं दर्शनीयं च, तदिदं जलरूपं शरीरं सप्तनद्युपलक्षिताः सर्व्वा नद्यः समुद्राः त्रयो लोकाश्च धारयन्ति न हि जलमन्तरेण लोकत्रयव्यव-हारः सिध्यतीति ॥

अथ हविषो याज्यामाह। "पूर्व्वापरं चरतो माययैतौ। शिशू क्रीडन्तौ परियातो अध्वरं। विश्वान्यन्यो भुवनाभिचष्टे।

ऋतूनन्यो विदधज्जायते पुनः" इति। 'एतौ' सूर्य्याचन्द्रमसौ, 'मायया' परमेश्वरस्य शक्त्या, अनुगृहीतौ, 'पूर्व्वापरं' भूमेः प्राक् पश्चिमभागौ, 'प्रतिचरतः' परिभ्रमणं कुरुतः, 'शिशू' बालकाविव, 'क्रीडन्तौ', 'अध्वरं' कस्यापि हिंसा यथा न भवति तथा, 'परियातः', अथवा 'अध्वरं' अस्माभिरनुष्ठीयमानं यज्ञं, प्राप्नुतः, उभयोर्मध्ये 'अन्यः' एक आदित्यः, 'विश्वानि' भुवनानि, 'अभिचष्टे' सर्व्वतः प्रकाशयति। 'अन्यः' चन्द्रः, प्रतिपदादितिथिशुक्लकृष्णपक्षचैत्रादिमासद्वारा 'ऋतून् विदधत्', पुनः 'पुनर्जायते' उदयं गच्छतीत्यर्थः॥

यदुक्तं सूत्रकारेण, अङ्गो वेहतमिति तस्य पशोः सूक्ते याज्यानुवाक्यार्थं प्रतीकानि दर्शयति। "हिरण्यवर्णाः शुचयः पावका यासाꣳ राजा। यासां देवाः शिवेन मा चक्षुषा पश्यत। आपो भद्रा आदित्पश्यामि" इति। हिरण्यवर्णाः शुचयः पावका इति वपायाः पुरोऽनुवाक्या, यासां राजा वरुण इति याज्या। यासां देवा विविक्षुर्ध्नन्ति भवर्मिति पुरोडाशस्य पुरोऽनुवाक्या, शिवेन मा चक्षुषा पश्यतेति याज्या। आपो भद्रा घृतमिदाप आसुरिति हविषः पुरोऽनुवाक्या, आदित्पश्याम्युत वा शृणोमीति याज्या। एतत्सर्व्वं हिरण्यवर्णाः शुचयः पावकाः इत्यनुवाके व्याख्यातम्॥

यदुक्तं सूत्रकारेण, तत्र मल्लिलमुपजुहुयादिति। तत्र पूर्व्वोक्ते कर्म्मणि नामदासीयसूक्तगतैर्मन्त्रैर्जलद्रव्येणोपहोमाः कर्त्तव्या इत्यर्थः। तस्मिन् सूक्ते प्रथमामृचमाह। "नासदा-

सोन्नो सदासीत् तदानीम्। नासीद्रजो नो व्योमाऽपरो यत्। किमावरीवः कुह कस्य शर्मन् [३]। अम्भः किमासीद्गहनं गभीरम्" इति। यदा पूर्व्वसृष्टिः प्रलीना, उत्तरसृष्टिश्च नोत्पन्ना, 'तदानीं' 'सदसती', द्वेऽपि नाभूतां। नामरूपविशिष्टत्वेन स्पष्टप्रतीयमानं जगत् 'सत्' शब्देनोच्यते, नरविषाणादिसमानं शून्यम् 'असत्,इत्युच्यते, तदुभयं 'नासीत्', किन्तु काचिदव्यक्तावस्थासीत्, सा च विस्पष्टत्वाभावान्नसती जगदुत्पादकत्वेन सद्भावां नाप्यसती 'नो सदासीत्' इति यत् सङ्ग्रहेणोक्तं तदेव प्रपञ्च्यते, 'नासीद्रजः' रजःशब्देन सत्त्वरजस्तमोगुणत्रयमुपलक्ष्यते, तत्त्रयं नासीत्। 'नो व्योम' आकाशवाचिना व्योमशब्देन भूतपञ्चकमुपलक्ष्यते, तदपि नासीत्। यथोक्तगुणत्रयपञ्चभूतापेक्षया 'अपरः' पदार्थः, अन्यो गिरि-नदि-समुद्रादिकः 'यत्' यः, दृश्यते सोऽपि नासीत्। यथा भूतानि नासन् तद्वद्भौतिकमपि नासीदित्यर्थः। अनेन भूतभौतिकगुणत्रयनिषेधेन ब्रह्माण्डस्य निषेधः सम्पन्नः। अण्डाद्बहिर्महत्तत्त्वाद्यावरणानि पौराणिका वदन्ति, तदेतदावरणजातमाक्षेपवाचिना किंशब्दत्रयेण निषिध्यते। आवरणस्य दृष्टिविषयभूतं किञ्चिदाव्रियमाणमपेक्षितं। तत्र अण्डाभावात् 'किमावरीवः' किन्नाम वस्तु तैरावरणैराव्रियेत, अतः सावरणकस्यासम्भवादावरणमपि न सम्भवतीत्यर्थः। 'कुहेति' देशाक्षेपः, 'कस्य शर्मन्' इति निमित्ताक्षेपः, कुत्र देशे कस्य भोक्तुः सुखनिमित्तं इदमावरणं स्यात्, न त्वस्ति तदा कश्चिद्देशः, नापि सुखस्य भोक्ता क-

स्विद्विद्यते। अत्र कश्चिन्मन्दोऽवान्तरप्रलयविषयाम्, आपो वा इदमग्रे सलिलमासीदिति श्रुतिं श्रुत्वा महाप्रलयेऽपि तथाविधं जलमस्तीति भ्राम्यति, तद्भ्रमव्युदासाय जलं निषिध्यते। ‘गहनं’ प्रवेष्टुमशक्यं, ‘गभीरं’ अगाधत्वेनावस्थातुमप्यशक्यं, यत् ‘अम्भः’, तत् ‘किमासीत्’, तदपि नासीदित्यर्थः॥

अथ द्वितीयामृचमाह। “न मृत्युरमृतं तर्हि न। रात्रिया अह्न आसीत् प्रकेतः। आनीदवातꣳ स्वधया तदेकम्। तस्माद्धान्यं न परं किञ्च नाम” इति। ‘तर्हि’ तस्मिन् महाप्रलयकाले, प्राणिनां ‘मृत्युः’, ‘न’, ‘आसीत्’, तेषामेवाभावात्। अतएव ‘अमृतं’ जीवनमपि, ‘न’, ‘आसीत्’। ‘रात्रियाः’, ‘प्रकेतः’ चिह्नं चन्द्रनक्षत्रादि, ‘अह्नः’, ‘प्रकेतः’ सूर्य्यः, तदुभयमपि नासीत्, किन्तु तत्सर्व्वोपनिषत् प्रसिद्धम्। ‘एकं’ ब्रह्म वस्तु, ‘स्वधया’ स्वस्मिन्नाश्रिततया सर्व्वजगत्याकृतिरूपया मायया, सहितम् ‘आनीत्’ चेष्टितवत्। नात्र चलनं चेष्टा, किन्तु सद्भावमात्रमभिप्रेत्य ‘अवातं’ इति विशेष्यते, वायुरहितं, निश्चलमित्यर्थः। ‘तस्मात्’ एकस्माद् ब्रह्मणः, ‘नान्यत्’, ‘किञ्चन’ किमपि, ‘परम्’ उत्कृष्टं, ‘नाम’ नैवासीत्। जगतो निपद्रुत्वान्निकृष्टं पूर्व्वमेव निराकृतं, तस्मादुत्कृष्टनिकृष्टञ्च किमपि ब्रह्मव्यतिरिक्तं नासीत्॥

अथ तृतीयामाह। “तम आसीत् तमसा गूढमग्रे प्रकेतम्। सलिलꣳ सर्व्वमा इदम्। तुच्छेनाभ्वपिहितं यदासीत्। तमसस्तन्महिनाजायतैकम्” इति। ‘तमः’शब्देन अविद्यामाया-

शक्त्यादिशब्दवाच्यं जगद्विकारोपादानं मूलाज्ञानमुच्यते, यथा तमः पदार्थानावृणोति, एवम् 'इदं' अपि ब्रह्म, तत्त्वमावृणोतीति 'तमः'शब्देन व्यवहारः। तादृशं जगद्विकारनिष्पादनक्षमं ब्रह्मण्याश्रितं किञ्चित्तमः 'आसीत्', तेन 'तमसा', 'सर्व्वं' जगद्, 'गूढं', यथा मृत्पिण्डे घटो गूढः, यथा वा बीजे वृक्षो गूढः, तद्वत्। अतएव 'प्रकेतं' प्रकर्षेण ज्ञातुमशक्यं। तथा च मनुना स्मर्य्यते,

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।

अप्रकाशमविज्ञेयं प्रसुप्तमिव सर्व्वतः॥ इति।

तत्र दृष्टान्तः, 'सलिलम्' इति सलिलवत्, यथा वर्षे पतिताः वर्षोपलाः सलिलमात्रत्वेनावशिष्यन्ते तथा सर्व्वं जगत् इदं तमः आसीत्, तमोमात्ररूपेणावशिष्टमित्यर्थः। अत्र हि काणादादयोऽसत्कार्य्यवादिनः कारणे पूर्व्वं विद्यमाने असदेव कार्य्यमुत्पद्यत इत्याहुः। सत्कार्य्यवादिनस्तु साङ्ख्यादयः पूर्व्वविद्यमानमेव कार्य्यमव्यक्तं सत्कारणव्यापारेण व्यक्तीभवतीत्याचक्षते। तत्र सत्कार्य्यवादिनां मतमेव तमसा गूढमिति श्रुत्याङ्गीकृतम्। आसमन्ताद्भवत्युत्पद्यते इति 'आभूत्' जगत्, तदेतत् 'तुच्छेनापिहितं', तत्त्वज्ञानमात्रेण निवर्त्यत्वात् 'तत्' कारणं मूलाज्ञानं, तुच्छं, तेन 'अपिहितं' प्रलयकाल आच्छादितं, तादृशं 'यत्' जगत्, 'आसीत्', तज्जगदव्यक्तं, 'तत्' पूर्व्वोक्तादज्ञानरूपात्, 'तमसः', सकाशात् 'महिना' महत्त्वेनाभिव्यक्तजगद्रूपेण 'अजायत' उत्पन्नं, तदिदमज्ञानदृष्ट्या

जगदाकारेण भासमानमपि परमार्थत 'एकं' ब्रह्मैव॥

अथ चतुर्थीमाह। "कामस्तदग्रे समवर्त्तताधि [४]। मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन्। हृदि प्रतीष्या कवयो मनीषा" इति। परब्रह्मसम्बन्धिनो 'मनसः', 'प्रथमं' 'रेतः' आद्यं कार्य्यं, 'यदासीत्', 'तत्' कार्य्यम्, 'अग्र' सृष्ट्यादौ, 'कामः', भूत्वा 'अधि समवर्त्तत' आधिक्येनाविरभूत्। अयमर्थः, यदेतदेकमेवाद्वितीयं सत्यं ज्ञानमनन्तं ब्रह्मतत्त्वरूपं वस्तु सृष्टेः पूर्व्वं तत्सन्मात्रमासीत्, तस्य तमोविशिष्टस्य ब्रह्मणः सिसृक्षारूपं यज्ज्ञानमादावुत्पन्नं तस्य मनसः काम एव प्रथमकार्य्यभूतः पदार्थः। स च काम उपनिषदि स्पष्टमाम्नातः, सोऽकामयत बहुस्यां प्रजायेयेति। एकोऽद्वितीयरूपोऽहमेव बहुविधो भवेयम्। तत्रायमुपायः, पूर्व्वसिद्धमसदद्वितीयरूपमनुपमृद्य प्रकर्षेण मायाकल्पितजगद्रूपेणोत्पद्येयमिति तस्य वाक्यस्यार्थः। स च कामः 'सतो बन्धुः' इदानीं सत्त्वेन प्रतीयमानस्य भूतभौतिकरूपस्य जगतः असच्छब्दाभिधेये तमस्यव्यक्ते बन्धनहेतुः कामो ह्यज्ञानं सर्व्वं व्यवहारं बध्नाति। यथा निद्राणे पुरुषे समुत्पन्ना चित्तवृत्तिर्नानाविधं स्वप्नव्यवहारं बध्नाति, यथा वा जागरणेऽप्यत्यन्तमसभ्यविषये समुत्पन्ना तृष्णा सुखदुःखपर्य्यन्तं मनोराज्यरूपं व्यवहारं बध्नाति। एवमयं परमेश्वरस्य कामः देवतिर्य्यङ्मनुष्यादिसर्व्वव्यवहारं बध्नाति। 'कवयः' विद्वांसः, वेदान्तपारङ्गताः, 'हृदि' हृदयकमले, 'मनीषा' स्वबुद्ध्या, 'प्रतीष्य' विचार्य्य,

'असति' अव्यक्ते, तमपि 'कामं' सत उत्पद्यमानस्य जगतो बन्धनहेतुं, 'निरविन्दन्' निश्चितवन्तः। कामस्य सर्व्वव्यवहारहेतुत्वं वाजसनेयिनः समामनन्ति, अथो खल्वाहुः, काममय एवायं पुरुष इति। व्यासोऽपि स्मरति,

कामबन्धनमेवेदं नान्यदस्तीह बन्धनम्। इति।

अस्मदनुभवेऽपि तथा दृश्यते। सर्व्वो हि पुरुषः प्रथमं किञ्चित् कामयित्वा तदर्थं प्रयतमानः सुखं दुःखं वा लभेत, तस्माच्छ्रुतिस्मृत्यनुभवसिद्धत्वात् काम एव सर्व्वव्यवहारहेतुरिति विदुषां निश्चयः॥

अथ पञ्चमीमाह। "तिरश्चीनो विततो रश्मिरेषाम्। अधस्विदासी३दुपरि स्विदासी३त्। रेतोधा आसन् महिमान आसन्। स्वधा अवस्तात् प्रयतिः परस्तात्" इति। 'रश्मिः' सूर्य्यरश्मिसमानः कश्चित् स्वयम्प्रकाशश्चैतन्यपदार्थः,'एषां' भूतभौतिकरूपाणां जगद्वस्तूनां मध्ये, 'तिरश्चीनः' तिर्य्यग्वर्त्तमानः, 'विततो' व्याप्तः। स चैतन्यरूपः परमात्मा अमीषां पदार्थानामधोभागेऽवस्थितः, किं वोपरिभागेऽवस्थितः,'स्वित्'शब्दो विकल्पितपचद्वयसूचनार्थो, सुतिर्व्विचारद्वयद्योतनार्था। अयमभिप्रायः, सोऽयं प्रकाशः कश्चिच्चैतन्यपदार्थः सर्व्वेषां वस्तूनां मध्ये पर्य्यालोच्यमानो दीर्घतन्तुवत् तिर्य्यग्भूते व्याप्यावभासते, अधः पर्य्यालोच्यमानस्तत्राप्यवभासते, उपरि पर्य्यालोच्यमानस्तत्राप्यवभासते। तस्मादधऊर्द्ध्वमध्ये भासमानत्वात् एकत्रैवावस्थित इति वक्तुमशक्यः। यथा घटस्योपादानभूता

मृत्पिण्डो घटस्याधऊर्द्धमध्यभागेषु सर्व्वेष्वनुवर्त्तते। एवं तत्त-त्पदार्थोपादानानि तत्तत्कार्य्येषु व्याप्यैव वर्त्तन्ते। एवमयं परमात्मापि स्वकार्य्येषु व्याप्य वर्त्तमानः सन् अध आसीदित्येव वा उपर्य्यासीदित्येव वा निश्चेतुमशक्यः, इति सर्व्व एते पदार्थाः भूतभौतिकरूपाः पूर्व्वोक्तस्य विततरश्मिरूपस्य स्वप्रकाशचैत-न्यस्य 'रेतोधाः' साररूपधारिणः, 'आसन्', तत्र चिदेकरसस्य हि वस्तुनः सद्रूपसारं तच्च सर्व्वे पदार्था धारयन्ति, अस्ती-त्येवं स्वरूपेणैव सर्व्वेषामवभासमानत्वात्। ते च सद्रूपधारिणः सर्व्वे 'महिमानः' गिरिनद्यादिरूपेण महान्तः, 'आसन्', एवं 'स्वधा' शब्दवाच्यमायाविद्यादिशब्दैरभिधीयमाना पारमेश्वरी शक्तिः 'अवस्तात्' अधमं कारणं, 'प्रयतिः' सा शक्तिः प्रयतते। यस्मिन् परमात्मनि सेयं शक्तिः, प्रयत्नाधारः परमात्मा, प्रय-तिः, स च 'परस्तात्' परममुत्तमं कारणं, तावेतौ शक्तिपर-मात्मानावेव जगत्कारणभूतौ प्रकृतिपुरुषाविति शास्त्रेषु व्यप-दिश्येते॥

अथ षष्ठीमाह। "को अद्धा वेद क इह प्रवोचत्। कुत आजाता कुत इयं विसृष्टिः। अर्व्वाग् देवा अस्य विसर्ज्जनाय। [५]। अथा को वेद यत आ बभूव" इति। अत्र केचिदाग-ममुपेक्ष्य स्वस्वबुद्धिबलात् अन्यथा अन्यथोत्प्रेक्षन्ते। तथा हि, परमाणवो मूलकारणमिति काणादगौतमादयो मन्यन्ते। स्वतन्त्रमचेतनं प्रधानं जगतो मूलकारणमिति कपिलप्रभृ-तयः। शून्यादितो जगदुत्पत्तिरिति माध्यमिकाः। जगतः का-

रणमेव नास्ति स्वभावत एव अवतिष्ठत इति लोकायतिकाः। ते सर्व्वेऽपि भ्रान्ता एव। 'को अद्धा वेद' जगत्कारणं को नाम पुरुषः साक्षादवगच्छति, अनवगत्य च 'क इह प्रवोचत्' स्वयमदृष्ट्वा को नाम जगत्कारणमीदृगिति वक्तुं शक्नोति। कोऽयमत्र वक्तव्यांश इति चेत् उच्यते, 'इयं विविधा सृष्टिः', 'कुतः आजाता' तस्मादुपादानकारणात् सर्व्वत उत्पन्ना, पुनरपि कुतो निमित्तादुत्पन्नेति तदिदमुपादाननिमित्तञ्च वक्तव्यं, तच्च वक्तुमशक्यं। कुतोऽशक्तिरिति चेदुच्यते, किं 'देवाः', एतद्ब्रूयुः, कुतोऽन्यः कश्चिन्मनुष्यः, न तावद्देवा वक्तुं शक्ताः, ते ह्यस्य जगतो विविधसृष्टेः 'अर्वाक्', एव विद्यन्ते, न तु सृष्टेः पूर्व्वं ते सन्ति। यदा देवानामपीदृशी गतिः, तदानीं 'यतः', जगत् 'आबभूव', तत्कारणं वक्तुमन्यः 'कः', वा 'वेद', देवाश्च मनुष्याश्च सृष्टेः प्रागनवस्थानात् न तावत् प्रत्यक्षेण पश्यन्ति, तदानीं स्वयमेवाभावात् नाप्यनुमातुं शक्ताः, तद्योग्ययोर्हेतुदृष्टान्तयोरभावात् तस्मात् अतिगम्भीरमिदं परमार्थतत्त्वं वैदिकसमधिगम्यमित्यभिप्रायः॥

अथ सप्तमीमाह। "इयं विसृष्टिर्यत आ बभूव। यदि वा दधे यदि वा न। यो अस्याध्यक्षः परमे व्योमन्। सो अङ्ग वेद यदि वा न वेद" इति। 'इयं' दृश्यमाना भूतभौतिकरूपा विविधा 'सृष्टिः', 'यतः' उपादानकारणात्, 'आ बभूव' सर्व्वत उत्पन्ना, तदुपादानकारणं 'यदि वा' किञ्चित्स्वरूपं धृत्वाऽवतिष्ठते 'यदि वा' तस्य स्वरूपमेव नास्ति, तमिमं निर्णयं 'यः'

परमेश्वरः, अस्य जगतः 'अध्यक्षः' स्वामी, 'सो अङ्ग वेद' स एव वेद, यदि वा सोऽपि न वेद ईशित्रीशितव्यादिलौकिकव्यवहार-दृष्ट्या 'सो अङ्ग वेद', इत्युक्तम्। यत्र त्वस्य सर्व्वमात्मैवाभूत् केन कं पश्येदित्यादिसर्व्वव्यवहारातीतपरमार्थदृष्ट्या 'यदि वा न वेद', इत्युक्तम्। अतो मनुष्यादिषु तद्वेदनशङ्कापि दूरापेता॥

अथाष्टमीमाह। "किꣳ स्विद्वनं क उ स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणा मनसा पृच्छतेद् तत्। यदध्यतिष्ठद्भुवनानि धारयन्" इति। लोके हि गृहं चिकीर्षुः पुमान् वनं गत्वा तत्र कञ्चिद्वृक्षं छित्वा तदीयैः काष्ठैर्गृहान् निर्म्मिमीते, तद्दृष्टान्तेन अत्रापि 'यतः' यस्मात् वनजन्याद् वृक्षात्, 'द्यावापृथिवी' द्युलोक-भूलोकौ, 'निष्टतक्षुः' तक्षणेन निर्म्मितारः, निर्म्मितवन्तः। तादृशं 'वनं किं स्वित्', भवेत् 'कः', च तादृशः 'स वृक्ष आसीत्'। हे 'मनीषिणः' बुद्धिमन्तः, 'मनसा', स्वकीयेन विचार्य्य, तदिदमर्थद्वयमाचार्य्य-समीपे 'पृच्छत', किञ्च 'यत्' कारणभूतं वस्तु, 'भुवनानि' सर्व्वान् लोकान्, स्वात्मनि 'धारयन्', 'अध्यतिष्ठत्' नियम-नमकरोत्, 'तदिद्' तदपि वस्तु, 'पृच्छत'॥

अथ नवमीमाह। "ब्रह्म वनं ब्रह्म स वृक्ष आसीत् [६]। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणा मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति। यदुक्तं मनीषिणां प्रश्नत्रयं तस्याचार्य्य उत्तरं ब्रूते, यस्माद्वनजन्याद्

वृक्षाद् द्यावापृथिव्यौ निर्मिते, तत् ‘वन’स्थानीयं तत् ‘वृक्ष’-स्थानीयं ‘ब्रह्म’, एव, तस्य सर्व्वशक्तित्वात् यस्योत्पाद्यस्य या सामग्रिरपेक्षिता सा सर्व्वा तस्मिन् विद्यते। तदेव ब्रह्म सर्व्वाणि ‘भुवनानि’, अस्मिन् ‘धारयति’ नियमयति च। हे ‘मनीषिणः’, आचार्य्योऽहं मनसा निश्चित्य ‘वः’ युष्मभ्यं, ‘विब्रवीमि’ विविधमुत्तरं ब्रवीमि॥

यदुक्तं सूत्रकारेण। भगाय वाशितामिति। गर्भधारण-योग्या वाशिता, तस्याः पशोः सूक्तस्य वपायाः पुरोऽनुवाक्या-माह। “प्रातरग्निं प्रातरिन्द्रꣳ हवामहे। प्रातर्मित्रावरुणा प्रातरश्विना। प्रातर्भगं पूषणं ब्रह्मणस्पतिम्। प्रातः सोममुत रुद्रꣳ हुवेम”। ‘प्रातः’,काले ‘अग्न्यादीन् देवानाह्वयामः, प्रतिदेवं वाक्यभेदेन प्राधान्यद्योतनाय प्रातःशब्दावृत्तिः। यत्रावृत्तिर्नास्ति तत्राप्यावृत्तिरुन्नेया॥

अथ वपाया याज्यामाह। “प्रातर्जितं भगमुग्रꣳ हुवेम। वयं पुत्रमदितेर्यो विधर्त्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चित्। [७]। राजा चिद्यं भगं भक्षीत्याह” इति। ‘प्रातः’,काले ‘जितं’ यजनयुक्तं, ‘उग्रं’ वैरिसु तीव्रं, ‘भगं’, देवं, ‘हुवेम’ आह्वयामः। कीदृशम्, ‘अदितेः पुत्रम्’ आदित्यं, य आदित्यः विशेषेण जगतो धारयिता तमिति पूर्व्वत्रान्वयः। ‘आध्रश्चित्’ दरिद्रोऽपि, ‘यं’ देवम्, अभिमतप्रदं ‘मन्यमानः’, ‘भगं’, देवं, ‘भक्षीत्याह’ भजनं करोमीति ब्रूते, तथा ‘तुरश्चित्’ कार्य्येषु त्वरमाणोऽपि, ‘यं’ भगं, कार्य्यसाधकं ‘मन्यमानः’, भजेयेति

ब्रूते, तथा 'राजाचित्' राजापि 'यं' भगं, राज्यसाधकं 'मन्यमानः', भजेयेति ब्रूते, तं भगमाह्वयाम इति पूर्व्वत्रान्वयः ॥

अथ पुरोडाशस्य पुरोऽनुवाक्यामाह । "भग प्रणेतर्भग सत्यराधः । भगेमां धियमुदव ददन्नः । भगप्रणो जनय गोभिरश्वैः । भग प्रनृभिर्नृवन्तः स्याम" इति । हे 'प्रणेतः' प्रकर्षेण नेतुं कुशलं, हे 'भग' देव, अस्मान् कर्म्माणि प्रणयेति शेषः । हे 'सत्यराधः' सत्यधन भगदेव, अस्मभ्यं धनं देहीति शेषः । हे 'भग', 'नः' अस्मभ्यं, 'इमां' 'धियं', 'ददत्' कर्म्मानुष्ठानबुद्धिं प्रयच्छन्, 'उदव' उत्कर्षेण रक्ष । हे 'भग', देव, 'नः' अस्मान्, 'गोभिरश्वैः', 'प्रजनय', तद्युक्तान् कुरु इत्यर्थः । हे 'भग', त्वत्प्रसादात् वयं 'नृभिः' पुत्रपौत्रादिभिः पुरुषैः, 'नृवन्तः' पुरुषवन्तः, 'स्याम' ॥

अथ पुरोडाशस्य याज्यामाह । "उतेदानीं भगवन्तः स्याम । उत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन् सूर्य्यस्य । वयं देवानाꣳ सुमतौ स्याम" इति । 'उतेदानीम्' अस्मिन् कर्म्मकालेऽपि, 'भगवन्तः' अनेन भगेन देवेन युक्ताः, 'स्याम' । 'उत प्रपित्वे' सायङ्कालेऽपि, 'उत अह्नां मध्ये' मध्याह्नकालेऽपि, 'उतोदिता' उदयकालेऽपि, भगेन देवेन युक्ताः स्याम । हे 'मघवन्', देव, 'वयं', 'सूर्य्यस्य', तव, 'सुमतौ स्याम' अनुग्रहबुद्धौ तिष्ठेम ॥

अथ हविषः पुरोऽनुवाक्यामाह । "भग एव भगवाꣳ

अस्तु देवाः [८]। तेन वयं भगवन्तः स्याम। तं त्वा भग सर्व्व इज्जोहवीमि। स नो भग पुर एता भवेह" इति। हे 'देवाः','भगाख्यः', देवः, एव 'भगवानस्तु' सौभाग्यवान् भवतु, 'तेन' देवेन, 'भगवन्तः' सौभाग्यवन्तः, 'स्याम'। हे 'भगाख्य', देव,'तं' तादृशं, 'त्वां', 'सर्व्व इत्' सर्व्व एव लोकः,'जोहवीमि' आह्वयतीत्यर्थः। हे 'भगदेव', 'सः', त्वं 'इह' अस्मिन् कर्म्मणि, 'नः' अस्माकं, 'पुर एता' पुरतो गन्ता भव॥

अथ हविषो याज्यामाह। "समध्वरायोषसो नमन्त। दधिक्रावेव शुचये पदाय। अर्व्वाचीनं वसुविदं भगं नः। रथमिवाश्वा वाजिन आवहन्तु" इति। अस्य भगदेवस्य प्रसादात् 'उषसः' उषःकालदेवताः, 'अध्वराय' यज्ञनिष्पत्त्यर्थं, 'सं नमन्तः' सम्नमन्त। तत्र दृष्टान्तः,'दधिक्राव'इत्यश्वस्य नाम। अश्वो यथाऽऽधानकाले 'शुचये' अग्निनिष्पत्तये, 'पदाय' आहवनीयायतने सम्भाराणामुत्तरतः पादेनाक्रमणाय, सम्प्राप्नोति, तथैवोषःकालदेवता अपि प्राप्नुवन्तु। अन्योऽपि दृष्टान्त उच्यते, 'वाजिनः' वेगवन्तोऽश्वाः, यथा 'रथम्', आवहन्ति, तथा 'नोऽर्व्वाचीनं' अस्माकमभिमुखं,'वसुविदं' धनस्य लम्भारं, भगदेवं, 'आवहन्तु' इह कर्म्मण्यानयन्तु॥

अथ हविष एव विकल्पितां याज्यामाह। "अश्वावतीर्गोमतीर्न उषासः। वीरवतीः सदमुच्छन्तु भद्राः। घृतं दुहाना विश्वतः प्रपीनाः। यूयं पातस्वस्तिभिः सदानः" [९] इति। 'अश्वावतीः' बहुभिरश्वैर्युक्ताः, 'गोमतीः' बहुभिर्गोभिर्युक्ताः,

'वीरवतीः' पुत्रपौत्रादिभिर्वीरैर्युक्ताः, 'भद्राः' कल्याणरूपाः, 'घृतं दुहानाः' घृतक्षीरादिद्रव्याणि सम्पादयन्त्यः। 'विश्वतः प्रपीनाः' सर्व्वमपि जगत् प्रकर्षेणाप्याययन्त्यः, 'उषासः' यथोक्त-गुणविशिष्टा उषःकालदेवताः, भगस्य प्रसादात् 'मदं' मदनं, कर्म्मानुष्ठानस्थानं, प्रति 'उच्छन्तु' प्रभातं कुर्व्वन्तु। हे 'उषासः', 'यूयं', 'स्वस्तिभिः' क्षेमरूपैः फलप्रदानैः, 'नः' अस्मान्, 'पात' रक्षत॥

अत्र विनियोगसङ्ग्रहः।

'ता सूर्य्येति' पशुद्वन्द्वे चन्द्रसूर्य्याख्यदेवते।
'हिरण्या'ङ्गो वेहति स्यात् 'नासत्' ततोपहोमकः॥
'प्रातरग्निमिति' प्रोक्तं पश्वौ स्याद्भगदैवके।

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन्।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

श्रीमद्राजाधिराज-राजपरमेश्वर-वैदिकमार्गप्रवर्त्तक श्री-वीरहरिहरभूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विर-चिते माधवीये वेदार्थप्रकाशे यजुर्ब्राह्मणे द्वितीयकाण्डेऽष्टम-प्रपाठके नवमोऽनुवाकः॥ ९॥

समाप्तोऽयं द्वितीयकाण्डः॥